श्येदिति पूर्वोक्तस्यानुवादो धर्मविशेषविधानार्थः। विद्वद्भिर्वेदव्याकरणादिधर्मशास्त्राभिज्ञैः। ब्राह्मणैर्न क्षत्रियादिभिः। ब्राह्मणैः सहेति तृतीयानिर्देशात्तेषाम-प्राधान्यम्। सहयुक्तेऽप्रधाने इति स्मरणात्। अतश्चादर्शनेऽन्यथादर्शने च राज्ञो दोषो न ब्राह्मणानाम्।

यथाह मनुः, (अ० ८ श्लो० १२८)

अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन्।
अयशो महदाप्नोति नरकं चाधिगच्छति॥ इति।

कथं? धर्मशास्त्रानुसारेण नार्थशास्त्रानुसारेण। देशादिसमयधर्मस्यापि धर्मशास्त्राविरुद्धस्य धर्मशास्त्र-विषयत्वान्न पृथगुपादानम्। तथा च वक्ष्यति,

निजधर्माविरोधेन यस्तु सामयिको भवेत्।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः* ॥इति।

क्रोधलोभविवर्जित इति। धर्मशास्त्रानुसारेणेति सिद्धे क्रोधलोभविवर्जित इति वचनमादरार्थम्। क्रोधोऽमर्षः। लोभो लिप्सातिशयः॥ १॥

# बालम्भट्टी।

## मिताक्षराव्याख्या।

### अथ व्यवहाराध्यायः २।

वा. १। पूर्वत्रान्ते दुष्टदण्डस्य शिष्टरक्षणस्य च विधानादन्वयव्यतिरेकाभ्यां पालनाधिकारिणाऽहरहर्व्यवहारदर्शनं कर्त्तव्यमित्युक्तम्। तस्य व्यवहारस्य स्वरूपप्रकारेतिकर्त्तव्यताकाङ्क्षायामयम-

* या० स्मृ० व्य० २ श्लो० १८६।

वैयर्थ्यं परिहरति *पश्येदितीति । *धर्मेति । विद्वद्ब्राह्मणसाहित्यादिरूपधर्मविशेषेत्यर्थः । तथा च व्यवहारान्नृपः पश्येदिति यत् तद् विद्वद्भिर्ब्राह्मणैः सह धर्मशास्त्रानुसारेण तादृशः स इति योजना बोध्या । एतेनास्य वैयर्थ्यं परिहृतम् । अन्यथा तेनैव सिद्धेऽस्य वैयर्थ्यं स्पष्टमेव ।

५ । तमेव धर्मविशेषमाह *विद्वद्भिरित्यादिना । स एव धर्म इतिकर्त्तव्यता । सा चाङ्गानुष्ठानप्रकारः । एवं चास्य श्लोकस्यैव प्रपञ्चः सकलोऽध्यायशेष इति भावः । ब्राह्मणैरित्यस्य फलमाह *नेति ।

६ । धर्मविशेषविधानार्थत्वेनास्य प्राप्तं व्यवहारदर्शने नृपस्य ब्राह्मणानां च समप्राधान्यं निराचष्टे *ब्राह्मणैस्सहेतीति । तेषां ब्राह्मणानाम् । ननु तावता कथं तत्त्वमत आह *सहयुक्ते इति । सहार्थेन योगे ऽप्रधाने तृतीयेति तदर्थः । यथा पुत्रेण सहागतः पितेत्यादौ शाब्दक्रियाद्यनन्वयित्वरूपमप्राधान्यं पुत्रादेस्तथा प्रकृतेऽपीति तदर्थत्वेऽपि न तथेति भावः । एतत्फलमाह *अतश्चेति । *न ब्राह्मेति । आद्ये तथा सत्त्वेऽपि द्वितीये राज्ञो दोषो य उक्तः स ब्राह्मणानां नेत्यर्थः । उक्तहेतोः । न तु सर्वथा दोषाभावोऽभिमतः । सभा वा न प्रवेष्टव्येत्यनेन विरोधापत्तेरिति बोध्यम् ।

७ । तेषां तत्र कथनेनैव तल्लाभे शास्त्रान्तरस्यासम्भवेनैव निरासे तदुक्तिफलमाह *नार्थेति । अत एव मिथः समवायेऽस्य प्राबल्यं न तस्येति वक्ष्यति । न्यूनतां परिहरति *देशादीति । आदिना देवगृहादिपरिग्रहः । पारिभाषिकधर्मेण व्यवस्थानं समयः । तत्सिद्धदेशादिसम्बन्धिधर्मस्येत्यर्थः । विरुद्धस्य त्याज्यत्वस्योक्तत्वादाह *धर्मेति । *वक्ष्यतीति । संविद्व्यतिक्रम-

राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥ २ ॥

मि° किञ्च । श्रुतेन मीमांसाव्याकरणादिश्रवणेन अध्ययनेन च वेदाध्ययनेन सम्पन्नाः । धर्मज्ञाः धर्मशास्त्रज्ञाः । सत्यवादिनः सत्यवचनशीलाः । रिपौ मित्रे च ये समाः द्वेषरागादिरहिताः । एवं भूताः सभासदः सभायां संसदि यथा सीदन्ति उपविशन्ति तथा दानमानसत्कारैः राज्ञा कर्तव्याः। यद्यपि श्रुताध्ययनसम्पन्ना इत्यविशेषेणोक्तं तथापि ब्राह्मणा एव।

यथाह * कात्यायनः,

स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः ।<br>
धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः ॥ इति ।

ते च त्रयः कर्तव्याः । बहुवचनस्यार्थवत्त्वात् ।

यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः ।<br>
इति मनुस्मरणाच्च । ( अ० ८ श्लो० ११ )

बृहस्पतिस्तु सप्त पञ्च त्रयो वा सभासदो भवन्तीत्याह,

लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा ।<br>
यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ॥ इति ।

न च ब्राह्मणैः सहेति पूर्वश्लोकोक्तानां ब्राह्मणानां श्रुताध्ययनसम्पन्ना इत्यादि विशेषणमिति मन्तव्यम् । तृतीयाप्रथमान्तनिर्दिष्टानां विशेषणविशेष्य-

* निबन्धेषु व्यवहारकाण्डे उपलभ्यमानानि कात्यायनवचनानि उपलभ्यमानकात्यायनस्मृतौ नोपलभ्यन्ते । अतो ज्ञायते, आचारकात्यायनस्मृतेः अन्यैव व्यवहारकात्यायनस्मृतिरिति । सा च बहुशः शोधितापि नोपलब्धा । यदि कैश्चिदुपलभ्येत अनुगृह्य प्रेषणीयेति ॥

त्वमाह *श्रुतेनेति। अत्र द्वावपि भावप्रत्ययान्तौ क्रियापरौ। अन्यथा धर्मज्ञानस्यानुपयोगात्। धर्मशब्दो लक्षणया शास्त्रपर इत्याह *धर्मशास्त्रेति। ताच्छील्ये णिनिरित्याह *शीला इति। एतानुद्दिश्य सभासत्त्वं विधीयते इत्याह *एवंभूताः सभेति। विधेयार्थमाह *सभायामिति। तदर्थमाह *संसदी-ति। सीदन्तीत्युक्तस्य व्याख्या *यथोपेति। धातूनामनेका-र्थत्वादिति भावः। बलात्कारनिरासायाह *दानेति।

२। एते सभासदोऽपि ब्राह्मणा एवेत्याह *यद्यपीति। तस्य त्रितयसाधारणत्वादिति भावः। *सत्विति।

विनीतवेषो नृपतिः सभां गत्वा समाहितः।
आसीनः प्राङ्मुखो भूत्वा पश्येत्कार्याणि कार्यिणाम्॥

इति, इतः पूर्वश्लोकः। स राजा। स्थिरैर्भयतोऽचञ्चलैः। प्राज्ञै-र्बुद्धिमद्भिः। मौलैः पितृपितामहादिपरम्परायातैः। द्विजोत्तमैः ब्राह्मणैः। सप्तमीतत्पुरुषः। धर्मशास्त्रं मानवादि तस्य योऽर्थः सिद्धान्तस्तत्र निष्णातैः। अर्थशास्त्रमौशनसादि तत्र तथा।

३। ननु बहुत्वस्य त्रित्वादिपरार्द्धपर्यन्तसंख्याव्यापकत्वेन तत्र ते कति कार्या इत्यत आह *ते चेति। सभासद इत्यर्थः। कपिञ्जलाधिकरणन्यायेनेति भावः। त्रय इत्यस्य त्रय एवेत्यर्थः। एवेन पूर्वापरकोट्योर्निरासः। तत्राद्ये हेतुमाह *बहुवचनेति। द्वितीये हेतुमाह *यस्मिन्निति। इतोऽपि तत्र ब्राह्मणा एवेत्य-पि बोध्यम्। एवमग्रेऽपि बोध्यम्।

४। मतान्तरमाह *बृहस्पतिस्त्विति। उत्तमादिभेदेनाह *सप्तेति। वेदशब्दः शास्त्रस्याप्युपलक्षणम्। लोकशब्दो देश-कालादिपरः। यद्वा स तदन्यसर्वपरः। धर्मशब्दः शास्त्रपरः। प्राधान्यात्तस्य पुनरुक्तिः। यत्र सभायाम्। *यज्ञेति। यज्ञ-

पुरोहितश्च तैः सहितः । सभ्यैः सहितः । अनेन सर्वेषामङ्गत्वमुक्तम् । धर्मतः तच्छास्त्रतः प्रेक्षक इत्यर्थः ।

८ । तत्र सभ्यब्राह्मणयोर्मध्ये । *अनीति । राज्ञेति शेषः । एवमग्रेऽपि । तथा मूलानुक्तेः । *सभेति तथा मूलोक्तेः । तथा भेदोक्तेः फलभेदमाह *तत्रेति । प्राग्वत् । तं राजानम् । *तद्भागिन इति । राजसम्बन्धिदोषभागिन इत्यर्थः । एवं च प्रागुक्तदोषशब्दो विशेषपरो बोध्यः । पुनस्तत्रैव ।

९ । न्यूनतामज्ञाननिरासाय सर्वथाऽनावश्यकमूलस्थचशब्देन परिहरति *रिपाविति । विचान्तपञ्चानां द्वन्द्वान्मतुप् । तत्र कुलवत्त्वं कुलीनत्वम् । कुलभूतैरित्यस्य परम्परायातैरित्यर्थः ॥२॥

मि॰ व्यवहारान्नृपः पश्येदित्युक्तं तत्रानुकल्पमाह ।

या॰ अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु ।
सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥३॥

मि॰ कार्यान्तरव्याकुलतया व्यवहारान् अपश्यता नृपेण पूर्वोक्तैः सह सर्वधर्मवित् सर्वान्धर्मान् शास्त्रोक्तान् सामयिकांश्च धर्मान् विन्ते विचारयतीति स सर्वधर्मविद् ब्राह्मणो न क्षत्रियादिर्नियोक्तव्यो व्यवहारदर्शने। तं च कात्यायनेनोक्तगुणविशिष्टं कुर्यात् ।

यथाह,

दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम् ।
परत्र भीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितम् ॥ इति ।

एवंभूतब्राह्मणासंभवे क्षत्रियं वैश्यं वा नियुञ्जीत न शूद्रम् ।

यथाह कात्यायनः,

ब्राह्मणं चेत्यर्थः । *यथाहेति । कात्यायन इत्यर्थः । *मध्यगमिति । पक्षपातरहितमित्यर्थः । परत्र परलोकविषये । उद्युक्तम् अनलसम् ।

४ । मुख्यपक्षोक्तिपरतया मूलस्य न न्यूनतेति सूचयन् स्मृत्यन्तरानुरोधेनानुकल्पमाह *एवंभूतेति । *ब्राह्मण इति । उक्तगुणविशिष्ट इत्यर्थः । अन्यथा स्वोक्तिविषयकर्मैव स्यादिति बोध्यम् । *यत्नेनेति । तस्य धर्मशास्त्रादावनधिकारादिति भावः ।

५ । मतान्तरमाह *नारदेनेति । *अयमेवेति । योगीश्वरोक्तब्राह्मणरूपानुकल्पत्वेनोक्त एवेत्यर्थः । राज्ञो यत्कार्यव्याकुलत्वेनावकाशाभावादिति भावः । *पुरस्कृत्येति । अत्र प्रस्तुतत्वाद्राजनियुक्तोक्तपुरुष एव तत्र कर्ता बोध्यः । अत एव,

सत्प्रतिष्ठः स्मृतो धर्मो धर्ममूलो नराधिपः ।
सह सद्भिरतो राजा व्यवहारान्विशोधयेत् ॥ (अ.३श्लो.५)

इत्यग्रे तेनैवोक्तम्* । व्यवहारानान्विति युक्तः पाठः । एतदेव स्पष्टयति *प्राड्विवाकेति । मते बुद्धौ । धर्मशास्त्रानुसारेणेति भावः । स्थितः राजा । तस्य सत्त्वेनैव तल्लाभे पुनस्तदुक्तिफलमाह *न स्वेति । नन्वेवं प्राड्विवाकेन कृतस्य श्रवणेऽपि तस्य तद्दर्शनाभावेन कथं स पश्येदित्यत आह *राजेति । तथा च स्वमतिरूपकप्रयुक्तपुरुषद्वारेण तद्दर्शनस्यौचित्येनाद्यएव पक्षो ज्यायानिति बोध्यम् ।

६ । धर्मशास्त्रानुसारेण कृतस्य तस्य यौगिकीयं संज्ञा नान्यकर्णादिवद्रूढिरित्याह *तस्येति । प्राड्विवाकस्येत्यर्थः । *संज्ञेति । अन्वर्थं नामेत्यर्थः । *प्राडिति । क्विब्वचीत्यादिना निष्पन्नो ऽयं क्विबन्तः । तयोरर्थिप्रत्यर्थिनोः । विविनक्ति वि-

* नारदेनैवोक्तमित्यर्थः ।

दण्ड्यश्चावहिष्कार्यश्चापरिवाद्यश्चापरिहार्यश्चेति" तद-
पि "स एष बहुश्रुतो भवति लोकवेदवेदाङ्गविद्वा-
कोवाक्येतिहासपुराणकुशलस्तदपेक्षस्तद्वृत्तिश्चाष्टा
चत्वारिंशत्संस्कारैः संस्कृतस्त्रिषु कर्मस्वभिरतः ष-
ट्सु वा सामयाचारिकेष्वभिविनीत" इति प्रतिपादि-
तबहुश्रुतविषयं न ब्राह्मणमात्रविषयम् ॥ ४ ॥

वा. ७। अन्यदपि राज्ञा कर्तव्यमित्याह *अपि चेति ।

अपिना द्वेषसमुच्चयः । तथा चाज्ञानभ्रान्त्यादिरूपोपाधिभि-र्धर्मशास्त्रविरुद्धमाचरतां तेषां न दण्डोऽयमिति भावः । *सभ्या इति । नियुक्ता इत्यर्थः । तेषामेव तत्त्वस्य प्रागुक्तत्वात् । अत एवानियुक्तानां तदपेक्षया न्यूनदण्डपरिकल्पना । युक्तं चैतत् । नियुक्तानामभियुक्तत्वेन धर्मशास्त्रविरुद्धाचरणादधिकापराधः तद्भिन्नानां तु तदभावादल्पापराधः । आद्येषु राजाज्ञाभङ्गः स्मृत्युल्लङ्घनं च अन्त्येषु स्मृत्युल्लङ्घनमेवेति यावत् । तदेतदभिमेत्याह *पूर्वोक्ताः सभ्या इति ।

२। रागादौ हेतुं पूरयति *रजस इति । यत्किञ्चिद्रागादेः साधारणत्वादाह *स्नेहातीत्यादिः । वाशब्दस्य प्रत्येकं विक-ल्पबोधकत्वादाह *लोभाद्वेति सन्त्रासाद्वेति च । विवा-दपदस्य यथाश्रुतार्थत्वे तद्द्वैगुण्यस्य दमे ऽसम्भवाल्लक्ष्यार्थमा-ह *विवादेति । ननु अन्यथाऽपि लक्ष्यार्थस्य सम्भवादेवमेव व्याख्याने किं बीजमत आह *न पुनरिति । तथा हि सती-ति पाठः । हिर्हेतौ । स्त्रीसङ्ग्रहणादिष्विति पाठः । स्मृत्यपेते-त्यत एवार्थाल्लाभे रागाद्युक्तिफलमाह *रागेति । इदमुपल-क्षणं द्वेषस्यापि । इष्टे नियच्छति । कर्मणः शेषत्वविवक्षया षष्ठी । वर्जमिति णमुलन्तम् । तथा चानियुक्तानां तेषामल्प-

न्तप्रत्यवरोहणम् । चैत्री तत्र कर्त्तव्यः ऐन्द्राग्न इत्याद्युक्तः तुन्दिलः शूलगवश्च।आश्वयुजी तत्र कर्त्तव्याश्वयुजीकर्म। पृपातकन्चरूरूपम् पशुपतये स्थालीपाकरूपम्, अनाहिताग्नेराग्रयणं चेति द्वयमाश्वयुजीशब्दग्राह्यमिति हरदत्तः । इति सप्त पाकयज्ञसंस्थाः । पाकयज्ञा अल्पयज्ञाः प्रशस्तयज्ञा वा । तं पाकेन मनसा, यो मा पाकेन मनसेत्यादौ पाकशब्दप्रयोगस्य प्रशंसायां दर्शनात् इति वृत्तिकृन्नारायणहरदत्तादयः । आख्या चेयं गार्ह्याणां कर्मणामिति हरदत्तः । तथा आपस्तम्बः, लौकिकानां पाकयज्ञशब्द इति । संस्था विधा, पाकयज्ञविधाः सप्तेत्यर्थ इति हरदत्तः ।

७ । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः । एतेऽग्न्याधेयादयः श्रुतिप्रसिद्धाः । दर्शपूर्णमासाविति समुदाय एकः संस्कारः । सप्तग्रहणात् । सोमसम्बन्धाभावादेते हविर्यज्ञाः ।

८ । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्थाः । अग्निष्टोमे यत्र राजन्यस्य षोडशिग्रहो गृह्यते सो ऽत्यग्निष्टोमः । ब्राह्मणस्य कथमयं संस्कार इति चिन्त्यमिति हरदत्तः । एते चाधानादयो गृहस्थस्य नित्या इत्याद्यन्यत्र स्पष्टमिति । एते चत्वारिंशत्संस्काराः ।

९ । संस्कारो द्विविधः ब्राह्मो दैवश्च । तत्र गर्भाधानादिः स्नानान्तो ब्राह्मः । अग्रिमो दैवः । अष्टौ चात्मगुणा इति चकारादात्मसंस्कारा इत्यस्यानुषङ्गः।आत्मा चात्र चित्तम्, तच्छुद्धावेवैते भवन्ति नान्यथेति भेदेनोक्तिः । तथा चोपनयनाद्यधिकारसम्पत्तिरिति भावः । पाकयज्ञादीनां संस्कारत्वं च शङ्खलिखिताभ्यामुक्तम् ।

ति विज्ञापयति चेत् यदि, तद् आवेद्यमानं व्यवहारपदं प्रतिज्ञोत्तरसंशयहेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मको व्यवहारः तस्य पदं विषयः। तस्य चेदं सामान्यलक्षणम्।

स च द्विविधः शङ्काभियोगस्तत्त्वाभियोगश्चेति।

यथाह नारदः, (अ० १ श्लो० २७)

द्व्यभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः।
शङ्काऽसतां तु संसर्गात्तत्त्वं होढाभिदर्शनादिति॥

होढा लोप्त्रं लिङ्गमिति यावत्। तेन दर्शनं साक्षाद्वा दर्शनं होढाभिदर्शनं तस्मात्। तत्त्वाभियोगोऽपि द्विविधः। प्रतिषेधात्मको विध्यात्मकश्चेति। यथा मत्तो हिरण्यादिकं गृहीत्वा न प्रयच्छति, क्षेत्रादिकं ममायमपहरतीति च।

उक्तंच कात्यायनेन,

न्याय्यं स्वं नेच्छते कर्तुमन्याय्यं वा करोति यः। इति।

स पुनश्चाष्टादशधा भिद्यते॥

यथाह मनुः। (अ. ८ श्लो. ४. ५. ६. ७.)

तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः।
संभूय च समुत्थानं दत्तस्यानपकर्म च॥
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः॥
सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके।
स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च॥
स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च।
पदान्यष्टादशैतानि व्यवहारस्थिताविह॥ इति।

मुद्रां वा निक्षिपेत्तस्मिन्पुरुषं वा समादिशेत् ॥
अकल्पबालस्थविरविषमस्थक्रियाकुलान् ।
कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान् ॥
मत्तोन्मत्तप्रमत्तार्तान्भृत्यान्नाह्वानयेन्नृपः ।
न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ॥
सर्ववर्णोत्तमां कन्यां ता ज्ञातिप्रभुकाः स्मृताः ।
तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः ।
निष्कुला याश्च पतितास्तासामाह्वानमिष्यते ॥
कालं देशं च विज्ञाय कार्याणां च बलाबले ।
अकल्पादीनपि शनैर्यानैराह्वानयेन्नृपः ॥
ज्ञात्वाऽभियोगं येऽपि स्युर्वने प्रव्रजितादयः ।
तानप्याह्वानयेद्राजा गुरुकार्येष्वकोपयन् ॥ इति ।

आसेधव्यवस्थाऽप्यर्थसिद्धैव—

नारदेनोक्ता, (अ० १)

वक्तव्येऽर्थे ह्यतिष्ठन्तमुत्क्रामन्तं च तद्वचः ।
आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् ॥ (४७)
स्थानासेधः कालकृतः प्रवासात्कर्मणस्तथा ।
चतुर्विधः स्यादासेधो नासिद्धस्तं विलङ्घयेत् ॥ (४८)
आसेधकालआसिद्ध आसेधं योऽतिवर्तते ।
स विनेयोऽन्यथाकुर्वन्, आसेद्धा दण्डभाग्भवेत्॥(५१)
नदीसन्तारकान्तारदुर्देशोपप्लवादिषु ।
आसिद्धस्तं परासेधमुत्क्रामन्नापराध्नुयात् ॥ (४९)
निर्वेष्टुकामो रोगार्तो यियक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथाऽन्येन राजकार्योद्यतस्तथा ॥ (५२)
गवां प्रचारे गोपालाः सस्यावापे कृषीवलाः ।

देशीतिवत्प्रयोगः । स्वैरिण्यो व्यभिचाररताः । गणिकाः वेश्याः । निष्कुला हीनकुलाः ।

११ । एतत्प्रसङ्गादकल्पाद्याह्वाने पूर्वनिषिद्धेऽपि प्रतिप्रसवमाह *कालमिति । तत्र प्रकारद्वयं *शनैर्यानैरिति ।

१२ । एतत्प्रसङ्गादाह *ज्ञात्वेति । क्षुद्रकार्येषु तथा नेत्याह *गुर्विति । त्वेपमाहात्म्यात्तत्रापि विशेषमाह *अकोपेति ।

१३ । इत्यादीत्यादिपदग्राह्यमेवाह । *आसेधेति । निरोधेत्यर्थः । आसेधयेदिति । विवादार्थी वादी आह्वानदर्शनपर्यन्तं तादृशं प्रत्यर्थिनं निरोधयेदित्यर्थः ।

१४ । तच्चातुर्विध्यमाह । स्थानेति । कृतः आसेधः । तद्विषयत्वात्तत्कृतत्वम् । एवमग्रेऽपि । अग्रे उभयत्र कृत इति शेषः । आसेध इति प्रकृते अस्मात्प्रदेशान्न गन्तव्यमिति स्थानासेधः । आसन्ध्यं न गन्तव्यमिति कालासेधः । देशान्तरं प्रति न गन्तव्यमिति प्रवासासेधः । असौ व्यापारो न कर्त्तव्य इति कर्मासेधः । आसिद्धः निरुद्धः । तम् आसेधम् । विनेयः शिक्षणीयः । अन्यथा कुर्वन्निति । अनासेधकाले आसेधं कुर्वन्नासेधकर्ता दण्ड्यो भवेदित्यर्थः । यद्वा आसेद्धा आसिद्धं तं लोभादिना मुञ्चन्नित्याद्यर्थः ।

१५ । नासिद्धस्तं विलङ्घयेदित्यस्य प्रतिप्रसवमाह *नदीति । नदीसन्तारादि निमित्तचतुष्टयम् । तदतिक्रमणे दोषाभावमन्यत्राप्याह । निर्वेष्टुकाम इति । आश्रमान्तरं गन्तुकामः विवाहा-

---

इति निषेधात्कथमत्र कर्मधारयादिनिप्रत्यय इत्याशङ्क्याह । एकदेशीति । कृष्णसर्पवान् एकदेशीत्यादिभाष्याद्युदाहरणेषु कर्मधारयादपि तद्दर्शनात् अपाणिनीयस्य पूर्वोक्तवचनस्य क्वाचित्कत्वमिति भावः ।

१ इत्याद्यर्थसिद्धमित्यत्रत्यादिपदग्राह्यमित्यर्थः ।

देशीतिवत्प्रयोगः । स्वैरिण्यो व्यभिचाररताः । गणिकाः वेश्याः । निष्कुला हीनकुलाः ।

११ । एतत्प्रसङ्गादकल्पाह्वाने पूर्वनिषिद्धेऽपि प्रतिप्रसवमाह *कालमिति । तत्र प्रकारद्वयं *शनैर्यानैरिति ।

१२ । एतत्प्रसङ्गादाह *शान्येति । क्षुद्रकार्येषु तथा नेत्याह *गुर्विति । त्रैपमाहात्म्यात्तत्रापि विशेषमाह *अकोपेति ।

१३ । इत्यादीत्यादिपदग्राह्यमेवाह । *आसेधेति । निरोधेत्यर्थः । आसेधयेदिति । विवादार्थी वादी आह्वानदर्शनपर्यन्तं तादृशं प्रत्यर्थिनं निरोधयेदित्यर्थः ।

१४ । तच्चातुर्विध्यमाह । स्थानेति । कृतः आसेधः । तद्विषयत्वात्तत्कृतत्वम् । एवमग्रेऽपि । अग्रे उभयत्र कृत इति शेषः । आसेध इति प्रकृते अस्मात्प्रदेशान्न गन्तव्यमिति स्थानासेधः । आसन्ध्यं न गन्तव्यमिति कालासेधः । देशान्तरं प्रति न गन्तव्यमिति प्रवासासेधः । असौ व्यापारो न कर्त्तव्य इति कर्मासेधः । आसिद्धः निरुद्धः । तम् आसेधम् । विनेयः शिक्षणीयः । अन्यथा कुर्वन्निति । अनासेधकाले आसेधं कुर्वन्नासेधकर्ता दण्ड्यो भवेदित्यर्थः । यद्वा आसेद्धा आसिद्धं तं लोभादिना मुञ्चन्नित्याद्यर्थः ।

१५ । नासिद्धस्तं विलङ्घयेदित्यस्य प्रतिप्रसवमाह *नदीति । नदीसन्तारादि निमित्तचतुष्टयम् । तदतिक्रमणे दोषाभावमन्यत्राप्याह । निर्वेष्टुकाम इति । आश्रमान्तरं गन्तुकामः विवाहा-

---

इति निषेधात्कथमत्र कर्मधारयादिनिप्रत्यय इत्याशङ्क्याह । एकदेशीति । कृष्णसर्पवान् एकदेशीत्यादिभाष्याद्युदाहरणेषु कर्मधारयादपि तद्दर्शनात् अपाणिनीयस्य पूर्वोक्तवचनस्य क्वाचित्कत्वमिति भावः ।

१ इत्याद्यर्थंसिद्धमित्यत्रत्यादिपदग्राह्यमित्यर्थः ।

अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम् ।
साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च ॥
प्रसिद्धमविरुद्धं च निश्चितं साधनक्षमम् ।
संक्षिप्तं निखिलार्थं च देशकालाविरोधि च ॥
वर्षर्तुमासपक्षाहोवेलादेशप्रदेशवत् ।
स्थानावसथसाध्याख्याजात्याकारवयोयुतम् ॥
साध्यप्रमाणसंख्यावत् आत्मप्रत्यर्थिनामवत् ।
परात्मपूर्वजानेकराजनामभिरङ्कितम् ॥
क्षमालिङ्गात्मपीडावत् कथिताहर्तृदायकम् ।
यदावेदयते राज्ञे तद्भाषेत्यभिधीयते ॥ इति ।

भाषा प्रतिज्ञा पक्ष इति नार्थान्तरम् । आवेदनसमये कार्यमात्रं लिखितं, प्रत्यर्थिनोऽग्रतः समामासादिविशिष्टं लिख्यते इति विशेषः । संवत्सरविशेषणं यद्यपि सर्वव्यवहारेषु नोपयुज्यते तथाप्याधिप्रतिग्रहक्रयेषु निर्णयार्थमुपयुज्यते ।

आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ।

इति वचनात् । ( या० व्य० अ०२ श्लो० २३ ) अर्थव्यवहारेऽपि, एकस्मिन्संवत्सरे यत्संख्याकं यद् द्रव्यं यतो येन गृहीतं प्रत्यर्पितं च, पुनरन्यास्मिन्वत्सरे तद्द्रव्यं तत्संख्याकं ततस्तेन गृहीतं याच्यमानो यदि ब्रूयात् सत्यं गृहीतं प्रत्यर्पितं चेति, वत्सरान्तरे गृहीतं प्रत्यर्पितं, नास्मिन्वत्सरे इत्युपयुज्यते । एवं मासाद्यपि योज्यम् । देशस्थानादयः पुनः स्थावरेष्वेवोपयुज्यन्ते ।

देशश्चैव तथा स्थानं संनिवेशस्तथैव च ।

जातिः संज्ञाऽधिवासश्च प्रमाणं क्षेत्रनाम च ॥
पितृपैतामहं चैव पूर्वराजानुकीर्तनम् ।
स्थावरेषु विवादेषु दशैतानि निवेशयेत् ॥

इति स्मरणात् । देशो मध्यदेशादिः । स्थानं वाराणस्यादि । संनिवेशः तत्रैव पूर्वापरादिदिग्विभागपरिच्छिन्नः गन्धवननिविष्टो गृहक्षेत्रादिः । जातिरर्थिप्रत्यर्थिनोर्ब्राह्मणत्वादिः । संज्ञाच देवदत्तादिः । अधिवासः समीपदेशे निवासी जनः । प्रमाणं निवर्तनादि भूपरिमाणम् । क्षेत्रनाम शालिक्षेत्रं गन्नुकक्षेत्रम् कृष्णभूमः पाण्डुभूमः इति । पितुः पितामहस्य च नाम अर्थिप्रत्यर्थिनोः । पूर्वेषां त्रयाणां राज्ञां नामकीर्तनं चेति । समामासादीनां यस्मिन्व्यवहारे यावदुपयुज्यते तत्र तावल्लेखनीयमिति तात्पर्यार्थः । एवं पक्षलक्षणे स्थिते पक्षलक्षणरहितानां पक्षवदवभासमानानां पक्षाभासत्वं सिद्धमेवेति योगीश्वरेण न पृथक्पक्षाभासा उक्ताः । अन्यैस्तु विस्पष्टार्थमुक्तम् ।

अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् ।
असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत् ॥

अप्रसिद्धं मदीयं शशविषाणं गृहीत्वा न प्रयच्छतीत्यादि।निराबाधम् अस्मद्गृहदीपप्रकाशेनायं स्वगृहे व्यवहरतीत्यादि। निरर्थम् अभिधेयरहितं कचटतपजडदगबेत्यादि । निष्प्रयोजनं यथा अयं देवदत्तोऽस्मद्गृहसन्निधौ सुस्वरमधीते इत्यादि। असाध्यं यथा अहं देवदत्तेन सभ्रूभङ्गमुपहसित इत्यादि । एतत् साधनासम्भवादसाध्यम् । अल्पकालत्वान्न साक्षिसम्भवो,

लिखितं दूरतः, अल्पत्वान्न दिव्यामिति। विरुद्धं य- था अहं मूकेन शप्त इत्यादि ।पुरराष्ट्रादिविरुद्धं वा।

राज्ञा विवर्जितो यश्च यश्च पौरविरोधकृत्।
राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च॥
अन्ये वा ये पुरग्राममहाजनविरोधकाः।
अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्तिताः॥इति।

यत्तु,

अनेकपदसङ्कीर्णः पूर्वपक्षो न सिद्ध्यति।

इति, तत्र यद्यनेकवस्तुसङ्कीर्ण इत्युच्यते तदा न दोषः। मदीयमनेन हिरण्यं वासो रूपकादि वा अपहृत- मित्येवंविधस्यादुष्टत्वात् । ऋणादानादिपदसङ्करे प- क्षाभास इति चेत् ।तदपि न। मदीया रूपका अनेन वृद्ध्या गृहीताः, सुवर्णं चास्य हस्ते निक्षिप्तम्, मदीयं क्षेत्रमयमपहरतीत्यादीनां पक्षत्वमिष्यतएव। किंतु क्रियाभेदात्क्रमेण व्यवहारो न युगपदित्येतावत्।

यथाह कात्यायनः,

बहुप्रतिज्ञं यत्कार्यं व्यवहारे सुनिश्चितम्।
कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सया॥ इति।

तस्मादनेकपदसङ्कीर्णः पूर्वपक्षो युगपन्न सिद्ध्य- तीति तस्यार्थः। अर्थिग्रहणात्पुत्रपित्रादिग्रहणं, तेषा- मेकार्थत्वात्। नियुक्तस्यापि नियोगेनैव तदेकार्थत्वा- क्षेपात्।

आर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा।
यो यस्यार्थे विवदते तयोर्जयपराजयौ॥

इति स्मरणात्। ( ना० अ० २ श्लो० २२ ) नि-

पूर्वपक्षमशोधयित्वा सभ्यैर्व्यवहारः प्रवर्तनीयः । पूर्वपक्षं भूमौ फलके वा पाण्डुलेखेन लिखित्वा अर्थप्रत्यर्थिनोः संवादपूर्वकं विशोधितं पश्चात् पत्रे निवेशयेत् ।

पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत् ।
पाण्डुलेखेन फलके ततः पत्रे विशोधितम् ॥

इति कात्यायनस्मरणात् । शोधनं च यावदुत्तर-
दर्शनं कर्तव्यं नातः परम् । अनवस्थाप्रसंगात् ।
अत एव नारदेनोक्तम् ( ना० स्मृ० नोपलब्धम् )
शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम् ।
अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत् ॥ इति ।
पूर्वपक्षमशोधयित्वैव यदोत्तरं दापयन्ति सभ्याः तदा रागाल्लोभादित्युक्तदण्डेन सभ्यान् दण्डयित्वा पुनः प्रतिज्ञापूर्वकं व्यवहारः प्रवर्तनीयो राज्ञेति ॥ ६ ॥

बा० १ । अर्थशब्दस्याभिधेयपरत्वनिरासद्वारा प्रयोजनपरत्वमाह *अर्थ्यत इति । भूतनिष्ठान्तत्वमर्थमाह *पूर्वमावेदनेति । क्रिया कार्यम् । नोपस्थाता समीपे न तिष्ठन् । प्रपलायी प्रपलायनं प्रपलायः सो ऽस्यास्तीति प्रपलायी । *स्मृत इतीति । वचनादिति शेषः । इतिशब्दो हेत्वर्थो वा । अतो हेतोरित्यर्थः ।

२ । पूर्वावेदनादिर्तितद्वचनोत्तरार्द्धमेव शङ्कान्तरनिरासपरमित्याशयेन शङ्कते *अवेदनेति । समाशब्दार्थः संवत्सरेति । तदर्धशब्दार्थः पक्षेति । अहर्ग्रहणमुपलक्षणमित्याह *तिथीति । प्रतिपदादिरित्यर्थः । अहःपदार्थो दिनेति । न तु रात्रिरित्यर्थः । नाम्नः साकाङ्क्षत्वेन प्रकृतत्वादाह *अर्थीति । *वेलेति । दिनमध्येऽपि प्रातरादिर्मुहूर्त्तरूपो वा कालविशेष इत्यर्थः ।

३ । *क्षमेति । प्रत्यर्थिविषये आसेधाद्यकरणं क्षमा सहिष्णु-

ता तत्र यानि लिङ्गानि कारणानि बाल्यजडत्वादीनीत्यर्थः ।

४। तत्र मानमाह *यथोक्तमिति । तथोक्तमिति पाठान्तरम् । नारदेनेत्यर्थः । ( ना० स्मृ० नोपल्कथाः ) अर्थवत् प्रयोजनवत् । धर्मसंयुक्तं धर्मो गुणः अल्पाक्षरत्वमभूतार्थवत्त्वादिकः तेन संयुक्तम् । परिपूर्णम् अध्याहारानपेक्षम् । अनाकुलम् असन्दिग्धाक्षरम् । साध्यवत् सिपाधयिषितार्थसहितम् । वाचकपदं बहुव्रीहिः, गौणलाक्षणिकादिपदरहितम् । प्रकृतार्थानुबन्धि पूर्वविदितार्थानुरोधि । प्रसिद्धं लोकप्रसिद्धवस्तुविषयम् । अविरुद्धं पुरराष्ट्राद्यविरुद्धं पूर्वापराविरुद्धं प्रत्यक्षादिप्रमाणाविरुद्धं व्यावहारिकधर्माविरुद्धं च । निश्चितम् अर्थान्तरसंशयरहितम् । साधनक्षमं साधनार्हम् । संक्षिप्तम् अनतिविस्तृतम् । निखिलार्थम् अनवशेषितवक्तव्यम् । देशकालाविरोधि मध्यदेशीयक्रमुकक्षेत्रं शरत्कालीनाम्रफलसहस्रं मदीयमपहृतमित्येवमादिशून्यम्। वर्षेत्याद्येकपदम्। प्रदेशपदान्तद्वन्द्वान्मतुप्। अहः प्रतिपदादिः वारो दिनं च। वेला प्रातरादिः मुहूर्त्तरूपा च। देशो मध्यदेशादिः। प्रदेशः क्षेत्रादेः स्थलविशेषः। स्थानेत्याद्यपि एकं पदम्। वयःशब्दान्तद्वन्द्वस्य तृतीयातत्पुरुषः। स्थानं वाराणस्यादि । आवसथो ग्रामादिः, हट्टादिरूपस्थलविशेषो वा। साध्याख्या विवादास्पदीभूतवस्तुनाम। जातिः ब्राह्मणत्वादिः। आकारो गवाश्वादिगतो वर्णादिविशेषः, गृहक्षेत्रादेः संस्थानविशेषश्च। वयः गवादेर्वयःपरिमाणं बाल्याद्यवस्थाविशेषः।*साध्यप्रमाणसंख्यावत्। प्राग्वत्। साध्यस्य प्रमाणं क्षेत्रादेर्निवर्त्तनादिकम्, संख्या रूपकादीनाम्। *आत्मप्रत्यर्थिनामवत्।स्पष्टम्। *परेति। प्राग्वत्।परःप्रतिवादी आत्मा वादी तयोर्ये पूर्वजाः पित्रादयस्ते च अनेकराजाश्च अनेके

पृथगुक्तत्वादाह *अभिप्रेयेति। तत्र मानुषप्रमाणासम्भवमाह। चाह *अल्पेति। अयमुभयत्र हेतुः। भुक्तेस्तु सम्भव एव नेति भावः। अत एव दिव्याभावमाह *अल्पेति। निर्निगमनाभावादाह *पुरेति।

८। तत्राद्ये स्पष्टत्वात् द्वितीये मानमाह *राज्ञेति। पदार्थो व्यवहारः। प्रकृतीनां जनानां नगरस्थानाम्। उपसंहरति *अन्ये इति। इतीति प्राग्वत् व्याख्येयम्।

९। अप्रसिद्धादीनां पक्षाभासत्वमिवानेकपदसङ्कीर्णपूर्वपक्षस्यापि तत्त्वमेव। अनेकैः पदैः सङ्कीर्णो यः पूर्वपक्षः प्रतिज्ञा, सा न सिध्यति आभासरूपा भवतीति तदर्थप्रतीतेः। तन्निराकरोति *यच्चेत्यादिना। तत्र पदशब्दः पद्यते ज्ञायते इति व्युत्पत्त्या किं वस्तुपरः उत ऋणादानादिरूपव्यवहारविषयपरः। तत्र न तावदाद्ये पक्षाभासत्वमित्याह *तत्रेति। उक्तवचने इत्यर्थः। द्वितीयेऽपि तदभावमाह *ऋणादानादीति। निक्षिप्तं,मयेति शेषः। यत इति शेपोऽन्ते वोध्यः। वचनानर्थक्यपरिहाराय तस्याभिमतार्थमाह *किं त्विति। *क्रियेति। साध्येत्यर्थः। एतावत्, तत्रोच्यते इति शेषः।

१०। अत्र मानमाह *यथाहेति। बहुप्रतिज्ञं बहुपूर्वपक्षकम्। अन्यथैतस्य वैयर्थ्यं स्पष्टमेव। तस्मादुक्तैव वचनयोर्व्यवस्था। तदेव द्रढयन्नुपसंहारव्याजेनाह *तस्मादिति। *तस्यार्थ इति। उक्तवचनस्यार्थ इत्यर्थः।

११। यथावेदितमर्थिनेत्यत्रार्थिपदस्वारस्येन लब्धमर्थमाह *अर्थीति। आर्थिनः पुत्रोऽप्यर्थी तत्पिताऽप्यर्थी आदिशब्दादर्थिनियुक्तादयोऽप्यर्थिन इत्यर्थः। अत एव तेषामन्यथावादित्वं निरस्तं प्राक्"यो न भ्राते" त्यनेन वचनेन। ननु तत्पुत्रादेस्तदे-

कार्यस्याप्रतिज्ञानं युक्तं प्रतिज्ञातस्य तु तद्भावात्तदर्थं तत्तथैव आ-
ह ०प्रतिज्ञातस्यार्थिन इति । तत्र प्रमाणमाह ०अर्थिनेति । तद्येति
वाच्ये तत्रोपस्थितस्य तात्पर्यमाह ०प्रतिज्ञेति ।

६ । प्रत्युक्तं विशेषमाह ०प्रत्येति । प्रत्यर्थ्यादिनामित्यर्थः ।
०वादिर्भेदविनि । यदीति भाषासमितः । ०भाषायेति । न्यूनाधि-
कपदविहीनस्य सर्वेषामेकत्वाभावादित्यर्थः । युक्तं चैतत् ।
अन्यथा पक्षान्तरागमनप्रसङ्गात् । तत्र प्रमाणमाह ०पूर्वोक्तेति । स्व-
भावेनोक्तं न तु कल्पादिना । ततः तदनन्तरम् । तथा विशोधितं
पत्रे ऽभिलेख्यमित्यर्थः । शोधने विशेषमाह ०शोधनमिति ।
०र्थेति । उत्तरेणानवकृष्टस्य अनिबद्धस्य पूर्ववादस्य शोधनं निवृत्तं
०वेदित्यर्थः । शोधनेऽतिनिविष्टानिलयमाह ०पूर्वपक्षमिति ।
०मानादीनि । प्रागुक्तमिदम् । इत्यन्यस्य योऽन्यापीति शेषः ॥ ६ ॥

मि० एवं शोधितपत्रारूढे पूर्वपक्षे किं कर्तव्यमि-
त्यत आह ।

या० श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसंनिधौ ।

मि० श्रुतो भाषार्थो येन प्रत्यर्थिनाऽसौ श्रुतार्थः । त-
स्योत्तरं पूर्वपक्षादुत्तरस्य भवतीत्युत्तरं लेख्यं लेखनी-
यम् पूर्वावेदकस्यार्थिनः संनिधौ समीपे । उत्तरं च
यत् पूर्वोक्तस्य निराकरणं तदुच्यते ।

यथाह,

पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम् ।
अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ॥ इति ।

पक्षस्य व्यापकं निराकरणसमर्थम् । सारं न्या-
य्यं न्यायादनपेतम् । असंदिग्धं सन्देहरहितम् । अ-

नाकुलं पूर्वापराविरुद्धम् । अव्याख्यागम्यम् अप्रसिद्धपदप्रयोगेण अश्लिष्टविभक्तिसमाससाध्याहाराभिधानेन वा अदेशभाषाभिधानेन वा यत् व्याख्येयार्थं न भवति तत् सदुत्तरम् । तच्च चतुर्विधम् । संप्रतिपत्तिः मिथ्या प्रत्यवस्कन्दनं पूर्वन्यायश्चेति ।

यथाह कात्यायनः,

सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा ।
पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधम् ॥ इति ।

तत्र सत्योत्तरं यथा, रूपकशतं मह्यं धारयतीत्युक्ते सत्यं धारयामीति ।

यथाह,

साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता । इति ।

मिथ्योत्तरं तु नाहं धारयामीति ।

तथाच कात्यायनः,

अभियुक्तोऽभियोगस्य यदि कुर्यादपह्नवम् ।
मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः ॥ इति ।

तच्च मिथ्योत्तरं चतुर्विधम् । (ना. स्मृ. २।५)

मिथ्यैतद् नाभिजानामि तदा तत्र न संनिधिः ।
अजातश्चास्मि तत्काले इति मिथ्या चतुर्विधम् ॥ इति ।

प्रत्यवस्कन्दनं नाम, सत्यं गृहीतं प्रतिदत्तं प्रतिग्रहेण लब्धमिति वा ।

यथाह नारदः, ( ना. स्मृ. नोपलब्धम् )

अर्थिना लेखितो योऽर्थः प्रत्यर्थी यदि तं तथा ।
प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनं स्मृतम् ॥ इति ।

प्राङ्न्यायोत्तरं तु, यत्राभियुक्त एवं ब्रूयादस्मिन्न-

यं अनेनाहमभियुक्तस्तत्र चायं व्यवहारमार्गेण परा-
जित इति ।

उक्तं च कात्यायनेन,

आचारेणावसन्नोऽपि पुनर्लेखयते यदि ।
सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते ॥ इति ।

एवमुत्तरलक्षणे स्थिते उत्तरलक्षणरहितानामुत्त-
रवदवभासमानानामुत्तराभासत्वमर्थसिद्धम् ।

स्पष्टीकृतं च स्मृत्यन्तरे,

संदिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च ।
पक्षैकदेशव्याप्यन्यत्तथा नैवोत्तरं भवेत् ॥
यद्व्यस्तपदमव्यापि निगूढार्थं तथाऽऽकुलम् ।
व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये ॥ इति ।

तत्र सन्दिग्धम्, सुवर्णशतमनेन गृहीतमित्युक्ते, सत्यं गृहीतं, सुवर्णशतं माषशतं वेति। प्रकृतादन्यत्, यथा सुवर्णशताभियोगे पणशतं धारयामीति। अत्यल्पं, सुवर्णशताभियोगे पञ्चाशतं धारयामीति। अतिभूरि, सुवर्णशताभियोगे द्विशतं धारयामीति । पक्षैकदेशव्यापि, हिरण्यवस्त्राद्यभियोगे हिरण्यं गृहीतं नान्यदिति । व्यस्तपदम्, ऋणादानाभियोगे पदान्तरेणोत्तरम्। यथा, सुवर्णशताभियोगे अनेनाहं ताडित इति । अव्यापि देशस्थानादिविशेषणाव्यापि । यथा, मध्यदेशे वाराणस्यां पूर्वस्यां दिशि क्षेत्रमनेनापहृतमिति पूर्वपक्षे लिखिते क्षेत्रमपहृतमिति । निगूढार्थं, यथा सुवर्णशताभियोगे किमहमेवास्मै धारयामीति। अत्र ध्वनिना प्राड्विवाकः सभ्यो वा अर्थी वा अन्यस्मै

धारयतीति वक्तव्यमिति निगूढार्थम् । आकुलं पूर्वापरविरुद्धम् । यथा, सुवर्णशताभियोगे कृते सत्यं गृहीतं न धारयामीति । व्याख्यागम्यं दुःश्लिष्टविभक्तिसमासस्वाध्याहाराभिधानेन व्याख्यागम्यम् । अदेशभाषाभिधानेन वा । यथा सुवर्णशतविषये पितृऋणाभियोगे गृहीतशतवचनात् सुवर्णानां पितुर्न जानामीति । अत्र गृहीतशतस्य पितुर्वचनात् सुवर्णानां शतं गृहीतमिति न जानामीति । असारं न्यायविरुद्धम् । यथा सुवर्णशतमनेन वृद्ध्या गृहीतं वृद्धिरेव दत्ता न मूलमित्यभियोगे न सत्यं वृद्धिर्दत्ता न मूलं गृहीतमिति । उत्तरमित्येकवचननिर्देशादुत्तराणां संकरो निरस्तः ।

यथाह कात्यायनः,

पक्षैकदेशे यत्सत्यमेकदेशे च कारणम् ।
मिथ्या चैवैकदेशे च संकरात्तदनुत्तरम् ॥ इति ।

अनुत्तरत्वे च कारणं [illegible]दुत्तरं [illegible],

न चैकस्मिन्वि[illegible]दे तु[illegible]र्विधम् । [illegible]द्वादिनोर्द्वयोः ।
न चार्थसिद्धि[illegible]मि तदा क्रियाद्वयम् ॥ इति ।

मिथ्याकारणो[illegible] इति [illegible] अर्थिप्रत्यर्थिनोर्द्वयोरपि क्रिया प्राप्नोति [illegible]म, [illegible]

मिथ्या क्रिया पू[illegible]वादे कारणे प्रतिवादिनि ।

इति स्मरणात् । तदुभयमेकस्मिन्व्यवहारे विरुद्धम् । यथा सुवर्णं रूपकशतं चानेन गृहीतमित्यभियोगे सुवर्णं न गृहीतं रूपकशतं गृहीतं प्रतिदत्तं चेति । कारणप्राङ्न्यायसंकरे तु प्रत्यर्थिन एव क्रियाद्वयम् ।

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम् ।
इति ।

यथा सुवर्णं गृहीतं प्रतिदत्तं रूपकं व्यवहारमार्गेण पराजित इति । अत्र प्राङ्न्याये जयपत्रेण वा प्राङ्न्यायदर्शिभिर्वा भावयितव्यम्, कारणोत्तरे तु साक्षिलेख्यादिभिर्भावयितव्यमिति विशेषः । एवमुत्तरत्रयसंकरेऽपि द्रष्टव्यम् । यथा अनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीत्यभियोगे सत्यं सुवर्णं गृहीतं प्रतिदत्तं रूपकशतं न गृहीतं वस्त्रविषये तु पूर्वन्यायेन पराजित इति । एवं चतुःसंकरेऽपि । एतेषां चानुत्तरत्वं यौगपद्येन । तस्य तस्यांशस्य तेन तेन विनाऽसिद्धेः । क्रमेणोत्तरत्वमेव । क्रमश्चार्थिनः प्रत्यर्थिनः सभ्यानां चेच्छया भवति । यत्र पुनरुभयोः संकरः तत्र यस्य प्रभूतार्थविषयत्वं तत्क्रियोपादानेन पूर्वं व्यवहारः प्रवर्तनीयः । पश्चादल्पविषयोत्तरोपादानेन च व्यवहारो द्रष्टव्यः । यत्र संप्रतिपत्तेः उत्तरान्तरस्य च संकरस्तत्रोत्तरान्तरोपादानेन व्यवहारो द्रष्टव्यः । संप्रतिपत्तौ क्रियाऽभावात् ।

यथा हारीतेन,

मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे ।
सत्यं चापि सहान्येन तत्र ग्राह्यं किमुत्तरम् ॥

इत्युक्त्वोक्तम्,

यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम् ।
उत्तरं तत्र तज्ज्ञेयमसंकीर्णमतोऽन्यथा ॥

संकीर्णं भवतीति शेषः।शेषापेक्षया ऐच्छिकक्रमम्

अपेक्षाक्रमं भवतीत्यर्थः। तत्र प्रकृतार्थं यथा, अनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीत्यभियोगे सत्यं सुवर्णं गृहीतं रूपकशतं च न गृहीतं वस्त्राणि तु गृहीतानि प्रतिदत्तानि चेति। अत्र मिथ्योत्तरस्य प्रभूतविषयत्वात् अर्थिनः क्रियामादाय प्रथमं व्यवहारः प्रवर्तयितव्यः। पश्चाद्वस्त्रविषयो व्यवहारः। एवं मिथ्याप्राङ्न्यायसंकरे कारणप्राङ्न्यायसंकरे च योजनीयम्। तथा, तस्मिन्नेवाभियोगे सत्यं सुवर्णं रूपकशतं च गृहीतं, प्रतिदास्यामि, वस्त्राणि तु न गृहीतानि, गृहीतानि प्रतिदत्तानीति वा, वस्त्रविषये पूर्वं पराजित इति वोत्तरे संप्रतिपत्तेर्भूरिविषयत्वेऽपि तत्र क्रियाऽभावान्मिथ्याद्युत्तरक्रियामादाय व्यवहारः प्रवर्तयितव्यः। यत्र तु मिथ्याकारणोत्तरयोः कृत्स्नपक्षव्यापित्वम्, यथा शृङ्गग्राहिकया कश्चिद्वदति इयं गौर्मदीया अमुकस्मिन्काले नष्टा अद्यास्य गृहे दृष्टेति, अन्यस्तु मिथ्यैतत् एतत्प्रदर्शितकालात्पूर्वमेवास्मद्गृहे स्थिता मम गृहे जाता वेति वदति। इदं तावत् पक्षनिराकरणसमर्थत्वान्नानुत्तरम्। नापि मिथ्यैव। कारणोपन्यासात्। नापि कारणम्। एकदेशस्याभ्युपगमाभावात्। तस्मात्सकारणं मिथ्योत्तरमिदम्। अत्र च प्रतिवादिनः क्रिया। कारणे प्रतिवादिनीति वचनात्। ननु मिथ्या क्रिया पूर्ववादे इति पूर्ववादिनः कस्मात्क्रिया न भवति। तस्य शुद्धमिथ्याविषयत्वात्। कारणे प्रतिवादिनीत्येतदपि कस्माच्छुद्धकारणविषयं न भवति। नैतत्। सर्वस्यापि कारणोत्तरस्य

मिथ्यासमस्तनिराकरणत्वात् शुद्धकारणोत्तरस्याभावात्। प्रसिद्धकारणोत्तरे प्रतिज्ञातार्थैकदेशस्याभ्युपगमे नैकदेशस्य मिथ्यात्वम्। यथा, सत्यं रूपकशतं गृहीतं न धारयामि प्रतिदत्तत्वादिति। प्रकृतोदाहरणे तु प्रतिज्ञातार्थैकदेशस्याभ्युपगमो नास्तीति विशेषः।

एतच्च हारीतेन स्पष्टमुक्तम्,

मिथ्याकारणयोर्वापि ग्राह्यं कारणमुत्तरम्। इति।

यत्र मिथ्याप्राङ्न्याययोः पक्षव्यापित्वम्, यथा रूपकशतं धारयतीत्यभियोगे मिथ्यैतत् अस्मिन्नर्थे पूर्वमयं पराजित इति। अत्रापि प्रतिवादिन एव क्रिया।

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्।

इति वचनात्। शुद्धस्य प्राङ्न्यायस्याभावादनुत्तरत्वप्रसङ्गात्। संप्रतिपत्तेरपि साध्यत्वेनोपदिष्टस्य पक्षस्य सिद्धत्वोपन्यासेन साध्यत्वनिराकरणादेवोत्तरत्वम्। यदा तु कारणप्राङ्न्यायसंकरः, यथा शतमनेन गृहीतमित्यभियुक्तः प्रतिवदति, सत्यं गृहीतं प्रतिदत्तं चेति अस्मिन्नेवार्थे प्राङ्न्यायेनायं पराजित इति, तत्र प्रतिवादिनो यथारुचीति न कश्चिद्विप्रतिवादिनोरेकस्मिन्व्यवहारे क्रियाद्वयप्रसङ्ग इति निर्णयः।

एवमुत्तरे पत्रे निवेशिते साध्यसिद्धेः साधनायत्तत्वात्साधननिर्देशं कः कुर्यादित्यपेक्षिते आह।

या० ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्॥ ७॥

मि० तत उत्तरानन्तरम् अर्थी साध्यवान् सद्य एवान-

न्तरमेव लेखयेत्।प्रतिज्ञातः साध्यः। सच्चासावर्थश्चेति प्रतिज्ञातार्थः। तस्य साधनं, साध्यतेऽनेनेति साधनं प्रमाणम्। अत्र सद्यो लेखयेदिति वदता उत्तराभिधाने कालविलम्बनमभ्यङ्गीकृतमिति गम्यते। नचोत्तरात्र विवेचयिष्यते। अर्थी प्रतिज्ञातार्थसाधनं लेखयेदिति वदता यस्य साध्यमस्ति स प्रतिज्ञातार्थसाधनं लेखयेदित्युक्तम्। अतश्च प्राङ्न्यायोत्तरे प्राङ्न्यायस्यैव साध्यत्वात्प्रत्यर्थ्येवार्थी ज्ञात इति स एव साधनं लेखयेत्। कारणोत्तरेऽपि कारणस्यैव साध्यत्वात्कारणवाद्येवार्थीति स एव लेखयेत्। मिथ्योत्तरे तु पूर्ववाद्येवार्थी स एव साधनं निर्दिशेत्। ततोऽर्थी लेखयेदिति वदता अर्थ्येव लेखयेन्नान्य इत्युक्तम्। अतश्च संप्रतिपत्त्युत्तरे साध्याभावेन भाषोत्तरवादिनोर्द्वयोरप्यर्थित्वाभावात्साधननिर्देश एव नास्तीति तावतैव व्यवहारः परिसमाप्यते इति गम्यते।

एतदेव हारीतेन स्पष्टमुक्तम्,

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्॥ इति॥७॥

वा० १।प्रत्यर्थिनो वचनस्य उत्तरत्वे बीजमाह *पूर्वेति। उत्तरत्र अग्रे। तदीययथाकथञ्चिद्वचनस्यानुत्तरत्वाय विशेषमाह *उत्तरं चेति। तद्विदः व्यवहारविदः। सारामित्यस्यार्थो न्याय्यम्। तदर्थो न्यायादिति। तृतीयान्तानां त्रयाणां यथाख्येयार्थमित्यत्रान्वयः। *आश्लिष्टेति। दुःश्लिष्टेति पाठान्तरम्। श्लिष्टं सम्बन्धयुक्तम् अदुष्टमिति यावत्। न श्लिष्टमश्लिष्टं असम्बद्धं दुष्टमिति यावत्। विभक्तिश्च समासश्च विभक्तिसमासौ, अश्लिष्टौ दुष्टौ च तौ

विभक्तिव्यत्यासो न वा. प्रत्याहारेण सह वर्णनमिति साध्याहारं,
वा प्र मम नास्ति । तदभिधानं तेनेत्यर्थः । दुःस्थितेति पाठेऽप्ये-
वम् । दुःस्थितो दुःखेन सम्बद्धो यो वा तथाविधस्य दुरु-
क्ते यदि तत्वानात् । *भद्रकेति । अन्यदेशेति पाठान्तरम् । उप-
लक्षणार्थमाह । तत्सदृशमिति ।

२ । ०अन्यतरस्यन्तेति । कारणानन्तरमित्यर्थः । *ममेति । धारेकस्त-
र्णं इति सम्प्रदानत्वम् । ०तत्त्वेति । सत्यस्योक्तिरित्यर्थः । *प्रति-
पन्नमिति । प्रतिपत्तिः सम्प्रतिपत्तिः सत्योत्तरमित्यनर्थान्तरम् ।
*नाहमिति । नाप्युक्तिः पूर्ववत् । ०एतमर्थमपि ।

३ । द्वितीयभेदानाह *तथेति । ०मिथ्यैतत् नाहं धारयामी-
त्येकम्, ०नाभिजानामि नैव जानामीति द्वितीयम् । *तदेति । तस्मि-
न्काले तस्मिन्देशे मम सान्निध्याभावेन न स्थितमिति तृतीयम् ।
*अजात इति । तत्काले ममोत्पत्तिरेव न स्थितेति चतुर्थम् । एवं
प्रकारेण मिथ्योत्तरं चतुर्विधमित्यर्थः । अत्र स्पष्टत्वात्स्मृतिरेवो-
क्ता पृथक् सङ्गतिं न कृतमिति बोध्यम् ।

४ । नाम त्वर्थे । विनिगमनाविरहादाह *प्रतिग्रहेणेति ।
*लेखितः, ण्यन्तस्य रूपम् । मत्यर्थी यदि तं पत्रारूढीकृतमर्थं तथा
प्रपद्य तथैवाङ्गीकृत्येत्याद्यर्थः । *आचारेणेति । व्यवहारेण परा-
जितोऽपीत्यर्थः । *जितः पूर्वमिति । एवं स वाच्य इत्यर्थः । सः
तथोक्तिरूपः ।

५ । स्मृत्यन्तरमाह *यश्चैतामिति । *तत्र एकादशानां मध्ये ।
*पञ्चाशतमिति । अर्द्धन्यूनतया ऽत्यल्पत्वम् । अत एव द्वैगुण्ये-
नातिभूरित्वमाह *द्विशतमिति । समाहारे द्विगुः । पात्रादित्वा-
त्स्त्रीत्वाभावः । *पक्षैकेति । श्लोके तथाशब्दश्चार्थे । अन्यत् पक्षै-
कदेशस्यापि चेत्यन्वयः । पक्षैकदेशनिराकरणसमर्थेत्यर्थः । *व्य-

न्तरमेव लेखयेत्।प्रतिज्ञातः साध्यः। स चासावर्थश्चेति प्रतिज्ञातार्थः। तस्य साधनं, साध्यतेऽनेनेति साधनं प्रमाणम्। अत्र सद्यो लेखयेदिति वदता उत्तराभिधाने कालविलम्बनमप्यङ्गीकृतमिति गम्यते । तच्चोत्तरत्र विवेचयिष्यामः। अर्थी प्रतिज्ञातार्थसाधनं लेखयेदिति वदता यस्य साध्यमस्ति स प्रतिज्ञातार्थसाधनं लेखयेदित्युक्तम्। अतश्च प्राङ्न्यायोत्तरे प्राङ्न्यायवादी च साध्यत्वात्प्रत्यर्थ्येवार्थी जात इति स एव साधनं लेखयेत्। कारणोत्तरेऽपि कारणस्यैव साध्यत्वात्कारणवाद्येवार्थीति स एव लेखयेत् । मिथ्योत्तरे तु पूर्ववाद्येवार्थी स एव साधनं निर्दिशेत् । ततोऽर्थी लेखयेदिति वदता अर्थ्येव लेखयेन्नान्य इत्युक्तम्। अतश्च संप्रतिपत्त्युत्तरे साध्याभावेन भाषोत्तरवादिनोर्द्वयोरप्यर्थित्वाभावात्साधननिर्देश एव नास्तीति तावतैव व्यवहारः परिसमाप्यत इति गम्यते।

एतदेव हारीतेन स्पष्टमुक्तम्,

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्॥ इति॥७॥

या० १।प्रत्यर्थिनो वचनस्य उत्तरत्वं बीजमाह ॥पूर्वेति। उत्तरत्र अग्रे । तदीययथाकथञ्चिद्वचनस्याप्युत्तरत्वाय विशेषमाह ॥उत्तरं चेति। तद्विदः व्यवहारविदः। सारमित्यस्यार्थो न्याय्यम्। तदर्थो न्यायादिति। तृतीयान्तानां त्रयाणां पक्षाव्येयार्थमित्यत्रान्वयः। ॥आश्लिष्टेति। दुःश्लिष्टेति पाठान्तरम्। श्लिष्टं सम्बन्धयुक्तम् अदुष्टमिति यावत्। न श्लिष्टमश्लिष्टं असम्बद्धं दुष्टमिति यावत्। विभक्तिश्च समासश्च विभक्तिसमासौ, अश्लिष्टौ दुष्टौ च तौ

विभक्तिसमानी च तौ. अभ्याहारेण शह यर्तन्ते इति साध्याहारं, तौ च तत्र नानि । तैरभिधानं तैरेत्यर्थः । दुःखिष्टेति पाठेऽप्ययम् । दुःखिष्टौ दुःखेन सम्बद्धौ यौ तौ ताभ्यामित्यर्थात् दुष्टत्वे पर्यवसानात् । *अदेशेति । अन्यदेशेति पाठान्तरम् । उत्तरपदार्थमाह । तत्सदृशमिति ।

२ । *अन्यतरकन्देति । कारणान्तरमित्यर्थः । *मतमिति । धारेत्तमर्णे इति सम्बन्धानन्तम् । *अन्येति । सत्यत्वोक्तिरित्यर्थः । *प्रतिपत्तिरिति । प्रतिपत्तिः सम्प्रतिपत्तिः सत्योत्तरमित्यनर्थान्तरम् । *नाहमिति । वाग्युक्तिः पूर्ववत् । *एवमग्रेऽपि ।

३ । द्वितीयभेदानाह *नमेति । *मिथ्येतत् नाहं धारयामीत्येकं, *नाभिजानामि नैव जानामीति द्वितीयम् । *तदेति । तस्मिन्काले तस्मिन्देशे मम सान्निध्यमेव न स्थितमिति तृतीयम् । *अजात इति । तत्काले ममोत्पत्तिरेव न स्थितेति चतुर्थम् । एवं प्रकारेण मिथ्योत्तरं चतुर्विधमित्यर्थः । अत्र स्पष्टत्वात्स्मृतिरेवोक्ता पृथक् सङ्कीर्तनं न कृतमिति बोध्यम् ।

४ । नाम त्वर्थे । विनिगमनाविरहादाह *प्रतिग्रहेणेति । *लेखितः, ण्यन्तस्य रूपम् । मत्यर्थी यदि तं पत्रारूढीकृतमर्थं तथा प्रपद्य तथैवाङ्गीकृत्येत्याद्यर्थः । *आचारेणेति । व्यवहारेण पराजितोऽपीत्यर्थः । *जितः पूर्वमिति । एवं स वाच्य इत्यर्थः । सः तथोक्तिरूपः ।

५ । स्मृत्यन्तरमाह *यद्यस्तामिति । *तत्र एकादशानां मध्ये । *पञ्चाशतमिति । अर्द्धन्यूनतया ऽत्यल्पत्वम् । अत एव द्वैगुण्येनातिभूरित्वमाह *द्विशतमिति । समाहारे द्विगुः । पात्रादित्वात्स्त्रीत्वाभावः । *पक्षैकेति । श्लोके तथाशब्दश्चार्थे । अन्यत् पक्षैकदेशव्यापि चेत्यन्वयः । पक्षैकदेशनिराकरणसमर्थेत्यर्थः । *व्य-

स्तेति । अपरकृतपदकार्यमित्यर्थः । पश्चात्तदेकव्यापिनोऽनुमानं तदेकपक्षव्यापिनोऽनुमानमर्थसिद्धमेवेत्याशयेनाह स्या-माह *द्वेषेति । *पक्षेति । भिन्नार्थासम्बन्धोऽनर्थः । *त्रिविधं इति । अन्तर्भावितण्यर्थमिदम् । शुद्धार्थमाह *भयेति । आदिना क्रियादिविरोधेन । तथाकुल्यमिति पाठो न तु निराकुल्यमित्यभिप्रे-त्याह *आकुलमिति । *दुःस्थितेति । आर्त्तेन । उभयोरुदाहरणमा-ह *पित्रेति । पितुर्ये ऋणाभियोगस्तत्रेत्यर्थः । उत्तरमाह *गृ-हीतेत्यादिना इतीत्यन्तेन । अस्य तात्पर्यमाह *अत्रेति । *गृही-तेति । बहुव्रीहिः । तथा च गृहीतशतवचनादित्यत्र द्वन्द्वः समासः । सुवर्णानामित्यत्र शतं गृहीतमित्यस्याध्याहार इत्युभ-योरेकमेवोदाहरणम् । इतीत्यस्य निराकृतमिति शेषः । *गृहीत-मिति । तत्रेति शेषः । इदं सदुत्तरं ननु स्वार्थसिद्धये नेति द्वि-तीयश्लोकार्थः । तथा च तस्य सदुत्तरत्वमेव नेति पूर्वश्लोकैक-वाक्यतेति बोध्यम् ।

६ । अभिमतार्थसूचकतया न न्यूनतेत्याह *उत्तरमिति । श्रुतार्थस्योत्तरं लेख्यमित्यत्र तथा निर्दिष्टानसङ्कीर्णोत्तरस्यानु-त्तरत्वमित्यर्थः । ननु त्रिभिर्मिलित्वा पक्षस्य निराकरणेन त-त्समर्थत्वात्कुतोऽनुत्तरत्वमत आह *अनुत्तरत्वेनेति । तेनैव कात्यायनेनैव । न चेति । *न हीत्यर्थः । *स्यादिति । सम्भावना-यां लिङ् । वादिनोः अर्थिप्रत्यर्थिनोः । एकत्र अन्यतरस्मिन्, सम्भवतीति शेषः । सङ्करस्यानेकविधत्वादादौ द्वयोः सङ्करे आद्यो-दाहरणमाह । *मिथ्येति । वादिनोरित्यस्यार्थमाह *अर्थीति । न वादिद्वयपरत्वमिति सूचयितुम् । *मिथ्येति । अव्ययमिदं, मिथ्यो-त्तरे इत्यर्थः । पूर्ववादे कर्मण्यण्, वादिनीत्यर्थः । कारणे कारणो-त्तरे । *विरुद्धमिति । तथा च कर्त्तुमशक्यत्वादुभयोर्नार्थसिद्धिरि

ति भावः । न चार्थेति चोक्त एवेत्यर्थः । न चैतत्तन्त्रस्य तन्त्रेतो-
दाहरणमाह *कारणेति । तयोर्मिथः सङ्करे इत्यर्थः । एतेना-
पिन्यस्तोदः । *प्राङ्न्यायेति । सर्वत्रैकेत्यर्थः । नेदं मन्ते-
करणम् । कारणाति "कारणं प्रतिमाद्विनि" इति सिद्धत्वात् ।
तत्सामस्त्योरन्यपरमेतद् । अत एव समानार्थिर्दृशन्तविरपि ।
इति: मानम् । ननु तत्रकरणेन क्रिया न दृश्योरिति न प्राग्विरो-
धो स्त आह *अत्र चेति । द्वितीयसङ्करे त्वित्यर्थः । *प्रागेति ।
सामयिकत्वादिति कृत्वेत्यर्थः । आदिना द्विव्यपरिग्रहः ।
*उत्तरत्रयेति । मिथ्याकारणप्राङ्न्यायरूपेत्यर्थः । *एवं
चतुरिति । यथा अनेन सुवर्णं रूपकशतं वस्त्राणि धान्यं च गृही-
तमित्यभियोगे सुवर्णं धारयामि रूपकशतं न गृहीतं वस्त्राणि
प्राग्निग्रहेण लब्धानि धान्यविषये पूर्वन्यायेन पराजित इति । एवं
मिथ्याप्राङ्न्यायसमाससङ्करेऽपि द्रष्टव्यम् ।

७ । नन्वत्र सर्वत्र क्रमेण क्रियाद्वयस्य सुकरत्वात्कात्यायनो-
क्तमसम्भवत्कल्पं तत्कारणकथनमयुक्तमतस्तदाशयमाह *एतेषां
चेति । असिद्धेरिति छेदः । अत एवैतत्फलितमाह *क्रमेण-
ति । क्रमेणात्त्वित्यर्थः । तत्र नियामकाभावादाह *क्रमश्चेति ।
चेन प्राङ्विवाकादेः समुच्चयः । एवं प्राप्ते क्वचिन्नियामकमाह
*यत्रेति । यत्र त्वित्यर्थः । *उभयोरिति । मिथ्याकारणोत्तरयोरित्य-
र्थः । इदमुपलक्षणं त्र्यादेरपि । यस्य उत्तरस्य । *तत्क्रियोपेति ।
तत्साधकक्रियाग्रहणेनेत्यर्थः । *पश्चादिति । अल्पविषयकोत्तर-
साधकक्रियाग्रहणेनेत्यर्थः । सत्योत्तरसङ्करस्य पूर्वमनुपन्यासे
बीजं ध्वनयन् तत्र नियामकान्तरमाह *यत्र चेति । फलाभावे-
न पश्चादपि तदभावादत्र पूर्वमिति नोक्तम् । तदाह *सम्भेति ।
उक्तनियामकद्वये मानमाह *यथेति । उक्तामित्यत्रान्वयः । द्विती-

भावः । यद्वा शुद्धस्य साहस्यायस्याभावाद्धनने क्रियांशस्य स्था- ठानत्र कस्यापि क्रियाया अन्यांशेन सत्वेऽपि साहस्यायस्यानु- त्तरत्वमसङ्गो, न च वाच्यं, तत्र तस्य गणनात् । तथा च यथा यथो- त्तरस्य प्रवृत्तिस्तथा कारणस्य मिथ्यासदन्यनिरूपणात् सांकर्ये प्रवृत्तिरिति भावः । शुद्धसाहस्याये तु प्रथमेति व्याख्यायाम् "साहस्याशनिर्विसिद्धानु" इति ।

१० । ननु पक्षनिराकरणसमर्थस्योत्तरत्वे संकीर्णस्यानु- त्तरत्वमसङ्गस्तदभावादत आह *संकीर्णत्वेऽपीति । उत्तरत्वमित्य- त्रान्वयः । *साध्यत्वेनेति । सत्यमिथ्येति भावः । एवं प्रतिवादि- न एकक्रियास्थले उक्ता तस्यैव क्रियाद्वयसंभवे तत्र प्रागुक्तत्र विशेषं प्रतिपादयन्प्रसङ्गान्तरमाह *यदा त्विति । यदा त्वर्था- त्यर्थः । तत्र तत्रापि । *यथास्तीति । तस्यैव । तयोर्मध्ये अन्यतर- क्रियेत्यर्थः । संकीर्णोत्तरस्य युगपदनुत्तरत्वमुक्तमुपसंहरति । *इति न कश्चिदिति ।

११ । निवेशिते लेखिते । प्रागुक्तमूलसंगमाह *साध्यत्वानि- ति । स्पष्टार्थमाह *प्रतीति । भावेऽर्थासङ्केतेरिष्टासिद्धेश्चाह *साध्यतइति । प्रमाणं लिखितादि वक्ष्यमाणम् । पूर्वत्र न्यूनतां निराचष्टे *अत्रेति । अपिना सद्यः । मिथ्याक्रियेत्यादिप्रागु- क्तार्थस्य मूलारूढत्वं सूचयन्नर्थिशब्दस्यात्र यौगिकत्वं न योग- रूढत्वमितिसूचनद्वारा न्यूनत्वाभावं प्रतिपादयति *अर्थीति । वर्त्तमानसत्त्वोपाधिकान्मतुवाद्युत्पत्तेराह *अस्तीति । अपिः पूर्व- समुच्चये । तेन साम्यम् । तुर्वैलक्षण्ये । निर्दिशेत् लेखयेत् । व्य-

१ कालविलम्बनमपि इति मिताक्षरास्थेन अपिशब्देन सद्य इत्य र्थो बोध्यः । उत्तराभिधाने कालविलम्बनमङ्गीकृतं न तु शीघ्रमुत्तर- दानस्यानङ्गीकार इति भावः ।

र्थान्तरभावः स्यात्। अन्यदप्याह एतथेति। *अर्थेनेति। आ-क्षेपादेन फलं लाभं गडुन्तिनिरपायेनेति भावः। *अनथेति। गम्यते ऽन्यत्रान्वयः। *गावनैव ताहशोत्तरदानेनैव। अत्र सर्वत्र मान-मा० *एतदेवेति। अर्थादित्यादिनोक्तमेवेत्यर्थः *मादन्यायेति। अ *पाश्च उक्तः। पूर्ववादी तु. क्रियां निर्दिशेत्। सा क्रिया ॥७॥

मि० ततः किमित्यत आह।

या० तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा।

मि० तस्य साधनस्य प्रमाणस्य वक्ष्यमाणलिखि-तसाक्ष्यादिलक्षणस्य सिद्धौ निर्वृत्तौ सिद्धिं सा-ध्यस्य जयलक्षणां प्राप्नोति। अतोऽस्मात्प्रकाराद-न्यथा प्रकारान्तरे साधनासिद्धौ विपरीतं साध्यस्या-सिद्धिं पराजयलक्षणामाप्नोनीति संबन्धः।

मि० एवं व्यवहाररूपमभिधायोपसंहरति।

या० चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः॥ ८॥

मि० व्यवहारान्नृपः पश्येदित्युक्तो व्यवहारः सोऽय-मित्थं चतुष्पाचतुरंशकल्पनया विवादेषु ऋणादाना-दिषूपदर्शितो वर्णितः। तत्र प्रत्यर्थिनोऽग्रतो लेख्यम् इति भाषापादः प्रथमः। श्रुतार्थस्योत्तरं लेख्यमित्यु-त्तरपादो द्वितीयः। ततोऽर्थी लेखयेत्सद्य इति क्रि-यापादस्तृतीयः। तत्सिद्धौ सिद्धिमाप्नोतीति साध्य-सिद्धिपादश्चतुर्थः।

यथोक्तम्,
परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु।
वाक्यन्यायाद्व्यवस्थानं व्यवहार उदाहृतः॥

भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवर्तिभिः ।
आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयते ॥ इति ।

संप्रतिपत्त्युत्तरे तु साधनानिर्देशात्क्रियापादस्यासाध्यत्वाच्च न साध्यसिद्धिलक्षणः पादोऽस्तीति त्रिपात्त्वमेव । उत्तराभिधानानन्तरं सभ्यानामर्थिप्रत्यर्थिनोः कस्य क्रिया स्यादिति परामर्शलक्षणस्य प्रत्याकलितस्य योगीश्वरेण व्यवहारपादत्वेनानभिधानात् व्यवहर्तुः संबन्धाभावाच्च न व्यवहारपादत्वमिति स्थितम् ॥ ८ ॥

व्या० १ । ततः साधननिर्देशानन्तरम् । प्रकारान्तरं इत्यस्य व्याख्या साधनासिद्धाविति । *एवं व्यवहारस्तद्विषयादिकथनप्रकारेण । रूपं स्वरूपम् । व्यवहारपदार्थं स्पष्टार्थमाह *व्यवेति । *सोऽयं व्यवहारोऽयम् । इत्थम् उक्तप्रकारेण । चतुष्पादत्वासम्भवादाह *चतुरंशेति । ऋणादानादिषु वक्ष्यमाणेषु विषयं ।

२ । तानेवांशान् विभज्य दर्शयति *तत्रेति । तेषां मध्ये इत्यर्थः । विप्रतिपत्तिषु सतीषु । अस्य न सार्वत्रिकत्वमित्याह *संमतीति । अनिर्देशे हेतुमाह *भाषार्थेति । चः लक्षण इत्यग्रे योज्यः । तेन क्रियापादसमुच्चयः । यद्वा चो हेतुसमुच्चये एव । लक्षणः लक्षणोऽपि । क्वचित्तथा पाठ एव । अत एवाह *द्विपात्त्वमेवेति ।

३ । न्यूनतां निराचष्टे *उत्तरेति । अर्थिप्रत्यर्थिनोः, मध्ये इति शेषः । *प्रत्याकलितेति । पौनःपुन्येन विचारणस्येत्यर्थः । अस्य व्यभिचारितत्वादाह *व्यवेति । अर्थ्यादिसम्बन्धिन एव तत्त्वमिति भावः ॥ ८ ॥

इति साधारणव्यवहारमातृकाप्रकरणम् ॥

असाधारणव्यवहारमातृकाप्रकरणम् ॥ २ ॥

मि० एवं सर्वव्यवहारोपयोगिनीं व्यवहारमातृका-
मभिधायाधुना
क्वचिद्व्यवहाराविशेषे कञ्चिद्विशेषं दर्शयितुमाह ।

या० अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।

मि० अभियुज्यतइति अभियोगोऽपराधः तमभियोगमनिस्तीर्य अपरिहृत्य एनमभियोक्तारं न प्रत्यभियोजयेत् अपराधेन न संयोजयेत् । यद्यपि प्रत्यवस्कन्दनं प्रत्यभियोगरूपं तथापि स्वापराधपरिहारात्मकत्वात् नास्य प्रतिषेधविषयत्वम् । अतः स्वाभियोगानुपमर्दनरूपस्य प्रत्यभियोगस्यायं निषेधः । इदं प्रत्यर्थिनमधिकृत्योक्तम् ।

मि० अथ अर्थिनं प्रत्याह ।

या० अभियुक्तं च नान्येन नोक्तं विप्रकृतिं नयेत् ॥९॥

मि० *अभियुक्तं च नान्येनेति । अन्येनाभियुक्तमनिस्तीर्णाभियोगमन्योऽर्थी नाभियोजयेत् । किञ्च । उक्तम् आवेदनसमये यदुक्तं तद्विप्रकृतिं विरुद्धभावं न नयेत् न प्रापयेत् । एतदुक्तं भवति । यद्वस्तु येन रूपेणावेदनसमये निवेदितं तद्वस्तु तथैव भाषाकालेऽपि लेखनीयं नान्यथेति । ननु

प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना ।(या.अ.२।६)

इत्यत्रैवेदमुक्तं किमर्थं पुनरुच्यते, नोक्तं विप्रकृतिं नयेदिति । उच्यते । यथावेदितमर्थिनेत्यनेना-

वेदनसमये यत्तत्तु निवेदितं तदेव भाषासमयेऽपि तथैव लेखनीयम् एकस्मिन्नपि पदे न वस्त्वन्तरमित्युक्तम्। यथाऽनेन रूपकशतं गृहीत्वा गृहीतमित्यावेदनसमये प्रतिपाद्य प्रत्यर्थिसन्निधौ भाषासमये वस्त्रशतं गृहीत्वा गृहीतमिति न वक्तव्यम्। तथा सति पदान्तरागमनेऽपि वस्त्वन्तरगमनाद्धीनवादी दण्ड्यः स्यादिति। नोक्तं विप्रकृतिं नयेदित्यनेनैकवस्त्वनुबन्धेऽपि पदान्तरगमनं निषिध्यते। यथा रूपकशतं गृहीत्वा गृहीत्वाऽयं न प्रयच्छतीत्यावेदनकालेऽभिधाय भाषाकाले रूपकशतं बलादपहृतवानिति वदतीति। अत्र वस्त्वन्तरगमनं निषिद्धम् इह तु पदान्तरगमनं निषिध्यत इति न पौनरुक्त्यम्। एतदेव स्पष्टीकृतम्—

नारदेन, ( ना. स्मृ. अ. २। २४ )

पूर्वपादं परित्यज्य योऽन्यमालम्बते पुनः।

पदसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः॥ इति।

हीनवादी दण्ड्यो भवति न प्रकृतादर्थाद्धीयते। अतः प्रत्यर्थिनोऽर्थिनश्च प्रमादपरिहारार्थमेवागमभियोगमनिस्तीर्येत्याद्युपदेशो न प्रकृतार्थसिद्ध्यसिद्धिविषयः। अत एव वक्ष्यति, ( या. अ. २। १९ )

छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः। इति।

एतच्चार्थव्यवहारे द्रष्टव्यम्। मन्युकृते तु व्यवहारे प्रमादाभिधाने प्रकृतादपि व्यवहाराद्धीयत एव। यथाह नारदः, ( ना. स्मृ. अ. २। २५ )

सर्वेष्वर्थविवादेषु वाक्छले नावसीदति।

पशुस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते॥ इति।

अन्वयार्थः। सर्वेष्वर्थविवादेषु न मन्युकृतेषु वाक्छले प्रमादाभिधानेऽपि नावसीदति न पराजीयते। न प्रकृतादर्थाद्धीयते इत्यर्थः। अत्रोदाहरणं पशुस्त्री-त्यादि। पशुस्त्रीभूम्यृणादाने प्रमादाभिधानेन दण्ड्योऽपि सभा प्रकृतादर्थान्न हीयते एवं सर्वेष्वर्थविवादेष्विति। अर्थविवादग्रहणान्मन्युकृतविवादेषु प्रमादाभिधानेन प्रकृतादप्यर्थाद्धीयत इति गम्यते। यथाऽहमनेन शिरसि पादेन ताडित इत्यावेदनसमये अभिधाय भाषाकाले हस्तेन पादेन वा ताडित इति वदन् न केवलं दण्ड्यः पराजीयते च ॥ ९ ॥

बा० १। प्रकृते योगरूढत्वपर्यन्तनिरासायाह। *अभियुज्यते इति। दोषाविष्क्रियते इत्यर्थः। येनेति शेषः। करणे घञः सौत्रत्वात्। यथाश्रुतं वा। सम्बध्यते इति तदर्थात्। एतावि-त्यत्र कथितानुकथनसत्त्वेनान्यादेशविषयत्वादेनादेशः। अपरा-धेनेत्यस्य विशेषणत्वाय शङ्कते *यद्यपीति। सत्यं गृहीतं प्रति-दत्तं चेति कारणोत्तरस्य अनेन दत्तं स्थितं मया पुनर्दत्तमित्येवं प्रत्यभियोगरूपत्वमित्यर्थः। *विषयत्वमिति। तथा चाभियोगानि-वारकमेव प्रत्यभियोगं कुर्यादेव न तदनिवारकम्। अन्यथा सत्यं मिथ्योत्तरमित्यादिना चातुर्विध्यकथनस्यैवासङ्गतत्वापत्तेः, एतन्निषेधवैयर्थ्यापत्तेश्च। तदाह *अत इति। *अनुपमर्दनेति। करणे ल्युट्। *निषेध इति। नेनं प्रत्यभीति निषेध इत्यर्थः। तथैव सम्भवादाह *इदमिति।

२। भूते कर्मणि निष्ठायां तन्निस्तारे जाते तस्येष्टत्वेनासङ्गतिं परिहरति *अनिस्तीर्णेति। भावनिष्ठान्तान्मत्वर्थीयोऽजिति भावः। अन्येनेत्यस्य पूर्वाभियोगे सम्बन्धात् योग्यतया शेषमा-

इत्यर्थः । स्वाभियुक्तं शास्त्रीयं निराकरोति *हीनेति । दण्ड्य एवेत्यर्थः । अत एवाह *न चेति । तदनन्तरक्रमेणाह *प्रत्यर्थी ति । *निरुक्तार्थेति । हीनत्वादित्यत्र प्रकृतार्थासिद्धिरतथात्वे नास्तिसिद्धिरित्यर्थः । अत एवाह *अत एवेति । मूलकृदिति शेषः । अन्यार्थोऽत्र एव स्फुटः । इदमपि न सार्वत्रिकमित्याह *एतदेवेति । हीनत्वादौ दण्ड्य एव, न प्रकृतार्थाद्धीयते इत्येतदि- त्यर्थः । *अर्थेति । उक्तातिपन्नव्यवहारे एवेत्यर्थः । *मन्युकृते त्वि- ति । वाक्पारुष्यदण्डपारुष्यादिव्यवहारे इत्यर्थः । अपिना द- ण्डसमुच्चयः । तथा चैतं निषे वाक्छले व्यवहारहानिर्दण्डश्चेति भावः । उक्तार्थस्य स्पष्टतया उपासादाह *अस्यार्थ इति । अ- र्थपदव्याख्यानेनाह *न मन्युकृतेष्विति । अन्यत्र तस्य स्पष्टत्वादे- वाह *प्रमादेनेति । नावर्तीदर्नोत्यस्य व्याख्या न पराजी यते इति । तद्व्याख्या न प्रकृतादिति । उत्तरार्द्धस्यासंबद्धत्वं पुनरुक्तत्वं च परिहरति *अत्रोदेति । सामान्योक्तौ विशेषोक्ति- र्दृष्टान्त इति भावः । तत्त्वं योजयति *प्रमादेति । शास्त्रपदार्थो *दण्ड्योऽपीति । उदाहरणत्वादेवाह *यथेति । शेषपूरणमनयो- रिति भावः । अत एव वाक्छले इति सप्तम्यन्तच्छेदो न तृती- यान्त इति बोध्यम् । अत एव च वैपरीत्यशङ्का नेति गूढाकूतम् । एवं शाब्दमाद्यार्थमुक्त्वा द्वितीयमर्थपदध्वनितमाह *अर्थेति । प्रमादाभिधानेनेति तृतीयान्तं, न प्राग्वत्सप्तम्यन्तम् । सूचितस्यो- दाहरणमाह *यथाऽहमितीति ॥ ९ ॥

मि० अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत्-
इत्यस्यापवादमाह ।

या० कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च ।

मि० कलहे वाग्दण्डपारुष्यात्मके साहसेषु विष-

शस्त्रादिनिमित्तप्राणिव्यापादनादिषु प्रत्यभियोगसंभवे स्वाभियोगमनिस्तीर्याप्यभियोक्तारं प्रत्यभियोजयेत् । ननु तत्रापि पूर्वपक्षानुपमर्दकत्वेनानुत्तरत्वात्प्रत्यभियोगस्य प्रतिज्ञान्तरत्वे युगपद्व्यवहारासम्भवः समानः । सत्यम् । नात्र युगपद्व्यवहाराय प्रत्यभियोगोपदेशः अपितु न्यूनदण्डप्राप्त्यै अधिकदण्डनिवृत्त्यर्थं वा । तथा हि । अनेनाहं ताडितः शप्तो वेत्यभियोगे पूर्वमहमनेन ताडितः शप्तो वेति प्रत्यभियोगे दण्डाल्पत्वम् ।

यथाह नारदः, (ना. व्य. प. १५ । ९)

पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक् ।
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ॥ इति ।

यदा पुनर्द्वयोर्युगपत्ताडनादिप्रवृत्तिस्तत्राधिकदण्डनिवृत्तिः । ( ना. व्य. प. १५ । ८ )

पारुष्ये साहसे चापि युगपत्संप्रवृत्तयोः ।
विशेषश्चेन्न लभ्येत विनयः स्यात्समस्तयोः ॥ इति ।

एवं युगपद्व्यवहारप्रवृत्त्यसम्भवेऽपि कलहादौ प्रत्यभियोगोऽर्थवान्, ऋणादानादिषु तु निरर्थक एव ।

मि० अर्थिप्रत्यर्थिनोर्विधिमुक्त्वा सभ्यस्य सभापतेः कर्तव्यमाह ।

या० उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ॥१०॥

मि० उभयोरर्थिप्रत्यर्थिनोः । सर्वेषु विवादेषु । निर्णयस्य कार्यं कार्यनिर्णयः । आहिताग्न्यादिषु पाठात्कार्यशब्दस्य पूर्वनिपातः । निर्णयस्य कार्यं च साक्षिलेख्यदानं दण्डदानं च । तस्मिन्समर्थः, प्रतिभूः प्रति-

भवति तत्कार्यं तत्कृत्यमिति प्रतिभूः प्राप्तः सम्यक्येन समर्पयिता । तथाऽसम्भवेऽर्थिप्रत्यर्थिनो रक्षणं पुरुषा नियोक्तव्याः । तेभ्यश्च ताभ्यां प्रतिदिनं वेतनं देयम् ।

यथाह कात्यायनः,

अथ चेत्प्रतिभूर्नास्ति कार्ययोग्यस्तु वादिनः ।
स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनम् ॥ इति ॥ १० ॥

बा० १ । सङ्गतिमाह *अर्थीति । *इत्यस्य इत्यंशस्य । तथा च प्रत्यर्थिविषये एवाग्रमर्थीति भावः । *निमित्तेति । बहुव्रीहिः । ननु साहसादावपि प्रत्यभियोगासम्भवे ऽभियुक्तस्य कथं तत्करणनिषेध आह *प्रत्यर्थीति । तथा च तदसम्भवे नैव कुर्यादिति सम्भवाभिप्रायकमेवैतद्वचनमिति भावः । *स्वाभीति । स्वयमभियुक्त इत्यादिः । तथा चेदं साहसादावेवेति, तदन्यविषयकं तदिति भावः ।

२ । नन्वेवंविधस्थले प्रत्यभियोगः किमुत्तरं सत्सार्थकः उत प्रतिज्ञान्तरं सत् । नाद्यः । पूर्वपक्षानिराकरणासमर्थत्वेनानुत्तरत्वात् । नान्त्यः । अभियोग एका प्रतिज्ञा प्रत्यभियोगश्चान्या । ततश्च सङ्कीर्णोत्तरे यथा युगपद्व्यवहारासम्भवादनुत्तरत्वमेवं प्रतिज्ञान्तरेऽपि तदसम्भवस्य तुल्यत्वात् । अप्रतिज्ञात्वेन प्रत्यभियोगविधेरेव वैयर्थ्यात् । एवं च वचनार्थो दुर्वच इत्याशयेन शङ्कते *नन्वत्रापीति । द्वितीयपक्षमाश्रित्य समाधत्ते *नात्रेति । तत्राद्योदाहरणमाह *अनेनेति । *दण्डेति । प्रत्यभियोक्तुरिति भावः । एवमुक्ततात्पर्ये मानमाह *यथाहेति । *आक्षारयेत् कायेन वाचा वा क्षीणं कुर्यात् । नियतं निश्चयेन । नयो दण्डः । द्वितीयोदाहरणमाह *यदा पुनरिति । यदा त्वित्यर्थः । *पा-

किं च अर्थिना निवेदितस्याभियोगस्य प्रत्यर्थिनाऽपह्नवे कृते यद्यर्थिना साक्ष्यादिभिर्भावितोऽङ्गीकारितः प्रत्यर्थी तदा दद्यात्तत् प्रकृतमर्थिने, राज्ञे च तत्सममपलापदण्डम्। अथार्थी भावयितुं न शक्नोति तदा स एव मिथ्याभियोगी जात इति अभियोगात् अभियुक्तधनात् द्विगुणं धनं दद्याद्राज्ञे। प्राङ्न्याये प्रत्यवस्कन्दने चेदमेव योजनीयम्। तत्रार्थ्येवापह्नववादी प्रत्यर्थिना भावितो राज्ञे प्रकृतधनसमं दण्डं दद्यात्। अथ प्रत्यर्थी प्राङ्न्यायं कारणं वा भावयितुं न शक्नोति तदा स एव मिथ्याभियोगीति राज्ञे द्विगुणं धनं दद्यात्, अर्थिने च प्रकृतं धनम्। सम्प्रतिपत्त्युत्तरे तु दण्डाभाव एव। एतच्च ऋणादानविषयमेव। पदान्तरेषु तत्र तत्र दण्डाभिधानात् अधनव्यवहारेष्वस्यासम्भवाच्च न सर्वविषयत्वम्। राज्ञाऽधमर्णिको दाप्य इत्यस्य ऋणादानविषयत्वेऽपि तत्रैव विशेषं वक्ष्यामः। यद्वा सर्वव्यवहारविषयत्वेनापि योजनीयम्। कथम्? अभियोगस्य निह्नवेऽभियुक्तेन कृते यद्याभियोक्त्रा साक्ष्यादिभिर्भावितोऽभियुक्तस्तदा तत्समं तत्र तत्र प्रतिपदोक्तमेव। चशब्दोऽवधारणे। धनं दण्डं दद्याद्राज्ञे इत्यनुवादः। अथाभियोक्ता अभियोगं वक्तुं न शक्नोति तदा मिथ्याभियोगीति प्रतिपदोक्तं धनं दण्डं द्विगुणं दद्यादिति विधीयते। अत्रापि प्राङ्न्याये प्रत्यवस्कन्दने च पूर्ववदेव योजनीयम्॥ ११॥

*

धा० १। निर्णयकार्यमुक्तरूपं स्वयमुक्तं समूलयति *अर्थीति।

*किमिति। तत्रेत्यादिः। योग्यतयोपस्थितत्वादाह *प्रकृतधर्मिणे इति। *तत्सममिति। प्रकृतधनसममपलापनिमित्तकदण्डमित्यर्थः। *जात इतीति। स इति शेषः। अभियोगादित्यत्र कर्मणि यान्तस्याह *अभियुक्तेति। वहेदित्यस्यार्थः दद्यादिति। योग्यतया तदनुषङ्गेणाह *राज्ञे इति। मिथ्योत्तरविषये उक्तन्यायम् अन्यत्रोऽप्यतिदिशति *प्राङ्न्याये इति। तत्प्रकारमाह *तत्राप्येवेति। अस्मिन्नर्थेऽयं पूर्वं पराजित इति प्राङ्न्यायोत्तरे, गृहीतं प्रतिदत्तमिति कारणोत्तरे च दत्ते पूर्वन्यायं प्रतिदानं च प्रतिज्ञायापि वापलपतीति स एवापलापवादीत्यर्थः। *भावित इति। पराजयरूपप्राङ्न्यायस्य प्रतिदानस्य च साधनादङ्गीकारितो वादीत्यर्थः। *दण्डं दण्डमेव। अन्यस्य देयस्याभावात्। *मिथ्याभियोगीति। मिथ्यावादीत्यर्थः। इतिहेतौ। मिथ्यावादित्वेनेत्यर्थः। *द्विगुणमिति। प्रकृतधनेत्यादिः। *धनं दण्डरूपम्। अत्राशिष्टानुयोत्तरे तु नैवमतिदेश इत्याह *संप्रतिपत्तीति। *दण्डाभाव एवेति। निह्नवाभावात्। तदीयं तु देयत्वेनाभ्युपगतमेवेति भावः।

२। विशेषमाह *एतच्चेति। निह्नवे भावितो दद्यादित्येतदित्यर्थः। पदान्तराणि द्विविधानि सधनानि अधनानि च। तत्र सधनेष्वाह *पदान्तेति। सधनेष्वित्यर्थः *तत्र तत्रेति। एवं च विशिष्य विधानादेतस्य सामान्यस्य तत्र बाधादप्रवृत्तिरिति भावः। अधनेष्वाह *अधनेति। वाग्दण्डपारुष्यादिव्यवहारेषु प्रकृतधनसमदण्डदानस्य तद्द्विगुणदानस्य चासम्भवाच्चेत्यर्थः। उपसंहरति *न सर्वेति। अत इत्यादिः। यद्वा एवकारच्छेदमाह *न सर्वेति। ननूक्तदण्डस्य ऋणादानमात्रविषयत्वमपि न। तत्रापि "राज्ञाऽधमर्णिक" इत्यनेन विशिष्य दण्डस्य वक्ष्यमाणत्वात्। अन्यथा तस्य वैयर्थ्यापत्तेः। वचनद्वयप्रामाण्याद्विकल्पा-

स्वीकारे तु तदन्यनिगमना ऽपि अन्य स्यादिति इदं व्यवस्थापनमनुक्तमेव आह ०राज्ञेति । ननु प्रकरणात्प्रतिपन्नार्थसाधननिगमनम्, इदं तु तदभावादप्रतिपन्नार्थसाधननिश्चयमिति न कोऽपि दोष इत्यर्थः ।

३ । ननु अन्यत्र दण्डस्याभिधानेऽपि द्विगुणस्यानभिहितत्वादुत्तरार्धोक्तस्य विधानं तत्प्रवर्तकत्वेनतत्प्रवृत्तेरावश्यकतया पूर्वार्धस्यानुवादपरतया एकवाक्यतया योजनसम्भवादृणादानमात्रनिगमनतया व्यवस्थापनमनुक्तमेव आह ०यद्वेति । शब्दमर्यादया तथा प्रतीत्यभावादाह ०कथमिति । अत एव सामान्यशब्देन व्याचष्टे ०अभियोगफलमिति।०तत्सममिति। व्यवहारतुल्यमित्यर्थः । यत्र यत्र व्यवहारे यो य उक्तः स तत्तुल्यो भवति अन्यस्तु विरुद्धत्वाद्विगर्हित इति भावः। तदाह ०तत्र तत्र प्रतीति। धनादिन्यासविशेषेणास्यान्वयः । एवः कुतो लब्ध इत्यत आह ०तच्छब्द इति ।मूलवचनस्य इत्यर्थः । अत्र पक्षे पूर्वार्धे एकस्यैव वाक्यार्थस्य सत्त्वेन वाक्यार्थद्वयाभावेन समुच्चयाभावात्तदर्थकत्वासम्भवेन निपातानामनेकार्थत्वात् तदर्थकत्वमिति भावः ।

४ । योग्यतया धनशब्दार्थमाह *दण्डमिति । *इत्यनुवाद इति । ऋणग्राहिकया तद्व्यवहारे दण्डस्य विशिष्य विहितत्वेन प्राप्तत्वाद्विध्यसंभवेन पूर्वार्धेन तस्य सर्वस्य सामान्येनानुवाद इत्यर्थः । वैयर्थ्यं तु अस्य न, तत्रैवोत्तरार्धेन विशेषस्य विधीयमानत्वादिति भावः । तदेव तथैवाह *अथेति । तत्सममित्यस्यानुषङ्गेणानुवादमाह *प्रतीति । प्राग्वदाह *दण्डमिति । विधेयमाह *द्विगुणमिति । द्विगुणदण्डस्याप्राप्तत्वादिति भावः ।

पूर्ववदाह *अत्रापीति ॥ ११ ॥

मि० ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्—इति यदुक्तोत्तरपादेलेखनं

कालप्रतीक्षणं दर्शितं, तत्रापवादमाह ।

या० साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम् ।

विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥ १२ ॥

मि० साहसं विषशस्त्रादिनिमित्तं प्राणव्यापादनादि । स्तेयं चौर्यम् । पारुष्यं वाग्दण्डपारुष्यं वक्ष्यमाणलक्षणम् । गौर्दोग्ध्री । अभिशापः पातकाभियोगः । अत्ययः प्राणधनातिपातः । तस्मिन् । द्वन्द्वैकत्वाद्वादेकवचनम् । स्त्रियां कुलस्त्रियां चारित्रविवादे दास्यां स्वत्वविवादे । विवादयेत् उत्तरं दापयेत् । सद्य एव न कालप्रतीक्षणं कुर्यात् । अन्यत्र विवादान्तरेषु काल उत्तरदानकालः इच्छयाऽर्थिप्रत्यर्थिसभ्यसभापतीनां स्मृत उक्तः ॥ १२ ॥

वा० प्रागुक्तं प्रतिज्ञासाधनं च तद्वेत्यादिना वक्तुमव्यवहितसङ्गत्यभावाद् व्यवहितसङ्गतिमाह *ततो ऽर्थीति । स्तेयपारुष्यगोभिशापात्ययेषु द्वन्द्वं कृत्वा पुनः साहसेन समाहारद्वन्द्वः । अत एवार्थमात्रमाह *साहसमित्यादि । बहुव्रीहिः । प्राग्वदाह *वाग्दण्डेति । प्रागनुक्तत्वादाह *वक्ष्यमाणेति । तदभावेऽन्यत्र बाधाभावादाह *दोग्ध्रीति । विनिगमनाविरहादाह *प्राणेति । प्रागुक्तनिमित्तान्यनिमित्तकोऽत्र प्राणनाशो ग्राह्यः । अत एव सामान्येनाह *द्वन्द्वेति । विनिगमकाभावादाह *कुलेति । उभयत्र निमित्ते आह *चारित्रेति । विरुद्धभापणं नार्थ इत्याह *उत्तरमिति । प्राग्वदाह *अर्थीति । पूर्वान्वयीदम् । स्मृत इत्यस्यार्थः

इन: इति । भर्तोऽन्यार्थेऽन्येन नारदेनोक्त इत्यर्थः ॥ १२ ॥

मि० दुष्टलक्षणमाह ।

ना० देशाद्देशान्तरं याति सृक्किणी परिलेढि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥ १३ ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥ १४॥
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ।
अभियोगेऽथ साक्ष्ये वा दुष्टः स परिकीर्तितः ॥१५॥

मि० मनोवाक्कायकर्मभिर्यः स्वभावादेव न भया-
दिनिमित्तात् विकृतिं विकारं याति गच्छति असाव-
भियोगे साक्ष्ये वा दुष्टः परिकीर्तितः । तां विकृतिं
विभज्य दर्शयति । देशाद्देशान्तरं याति न क्वचिदव-
तिष्ठते, सृक्किणी ओष्ठपर्यन्तौ परिलेढि जिह्वाग्रेण
स्पर्शयति चेष्टयतीति कर्मणो विकृतिः । अस्य ललाटं
स्विद्यते स्वेदाविलाङ्कितं भवति, मुखं च वैवर्ण्यं वि-
वर्णत्वं पाण्डुत्वं कृष्णत्वं वा याति गच्छतीति कायस्य
विकृतिः । परिशुष्यत्स्खलद्वाक्यः परिशुष्यत् सगद्गदं
स्खलत् व्यत्यस्तं वाक्यं यस्य स तथोक्तः, विरुद्धं
पूर्वापरविरुद्धं बहु भाषते इति वाचो विकृतिः । प-
रोक्तां वाचं प्रतिवचनदानेन न पूजयति चक्षुर्वा
प्रतिवीक्षणेन न पूजयतीति मनसो विकृतेर्लिङ्गम् ।
तथा ओष्ठौ निर्भुजति वक्रयतीत्यपि कायस्य विकृ-
तिः ॥ एतच्च दोषसम्भावनामात्रमुच्यते न दोष-

मि० किञ्च । संदिग्धमर्थमधमर्णेनानङ्गीकृतमेव यः स्वतन्त्रः साधननिरपेक्षः साधयत्यासेधादिना स हीनो दण्ड्यश्च भवति । यश्च स्वयं सम्प्रतिपन्नं साधनेन वा साधितं याच्यमानो निष्पतत्पलायते, यश्चाभियुक्तो राज्ञा चाहूतः सदसि न किञ्चिद्वदति , सोऽपि हीनो दण्ड्यश्च स्मृत इति संबध्यते ।

अभियोगेऽथ साक्ष्ये वा दुष्टः स परिकीर्तितः ।

इति प्रस्तुतत्वाद्धीनपरिज्ञानमात्रमेव मा भूदिति दण्ड्यग्रहणम् । दण्ड्यश्चापि "शास्योऽन्यथा तु हीयते" इति अर्थाद्धीनत्वदर्शनादत्र तन्मा भूदिति हीनग्रहणम् ॥ १६ ॥

वा० १ ।अत एवाग्रे पुनः प्राग्वदेव सविशेषणयुक्तापि स्यात् ऽपि चेति । साधकस्य सन्देहाभावाद्यथाश्रुतार्थानुपपत्तेः प्रपन्नत्वे दोषाभावस्य "प्रपन्नं साधयन्नर्थम्"इत्यनेन वक्ष्यमाणत्वाच्चा-त्पर्यार्थमाह *अधमर्णेति । स्वतन्त्र इत्यस्य व्याख्या साधनेति । लेख्यादीत्यर्थः । अत एव तत्र उपायमाह *आसेधादीति । आद्यपादोक्तं प्रासङ्गिकं न तु प्रकृतसङ्गतमिति सूचयितुं भवतीति शेषेण भेदेन व्याख्यायाग्रिमं द्वयं प्रकृतसङ्गतं सह व्याचष्टे *यश्चेत्यादि ।अप्रतिपन्नादौ दोषाभावादाह *संप्रतीति । अर्थमिति शेषः । उभयत्र लिङ्गाविवक्षया आह *पलायते इति । एवमग्रेऽपि । अभियोगं विना आह्वानासंभवादाह *अभियुक्त इति । अन्यत्र दोषाभावादाह *सदसीति । तुर्यपादस्य सर्वत्र सम्बन्ध इत्याह *सोऽपीति । द्वितीयोऽपीत्यर्थः । अत एवाह *स्मृत इति । उभयत्रेति भावः । *सम्बध्यते इति।एते त्रयो न-केवलं दुष्टा अपि तुप्रकृतार्थादपि हीना दण्ड्याश्चेति समुदायार्थः।

२ । छलेन आग्रहानुरोधिनाऽपि उभयोक्तिसारस्येन निश्चेतव्यमिति अभ्योनि। यदि हीनत्वमुक्तदृष्टस्वरूपं भवेत्तर्हि तदनुष्ठानेनैव सिद्धे हीनपक्षोऽभिधानार्थक्यानवकल्यात् अर्थाद्धीनत्वपरिज्ञानेत्यर्थः । यादृच्छिकेन दण्डनानवच्छेदः । एतेन दृष्टस्वप्रत्यवच्छेदः । तथा च संभवन्निष्फलत्वं निष्फलत्वान्यायागमनात् तदुत्तरपक्षस्य कथनेन दृष्टस्यापि अनुष्ठानस्यापि समुच्चयो बोध्यः ॥ १६ ॥

मि० अथ यत्र द्वावपि युगपद्धर्माधिकरणं प्राप्तौ आधायादिनौ । तद्यथा । कश्चित्प्रतिग्रहेण क्षेत्रं लब्ध्वा कञ्चित्कालमुपभुज्य देशान्तरं गतः । अन्योऽपि तदेव क्षेत्रं प्रतिग्रहेण लब्ध्वा कञ्चित्कालमुपभुज्य देशान्तरं गतः । ततो द्वावपि युगपदागत्य मदीयमिदं क्षेत्रं मदीयमिदं क्षेत्रमिति परस्परं विवदमानौ धर्माधिकरणं प्राप्तौ । तत्र कस्य क्रियेत्याकाङ्क्षिते आह ।

या० साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥ १७ ॥

मि० उभयतः उभयोरपि वादिनोः साक्षिषु संभवत्सु साक्षिणः पूर्ववादिनः । पूर्वस्मिन्काले मया प्रतिगृहीतमुपभुक्तं चेति यो वदत्यसौ पूर्ववादी । न पुनर्यः पूर्वं निवेदयति तस्य साक्षिणः प्रष्टव्याः । यदा त्वन्य एवं वदति "सत्यमनेन पूर्वं प्रतिगृहीतमुपभुक्तं च किन्तु राज्ञेदमेव क्षेत्रमस्मादेव क्रयेण लब्ध्वा मह्यं दत्तामिति अनेन वा प्रतिग्रहेण लब्ध्वा मह्यं दत्तम्" इति,

तत्र पूर्वपक्षोऽसाध्यतयाऽधरीभूतस्तस्मिन् पूर्वपक्षेऽधरीभूते उत्तरकालं प्रतिज्ञातेऽग्रणमुक्तं भवति वादिनः साक्षिणः प्रष्टव्या भवन्ति । इदमेव व्याख्यानं गुरुतरम् । मिथ्योत्तरे पूर्ववादिनः साक्षिणो भवन्ति, प्राङ्न्यायकारणोक्तौ तु पूर्वपक्षेऽधरीभूते उत्तरवादिनः साक्षिणो भवन्तीति व्याख्यानं न गुरुतरम् । अस्यार्थस्य—

ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ।

इत्यनेनैवोक्तत्वात्पुनरुक्तिप्रसङ्गात् । पूर्वव्याख्यानमेव स्पष्टीकृतम्—

नारदेन, ( ना० स्मृ० नोपलभ्यम् )

मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि ।
प्राङ्न्यायविधिसिद्धौ तु जयपत्रं क्रिया भवेत् ॥

इत्युक्त्वा— (ना० स्मृ० व्य० प० १ । १६३ )

द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु ।
पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः ॥

इति वदता । एतस्य च पूर्वव्यवहारविलक्षणत्वाद्भेदेनोपन्यासः ॥ १७ ॥

या० १। उत्तरसङ्गतिं व्यवहितेन कथयन् तदवतरणमाह *अथेति । द्वितीयः प्रत्यर्थीतिभ्रमनिरासायाह *आपेति । तयोर्युगपत्संभवमुपपादयति *तद्यथेत्यादिमासावित्यन्तेन । *देशान्तरमिति ।

---

१ अभियुक्तोऽभियोगस्य यदि कुर्यादपह्नवम् ।
अभियोक्ता दिशेद्देश्यं प्रत्यवस्कन्दितो न चेत् ॥
इति वचनम् एतदर्थकमुपलभ्यम् । अ० २ । श्लो० २६

कार्यवशात् सत्पुरुष इत्यादिः । *पुरापादिति । दैववशात् । *धर्मे-ति । धर्मस्थानाधिकरणे । *तत्र । तयोर्मध्ये । क्रिया साधनम् ।

२ । पक्षद्वयान्तरगतानि भवितव्यानीत्याह *उभयोरिति । ननु इत्यस्य व्याख्या संभवन्तीति । सामानाधिकरण्यभ्रम-निरासाय । सर्वीकपूर्वकं पूर्ववादिन इत्यस्यार्थान्तरं निराकुर्वन् व्याचष्टे *साक्षिण इति । *न पुनरिति । तावताऽपि निर्णया-संभवादिति भावः । योग्यं दर्शयति *प्रकृत्या इति ।

३ । उत्तरार्थमाह *यदा त्विति । अन्यः उक्तपूर्ववा-दिभिन्नः । *अनेन ब्राह्मणेन । *असाध्येति । अनेनोत्तरेणाङ्गी-कृत्य निराकृतत्वादिति भावः । अनुपक्षादिनाऽऽह *साक्षीति ।

४ । शेषोक्तव्याख्यानान्तरं खण्डयितुमुत्कर्षयति *इद-मेवेति । यत्र द्वावपि भाषावादिनौ तद्विषयतया स्वयं कृतमित्य-र्थः । यत्तु उत्तरवशादेतार्थिमत्यार्थिभेदेनावेदनक्रमेण पूर्ववादिन उत्तरवादिनश्च साक्षिणः प्रकृत्या इत्यस्यार्थ इति काश्चित्, तत् खण्डयति *मिथ्योत्तर इति । मिथ्या क्रिया पूर्ववादे इति प्रा-गुक्तत्वात् । *कारणोक्तौ त्विति । तत्रार्थादेव पूर्वपक्षनिरासः स-म्पन्न इत्याह *पूर्वेति । *प्रतिज्ञातार्थेति । अर्थ्यतइत्यर्थः साध्यं स यस्यास्तीत्यर्थी साध्यवान् । एवं च मिथ्योत्तरे पूर्ववादी साध्यवान् कारणप्राङ्न्याययोस्तु उत्तरवाद्येव साध्यवानिति यस्य साध्यवत्ता तस्यैव साधनोपन्यास इत्यभिप्रायकार्थस्य प्रा-क् तत्रैवोक्तत्वादिति भावः ।

५ । अत्र विरोधमपि सूचयन् ऋण्यन्तरसंवादोऽपि पूर्वन्या-यस्थाने इत्याह *पूर्वेति । एतेन द्वितीयव्यवच्छेदः । *स्पष्टीकृतं स्पष्टी-कृतं च । मिथ्या मिथ्योत्तरे । प्राङ्न्यायेति । पूर्वन्यायकरण-निश्चयेत्त्वित्यर्थः । जयपत्रं तत्प्रदर्शनम् । तथा च प्रतिवादिन्येव

क्रियेति भावः । शुद्धमादन्यायाविषयमित्याशयेन स्पष्टयति । अर्थे एकार्थविषये । *पूर्वपक्ष इति । पूर्वत्र काले अनिर्णीतमुपभुक्तं चेत्यर्थः । उक्तपूर्वपक्षो निरस्तो येन भवेदिति तदाशयः । अत एव न न्यूनता प्रकृतैकवाक्यता च । अत्र अर्थे निवेदितो-रित्यनेन स्पष्टमेवेदमुक्तम् । साधकान्तरमप्युक्तार्थे मूलवचन एवाह *एतस्य चेति । *पूर्वोक्तेति । प्रागुक्तार्थिप्रत्यर्थिवि-षयकेत्यर्थः । सर्वेत्यपपाठ इति केचित् । सर्वेति पाठे प्रागु-क्तसर्वेत्यर्थः ॥ १७ ॥

या० सपणश्चेद्विवादः स्यात्तत्र हीनं तु दापयेत् ।
दण्डं च स्वपणं चैव धनिने धनमेव च ॥ १८ ॥

मि० अपिच । यदि विवादो व्यवहारः सपणः पणनं पणस्तेन सह वर्तत इति सपणः स्यात्तदा तत्र तस्मिन् सपणे व्यवहारे हीनं पराजितं पूर्वोक्तं दण्डं स्वकृतं च पणं राज्ञे, अर्थिने च विवादास्पदीभूतं धनं दापयेद्राजा । यत्र पुनरेकः कोपावेशवशाद्यद्यहमत्र पराजितो भवामि तदा पणशतं दास्यामीति प्रतिजानीते, अन्यस्तु न किञ्चित्प्रतिजानीते तत्रापि व्यवहारः प्रवर्तते । तस्मिंश्च प्रवृत्ते पणप्रतिज्ञावादी यदि हीयते तदा स एव सपणं दण्डं दाप्यः । अन्यस्तु पराजितो दाप्यः न पणम् । स्वपणं चेति विशेषोपादानात् । यत्र त्वेकः शतमन्यस्तु पञ्चाशतं प्रतिजानीते तत्रापि पराजये स्वकृतमेव पणं दाप्यौ । सपणश्चेद्विवादः स्यादिति वदता पणरहितोऽपि विवादो दर्शित इति ॥ १८ ॥

तं हीयते हानिमुपगच्छति व्यवहारतो व्यवहारेण सा-क्ष्यादिभिः तस्माद् भूतानुसरणं कर्तव्यम् । यथाऽर्थि-प्रत्यर्थिनौ सत्यमेव वदतस्तथा सभ्येन सभापतिना यतितव्यं सामादिभिरुपायैः । तथा सति साक्ष्यादि-नैरपेक्ष्येणैव निर्णयो भवति । अथ सर्वथापि भूतानु-सरणं न शक्यते कर्तुं तथा सति साक्ष्यादिभिर्निर्णयः कार्य इत्यनुकल्पः ।

यथोक्तम्, ( ना० स्मृ० १।२९ )

भूतच्छलानुसारित्वाद् द्विगतिः समुदाहृतः ।
भूतं तत्त्वार्थसंयुक्तं प्रमादाभिहितं छलम् ॥ इति ।

तत्र भूतानुसारी व्यवहारो मुख्यः छलानुसारी त्वनुकल्पः । साक्षिलेख्यादिभिर्व्यवहारनिर्णये कदा-चिद्भूतस्त्वनुसरणं भवति कदाचिन्न भवति । साक्ष्या-दीनां व्यभिचारस्यापि सम्भवात् ॥ १९ ॥

या० १ । व्यवहारे विशेषान्तरमाह मूलकृत् *छलं चेति । न प्रसिद्धमत्र तदित्याह *प्रमादेति । भूतार्थो वस्त्वित्यत्र । *नये-दिति । अन्तामिति शेषः । कचित्तथा पाठ एव । तस्यावश्यकत्व-मुत्तरार्धेन हेतुपरेण सशेषपूरणेन प्रतिपादयति *यस्मा-दिति । *अनभिहितमिति । अर्थिप्रत्यर्थ्यन्यतरेणेति शेषः । हीयमानपापयोगाच्चेति करणतृतीयान्तात्तसिरित्याह । *व्यवहा-रेणेति । अत्र साधनं पूरयति *साक्ष्यादिभिरिति । तथाच साक्ष्या-दिभिः क्रियमाणेन व्यवहारेण तद्धीयते इत्यर्थः । एतेन भूत-मपि वस्तुतत्त्वमपि साक्ष्यादिभिरनुपन्यस्तं सद् व्यवहारतो ही-यते इत्यन्वयः इति व्याख्यानमपास्तम् । भ्रममूलकत्वात् । सा-

व्याहृत्याह * तस्मादिति । अस्य तात्पर्यार्थमाह * यथेति । तत्क्रममाह * नयेति । * निर्णय इति । यथार्थनिर्णय इत्यर्थः ।

२. । अनेन भूतिं पश्चान्तरमाह * अथेति । पूर्वोक्तस्य मुख्यत्वाद्याह * इत्यनुकल्प इति । स्पष्टमस्यैतो ऽप्रतीतिरत्र मानं नारदमाह * यथोक्तमिति । * भूतेति । भूतफले अनुसरति तदधीनत्वात् द्विप्रकार इत्यर्थः । * संयुक्तमिति । युक्तं यदिति पाठान्तरम् । अत्रानुक्तं भागुतयलुरोधेनाह * तत्रेति । नन्वस्यापि मुख्यत्वं कुतो न, अत आह * साक्षीति । * व्यभिचारेति । अयथार्थवादित्वस्यापीत्यर्थः ॥ १९ ॥

मि० भूतमप्यनुपन्यस्तं हीयते व्यवहारतः-
इत्यस्योदाहरणमाह ।

या० निह्नुते लिखितं नैकमेकदेशविभावितः ।
दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥ २० ॥

मि० नैकमनेकं सुवर्णरजतवस्त्रादि लिखितमभियुक्तमर्थिना प्रत्यर्थी यदि सर्वमेव निह्नुते अपजानीते तदाऽर्थिनैकदेशे हिरण्ये साक्ष्यादिभिः प्रत्यर्थी भावितोऽङ्गीकारितः सर्वं रजताद्यर्थं पूर्वलिखितं दाप्योऽर्थिने नृपेण । न ग्राह्यस्त्वनिवेदितः, पूर्वं भाषाकाले अनिवेदितः पश्चादर्थिना पूर्वं मया विस्मृत इति निवेद्यमानो न ग्राह्यो न दापयितव्यो नृपेण । एतच्च न केवलं वाचनिकम् । एकदेशे प्रत्यर्थिनो मिथ्यावादित्वनिश्चयादेकदेशान्तरेऽपि मिथ्यावादित्वसम्भवात्। अर्थिनश्चैकदेशे सत्यवादित्वनिश्चयादेकदेशान्तरेऽपि सत्यवादित्वसम्भवात् । एवं तर्कापरनामसम्भावना-

प्रत्ययानुगृहीतादस्मादेव योगीश्वरवचनात्सर्वं दाप-नीयं नृपेणेति निर्णयः । एवं च सकलशास्त्रानुरोधेन निर्णये क्रियमाणे वस्तुनोऽन्यथात्वेऽपि व्यवहारद-र्शिनां न दोषः ।

तथा च गौतमो, न्यायाधिगमे तर्कोऽभ्युपायस्तेना-भ्युह्य यथास्थानं गमयेद्विप्रतिपत्तौ त्रय्याविद्या-वृद्धेभ्यः प्रत्यवहृत्य निष्ठां गमयेदित्युपसंहरति । न चैकदेशविभाविनोऽनु-पादेयवचनः प्रत्यर्थीत्येतावदिह गम्यते । एकदेशवि-भावितो नृपेण सर्वं दाप्य इति वचनात् ।

यत्तु कात्यायनेनोक्तम्,
अनेकार्थाभियोगेऽपि यावत्संसाधयेद्धनी ।
साक्षिभिस्तावदेवासौ लभते साधितं धनम् ॥

इति, तत्पुत्रादिदेयपित्रादृणविषयम् । तत्र हि बहूनर्थानभियुक्तः पुत्रादिर्न जानामीति प्रतिवदन्नि-ह्नववादी न भवतीत्येकदेशविभावितोऽपि न क्वचि-दसत्यवादीति "निह्नुते लिखितं नैकम्" इति शास्त्रं तत्र न प्रवर्तते । निह्नवाभावादपेक्षितलक्षणाभावात् । अनेकार्थाभियोगेऽपीति कात्यायनवचनं सामान्यवि-षयं विशेषशास्त्रस्य विषयं निह्नवोत्तरं परिहृत्या-ज्ञानोत्तरे प्रवर्तते । ननु,

ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् ।
ऊने वाप्यधिके वार्थे प्रोक्ते साध्यं न सिध्यति ॥

इति वदता कात्यायनेनानेकार्थाभियोगे साक्षि-भिरेकदेशे भाविलेऽधिके वा भाविते साध्यं सर्वमेव न सिध्यतीत्युक्तम् । तथासत्येकदेशे भाविते अभावि-

त्रैकदेशसिद्धिः कृतकृत्या । उच्यते । लिखितसर्वार्थ-साधनतयोपन्यस्तैः साक्षिभिरेकदेशाभिधानेऽधिकाभिधाने वा कृत्स्नमेव साध्यं न सिद्ध्यतीति तस्यार्थः । तत्रापि लिखितं न सिद्ध्यतीति वचनात्पूर्ववत्संशय एवेति प्रमाणान्तरस्यावसरोऽस्त्येव । छलं निरस्येति नियमात् । साहसादौ तु सकलसाध्यसाधनतयोद्दिष्टैः साक्षिभिरेकदेशेऽपि साधिते कृत्स्नसाध्यसिद्धिर्भवत्येव । तावतैव साहसादेः सिद्धत्वात् । कात्यायनवचनाच्च ।

साध्यार्थांशेऽपि गदिते साक्षिभिः सकलं भवेत् ।
स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकीर्तितम् ॥इति॥२०॥

या० १ । तावन्मात्रस्योदाहरणत्वात् पादत्रयस्यैकं सशेषमर्थमाह *नैकमिति । नशब्देन समासः । अत एवाह *अनेकमिति । लिखितमित्यस्य व्याख्या अभियुक्तमिति । प्रतिज्ञाकाले ऽर्थिना ऽभियोगत्वेनाभिहितमित्यर्थः । निह्नुते इत्यत्र कर्मत्वेनान्वयोऽस्य । अग्रे सर्वपदोक्तेः सामान्येनोक्तेश्च स्वारस्यादाह *सर्वमेवेति । एकदेशेति सुप्सुपेति सप्तमीसमास इत्याह *एकदेशे इति । पूर्वोक्तार्थैकदेशहिरण्यविषये इत्यर्थः । सुवर्णस्याङ्गीकृतत्वादाह *रजताद्यर्थमिति । अनतिप्रसङ्गायाह *पूर्वेति । तुर्यपादार्थे समनीकमाह *न ग्राह्य इति । निष्ठालब्धपूर्वमित्यस्यार्थो *भावेति । तल्लक्षणस्य दुष्परिहरत्वादाह *न दापयितव्य इति । एवम् अंशद्वयेन प्रतिज्ञाकालेऽभिहित एवार्थो व्यवहारतः साध्य इत्यन्वयो ऽनभिहितो न साध्य इति व्यतिरेकश्च दर्शितौ यतोऽतोऽन्वयव्यतिरेकाभ्यां भूतमप्यनुपन्यस्तं हीयते इत्येतत् दृढीकृतमिति तदुदाहरणत्वमस्येत्यर्थः ।

२। विशेषमाह *एतच्चेति। किं तु युक्तिसिद्धमपीति भावः। पर्यवसितमाह *एवमिति। उक्तप्रकारेणेत्यर्थः। *तर्कापरेति। प्रत्ययो ज्ञानम्। तर्कज्ञानस्य नामान्तरं सम्भावनेति। एवं च तर्कापरनामिका या सम्भावना तत्र यः प्रत्ययो ज्ञानं तत्सह-कृतात् निह्नुते इति योगीश्वरवचनादित्यर्थः। एतदुक्तिफलमाह *एवं चेति। अस्य तदनुगृहीतत्वे चेत्यर्थः। *तर्केति। तदनु-नुसारेणेत्यर्थः।

२। अत्र मानमाह *तथा चेति। उपसंहरतीत्यत्रान्वयः। *न्यायाधीति। न्यायज्ञाने तर्क उपायस्तेन तर्केण न्यायम् अभ्यूह्य निश्चित्य। ऊहते रूपम्। उपसर्गात् ह्रस्व ऊहतेः इति ह्रस्वः। यस्मिन्विषये न्यायो योजनीयस्तत्स्थानं गमयेदित्यर्थः। यद्वा यथास्थानं न्यूनातिरेकरहितं यथा तथा गमयेदित्यर्थः। एवं सति तर्केणैव सिद्धे मूलवचनवैयर्थ्यं परिहर्तुं शङ्कते *न चैकेति। यथा भाषासमये ऽनिवेद्य पश्चादभिधी-यमानोऽर्थो नादर्तव्यस्तथा एकदेशविभावितः सन्नपि प्रत्य-र्थी नादर्तव्य इति। तावताऽपि न दाप्य इत्येव पादत्रयार्थोऽस्तु किमिति सर्वं दाप्य इत्यर्थ इति भावः। *एकदेशेति। यत्र वचनं नास्ति तत्र तद्दृष्टान्तमूलस्तथैव तर्कः स्यादत्र तु वचनसत्त्वा-त्तथा तर्कासम्भवेन एवमेव तर्कसम्भवेन तदर्थतया वचनं सफ-लम् इति भावः।

४। एवं निश्चितेऽर्थे प्रसक्तविरोधं परिहरति *यत्त्विति। *योगेऽपीति। तेषां मध्ये इति शेषः। साक्षिभिरित्यस्य मध्यम-णिन्यायेनान्वयः, सम्भवात्। उपलक्षणं चैतदन्यस्यापि। एवेनाधिकांशव्यवच्छेदः। असौ धनी। *पित्रेति। तत्कृतेत्यर्थः। अत्र हेतुमाह *तत्र हीति। *न भवतीति। ऋणस्यान्यकृतत्वे-

नाज्ञानस्यापि तत्र तत्सम्भवेनापलापाभावादिति भावः। इतिः हेतौ। क्वचित्त्वत्रापि। अज्ञानसम्भवात्। तदेवाह *निह्नवेति। अत एव तत्पराभावादाह *अपेक्षितेति। *कात्यायन वचनं तु। इदं च। सामान्याभियुक्तकात्यायनवचनं तु विशेषाभियुक्तस्य निह्नुते इत्यस्य विषयं निह्नोत्तरं, ज्ञात्वाऽपलापो निह्नवस्तद्रूपमुत्तरं, परिहृत्य परिग्रहज्ञानोत्तरं ज्ञानाभावेनोत्तरं सम्भवति इत्यर्थः। तथाच सामान्यविशेषाभियोगयोरुत्तरयोरुभयोरपि तदन्यतरस्येति भावः।

५। विरोधान्तरं परिहरति *नास्तीति। *ऋणादिषु ऋणादानादिषु। *स्थिरेति। लिङ्गदर्शनमात्रेणाऽदृष्टहेतुनाऽपि स्त्रीसंग्रहणादिरूपसाध्यस्य सिद्धिर्भवतीति तादृशानामस्थिरत्वम्, ऋणादानादिरूपस्य साध्यस्य तु दृढसाधनेनैव सिद्धेस्तेषां स्थिरत्वं, तदपि नास्त्यशास्त्रीयत्वादिति स्थिरसाध्यत्वमित्यर्थः। निश्चितमिति क्रियाविशेषणम्। *अभियोगे, सर्वाणीति शेषः। *साक्षीति। तेषां मध्ये इत्यादिः। *एकेति। ऊने इत्यर्थः। प्रोक्ते इत्यस्यार्थो भाविते इति। *अधिके इति। उक्तसर्वापेक्षयेत्यादिः। सामान्योक्तं साध्यमित्यस्य साध्यत्वावच्छिन्नमित्यर्थः। तत्फलितमाह *सर्वमेवेति। *तथा सति, सर्वसाध्यासिद्धत्वे सति। *सिद्धिः, मूलतात्पर्यविषयभूता। *अभावितैकदेशेति। एकदेशान्तरेत्यर्थः। *लिखितेति। सुवर्णादित्रयं गृहीतमित्यभियोगे कृते न मया गृहीतं मिथ्यैतदिति निह्नवे कृते सर्ववस्तुग्रहणसाधनतया कथितैः साक्षिभिः सुवर्णाद्यन्यतमग्रहणे सुवर्णादि धान्यं च गृहीतमित्यधिकवस्तुग्रहणे वा निर्दिष्टे सर्वमपि साध्यं न सिध्यतीत्येतत्परं कात्यायनवचनम्। निह्नुते इति वचनं तु उक्तरीत्या ऽभियोगे निह्नवे च कृते सुवर्णग्रहणसाक्षिणः सन्तीत्युक्ते तैस्तावन्मात्रेऽपि साक्षिभिः साधिते प्रत्यर्थी सर्वं दाप्यः पूर्वोक्तमित्येतत्परमिति

न विरोधो मिथ इति भावः। *तस्य, कात्यायनवचनस्य। ननेवं तादृशे किं व्यवहारो नेव, अत आह *तत्रापीति। तदुक्तस्थले-ऽपीत्यर्थः। *नियमादिति। आरब्धत्वान्नगणनमिति न्यायेन प्राप्तस्य तस्य विधानेन नियामकत्वं तस्येति भावः। *म्रियमाणे-ष्वित्यस्य प्रत्युदाहरणमाह *साहसादाविति। उद्दिष्टैः स्मार्तैः। उपदिष्टैरिति पाठान्तरम्। एवं साधिते कात्यायनसंवादमप्याह *कात्यायनेति। तदेव वचनमाह *साध्यार्थांशेऽपीति। स्त्रीसंग्र-हादिके विवादपदत्रये भाषावादिना यदेकाभिहितं साध्यत्वेन कथितं तत् तत्रानेकसाध्यसाधनतयाऽभिहितैस्साक्षिभिः साध्या-र्थजातस्यैकदेशेऽपि साधिते सकलं भवेत् सिध्येदित्यर्थः। तथा चोक्तव्यवस्था निर्व्यूढेति सिद्धम्॥ २०॥

मि० ननु निह्नुते लिखितं नैकमितीयं स्मृतिः त-थाऽनेकार्थाभियोगेपीतीयमपि स्मृतिरेव। तत्रानयोः स्मृत्योः परस्परविरोधे सतीतरेतरबाधनादप्रामाण्यं कस्मान्न भवति विषयव्यवस्था किमित्याश्रीयते इ-त्यत आह।

या० स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः।

मि० यत्र स्मृत्योः परस्परतो विरोधस्तत्र विरोध-परिहाराय विषयव्यवस्थापनादावुत्सर्गापवादादिल-क्षणो न्यायो बलवान्समर्थः। स च न्यायः कुतः प्रत्येतव्य इत्यत आह। व्यवहारत इति। व्यवहारा-द् वृद्धव्यवहारात् अन्वयव्यतिरेकलक्षणादवगम्य-ते। अतश्च प्रकृतोदाहरणेऽपि विषयव्यवस्थैव युक्ता। एवमन्यत्रापि विषयव्यवस्थाविकल्पादि यथासम्भवं योज्यम्॥

टी० एवं सर्वत्र प्रसङ्गेऽपवादमाह ।

मू० अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥२१॥

टी० धर्मशास्त्रानुसारेणैत्यनेनैवोशनसार्थशास्त्रस्य निरस्तत्वात् धर्मशास्त्रान्तर्गतमेव राजनीतिलक्षणमर्थशास्त्रमिह विवक्षितम् । अर्थशास्त्रधर्मशास्त्रस्मृत्योर्विरोधे अर्थशास्त्राद्धर्मशास्त्रं बलवादिति स्थितिर्मर्यादा । यद्यपि समानकर्तृकतया अर्थशास्त्रधर्मशास्त्रयोः स्वरूपगतो विशेषो नास्ति तथापि प्रमेयस्य धर्मस्य प्राधान्यादर्थस्य चाप्राधान्याद्धर्मशास्त्रं बलवदित्याभिप्रायः । धर्मस्य प्राधान्यं शास्त्रादौ दर्शितम् । तस्माद्धर्मशास्त्रार्थशास्त्रयोर्विरोधे अर्थशास्त्रस्य बाध एव, न विषयव्यवस्था, नापि विकल्पः । किमत्रोदाहरणम् । न तावत्— (मनु.अ.८।श्लो.३५०।३५१)

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥
नाततायिवधे दोषो हन्तुर्भवति कश्चन ।
प्रकाशं वा प्रकाशं वा मन्युस्तं मन्युमृच्छति ॥

तथा—

आततायिनमायान्तमपि वेदान्तगं रणे ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्

इत्याद्यर्थशास्त्रम्,

इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ।
कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते ॥

इत्यादि धर्मशास्त्रम्,(म.स्मृ.११।८९)तयोर्विरोधे धर्म-

शास्त्रं बलवदिति युक्तम्। अनयोः क्वचिदप्यन्योन्यसम्बन्धे न विरोधाभावान्न बलाबलचिन्ताऽनवतरति। तथाहि।

शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते॥ (मनु. ८।३४८)

इत्युपक्रम्य—

आत्मनश्च परित्राणे दक्षिणानां च सङ्गरे।
स्त्रीविप्राभ्युपपत्तौ च घ्नन्धर्मेण न दुष्यति (मनु. ८।३४९)

इत्यात्मरक्षणे दक्षिणादीनां यज्ञोपकरणानां च रक्षणे युद्धे च स्त्रीब्राह्मणहिंसायां चाततायिनमकूटशस्त्रेण घ्नन् न दण्डभागित्युक्त्वा तस्यार्थवादार्थमिदमुच्यते, गुरुं वा बालवृद्धौ वेत्यादि। गुर्वादीनत्यन्तावध्यानप्याततायिनो हन्यात्किमुतान्यानिति। वाशब्दश्रवणात् अपि वेदान्तगमित्यत्रापिशब्दश्रवणाच्च गुर्वादीनां वध्यत्वप्रतीतिः। नाततायिवधे दोषोऽन्यत्र गोब्राह्मणादिति सुमन्तुवचनाच्च।

आचार्यं च प्रवक्तारं मातरं पितरं गुरुम्।
न हिंस्याद् ब्राह्मणान् गाश्च सर्वांश्चैव तपस्विनः॥

इति मनुवचनाच्च। (मनु. ४।१६२) आचार्यादीनामाततायिनां हिंसाप्रतिषेधेनेदं वचनं सार्थकं नान्यथा। हिंसामात्रप्रतिषेधस्य सामान्यशास्त्रेणैव सिद्धत्वात्।

नाततायिवधे दोषो हन्तुर्भवति कश्चन।

इत्येतदपि ब्राह्मणादिव्यतिरिक्तविषयमेव।

यतः—

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः।
क्षेत्रदारहरश्चैव षडेते ह्याततायिनः॥

तथा—

उभयाग्निनिरोधिनश्च शापोद्यतकरस्तथा।
आथर्वणेन हन्ता च पिशुनश्चापि राजनि॥
भार्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः।
एवमाद्यान्विजानीयात्सर्वानेवाततायिनः॥

इति सामान्येनाततायिनो दर्शिताः। अतश्च ब्राह्मणादयः आततायिनश्च आत्मादित्राणार्थं हिंसानभिसन्धिना निवार्यमाणाः प्रमादाद्यदि विपद्येरन् तत्र लघुप्रायश्चित्तं राजदण्डाभावश्चेति निश्चयः। तस्मादन्यादृशोदाहरणं वक्तव्यम्।

तदु उच्यते। (या० स्मृ० १। ३५२)
हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः।
अतो यतेत तत्प्राप्तावित्यर्थशास्त्रं.
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः। (या० २।१)

इति धर्मशास्त्रं, तयोः क्वचिद्विषये विरोधो भवति। यथा। चतुष्पाद्व्यवहारे वर्तमाने एकस्य जयेऽवधार्यमाणे मित्रलब्धिर्भवति न धर्मशास्त्रमनुसृतं भवति। अन्यस्य जयेऽवधार्यमाणे धर्मशास्त्रमनुसृतं भवति मित्रलब्धिर्विपरीता। तत्रार्थशास्त्राद्धर्मशास्त्रं बलवत्। अत एव "धर्मार्थसन्निपाते अर्थग्राहिण एतदेव" इति प्रायश्चित्तस्य गुरुत्वं दर्शितमापस्तम्बेन। एतदेवेति द्वादशवार्षिकं प्रायश्चित्तं परामृश्यते॥२१॥

या० १। वक्ष्यमाणश्लोकस्य तदाक्षेपनिवारकत्वमिति तामाक्षिपति *नन्विति। *तत्र, तथा सति। *अप्रामाण्यं, तदेव। एवव्यवच्छेद्यमेवाह *विपर्येति। परस्परतः परस्परम्। *परीति। अविरोधे सम्भवति विरोधो न न्याय्य इति भावः। आदिना वि-

कल्पपरिग्रहः। अत एव अग्निमादिना तुल्यार्थोऽस्त्विति न्यायस्य सविषयनिर्विषययोर्निर्विषयं यत्नादितस्य न परिग्रहः। *उत्सर्गेति। सामान्यस्य विशेषो बाधक इत्येवं सामान्यापवादलक्षणो न्यायस्तन्त्रान्तरे प्रसिद्ध इत्यर्थः। पक्षद्वयस्यान्तरानिर्धारणेऽप्रक्रिया-स्तासिरित्याह *व्यवहारादिति। प्रकृतव्यवहारप्रमाणनिरासाय तदर्थमाह *पूर्वेति। तत्स्वरूपमाह *अन्वयेति। एतौ च साफल्यासाफल्याभ्यामुपपाद्यौ। समाश्रितान्यथामाह *अतश्चेति। एतेनाप्रामाण्यव्यवच्छेदः। नेदं प्रकृतमात्रविषयमपि तु सार्वत्रिकमित्याह *एवमिति। *विकल्पादीति। आदिना प्रबलप्रमाणविरोधेऽर्थवादत्वमाश्रित्य यथोचितन्यायानुसारेण योज्यमिति परिगृह्यते।

२। *एवम्, उक्तप्रकारस्य। *धर्मशास्त्रेति। एकविषययोर्विरुद्धार्थयोर्हि स्मृत्योर्मिथो विरोधो न तु भिन्नविषययोरविरुद्धार्थयोर्वा। सति च विरोधे प्रबलदुर्बलभावचिन्ता। एवं च पूर्वमेव धर्मशास्त्रानुसारेणैव व्यवहारदर्शनस्य विहितत्वादौशनसादिनीतिशास्त्रस्य न व्यवहारविषये प्रवृत्तिः। अत एकविषयत्वाभावादर्थशास्त्रधर्मशास्त्रयोः सुतरां विरोधाभावादनयोः प्रबलदुर्बलभावचिन्तनमेव तावदयुक्तमिति शङ्काशयः। नात्रौशनसाद्यर्थशास्त्रधर्मशास्त्रयोस्तच्चिन्ता, अपि तु धर्मशास्त्रान्तर्गतयोरेव तयोस्तच्चिन्तेति एकविषयतया विरोधसम्भवात्तच्चिन्तनं युक्तमित्युत्तराशयः। अर्थपदार्थमाह *अर्थेति। अत एवाह *स्मृत्योरिति। स्थितिरित्यस्य व्याख्या मर्यादेति। *यद्यपीति। ईदृशार्थशास्त्रधर्मशास्त्रयोर्मन्वादिरूपैककर्तृनिष्पन्नत्वेन वचनस्वरूपगतविशेषाभावादनयोरपि न तच्चिन्तनं युक्तमिति भावः। *प्रमेयस्येति। न तद्विशेषात्तच्चिन्ता, अपि तु धर्मशास्त्रप्रमेयस्य षड्विधस्यापि धर्मस्य मुख्यतया प्रधानत्वादर्थशास्त्रप्रमेयस्यार्थस्य नीतिलक्षणस्याप्रा-

कृत्यतयोपन्यस्तेनत्वात्स्वपेषणनिर्णयस्य प्रनाशिन्ता युक्तैवेति भा-
वः । इत्यलिङ्गिं परिहरति *धर्मस्य चेति । *शास्त्रादौ, आचारा-
व्यापस्यादौ । वचनार्थमुपसंहरति *तस्मादिति ।

३ । उदाहरणाभावमयुक्तं तच्चिन्तनवैफल्यं परिहर्तुं शङ्कते
*किमत्रोदाहरणमिति । अन्योक्तमुदाहरणमनूद्य खण्डयति *न
तावदित्यादियुक्तमित्यन्तेन । अत्र, इति न तावदादौ उदाहरणं
युक्तमिति व्यवहितेनान्वयः । अदोषत्वे हेतुमाह *मन्युस्तमिति ।
यतो मन्युरेव प्रकाशमप्रकाशं वा तं मन्युं हिनस्तीत्यर्थः । तथा
च मन्योरेव कर्तृत्वादिना हन्तृत्वादिरिति न दोष इति भावः ।
अत एव मन्युस्तन्मन्युमृच्छतीति श्रुतिः सङ्गच्छते । मनुमुक्त्वा स्मृत्य-
न्तरमाह *तथेति । वेदान्तगमपीत्यर्थः । अपि वेदान्तपारगमिति
पाठान्तरम् । *तेन, तादृशब्राह्मणवधेन । मनुमेवाह *इयमिति ।
अकामतो द्विजं हिंसित्वा स्थितस्येयं पूर्वतना विशुद्धिः कथिते-
त्यर्थः । तत्र अनुदाहरणत्वे हेतुमाह *अनयोरिति । यत इत्या-
दिः । गुरुं वेत्यादेरर्थवादत्वेन स्वार्थे प्रामाण्याभावादेकविषय-
त्वाभावेन विरोधाभावात्तच्चिन्ताया असम्भवेन नोदाहरणत्व-
मित्यर्थः ।

४ । तदेवाह *तथाहीत्यादि । *शस्त्रमिति । मनूक्तिरेवेयम् ।
इत्युक्तमिति पाठे इतः पूर्वमिति शेषः । इत्युक्तेति पाठे तु न
शेषोपयोगः । *उपक्रम्येति ।

द्विजातीनां च वर्णानां विप्लवे कालकारिते । (मनु.८।३४८)

इति मध्ये उक्तम् । *इति, इत्यनेन । अस्य व्याख्यानमाह
*आत्मरक्षणे इति । बहुवचनादाद्यर्थलाभ इत्याह *दक्षिणादी-
नामिति । अत एव सामान्येनार्थमाह *यज्ञोपेति । परित्राणे
इत्यस्य वक्ष्यमाणन्यायेनान्वय इत्याह *रक्षणे इति । सङ्गरे

इत्यस्यार्थमाह *गुर्वेवेति । तस्यात्र स्वर्गो ऽनेन सूचितः । एवं भागपि । त्रीन्निमित्यस्यार्थमाह *त्रीनिति । धर्मपालनत्यागः *अपहृते-ति । न दुष्यतीत्यस्य न पापाभावपरत्वमित्याह *न दण्डेति । *इतीति । इत्यर्थकमुक्तेत्यर्थः । इममर्थमेवाह *गुर्वपीति । तस्या-र्थवादत्वप्रकारमेवाह *गुर्वादीनिति । तथा च स्मृतिकल्पनेन गुर्वादिभिन्नाततायिवधस्थले हननं प्रशस्तमिति सूच्यते । अतः स्तावकत्वेनार्थवादत्वमिति भावः । नन्वेतत् गुर्वादिहननविधान-कमेवास्तु तदसम्भवे एव तत्त्वाकाङ्क्षाभावात् अत एवाह *वादन्ये-ति । स्मृत्यन्तरेऽप्येवमित्याह *अपि वेदान्तगमिति । अयं भावः । यथा लोके ऽत्र पिशाचो ऽस्तीत्युक्ते पिशाचो वा भवतु राक्षसो वा भवतु भूतमपि भवतु प्रेतोऽपि भवत्विति उक्ते प्रौढिप्रतिपादने तात्पर्यं तथा ऽत्रापि वाशब्दापिशब्दयोः प्रौढिप्र-कर्षे तात्पर्यमिति तद्विशिष्टवाक्यजातस्य गुर्वादिहनने न तात्प-र्यम् । तथा वेदेऽपि "वायुर्वै क्षेपिष्ठा देवता" इति "प्रतितिष्ठन्ति ह वा य एताः" "तस्मादपि वध्यं प्रपन्नं न" इत्यादौ वैशब्दवाश-ब्दापिशब्दादीनां विधिशक्तिप्रतिबन्धकत्वस्य दर्शनात्प्रकृतेऽपि वापिशब्दाभ्यां तद्विधिशक्तेः प्रतिबद्धत्वान्न गुर्वादिहननविधिः । वस्तुतस्तु अपि वेदान्तगमित्यादौ सम्भावनाविषयतया क्रिया-गतमौचित्यमपिद्योत्यम् । सम्भावितौचित्यस्य चानुष्ठानप्रयुक्त-मिति स्वार्थे तात्पर्याभावः । स्पष्टं चेदं मञ्जूषायामिति बोध्य-म् । अतश्च गुर्वादिविषये एकत्र गुरुं वेत्यादिवचनजातेन हनन-विधेस्तन्निमित्तप्रायश्चित्तविधेरियं विशुद्धिरित्यनेनाभासत्वादन-योरेकविषयत्वाभावान्मिथो विरोधाभावात्कथं तदुदाहरणत्व-मिति ।

५ । वचनसिद्धोऽप्ययमर्थ इत्याह *नाततायीति आचार्यं

दोषो न । आभ्यां हि ब्राह्मणाचार्यादिभिन्नानामेवाततायिनां वधे दोषाभावप्रतिपादनादाततायिनामपि गुर्वादीनां न वध्यत्वमिति भावः । ननु आचार्यं वेति मनुवाक्ये आचार्याद्युपादानं प्रदर्शनमात्रतात्पर्यकम् । तथा च हिंसामात्रनिषेधे तात्पर्यादस्य वचनस्य नाततायिनामाचार्यादीनां विधिनिषेधपरत्वं येन गुरुभिन्नस्यैतद्वचनाविरोधः स्यादत आह *आचार्यादीनामिति । *हिंसेति । विशेषेण हिंसानिषेधेनेत्यर्थः । अन्यथा तेषामुपादानमफलमेव स्यादिति भावः । *इदम्, आचार्यं वेत्येतत् । *हिंसेति । हिंसामात्रनिषेधस्येत्यर्थः । तत्सामान्यनिषेधस्येति यावत् । *सामान्येति । न हिंस्यादित्यादिवचनेनैवेत्यर्थः । तथा च तत्सामान्यनिषेधस्य सामान्यवचनेनैव सिद्धत्वादस्मिन्वचने आचार्याद्युक्तेः स्वार्थान्विताकारणाभावाद्धिंसाविशेषनिषेधेनैवैतद्वचनं सफलम् । सामान्यनिषेधपरत्वे तु वचनान्तरेणैव तन्निषेधस्य प्राप्तत्वात्पुनरुक्तेर्निष्फलत्वं स्यात् इति भावः ।

६ । नन्वेवमाचार्यं वेत्यनेनाततायिनामप्याचार्यादीनां हिंसानिषेधप्रतिपादनान्नाततायिवधे दोष इत्यनेन तु आततायिहिंसायां दोषाभावप्रतिपादनेन तेषां वध्यत्वप्रतीतेरनयोर्वचनयोर्मिथो विरोधापत्तिरेवात आह *नाततायीति । तथा च भिन्नविषयत्वेनाविरोध इति भावः । तदन्यविषयत्वमेव द्रढयन् तत्र हेतुमाह *यत इति । सामान्येनाततायिनो दर्शिता इत्यत्रान्वयः।

७। मात्स्ये तु अधिका अपि आततायिन उक्ताः,

गुरुं वा तापसं वाऽपि ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥
नाततायिवधे दोषो हन्तुर्भवति कश्चन ।
प्रकाशं वा ऽप्रकाशं वा मन्युस्तं मन्युमृच्छति ॥

गृहक्षेत्राभिहन्तारस्तथा पत्न्यभिगामिनः ।
अग्निदो गरदश्चैव तथैवाभ्युद्यतायुधः ॥
अभिचाराणि कुर्वाणो राजगामि च पैशुनम् ।
एते हि कथिता लोके धर्मज्ञैराततायिनः ॥ इति ।

स्मृत्यन्तरमाह *तथेति । अग्निविषाग्नीनां द्वन्द्वं कृत्वोद्यतश-ब्देन बहुव्रीहिः । शापोद्यतेत्यत्र बहुव्रीहिद्वयम् । आद्ये आहि-ताग्न्यादित्वात्परनिपातः । *आथर्वणेन, तद्वेदप्रतिपादिताभिचा-रिककर्मणा । पिशुनः सूचकः । *दर्शिता इति । अत्र सामान्येनै-वाततायिनां प्रदर्शनात्तत्रापि नाततायीति सामान्यपदेनैवोद्देशा-न्नाततायीत्यादिसामान्यशास्त्रम् आचार्यं चेत्यादिविशेषशास्त्रस्य विषयं ब्राह्मणादिकं परिहृत्यान्यत्र प्रवर्तत इति भावः ।

८ । ननु एवं सिद्धे आततायिनां ब्राह्मणादीनामवध्यत्वे सति प्रमादाद्यदि तेषां हननं स्यात्तदा तस्य प्रामादिकत्वात् किं हन्तुर्दोषाभाव एवेति चेत्, नेत्याह *अतश्चेति । *यदि विपद्ये-रन्, मृत्युं प्राप्नुयुः । *तस्मात्, तदुदाहरणासम्भवात् ।

९ । स्वाभिमतमुदाहरणमाह *तदुच्यते इति । *हिरण्येति । अभ्यर्हितत्वात्पूर्वनिपातः । प्रागुक्तमौलमाह *धर्मशास्त्रेति । *चतुष्पादिति । तस्य तत्त्वं च प्रागेव प्रतिपादितम् । *विपरीतेति । न भवतीत्यर्थः । अत्र मानमाह *अत एवेति । यतो धर्मशास्त्रं प्रबलमस्मादेव हेतोरित्यर्थः । दर्शितमित्यत्रान्वयः । *धर्मेति । धर्मार्थयोः सन्निपाते एकत्र तच्छास्त्रयोः प्रसङ्गेऽर्थशास्त्रग्राहिण इत्यर्थः । अन्यथा तदसङ्गतिः स्पष्टैवेति भावः । गुरुत्वमेव दर्शयति *एतादिति । *इति, इत्यनेन । पूर्वं तस्यैव प्रक्रान्तत्वा-दिति भावः ॥ २१ ॥

मि० ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्-

इत्युक्तं, किं तत्साधनमित्यपेक्षिते आह।

मा॰ प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥ २२ ॥

मि॰ प्रमीयते परिच्छिद्यतेऽनेनेति प्रमाणम्। तच्च द्विविधं मानुषं दैविकं चेति। तत्र मानवं त्रिविधं लिखितं भुक्तिः साक्षिणश्चेति। कीर्तितं, महर्षिभिः। तत्र लिखितं द्विविधं, शासनं चीरकं चेति। शासनमुक्तलक्षणम्। चीरकं तु वक्ष्यमाणलक्षणम्। भुक्तिरुपभोगः। साक्षिणो वक्ष्यमाणस्वरूपप्रकाराः। ननु लिखितस्य साक्षिणां च शब्दाभिव्यक्तिद्वारेण शब्देऽन्तर्भावाद्युक्तं प्रामाण्यम्। भुक्तेस्तु कथं प्रामाण्यम्। उच्यते। भुक्तिरपि कैश्चिद्विशेषणैर्युक्ता स्वत्वहेतुभूतक्रयादिकमव्यभिचारादनुमापयन्ती अनुपपद्यमाना वा कल्पयन्ती इत्यनुमानेऽर्थापत्तौ वाऽन्तर्भवतीति प्रमाणमेव। एषां लिखितादीनां त्रयाणामन्यतमस्याप्यभावे दिव्यानां वक्ष्यमाणस्वरूपभेदानामन्यतमं जातिदेशकालद्रव्याद्यपेक्षया प्रमाणमुच्यते। मानुषाभावे एव दिव्यस्य प्रामाण्यमस्मादेव वचनादवगम्यते। दिव्यस्य स्वरूपप्रामाण्ययोरागमगम्यत्वात्। अतश्च यत्र परस्परविवादेन युगपद्धर्माधिकरणं प्राप्तयोः एको मानुषीं क्रियाम् अपरस्तु दैवीमवलम्बते तत्र मानुष्येव ग्राह्या।

तथा च कात्यायनः,

यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम्।
मानुषीं तत्र गृह्णीयान्न तु दैवीं क्रियां नृपः॥ इति।

यत्रापि प्रधानैकदेशव्यापिनी मानुषी सम्भवति तत्रापि न दैवमाश्रयणीयम्। यथा रूपकशतमनया वृद्ध्या गृहीत्वाऽयं न प्रयच्छतीत्यभियोगापह्नवे ग्रहणे साक्षिणः सन्ति नो संख्यायां वृद्धिविशेषे वा अतो दिव्येन भावयामीत्युक्ते। तत्रैकदेशविभाविनन्यायेनापि संख्यावृद्धिविशेषसिद्धेर्न दिव्यस्यावकाशः।

उक्तं च कात्यायनेन,

यद्येकदेशव्याप्ताऽपि क्रिया विद्येत मानुषी।
सा ग्राह्या न तु पूर्णापि दैविकी वदतां नृणाम्॥ इति।

यत्तु,

गूढसाहसिकानां च प्राप्तं दिव्यैः परीक्षणम्। इति,
तदपि मानुषासम्भवे एवेति नियमार्थम्।

यदपि नारदेनोक्तम् ( अ० २। ३० )
अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे।
न्यासापह्नवने चैव दिव्या सम्भवति क्रिया॥ इति,

तदपि मानुषासम्भवे एव। तस्मान्मानुषाभावे एव दिव्येन निर्णय इत्यौत्सर्गिकम्। अस्य चापवादो दृश्यते,

प्रक्रान्ते साहसे वादे पारुष्ये दण्डवाचिके।
बलोद्भूतेषु कार्येषु साक्षिणो दिव्यमेव च॥ इति।

तथा लेख्यादीनामपि क्वचिन्नियमो दृश्यते। यथा,
पूगश्रेणीगणादीनां या स्थितिः परिकीर्तिता।
तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः॥

यथा,

ज्ञानमार्गक्रियाभोगजलवाहादिषु क्रिया ।

भुक्तिरेव तु गुर्वी स्यान्न दिव्यं न च साक्षिणः ॥

तथा—

दत्तादत्तेषु भृत्यानां स्वामिना निर्णये सति ।

विक्रयादानसम्बन्धे क्रीत्वा धनमनिच्छति ॥

द्यूते समाह्वये चैव विवादे समुपस्थिते ।

साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम् ॥ इति ॥ २२ ॥

मा० १ । अव्यवहितेन सङ्गत्यभावाद् व्यवहितेन सङ्गतिमाह *नतोऽर्थीति । अपेक्षितः आकाङ्क्षितः । प्रमितिव्यवच्छेदाय साधनपरत्वाय चाह *प्रमीयत इति । साक्षात्प्रमाजनकत्वाभावात् द्वाभ्यः सर्वमिति विषये वस्तुनो ऽन्यथात्वे परम्परयाऽपि तदभावादाह *परीति । भ्रमप्रमासाधारणनिश्चयः परिच्छेदः । कीर्त्तितमित्यत्र शेषमाह *महर्षिभिरिति । पूर्वोत्तरतदुक्त्यनुरोधेनात्रानुक्तमप्याह *तत्रेति । तेषां त्रयाणां मध्ये इत्यर्थः । *उक्तेति । पूर्वाध्यायान्ते ।

दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् । (या० स्मृ० १ । ३१८)

इत्यादिना इति भावः । *वक्ष्यमाणेति । अत्रैवाध्याये लेख्यप्रकरणे यः कश्चिदित्यादिना इति भावः । भोजनस्य साधनस्य च व्यवच्छेदायाह *उपभोग इति । *वक्ष्यमाणस्वरूपेति । स्वरूपं च प्रकारश्च तौ वक्ष्यमाणौ स्वरूपप्रकारौ येषामित्यर्थः । तत्र प्रकारो भेदः, दृष्टसाक्षिणः श्रुतसाक्षिणः इत्येवमादिः ।

२ । ननु प्रत्यक्षाद्यष्टप्रमाणान्तर्गतमेव प्रमाणं नान्यदिति

द्वयोः कथं चित् तत्त्वसंभवेऽपि भुक्तेर्न तदन्वभाव इति पक्षं तत्त्वमित्याशयेनाह *नन्विति । क्रियादिर्न सत्त्व: स न नित्य इत्याशयेनाह *शब्दाभिव्यक्तेति। नित्यः स्फोटस्तच्चक्षवत्कर्मा-क्षिणां ध्वनिद्वारा तदभिव्यञ्जकत्वात्तत्प्रतिपादकत्वेऽपि तत्त्वात्तत्त्वमिति भावः । तस्या अपि तदन्वभावमाह *भुक्ति-रिति । प्रमाणमेवेत्यन्वयः । *कीर्त्यादिति । भागेयग्रहितत्वादि-विशेषणैरित्यर्थः । *अन्यभिचारादिति । अनेनानुपपत्तिसामर्थ्य उक्ता । यथासंख्यमत्रान्वयः । *कल्पयन्तीति । ग्रहन्तरवत्तक-म् । क्षेत्रादिकम् अस्य क्रयादिमागम् आसेधरहितत्वे सति चि-रकालोपभुक्तत्वात् तदीयगृहादिवत् इत्यनुमानप्रयोगः । तादृशी भुक्तिः स्वतोऽनुपपद्यमाना तादृशं तत् कल्पयतीत्यर्थापत्तिर्बो-ध्या । एवं क्रयादौ सिद्धे स्वामीत्यर्थेत्यादिवचनोपात्तनिय-तकारकहेतुभिः स्वत्वं सिद्धं भवति ।

३ । उत्तरार्द्धार्थमाह *एषामिति । मध्ये इति शेषः । अन्य-र्थान्तर्भावेण समास इत्याह *अन्यतमस्याप्यभावे इति । अ-पिना भयादिसमुच्चयः । *वल्येति । मान्वत् । तेषां तत्त्वं न ऐच्छिकं किं तु व्यवस्थितमित्याह *जातीति । प्रमाणमित्य-स्यानेनापि सम्बन्ध इत्याह *प्रमाणमिति । उक्तरीत्या महर्षि-भिरिति शेषः। मानुषप्रमाणाभावमात्रे दिव्यावसर इति यथाश्रुतं प्रतीयमानो न तदर्थः किं तु तदभावनिर्णये सत्येव तदवसर इतीत्याह *मानुषेति । अत्र गमकमिदमेवोपास्थितमाह *अस्मा-दिति । अन्यथा एषामन्यतमाभावे इत्यस्यानर्थक्यं स्पष्टमेव । ग्राह्यमिति शेषः । केन प्रामाण्यमित्यनेन अवगम्यते इत्यनेन चास्यैवार्थस्याभिमतत्वात् ।

४ । ननु यथाश्रुतार्थबोधकमेवेदं वचनमिति न व्यर्थमतस्तत्र

तुमाह *दिव्यस्येति । दृष्टं सत्यदृष्टार्थगमकत्वात्प्रत्यक्षत्वात् । दिव्यस्य तयोः सार्थकगम्यत्वेनानौचित्येनादृष्टत्वात्तथा ऽसत्यानर्थग्रणादिति भावः । एतत्फलमाह *अतथेति । स्पष्टोऽर्थः । क्रियाविपर्यासे, अनन्यत्वे इत्यस्य पूर्वत्रानुषङ्गः ।

५। ननु यत्र सर्वसाध्यसाधकं क्रियाद्वयं तत्र भवतु मानुष्येव ग्राह्येति, यत्र त्वेकदेशसाधनभूता मानुषी सर्वसाधनभूता दैवी तत्र का ग्राह्येत्यत आह *यत्रार्थीति । *न दैवामिति । उक्तहेतोरेवेति भावः । उदाहरति *यथेति । *इत्यभियोगेति । इति योऽभियोगस्तस्यापह्नवे परेण कृते सतीत्यर्थः । *ग्रहणं इति । मूलभूतं द्रव्यं प्रधानं तस्यैकदेशो ग्रहणं संख्या वृद्धिश्च । अभिमतवृद्धिरूपकथनग्रहणं प्रधानं वा । *इत्युक्ते, स्थलविशेषे । पूर्वान्वयीदम् । नन्वेवं कथं सर्वसाध्यसिद्धिरत आह *तत्रैकेति । तदविषयत्वादाह *न्यायेनेति । तद्रीत्येत्यर्थः । अपिर्दिव्यसमुच्चये । *संख्येति । संख्यावृद्धिविशेषयोः सिद्धेरित्यर्थः । *व्याप्ता, तन्मात्रसाधिका । सर्वसाधिका ग्राह्येति किमु वक्तव्यमित्यपेरर्थः । *सा,सैव । अत एवाह *न त्विति । वदतां वादिनां मध्ये कस्यचित् इत्यर्थः । दैवी विवदतामिति पाठान्तरम् ।

६। एवं स्थिते कात्यायनविरोधं परिहरति *यत्त्विति । *गूढेति। कर्मधारयान्मत्वर्थीयः। चस्त्वर्थे। तु इत्येव पाठान्तरम् । प्राप्तं योग्यम् । *मानुषासम्भवे एवेति । मानुषासम्भवकृतनियमार्थमिति पाठान्तरम् । नियमश्च परीक्षणस्यादृष्टार्थः । प्राग्वदाह *यद्यपीति । *साहसे, तदाख्ये विवादे । मानुषासम्भवाय तस्य चत्वार्यधिकरणान्युक्तानि *अरण्ये इति । निमित्तान्तरमाह *न्यासेति । उपसंहरति *तस्मादिति ।

७। *अस्य, उक्तस्यौत्सर्गिकस्यार्थस्य । *प्रक्रान्ते इति । अस्य

सर्वत्रान्वयः । अत्र साक्षिदिव्ययोर्निरूपणविधानानुक्त्यार्थानामर्थेन विकल्पात्तदपवादत्वम् । कात्यायनोक्तिरियमपि । एवमग्रेऽपि त्रिपु ।

८ । प्रसङ्गात् मूलानुक्तमन्यदपि किञ्चिन्निर्णयविधानमाह *तथेति । आदिना भुक्तिसाक्षिणोः परिग्रहः । एवं न तत्राधि-च्छिकत्वं नेति भावः । तत्रादौ लेख्यस्याह *यथेति । पूगादेरर्थः स्फुटीभविष्यति । स्थितिर्मर्यादा । *नम्याः, स्थिताः ।

९ । भुक्तेराह *तथेति । क्रियाशब्दस्य द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकं सम्बन्धः । क्रिया करणम् । आभोगः परीणाहः । तेन च परिणाहवद्ङ्गणादिकं लक्ष्यते । प्रवेशोऽभ्युपगमः । जलवाही जलनिर्गममार्गः । आदिना गेहादिसमार्जितरजःपुञ्जप्रक्षेपस्थानावकरादिग्रहणम् । अत्र द्वन्द्वोत्तरपदकृद्वन्द्वपदानिवकुर्वादिः ।

१० । साक्षिणामाह *तथा दत्तेति । बहुवचनान्तयोर्द्वन्द्वः । दत्तादत्तं विद्यते येषु दत्ताप्रदानिकाख्यविवादपदेषु । दत्ते चेति दत्ते ऽर्थेति वा पाठान्तरम् । स्वामिभृत्यनिर्णयाख्ये तत्र । विक्रयेत्यर्द्धेनैकं विक्रीयासम्प्रदानाख्यं तत्र । धनं मूल्यं, दातुमिति शेषः, तत्र यस्तत्सम्बन्धस्तत्रेत्यर्थः । द्यूते समाह्वयाख्ये च तत्र । *समुपस्थिते, प्राप्ते । एतानि च विवादपदान्यग्रे स्फुटीभविष्यन्ति ॥ २२ ॥

मि० उभयत्र प्रमाणसद्भावे प्रमाणगतबलाबलविवेके चासति पूर्वापरयोः कार्ययोः कस्य बलीयस्त्वमित्यत आह ।

या० सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया ।

मि० ऋणादिषु सर्वेष्वर्थविवादेषु उत्तरा, क्रिया

भिरनङ्गानि क्रिया कार्यं, बलवती । उत्तरकार्ये सा-धिते तदादौ विजयी भवति । पूर्वकार्ये सिद्धेऽपि त-दादौ पराजीयते । तद्यथा । कश्चिद् ग्रहणेन धारणं साधयति कश्चित्प्रतिदानेनाधारणं तत्र ग्रहणप्रतिदा-नयोः प्रमाणसिद्धयोः प्रतिदानं बलवदिति प्रतिदान-वादी जयति । तथा, पूर्वं त्रिकं शतं गृहीत्वा काला-न्तरे त्रिकं शतमङ्गीकृतवान् । तत्रोभयत्र प्रमाणसद्भा-वेऽपि त्रिकशतग्रहणं बलवत् । पश्चाद्भावित्वात् पूर्वा-बाधेनानुत्पत्तेः ।

उक्तं च,

पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सेत्स्यति । इति ।

मि० अस्यापवादमाह ।

या० आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ॥ २३ ॥

मि० आध्यादिषु त्रिषु पूर्वमेव कार्यं बलवत् । त-द्यथा । एकमेव क्षेत्रमेकस्याधिं कृत्वा किमपि गृही-त्वा पुनरन्यस्याप्याधाय किमपि गृह्णाति तत्र पूर्वस्यै-व तद्भवति नोत्तरस्य । एवं प्रतिग्रहे क्रये च ।

नन्वाहितस्य तदानीमस्वत्वात्पुनराधानमेव न संभवति । एवं दत्तस्य क्रीतस्य च दानक्रयौ नोपपद्ये-ते । तस्मादिदं वचनमनर्थकम् । उच्यते । अस्वत्वेऽपि मोहात्काश्चिल्लोभाद्वा पुनराध्यादिकं करोति तत्र पूर्वं बलवदिति न्यायमूलमेवेदं वचनमित्यचोद्यम् ॥ २३ ॥

या० १ । *उभयत्रेति । वादिप्रतिवाद्युक्तयोः । *बलाबलेति।प्रागुक्ते इत्यर्थः । *कार्ययोः, साध्ययोः । करणरूपार्थनिरासायाह *क्रिय-

इति । तात्पर्यार्थमाह *उक्तेति । प्रमाणेनेति भावः । सिद्धे-
ऽपीति । पूर्वप्रमाणेनेति भावः । अत्र दृष्टान्तमाह *यथेति । द्वे
वृद्धिर्यस्य तत् द्विकं, तदस्मिन्निति कन । निष्कशतस्य प्रतिमासं
निष्कद्वयं वृद्धिरित्येवं प्रथमं गृहीता । कालान्तरं तदानुत्तमर्णस्य
स्वकार्यवशात्तस्यैव निष्कशतस्य निष्कत्रयं वृद्धिरित्यङ्गीकारे त-
देव परं बलवत् । विरोधेनोत्तरसंख्यायाः पूर्वसंख्याबाधकत्वेन
पूर्वसंख्याया अप्रसरादित्यर्थः । ननु व्याकरणे सति विरोधे
परस्य पूर्वबाधकत्वं विप्रतिषेधशास्त्रमूलकं दृष्टम्, अणुदित्सूत्रे च
भाष्ये उक्तं, गौणी मुख्या चोत्तरा संज्ञा पूर्वां संज्ञां बाधते
इति, तद्वदत्र किं मूलम् अतस्तन्न्यायेनैवोभयत्र श्रेयमाह *पश्चा-
दिति । किं तु तद्बाधेनैव परस्योत्पत्तेरित्यर्थः ।

२ । *एकस्य, निकटे । एवमग्रेऽपि । प्रागुक्तहेतोरत्रासत्त्वमत्र
हेतोः सत्त्वं च सूचयन्नाह *नन्वित्यादिना । पूर्वस्वत्वादेवाह
*तदानीमिति।*न्यायेति, बहुव्रीहिः षष्ठीतत्पुरुषो वा। एकत्रार्जि-
तादेरन्यत्राधानकरणादौ स्वत्वमेव नास्तीत्यत्रमेव न्यायः ।
तत्सिद्धार्थ एव स्फुटत्वायानूद्यते ऽनेन । यद्वा तथा ऽर्थे बोधिते
तद्बलात्तस्य पुनस्तत्र स्वत्वाभावादिति स न्यायो निष्पन्न इति ।
उभयथा ऽपि प्रकृतोक्तिर्निर्बाधैवेति भावः ॥ २३ ॥

मि० भुक्तेः कैश्चिद्विशेषणैर्युक्तायाः प्रामाण्यं दर्श-
यिष्यन् कस्याश्चिद् भुक्तेः कार्यान्तरमाह ।

या० पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य दशवार्षिकी ॥ २४ ॥

मि० परेणासंबन्धेन भुज्यमानां भुवं धनं वा प-
श्यतः, अब्रुवतः मदीयेयं भूः न त्वया भोक्तव्येति

अप्रतिषेधतः, तस्या भूमेर्विंशतिवार्षिकी अप्रतिरवं विंशतिवर्षोपभोगनिमित्ता हानिर्भवति। धनस्य तु ह्रस्वत्वाद्दशवार्षिकी हानिः।

नन्वेतदनुपपन्नम्। न ह्यप्रतिषेधात्स्वत्वमपगच्छति। अप्रतिषेधस्य दानविक्रयादिवत् स्वत्वनिवृत्तिहेतुत्वस्य लोकशास्त्रयोरप्रसिद्धत्वात्। नापि विंशतिवर्षोपभोगात् स्वत्वम्। उपभोगस्य स्वत्वे प्रमाणत्वात्। प्रमाणस्य च प्रमेयं प्रत्यनुत्पादकत्वात्। रिक्थक्रयादिषु स्वत्वकारकहेतुषु अपाठाच्च। तथाहि। स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु—

ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विनिर्जितम्।

निर्विष्टं वैश्यशूद्रयोरित्यष्टावेव स्वत्वकारकहेतून् गौतमः पठति न भोगम्। न चेदमेव वचनं विंशतिवर्षोपभोगस्य स्वत्वापत्तिहेतुत्वं प्रतिपादयतीति युक्तम्। स्वत्वस्य स्वत्वहेतूनां च लोकप्रसिद्धत्वेन शास्त्रैकसमधिगम्यत्वाभावात्। एतच्च विभागप्रकरणे निपुणतरमुपपादयिष्यते। गौतमवचनं तु नियमार्थम्।

अपि च, (ना० ऋ० १।८७)

अनागमं च यो भुङ्क्ते बहून्यब्दशतान्यपि।
चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः॥

इत्येतत् अनागमोपभोगस्य स्वत्वहेतुत्वे विरुध्यते। न च—अनागमं च यो भुङ्क्ते इत्येतत् परोक्षभोगविषयम्, पश्यतोऽब्रुवत इति प्रत्यक्षभोगविषयमिति युक्तं वक्तुम्। अनागमं च यो भुङ्क्ते इत्यविशेषाभिधानात्।

नोपभोगे फलं कार्यमाहूयां तन्सुतेन वा ।
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः ॥

इति कात्यायनवचनात् । समक्षभोगे च हानिकारणाभावेन हानेरसम्भवात् । न चैतन्मन्तव्यम्, आधिसीमानिग्रहक्रयेषु पूर्वस्याः क्रियायाः प्राबल्यादपवादेन भूविषये विंशतिवर्षोपभोगयुक्तायाः धनविषये दशवर्षोपभोगयुक्तायाः उत्तरस्याः क्रियायाः प्राबल्यमनेनोच्यत इति । यतस्तेषूत्तरैव क्रिया बलवती नोपपद्यते । स्वमेव ह्याधेयं देयं विक्रेयं च भवति । न चाहितस्य दत्तस्य विक्रीतस्य वा स्वत्वमस्ति । अस्वस्य दाने प्रतिग्रहे च दण्डः स्मर्यते,

अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति ।
उभौ तौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसम् ॥ इति ।

तथा, आध्यादीनां त्रयाणामपवादत्वेऽस्य श्लोकस्याधिसीमादीनामुत्तरश्लोकेऽपवादो नोपपद्यते । तस्माद् भूम्यादीनां हानिरनुपपन्नैव । नापि व्यवहारहानिः ।

यतः,

उपेक्षां कुर्वतस्तस्य तूष्णींभूतस्य तिष्ठतः ।
काले विपन्ने पूर्वोक्ते व्यवहारो न सिध्यति ॥

इति[1] नारदेनोपेक्षालिङ्गाभावकृता व्यवहारहानिरुक्ता न तु वस्त्वभावकृता ।

तथा मनुनापि, ( मनु० ८।१४८ )

---

१ अयं श्लोकः नारदस्मृतौ मूले नोपलभ्यते । तट्टिप्पण्यामुपलभ्यते ।

अजडश्चेदपोगण्डो विषयश्चास्य भुज्यते।
भग्नं तद्व्यवहारेण भोक्ता तद्धनमर्हति॥

इति व्यवहारतो भङ्गो दर्शितो न वस्तुतः। व्यवहारभङ्गश्चैवं, भोक्ता किल वदति, अजडोऽयमपोगण्डोऽयमयान्तोऽयम् अस्य सन्निधौ विंशतिवर्षाण्यप्रतिरवं मया भुक्तं तत्र बहवः साक्षिणः सन्ति, यद्यस्य स्वम् अन्यायेन मया भुज्यते तदाऽयं किमित्येतावन्तं कालमुदास्ते इति तत्रायं निरुत्तरो भवतीति। एवं निरुत्तरस्यापि वास्तवो व्यवहारो भवत्येव।

छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः।

इति निगमात्।

अथ मतम्, यद्यपि न वस्तुहानिर्नापि व्यवहारहानिस्तथापि पश्यतोऽप्रतिषेधतो व्यवहारहानिशङ्का भवतीति तन्निवृत्तये तूष्णीं न स्थातव्यमित्युपदिश्यते इति। तच्च न। स्मार्तकालाया भुक्तेर्हानिशङ्काकारणत्वाभावात्। तूष्णीं न स्थातव्यमित्येतावन्मात्राभिधित्सायां विंशतिग्रहणमविवक्षितं स्यात्। अथोच्येत— विंशतिग्रहणमूर्ध्वं पत्रदोषोद्भावननिराकरणार्थम्,

यथाह कात्यायनः,

शक्तस्य संनिधावर्थो यस्य लेख्येन भुज्यते।
विंशद्वर्षाण्यतिक्रान्तं तत्पत्रं दोषवर्जितम्॥ इति,

तदपि न। आध्यादिष्वपि विंशतेरूर्ध्वं पत्रदोषोद्भावननिराकरणस्य समत्वेनापवादासम्भवात्।

यथाह कात्यायनः,

अनागमोपभोगादस्याभावात् । तस्मात्स्वाम्युपेक्षालक्षणस्वापराधादस्मात् धनस्य । इत्यनेनैव फलं नष्टं न लभते इति स्थितम् । एतेन धनस्य दशवार्षिकीत्येतदपि व्याख्यातम् ॥ २४ ॥

१ । *भुक्तः, भागुक्तप्रमाणान्तर्गतायाः । *काश्चिदिति । आगमरहितत्वानिदकालत्वादिविशेषणयुक्ताया इत्यर्थः । * कार्यान्तरमिति । पूर्वत्र क्रियाशब्दस्य कार्यपरत्वस्योक्तत्वेन तद्भयान्यतराभ्यसिद्धिरूपकार्यातिरिक्तकार्यमित्यर्थः । अनेन स्पर्शहिताव्यवहितसद्भानिरुक्ता । एकदेशिमतेन व्याचष्टे *परेणेति । सम्बन्धे सति दानक्रयादिरूपे परत्वस्यैवाभावादाह *असम्बन्धेनेति । यद्वर्त्रादिः । असम्बद्धेनेति पाठान्तरम् । कर्माकाङ्क्षायां सत्यामवतारयति *भुज्यमानां भुवामिति । *पश्यत इति । वादिन इत्यर्थः । अब्रुवत इति छेदनाह *अब्रुवत इति । तत्र कर्माकाङ्क्षायामनंतरं तदर्थमाह *मदीयेयमिति । षष्ठीयम् । *तस्या इति । तत्सम्बन्धिन्याः परेण भुज्यमानाया इत्यर्थः । स्पष्टत्वाय पुनराह *अप्रतीति । स्पष्टत्वायोक्तसहितं विंशतीत्यस्यार्थमाह *अप्रतिरवामिति । अशब्दं यथा तथेत्यर्थः । समस्तपाठो युक्त एव । विंशतिवर्षशब्दस्तदुपभोगे लाक्षणिकः । कृतलब्धेत्यर्थे कालाट्ठञ् । वर्षस्याभविष्यतीत्युत्तरपदवृद्धिः । एवमग्रेऽपि । तत्फलितमाह *उपभोगनिमित्तेति ।

२ । अनुपपत्तौ हेतुमाह *न हीत्यादिना । अप्रतिषेधात्स्वामिनः स्वत्वानपगममुक्त्वा तावत्पर्यन्तं तादृशोपभोगेन स्वत्वानुत्पत्तिमाह *नापीति । *स्वत्वमिति । उत्पद्यते इति शेषः । अत्र हेतुमाह *उपभोगस्य स्वत्वे प्रमाणत्वादिति । तस्य स्वत्वविषयकप्रमितिजनकत्वादित्यर्थः । कचित्समस्तपाठः । यथा धूम-

स्य पर्वतादावविज्ञापकत्वं न तद्व्यापकत्वं तयोरभावेनाप्यपि स्वत्व-
मेयभूतस्वत्वज्ञापकत्वं नोत्पादकत्वम् अतो न ममस्वदृष्टव्यभिचार इति-
भावः। तदाह *प्रमाणेति। ननु शास्त्रगम्यत्वे न तत्प्रमाणत्वं प्रमाणा-
भावात् किं तूत्पादकत्वमेव अत आह *विषयेति। तत्र तत्पाठा-
ठात्त तस्य तत्त्वमित्यर्थः।

३। तत्रापाठमेव दर्शयति *यथाहेति। गौतमवाक्यमाह *स्वामीति। रिक्थादिषु पञ्चसु सत्सु स्वामी भवतीति सर्वसाधारणस्वत्वकारकहेतुपरिगणनम्। अप्रतिबन्धो दायो रिक्थम्। सप्रतिबन्धो दायः संविभागः। क्रयः प्रसिद्धः। अरण्यादिष्वनन्यपरिगृहीततृणकाष्ठादिस्वीकरणं परिग्रहः। निध्यादिप्राप्तिः अधिगमः। असाधारणकारकहेतूनाह *ब्राह्मेत्यादिना। ब्राह्मणस्य प्रतिग्रहादिना यल्लब्धं तद् अधिकम् असाधारणं स्वत्वजनकमित्यर्थः। वैश्यस्य भोगरूपेण भृतिरूपेण वा यल्लब्धम्, शूद्रस्य द्विजशुश्रूषादिना भृतिरूपेण यल्लब्धं, तद् अधिकम् असाधारणं स्वत्वजनकम्। निर्वेशो भृतिभोगयोरित्यमरः।

४। ननु एवमपि पश्यत इति वचनमेव तादृशोपभोगस्य स्वत्वहेतुत्वविधायकमस्तु इत्याशयेन शङ्कते *न चेदमिति। आपत्तिः प्राप्तिः। तत्र हेतुमाह *स्वत्वस्येति। एकशब्दो मात्रार्थः। विधेरत्यन्ताप्राप्तप्रापणस्वभावत्वेन लोकप्रसिद्धार्थे प्रवृत्त्यभावादिति भावः। *एतच्चेति। तस्य तेषां च लोकसिद्धत्वमित्येतदित्यर्थः।

५। नन्वेवमुक्तगौतमवाक्यस्य का गतिरत आह *गौतमेति। शास्त्रपरिगणितैरेव हेतुभिः स्वत्वमुत्पाद्यं नापरिगणितैरपि चौर्यादिभिरिति नियमो ऽदृष्टायेति नियमार्थं न तु स्वत्वादि शास्त्रमात्रसमधिगम्यमित्येवमर्थमित्यर्थः। यद्वा तैः स्वत्वमेव

स्त्वर्थे । एवमग्रेऽपि । *वैकल्पिकमिति । न तु युगपदिति भावः ।

२ । नन्वेवं क्रमे नियामकाभावेनैच्छिकविकल्पापत्तौ व्रीहियवादिवत् "पत्नी दुहितर" इतिक्रमबोधकवचनविरोधापत्तिः, अत आह * पौर्वापर्येति । तथा च व्यवस्थितोऽयं विकल्पो न त्वैच्छिकः । व्यवस्था च पत्नी दुहितर इति बोधितपौर्वापर्यावाधेन ज्ञेयेति भावः ।

३ । नन्वेवं सति फलाभावाद्देशान्तरेति नारभ्यम्, अत आह *शिष्येति । "गोत्रजा बन्धुशिष्य" इत्यनेन "सर्वेषामप्यभावे तु" इत्यनेन च क्रमेण प्रतिपादिताधिकारित्वकशिष्यादिनिवृत्तिः, वणिजस्तत्रानुक्तत्वेन तत्प्राप्तिश्च एतद्वचनप्रयोजनमित्यर्थः । अतः पुत्रादिबन्धुपर्यन्तानामभावे संभूयकारिणो वणिजो गृह्णीयुरिति भावः ।

४ । तत्र विशेषमाह * वणिजामपीति । पिण्डदातृत्वस्य तदव्याप्यत्वस्य प्रागुक्तत्वादाह * ऋणेति । ऋणं प्रतिकुर्युरित्यनेनेदमुक्तं प्राक् । आदिना दत्तऋणोद्धारपरिग्रहः ।

५ । विशेषान्तरमाह * सामर्थ्येति । विभज्य ग्रहणे हेतुं सूचयन्नाह * संसृष्टिन इति । यद्यपि नात्र मुख्यं संसृष्टित्वं तथापि तेन न्यायेनात्रापि तथैवेति भावः ।

६ । विशेषान्तरमाह * तेषामपीति । दशवर्षमिति बहुव्रीहिः ।*तदिदमिति । दशवर्षपर्यन्तं स्थापनमित्यर्थः ।*एकस्येति। संभूय कर्म कुर्वतां वणिजां मध्ये यद्येकस्य मरणं भवेत् तदाऽस्य मृतस्य तद्वस्तु दायादः पुत्रादिः बन्ध्वन्तो जनः पूर्वपूर्वाभावे उत्तरोत्तर आप्नुयात् । दायादे उक्तरूपे असति अन्यो वणिग्वा शक्तश्चेत् ऋणदानादिसमर्थश्चेदाप्नुयात् । एकस्य तत्रासामर्थ्ये सर्वेषां च सामर्थ्ये तादृशाः ते वणिजः सर्वे एवाप्नुयुरित्यर्थः ।

ये च विनष्टद्रव्याणां जीर्णवस्त्राभिन्नभाजनादीनाम-विज्ञातस्वामिकानां विक्रायकास्ते सर्वे चौर्यसंभाव-नया ग्राह्याः।

एवं नानाविधचौर्यलिङ्गान्पुरुषान् गृहीत्वा एते चौराः किं वा साधव इति सम्यक्परीक्षेत, न पुनर्लि-ङ्गदर्शनमात्रेण चौर्यनिर्णयं कुर्यात्। अचौरस्यापि लो-प्त्रादिलिङ्गसम्बन्धसंभवात्।

यथाह नारदः,

अन्यहस्तात्परिभ्रष्टमकामादुत्थितं भुवि।
चौरेण वा प्रतिक्षिप्तं लोप्त्रं यत्नात्परीक्षयेत् ॥

तथा, (ना. अ. १। ७१)

असत्याः सत्यसंकाशाः सत्याश्चासत्यसन्निभाः।
दृश्यन्ते द्विविधा भावास्तस्माद्युक्तं परीक्षणम् ॥

इति ॥ २६७ ॥ २६८ ॥

वा० १। तत्र उपायान्तरमाह * किं चेति। केवलमव-धारणे। शङ्कायां जातिनिह्नवादेर्हेतुत्वमित्याह * वक्ष्यमाणै-रिति। तान्येवाह * जातीति। निह्नवपदस्य प्रत्येकं संवन्धः। डवित्थ इति यादृच्छिकी संज्ञा। देशो व्यापकः। ग्रामो व्या-प्यः। उपलक्षणे इयं तृतीयेत्याह * लक्षिता इति। * द्यूते-ति। द्वंद्वोत्तरपदको द्वंद्वः। समभिव्याहारात् स्त्री विशेषरूपा न तु सामान्यभूतेत्याह * द्यूतपण्याङ्गनेति। इदमुपलक्षणमि-त्याह * आदीति। तात्पर्यार्थमाह * अतिप्रसक्ता इति। शुष्कं च भिन्नश्च शुष्कभिन्नौ, मुखं च स्वरश्च मुखस्वरौ, त-तो वहुव्रीहिर्यथासंख्यं चेत्याह * यदीति। अत्र कारणमु-क्तं कुतस्त्योऽसीत्यादिना। ननु अत्र द्वयोरेवोक्तत्वाज्जात्या

*तदभावे वणिजामभावे * गुप्तं रक्षितं * तत् तदीयधनं *ततः तावत्पर्यन्तस्थापनोत्तरमस्वामिकत्वादिविशिष्टं * तत् धनं राजा स्वीयं कुर्यात्, एवं सति न धर्मस्य हानिरित्यर्थः॥२६४॥

मि० मय. किंच।

या० जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत्।

मि० जिह्मो वञ्चकः तं निर्लाभं निर्गतलाभं लाभमाच्छिद्य त्यजेयुर्बहिः कुर्युः। यश्च संभूयकारिणां मध्ये भाण्डप्रत्यवेक्षणादिकं कर्तुमसमर्थोऽसावन्येन स्वं कर्म भाण्डभारवहनं तदायव्ययपरीक्षणादिकं कारयेत्॥

मि० अव. प्रागुपदिष्टं वणिग्धर्ममृत्विगादिष्वतिदिशति।

या० अनेन विधिराख्यात ऋत्विक्कर्षककर्मिणाम्॥२६५॥

मि० अनेन लाभालाभौ यथाद्रव्यमित्यादिवणिग्धर्मकथनेन ऋत्विजां होत्रादीनां कृषीवलानां नटनर्तकतक्षादीनां च शिल्पकर्मोपजीविनां विधिर्वर्त्तनप्रकार आख्यातः। तत्र च ऋत्विजां धनविभागे विशेषो--

मनुना दर्शितः, (अ. ८ श्लो. २१०)

सर्वेषामर्धिनो मुख्यास्तदर्द्धेनार्धिनोऽपरे।

तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः॥ इति।

अस्यायमर्थः। ज्योतिष्टोमे तं शतेन दीक्षयन्तीति वचनेन गवां शतमृत्विगानतिरूपे दक्षिणाकार्ये विनियुक्तम्। ऋत्विजश्च होत्रादयः षोडश। तत्र कस्य कियानंश इत्यपेक्षायामिदमुच्यते।

सर्वेषां होत्रादीनां षोडशर्त्विजां मध्ये ये मुख्या-

सर्वग्रहणे सिद्धे व्यक्त्याशयेन बहुत्वस्यानुपयोगाद् बहुवचनासंगतिः, अत आह *बहुवचनादिति। तथा च प्रकृतिरन्येषामप्युपलक्षणम् अर्द्धर्चा इति वत्। *त्रेति। तद्विवक्षया बहुवचनम्। अत एव प्रकृतिप्रत्ययविरोधो ऽपि नेति भावः। अनतिप्रसङ्गायाह *निष्कारणमिति। गूढं यथा तथा चरन्तीति शाब्दोऽर्थः। तत्फलितमाह *वेषान्तरेति। *गूहयित्वेति। आच्छादयित्वेत्यर्थः। आवश्यकव्यये ऽध्योपादाह * बहुव्ययेति। भूम्नि तत्र मतुप्। विनष्टद्रव्याणि विक्रीणते इति पचाद्यच् गङ्गाधरवत्। तत्फलितमाह *ये चेति। *विक्रायकाः, तत्कर्तारः। ण्वुलन्तम्। शङ्कयेत्यस्यात्राप्यन्वय इत्याह *चौर्यसम्भावनयेति।

२। वक्ष्यमाणसङ्गतये तत्सूचितमेव विशेषमाह *एवमिति। नानाविधेति बहुव्रीहिः। मात्रपदेन परीक्षाव्यवच्छेदः। *चौर्येति। चौर एवायमिति निश्चयमित्यर्थः। *अन्यहस्तादिति। कात्यायनोऽप्येवमेव। अन्यस्य चोरस्य हस्तात्परिभ्रष्टं च्युतं, भुवि खन्यमानायामन्यार्थम् अत एवाकामादनिच्छयोत्थितं प्राप्तमन्यदीयं पूर्वं, प्रातिक्षिप्तं त्यक्तम् इत्यर्थः। तथा च इदमेवमुतानेनापहृतमिति परीक्षा कार्येति भावः। तदाह *यत्नादिति।

३। नारदान्तरमाह *तथेति। यत इति शेषः। यतो द्विविधा भावाः पदार्थाः दृश्यन्ते तस्मादित्याद्यर्थः। द्वैविध्यमेवाह *असत्याः सत्येति। अत एव विविधा इत्यपपाठः॥ २६७॥ २६८॥

मि० अव० एवं चौर्यशङ्कया गृहीतेनात्मा संशोधनीय इत्याह।

श्चत्वारो होत्रध्वर्युब्रह्मोद्गातारः ते गोशतस्यार्द्धिनः सर्वेषां भागपरिपूरणोपपत्तिवशादष्टाचत्वारिंशद्रूपार्द्धेनार्द्धभाजः।

अपरे मैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारस्तदर्द्धेन तस्य मुख्यांशस्यार्द्धेन चतुर्विंशतिरूपेणार्धभाजः।

ये पुनस्तृतीयिनः अच्छावाकनेष्ट्राग्नीध्रप्रतिहर्तारस्ते तृतीयिनो मुख्यांशस्य षोडशगवरूपतृतीयांशेन तृतीयांशभाजः।

येतु पादिनः ग्रावस्तुदुन्नेतृपोतृसुब्रह्मण्यास्ते मुख्यभागस्य यश्चतुर्थांशो द्वादशगवरूपस्तद्भाजः।

ननु कथमयमंशनियमो घटते। न तावदत्र समयो, नापि द्रव्यसमवायो, नापि वचनं यद्वशाद्भागनियमः स्यात्। अतः "समं स्यादश्रुतत्वात्" इति न्यायेन सर्वेषां समांशभाक्त्वं, कर्मानुरूपेण वांऽशभाक्त्वमिति युक्तम्।

अत्रोच्यते। ज्योतिष्टोमप्रकृतिके द्वादशाहेऽर्द्धिनस्तृतीयिनः पादिन इति सिद्धवदनुवादो न घटते, यदि तत्प्रकृतिभूते ज्योतिष्टोमे अर्द्धतृतीयचतुर्थांशभाक्त्वं मैत्रावरुणादीनां न स्यात्। अतो वैदिकार्धिप्रभृतिसमाख्याबलात् प्रागुक्तोंऽशनियमोऽवकल्प्यते इति निरवद्यम्॥ २६५॥

इति संभूयसमुत्थानप्रकरणम्॥

वा० १। वणिजं प्रत्यन्यदप्युच्यते इत्याह * किं चेति। निर्गतलाभमिति बहुव्रीहिः। तस्याप्यर्थमाह * लाभमिति।

याः० गृहीतः शङ्कया चौर्ये नात्मानं चेद्विशोधयेत् ।
दापयित्वा हृतं द्रव्यं चौरं दण्डेन दण्डयेत् ॥ २६९ ॥

मि० यदि चौर्यशङ्कया गृहीतस्तन्निस्तरणार्थमात्मानं न शोधयति तर्हि वक्ष्यमाणधनदानवधादिदण्डभाग्भवेत् । अतो मानुषेण तदभावे दिव्येन वाऽऽत्मा शोधनीयः ।

ननु नाहं चौर इति मिथ्योत्तरे कथं प्रमाणं संभवति । तस्याभावरूपत्वात् । उच्यते । दिव्यस्य तावद्भावाभावगोचरत्वं "रुच्यावाऽन्यतरः कुर्यात्" इत्यत्र प्रतिपादितम् । मानुषं पुनर्यद्यपि साक्षाच्छुद्धमिथ्योत्तरे न संभवति तथापि कारणसंसृष्टे भावरूपमिथ्याकारणसाधनमुखेनाभावमपि गोचरयत्येव । यथा नाशापहारकाले अहं देशान्तरस्थ इत्यभियुक्तैर्भाविते चौर्याभावस्याप्यर्थातिसिद्धेः शुद्धिर्भवत्येव॥२६९॥

वा. १ । अत एवाह * एवमिति । उक्तप्रकारेणेत्यर्थः । *आत्मा, स्वस्वरूपम् । चौर्ये इति विषयसप्तमी शङ्कायामन्वेति । तदाह * यदि चौर्येति । *तत्, ततः तच्छङ्कातः । लिङर्थो न विवक्षित इत्याह * शोधयतीति । उत्तरार्द्धमाग्रिमस्य विशेषस्य सामान्येनानुवादो ऽन्यथा पौनरुक्त्यापत्तेः । अत आह * वक्ष्यमाणेति । अनुपदमेवेति भावः । धनदानेति पाठः । यद्यपि दापनं वक्ष्यमाणं तथापि तस्य राजधर्मत्वेन चोरानिष्ठत्वात् ततोऽर्थसिद्धस्य दानस्यात्र ग्रहणम् । अत एव दापनेत्यपपाठः । आदिना तदाग्रिमपरिग्रहः । अनुवादत्वादेवाह * दण्डभाग्भवेदिति । सम्भावने लिङ् । अनुवादफलं प्रदर्शयन्

तमदत्त्वेत्यर्थः। सम्भूयकारिण इति शेषः। अशक्त इत्यस्यार्थमाह * संभूयेति। * भाण्डेति । भाण्डस्य भारः संरक्षणादिरूपः तस्य वहनमित्यर्थः। * तत्, भाण्डम्।

नारदोऽपि, (व्यव. ३.। ४)

भाण्डपिण्डव्ययोद्धारभारसारान्ववेक्षणम्।

कुर्युस्ते ऽव्यभिचारेण समये स्वे व्यवस्थिताः ॥ इति।

भाण्डं विक्रेयद्रव्यम्। पिण्डः पाथेयम्।

उ. २। * प्रागिति। प्रकरणारम्भे इत्यर्थः। आदिग्राह्यं वचने एव स्फुटम्। अनेनेत्यस्यैतत्प्रकरणादौ उक्तेनेत्यर्थः। अन्यथा असंभवात्। तदाह *लाभेति। श्रुतिक्रमेणाह *होत्रेति। कर्षकपदार्थमाह *कृषीति। कर्षिपदे अत इनीतीनिः। तदर्थमाह *नटेति। कर्मपदार्थमाह *शिल्पेति। *तत्र च, तेषां मध्ये च। श्रुतिविहितदक्षिणया त्रिभागप्रकरणस्य मनूक्तत्वाद्दक्षिणाप्रापकं वचनमाह * तं शतेन दीक्षयन्तीति । पूर्वं गवां प्रस्तुतत्वात् शतेन गवां शतेन तं यजमानम् अध्वर्य्वादयो दीक्षयन्तीत्यर्थः। यतो दक्षिणाग्रहणेन यजमानायत्ताः भवन्ति।

३। ननु अतो दीक्षोद्देशेन गोशतग्रहणं प्रतीयते न दक्षिणाया विधिः,तत्कथं दक्षिणाप्रापकमिदम्, अत आह *इति वचनेनेति। अयं भावः। यथा भुजिक्रियासाध्ये तृप्त्यात्मके कार्ये पयसा तृप्तिं कुर्वीतेति पयोद्रव्ये विहिते तत्पयो भोजनसाधनस्यौदनस्य स्थाने निपतति तथाऽत्रापि दीक्षयन्तीति णिजर्थभूतं दीक्षाकरणम् ऋत्विजामानतिरूपं दक्षिणादानस्य कार्यं, तेषामानतिर्नम्रभावः स्वायत्ततेति यावत्। भृतिं गृहीत्वा भृत्या इव दक्षिणां गृहीत्वा स्वायत्ता भवन्ति हि ऋत्विजः। तस्मिन् तेषामानतिरूपे दक्षिणादानस्य कार्ये गोशतं विधीयमानं दक्षिणादानरूपव्या-

वचनसार्थक्याय तात्पर्यार्थं प्रतिज्ञातमाह * अत इति ।

२ । नन्वयमप्यस्य नार्थः प्रमाणस्य भावगोचरत्वेन निःस्वरूपे ऽभावात्मके तुच्छे मिथ्योत्तरे प्रमाणाप्रसक्तेरित्याशयेन शङ्कते * नन्विति । उक्तत्वादाह * दिव्यस्येति । * साक्षात्, तद्विषयतया । *तथापीति । *मानुषं, कारणम् । *संसृष्टे, मिथ्योत्तरे। भावरूपमिथ्यात्वे यत्कारणं तस्य यत्साधनं तन्मुखेन तद्द्वारा अभावमपि गोचरयत्येवेत्यन्वयः । अत एव पूर्वपक्षे साक्षादित्युक्तम् । तथा च शुद्धमिथ्योत्तरे दिव्यमेव संसृष्टे तु मानुषमप्यनया रीत्येति भावः । एतदेवोदाहरणेन विशदयति * यथा नाशेति । द्रव्यनाशापहारयोः काले ऽहं देशान्तरस्थित इति चौर्यशङ्कया गृहीतेनाभियुक्तेः साक्ष्यादिभिर्भाविते साधिते चौर्याभावस्याप्यर्थात् सिद्धेस्तस्य शुद्धिरेवेत्यर्थः ॥२६९॥

मि० अव० चौरे दण्डमाह ।

या० चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः ।

मि० यस्तु प्रागुक्तपरीक्षया तन्निरपेक्षं वा निश्चितचौर्यस्तं स्वामिने अपहृतं धनं स्वरूपेण मूल्यकल्पनया वा दापयित्वा विविधैर्घातैर्घातयेत् ।

एतच्चोत्तमसाहसदण्डप्राप्तियोग्योत्तमद्रव्यविषयम् । न पुनः पुष्पवस्त्रादिक्षुद्रमध्यमद्रव्यापहारविषयम् ।

साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः ।
स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमात् ॥

इति नारदवचनेन ( व्यव. १४ । २१ ) वधरूपस्योत्तमसाहसस्योत्तमद्रव्यविषये व्यवस्थापितत्वात् ।

१ अस्य साधिते इत्यत्रान्वयः ।

पारसाधनभूतदाक्षिणायाः स्थाने निपततीत्यर्थाद्गोशतमेव दक्षिणा भवतीति दक्षिणाप्रापकमिदं वचनमिति गोशतं दाक्षिणात्वेन विधीयतइति।

४। अथ मानवं व्याख्यातुमवतारयति * ऋत्विजश्चेति। *तत्र, तेषां मध्ये गोशते वा। * इदं, मानवम्। अथ व्याचष्टे * सर्वेषामिति। उक्तरीत्यैवाह * होत्रेति। ब्रह्मत्वस्योभयसाधारण्यादाह * ब्रह्मेति। शतार्धत्वस्य पञ्चाशति सत्त्वात्तथैव विभागप्राप्तौ आशयं प्रकाशयन् विशेषमाह * सर्वेषां भागेति। भागस्य विभागस्य यत्परिपूरणं तदर्थं योपपत्तिस्तस्या वशेन तदधीनतया तदनुरोधेनायातः प्राप्तश्चासावष्टचत्वारिंशद्रूपश्चासावर्धश्च तेन, धान्येन धनवानितिवत्तृतीया, सामान्यविशेषयोरभेदान्वयः। तद्रूपार्धभाज इत्यर्थः। एवमग्रेऽपि। मत्वर्थीय इनिः सर्वत्र। प्रकारान्तरेण दाक्षिणाविभागस्य कर्तुमशक्यत्वादीषन्न्यूनत्वेऽपि सामीप्येन तद्ग्रहणमिति भावः। तच्छब्देन श्रुतानुमितयोरिति न्यायेन श्रुतपरामर्शस्यैवौचित्यादाह * मुख्यांशस्येति। अष्टाचत्वारिंशद्रूपस्येत्यर्थः। एतेनावशिष्टद्विपञ्चाशद्रूपस्यैव कुतो न परामर्श इत्यपास्तम्। उक्तरीत्या स्थलद्वये निर्वाहेऽप्यन्ते आनिर्वाहाच्च। तृतीयिनः पादिन इति तयोः श्रौती संज्ञा। योगोऽपि उक्त एव। मानवे तृतीयांशा इति बहुव्रीहिः। एवमग्रेऽपि। तत्फलितमाह *मुख्यांशेति। प्रत्यासत्तेरिति भावः। एवमग्रेऽपि। षोडशगवरूपेति पाठः। गोरूपेत्यपपाठः। एवं द्वादशगवरूपेत्यत्रापि। अयं मनूक्तः। बृहस्पतिरप्येवमेव।

५। तत्र मूलोक्तप्रकारद्वयाविषयत्वमाह * नतावदिति * नापीति च। प्रधानस्याधिकांशो ऽन्येषां न्यूनन्यूनत-

यत्पुनर्वृद्धमनुवचनम्—

अन्यायोपात्तवित्तत्वाद्धनमेषां मलात्मकम् ।
अतस्तान् घातयेद्राजा नार्थदण्डेन दण्डयेत् ॥

इति, तदपि महापराधविषयम् ॥

मि० अव० चौरविशेषेऽपवादमाह ।

या० सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत्॥२७०॥

मि० ब्राह्मणं पुनश्चौरं महत्यपराधे न घातयेदपि तु ललाटेऽङ्कयित्वा स्वदेशान्निष्कासयेत् । अङ्कनं च श्वपदाकारं कार्यम् ।

तथाच मनुः, [ अ. ९ लो. २३७ ]

गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ।
स्तेये च श्वपदं कार्यं ब्रह्महण्यशिराः पुमान्॥ इति ।

एतच्च दण्डोत्तरकालं प्रायश्चित्तमचिकीर्षतो द्रष्टव्यम् ।

यथाह मनुः, ( अ. ९ श्लो. २४० )

प्रायश्चित्तं तु कुर्वाणाः पूर्वे वर्णा यथोदितम् ।
नाङ्क्या राज्ञा ललाटे तु दाप्यास्तूत्तमसाहसम् ॥

इति ॥ २७० ॥

वा० १। चोरपदं तथापरमित्याह *यस्तु प्रागुक्तेति। दापने प्रकारद्वयमित्याह * स्वरूपेणेति । स्मृत्यन्तराविरोधायाह *एतच्चेति । * उत्तमद्रव्येति । द्रव्यापहारेत्यर्थः ।

२ । अत्र मानमाह * साहसेष्विति । साहसाख्येषु प्रागुक्तेषु त्रिषु कर्मसु उत्तममध्यमाधमरूपेषु यो दण्ड उक्तः उत्तममध्यमाधमसाहसरूपः स एव त्रिषु द्रव्येषु उत्तममध्यमाधम-

रन्यूनतमांशा इति न समयः कृतः। नाप्येकेन दृष्टान्तेनाष्टावन्येन पट्टित्यादिरूपेण वाणिज्ये इव द्रव्यसमवायः कृत इत्यर्थः। *नापि वचनं, श्रौतम्। *यद्वशात्, यद्बलात्। *अतः, परिशेषात्। युक्तमित्यत्रान्वयः।

६। दशमतृतीयपादाधिकरणं "समं स्यादश्रुतत्वात्" इति। ज्योतिष्टोमे श्रूयते गावश्चाश्वाश्चाश्वतराश्च गर्दभाश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणेति पूर्वेतराधिकरणे गवां द्वादशशतमितराण्यश्वादीनि च दक्षिणेति उपपादितम्।

पूर्वाधिकरणे त्वियमेव दक्षिणा विभाज्येत्यप्युक्तम्।

तत्र स्थिते विभागे चिन्ता, किं समो विभाग उत प्रयासानुरूप उतार्धिन इत्यादिसमाख्यानुरूप इति संशयः। तत्र विशेषाश्रवणात्समो विभागः सर्वेषामृत्विजां स्यादिति प्राप्ते सिद्धान्त्येकदेशी आह *लोकवत्, प्रयासानुरूपेण विभाग इति। तदभिप्रेत्योभयं शङ्कते आह * सममिति। विशेषाश्रवणात्सममित्यर्थः। * सर्वेषाम्, ऋत्विजाम्। * कर्मेति। ऋत्विजां स्वस्वकर्मणि वैषम्यात्कर्मानुरूपेणेत्यर्थः। अथैवं प्राप्ते तत्र सिद्धान्ती आह। द्वादशाहे दीक्षाक्रमवाक्ये अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारं ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्द्धिनो दीक्षयति ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयतीत्येवंविधा अर्ध्यादिसमाख्याः श्रूयन्ते। अतस्तद्वशात् ब्राह्मणाच्छंसिप्रभृतीनां तदनुरूपो विभागो द्वादशाहप्रकृतौ ज्योतिष्टोमेऽध्यवसीयते इति। तदिमं सिद्धान्तम् अवलम्ब्याह * ज्योतिष्टोमप्रकृतिके इति। कदेत्या-

रूपेषु स्तेयेऽपि तद्विषयस्तेयाख्ये कर्मण्यपि अनुक्रमानेनैव क्रमेण दण्डो भवतीत्यर्थः। तथा चोत्तमद्रव्यापहारे उत्तमसाह-सदण्डविधानादस्यास्याप्युत्तमसाहसात्मकदण्डत्वेनोत्तमद्रव्या-पहारविषयत्वमेव युक्तमिति भावः। तदाह * वधेति।

२। अन्यविरोधं परिहरति * यत्पुनरिति। अन्यार्थेति बहुव्रीहिः। * एषां, चोराणाम्। वृद्धगौतमोऽप्येवम्।

उ. ३। * अपवादमिति। वधस्येति भावः।

* महत्यपराधे, तत्रापि।

तथा च गौतमः,

न शारीरो ब्राह्मणस्य दण्डः, कर्मवियोगविख्यापनविवा-सनाङ्ककरणानि, अवृत्तौ प्रायश्चित्ती स इति।

शारीरस्ताडनाङ्गच्छेदनरूपः। कस्तर्हि दण्ड इत्याह * कर्मेत्यादि। तेन सह सर्वक्रियानारम्भः। विख्यापनं डि-ण्डिमकेन परिभ्रामणं स्तेयलक्षणस्तेयप्रकाशनार्थम्। निवा-सनं देशान्निष्कासनम्। अङ्ककरणं श्वपदेनाङ्कनम्। अवृत्तौ अन्येन प्रकारेण जीवनासंभवेन यदि स्तेयं करोति तदा तस्य प्रायश्चित्तमात्रं न दण्ड इति तदर्थः। वक्ष्यमाणमनोराह * ल-लाटे इति। आकारशब्दः सदृशवाची। विशेषमाह * एत-च्चेति। श्वपदाकारमङ्कनं चेत्यर्थः। अनेन दण्डप्रायश्चित्तयोः क्रमः सूचितः। * पूर्वं, ब्राह्मणक्षत्रियविशः। * यथो-दितं, यथाशास्त्रविहितम् प्रायश्चित्तमित्यन्वयः॥ २७०॥

मि० व्य. चौरादर्शने अपहृतद्रव्यप्राप्त्युपायमाह।

या० घातितेऽपहृते दोषो ग्रामभर्तुरनिर्गते।
विवीतभर्तुस्तु पथि चौरोद्धर्तुरवीतके ॥ २७१ ॥

काङ्क्षायामाह * यदीति । * तत्, द्वादशाहः । उपसंहरति * अत इति । श्रुत्यादीनि षट् प्रमाणानि शेषत्वबोधकानि । समाख्या नाम यौगिकसंज्ञा । ज्योतिष्टोमविकृतिभूते द्वादशाहेऽर्द्धिन इत्यादयस्समाख्याः श्रूयन्ते । अतः समाख्यारूपप्रमाणबलात्तत्प्रकृतौ ज्योतिष्टोमे तथैव दक्षिणाविभागः कार्यः । अन्यथा विकृतौ द्वादशाहेऽर्धिन इत्यादिसिद्धानुवादो न स्यात् । तथा च विकृतिगतसमाख्यान्यथानुपपत्त्या प्रकृतौ प्रागुक्तदक्षिणाविभागावसाय इत्यर्थः । तदुक्तं "तुथो वो विश्ववेदा विभजतु" इति । तां यजमानश्चतुर्धा कृष्णाजिनेन व्युत्रास्य चतुर्थमध्वर्युभ्यो विभजति, यावदध्वर्यवे ददाति तस्यार्धं प्रतिप्रस्थात्रे, तृतीयं नेष्ट्रे, चतुर्थमुन्नेत्रे, एतेनेतरेषां दानमुक्तमिति ॥ २६५ ॥

इति संभूयसमुत्थानं नाम प्रकरणम् ।



मि० यदि ग्राममध्ये मनुष्यादिप्राणिवधो धनापहरणं वा जायते तदा ग्रामपतेरेव चौरोपेक्षादोषः, तत्परिहारार्थं स एव चौरं गृहीत्वा राज्ञेऽर्पयेत् । तदशक्तौ हृतं धनं धनिने दद्यात्, यदि चौरपदं स्वग्रामान्निर्गतं न दर्शयति । दर्शिते पुनस्तत्पदं यत्र प्रविशति तद्विषयाधिपतिरेव चौरं धनं वाऽर्पयेत् ।

तथा च नारदः, ( परिशिष्टेश्लो. १६ । १७ )

गोचरे यस्य लुप्येत तेन चौरः प्रयत्नतः ।
ग्राह्यो दाप्योऽथवाऽशेषं पदं यदि न निर्गतम् ॥
निर्गते पुनरेतस्मान्न चेदन्यत्र पातितम् ।
सामन्तान्मार्गपालांश्च दिक्पालांश्चैव दापयेत् ॥ इति ।

विवीते त्वपहारे विवीतस्वामिन एव दोषः । यदा त्वध्वन्येव तद्धृतं भवत्यवीतके वा विवीतादन्यत्र क्षेत्रे तदा चौरोद्धर्तुर्मार्गपालस्य दिक्पालस्य वा दोषः ॥ २७१ ॥

बा. १ । ग्रामेत्युक्तेराह *यदि ग्रामेति । घातितापहृतयोर्भावयोर्विकल्प इत्याह * मनुष्येति । सर्वं वाक्यमिति न्यायेनाह * एवेति । तत्प्रयुक्तदोष इत्यर्थः । प्रतिज्ञातं तात्पर्यार्थमाह * तत्परिहारार्थमिति । अनिर्गते इति सति सप्तमी तत्र मतियोगी लक्ष्योऽर्थ इत्याशयेन सतात्पर्यार्थं तद्व्याचष्टे * तदशक्ताविति ।

२ । * ताद्विषयेति । तद्देशाधिपतिरित्यर्थः । एतेन ग्रामपतिनिरासः । * चौरं धनं वेति । आदौ चौरमर्पयेत्तदशक्तौ धनमित्यर्थः । * गोचरे, विषये । ग्रामादिरूपे । * ग्राह्यः, ग्रहणीयः। अशेषमिति छेदः । अथवा अशेषधनं दापनीयः । त-

## अथ स्तेयप्रकरणम् ॥ २३ ॥

मि० उ० इदानीं स्तेयं प्रस्तूयते । तल्लक्षणं च—मनुनाऽभिहितम्, ( अ. ८ श्लो. ३३२ )

स्यात्साहसं त्वन्वयवत्प्रसभं कर्म यत्कृतम् ।
निरन्वयं भवेत्स्तेयं कृत्वा यन्निह्नुते भयात् ॥ इति ।

अन्वयवत् द्रव्यरक्षिराजाध्यक्षादिसमक्षम् प्रसभं बलावष्टम्भेन यत्परधनहरणादिकं क्रियते तत्साहसम् । स्तेयं तु तद्विलक्षणं निरन्वयं द्रव्यस्वाम्याद्यसमक्षं वञ्चयित्वा यत्परधनहरणं तदुच्यते । यच्च सान्वयमपि कृत्वा न मयेदं कृतमिति भयान्निह्नुते तदपि स्तेयम् ।

नारदेनाप्युक्तम्, ( व्यव. १४ । १७ )

उपायैर्विविधैरेषां छलयित्वाऽपकर्षणम् ।
सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः ॥ इति ।

अव० तत्र तस्करग्रहणपूर्वकत्वाद्दण्डनस्य ग्रहणस्य च ज्ञानपूर्वकत्वात् ज्ञानोपायं तावदाह ।

या० ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा ।
पूर्वकर्मापराधी च तथाचाशुद्धवासकः ॥ २६६ ॥

मि० यश्चौरोऽयमिति जनैर्विख्याप्यते असौ ग्राहकै राजपुरुषस्थानपालप्रभृतिभिर्ग्रहीतव्यः । लोप्त्रेणापहृतभाजनादिना वा चौर्यचिह्नेन । नाशदेशादारभ्य चौर्यपदानुसरणेन वा ग्राह्यः । यश्च पूर्वकर्मापराधी प्राक् प्रख्यातचौर्यः, अशुद्धोऽप्रज्ञातो वासः स्था

च्छेपमाह * यदीति । अशेषपदेन दण्डस्यापि ग्रहणम् । पुन-स्त्वर्थे । * एतस्मात्, तद्विषयात् । नेति । उभयं कुर्यादिति शेषः । निर्गते तु पदे दद्यान्नेति पाठान्तरम् । * तदिति । यदि तदेति शेषः । यदि तत्पदमन्यत्र पातितं तदा यथासम्भवं सा-मन्तादीन् दापयेदित्यर्थः । अत एव चेदन्यत्रेति पाठान्तरम् । एवेन तद्व्यावृत्तिः ।

३ । उत्तरार्द्धार्थमाह * विवीतेत्वित्यादिना । प्रचुरतृण-काष्ठो रक्ष्यमाणः परिगृहीतो भूप्रदेशो विवीतः इति स्वामि-पालप्रकरणे उक्तम् । एवः प्राग्वत् । विवीते इत्यर्थाल्लभ्यम् । मूले पथीत्युत्तरान्वयि । मार्गाविवीतकयोर्विकल्पोऽर्थात् । अत एव चौरोद्धर्तुरित्यस्यार्थद्वयमित्याह * यदा त्विति । अवीतके इत्य-स्यार्थो * विवीतादिति । यथासंख्येनाह *मार्गेति ॥ १७१ ॥

मि० अव. किञ्च ।

या० स्वसीम्नि दद्याद् ग्रामस्तु पदं वा यत्र गच्छति ।
पञ्चग्रामी बहिः क्रोशाद्दशग्राम्यथवा पुनः ॥२७२॥

मि० यदा पुनर्ग्रामाद्बहिः सीमापर्यन्ते क्षेत्रे मो-षादिकं भवति तदा तद्ग्रामवासिन एव दद्युः, यदि सीम्नो बहिश्चौरपदं न निर्गतम् । निर्गते पुनर्यत्र ग्रा-मादिके चौरपदं प्रविशति स एव चौरार्पणादिकं कुर्यात् । यदा त्वनेकग्राममध्ये क्रोशमात्राद्बहिः प्रदेशे घा-तितो मुषितो वा, चौरपदं च जनसंमर्दादिना भग्नं, त-दा, पञ्चानां ग्रामाणां समाहारः पञ्चग्रामी दशग्राम-समाहारो दशग्रामी वा दद्यात् । विकल्पवचनं तु यथा प्रत्यासत्ति अपहृतधनप्रत्यर्पणादिकं कुर्यादित्येवमर्थम् ॥

नं यस्यासौ अशुद्धवासकः, सोऽपि ग्राह्यः ॥ २६६ ॥

बा० १ । महाप्रकरणसंगत्याऽऽह *इदानीमिति । चस्त्वर्थे । मानवं व्याचष्टे *अन्वयवदिति । मतुबन्तमिदम् । अग्रे अन्वयः संबन्धः, स चक्षुरादेर्विवक्षित इत्याह * द्रव्येति । द्रव्यस्वामीत्यर्थः । कर्मपदार्थमाह * परेति । आदिना साधारणद्रव्यहरणम् । द्वंद्वोऽयम् । * कृतमिति । भूतत्वमविवक्षितमित्याह * क्रियते इति । अतस्तत्र स्तेयदण्डो न कार्यः । एतदर्थमेव प्रकरणभेद इति भावः । तदाह * स्तेयं त्विति । * तत्, साहसात् । आदिना राजाध्यक्षादि । बलावष्टम्भो नात्रेत्याह * वञ्चयित्वेति ।

२ । कृत्वा यन्निह्नुते भयादिति तुर्यपादपाठं व्याचष्टे * यच्चेति । अपिना निरन्वयसमुच्चयः । परधनहरणादिकमिति शेषः । कृत्वा निह्नूयते च यदिति पाठान्तरम् । कृत्वाऽपव्ययते च यदिति तु प्रचुरः पाठः । तदाऽयं तात्पर्यार्थो बोध्यः । अपव्ययते संवृणोति आच्छादयतीति यावदिति तु शाब्दोऽर्थः । व्येञ्संवरणे इत्युक्तेः । वञ्चयित्वेत्यस्य समूलत्वं ध्वनयन्स्तेयलक्षणांशे मानान्तरमप्याह *नारदेनापीति । *एषां, द्रव्यस्वामिनां सुप्तादीनाम् । कर्मणि शेषे षष्ठी । छलेऽन्वयः । द्रव्यस्येति शेषः । सुप्तादेरपकर्षणेऽन्वयः ।

३ । मूलमवतारयति * तत्रेति । प्रारभ्यमाणे स्तेये इत्यर्थः । * ज्ञानेति । तस्करत्वज्ञानेत्यर्थः । यद्यपि योगिना ग्राहकग्राह्यत्वमेव तत्रोपाय उक्तस्तथापि तत्रापि निमित्तमाह * य इति । राजपुरुषाश्च स्थानपालाश्चेति द्वंद्वः । लोप्त्रपदार्थमाह * अपहृतेति । गृह्यते इति लेडित्याह * ग्रहीतव्यइति । अपहारतो नष्टं वस्त्रादिर्यस्य गृहे हस्ते वा दृश्यते तेन चि-

यदा त्वन्यतोऽपहृतं द्रव्यं दापयितुं न शक्नोति तदा स्वकोशादेव राजा दद्यात्।

चौरहृतमवजित्य यथास्थानं गमयेत्स्वकोशाद्वा दद्यादिति गौतमस्मरणात्।

मुषितसन्देहे मानुषेण दिव्येन वा निर्णयः कार्यः।

यदि तस्मिन् दाप्यमाने भवेन्मोषे तु संशयः।
मुषितः शपथं दाप्यो बन्धुभिर्वापि साधयेत्॥

इति वृद्धमनुस्मरणात्॥ २७२॥

बा॰ १। स्वसीम्नीत्यस्यार्थमाह *सीमेति। ग्रामाद्बहिरित्यनेन ग्रामपतिव्यवच्छेदः। एवमग्रेऽपि। आदिना वधः। ग्रामपदं जने लाक्षणिकमित्याह * तद्ग्रामेति। पदं वेति व्यवस्थितविकल्प इत्याह * यदीत्यादि। ग्रामादीति आदिना त्रिवीतादिपरिग्रहः। चौरार्पणादीति आदिना धनार्पणादि। इदमेकग्रामादिपरम्।

२। उत्तरार्धं हि तत्समूहपरमित्याह * यदा त्विति। एकवचनादाह * क्रोशमात्रादिति। तत्तद्ग्रामादित्यादिः। घातित इत्यादिः प्रथमान्तपाठः। प्रागुक्ताविषयत्वायाह * चौरेति। आर्थिकविकल्पमाह * वा दद्यादिति। ग्रामसमूहसंख्याया अनियतत्वादिदमपि दिक्प्रदर्शनम्। अत एव यथासम्भवं व्यवस्थितविकल्पोऽयम्।

३। नन्वेवम् "अथ वा पुनः" इति व्यर्थम्, उक्तरीत्या नियतपक्षद्वयस्यैवाभावेन तत्परतयाऽपि तस्यात्यन्तमनुपयोगात् इत्यत आह * विकल्पेति। प्रत्यासत्तिमनतिक्रम्येत्यव्ययीभावः। तत्प्रत्यासत्तीति पाठे तयोः प्रत्यासत्तीत्याद्यर्थः। अपहाराधारभूप्रदेशात् ये ग्रामाः प्रत्यासन्नास्ते एव दद्युर्न तु पञ्चग्रा-

ह्नेन स पुरुषो ग्राह्य इत्यर्थः । अथशब्दार्थमाह * वेति । प-देन वेति व्याचष्टे * नाशेति । पूर्वकर्म चौर्याख्यमेव । भूम्नि इनिरित्याह * मागिति । अत एव परिग्रहः । * वास इ-ति । उष्यतेऽस्मिन्निति वासो निवासः । पुंस्ययम् । तदाह * स्थानमिति । न तु वासस्थानमित्येकं पदमिति भावः । तथाचेति समुच्चये इत्याह * सोऽपीति ॥ २६६ ॥

मि० अव० किञ्च ।

या० अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः ।
द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः ॥ २६७ ॥
परद्रव्यगृहाणां च पृच्छका गूढचारिणः ।
निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः ॥ २६८ ॥

मि० न केवलं पूर्वोक्ता ग्राह्याः किंत्वन्येऽपि वक्ष्यमाणैर्लिङ्गैः शङ्कया ग्राह्याः । जातिनिह्नवेन "नाहं शूद्र" इत्येवंरूपेण । नामनिह्नवेन "नाहं डवित्थ" इत्येवंरूपेण । आदिग्रहणात्स्वदेशग्रामकुलाद्यपलापेन च लक्षिता ग्राह्याः । द्यूतपण्याङ्गनामद्यपानादिव्यसनेष्वतिप्रसक्तास्तथा । कुतस्त्योऽसि त्वमिति चौरग्राहिभिः पृष्टो यदि शुष्कमुखो भिन्नस्वरो वा भवति तर्ह्यसावपि ग्राह्यः । बहुवचनात् स्विन्नललाटादीनां ग्रहणम् ।

तथा ये निःष्कारणं कियदस्य धनं किं वाऽस्य गृहमिति पृच्छन्ति, वेषान्तरधारणेनात्मानं गूहयित्वा ये चरन्ति, ये च आयाभावेऽपि बहुव्ययकारिणः,

न्येव दशग्राम्येवेत्येवं नियम इत्येवंनियमनिवृत्त्यर्थम् अथ वेति विकल्पवचनमित्यर्थः ।

४ । विशेषमाह * यदा त्विति । * अन्यतः, चोरग्रामाधिपादितः । दापनेऽन्वयः । * अवजित्य, ततः परावर्त्य । परीक्षणोत्तरमपि दापनसमये कारणान्तरवशात्संदेहे विशेषमुक्तरीत्यत्राह * मुषितेति । * यदीति । तस्मिन् उक्तलिङ्गवशाच्छङ्कया ग्रहणोत्तरं परीक्षिते चौर इति निश्चित्य गृहीते पुरुषे धनं दाप्यमाने सति यदि मोषे चौर्ये सन्देहो भवेत् कारणान्तरतः, तदा बन्धुभिः धर्मबन्धुभिः साक्षिभिः साधयेत् सन्देहनिवृत्तिं कुर्यात्, अथ वा शपथं दाप्यः स इत्यर्थः । यद्यप्यत्रादौ दिव्यमुक्तं तथाप्यस्य क्रमाबोधकत्वात्तयोः क्रमस्य पूर्वं स्पष्टमुक्तत्वात्तथैवेति भावः । अत एव प्रातिज्ञायां तथैवोक्तम् । शुद्धमिथ्योत्तरे तदसम्भवात्तस्यैवावश्यकत्वमभिप्रेत्य मनुना तथोक्तम् । एतदभिप्रायेणापि दिव्यस्येति प्रागुक्तं व्याख्यातेति बोध्यम् ॥ २७२ ॥

मि० अव. अपराधविशेषेण दण्डविशेषमाह ।

या० बन्दिग्राहांस्तथा वाजिकुञ्जराणां च हारिणः ।
प्रसह्य घातिनश्चैव शूलानारोपयेन्नरान् ॥ २७३ ॥

मि० बन्दिग्राहादीन् बलावष्टम्भेन घातकांश्च चोरान् शूलानारोपयेत । अयं च वधप्रकारोपदेशः ।
( अ. ९ श्लो. २८० )
अग्न्यगारायुधागारदेवतागारभेदकान् ।
हस्त्यश्वरथहर्तृंश्च हन्यादेवाविचारयन् ॥
इति मनुस्मरणात् ॥ २७३ ॥

बा० १ । तथाशब्दः किंचेत्यर्थे आदौ बोध्यः । बन्दिग्राहा-

नान्यत्रागमिनि तथा नियमः।

६ । स्मृतिविरोधरूपं दोषमप्याह *आप चेति। द्वौ ब्राह्मणा- दिभिन्नत् वहन्तीति प्रयोगः। *विरुध्यत इति। अनागमोपभोगे- न स्वत्वोत्पत्तावुपभोक्तुर्दण्डविधानमनुपपन्नम्। विहितस्तु दण्डः। अत एतद्वचनविरोधादपि न स्वत्वं तादृशोपभोगादुत्पद्यत इत्यर्थः।

७ । ननु सति विरोधे तादृशोपभोगात्स्वत्वानुत्पत्तिः, स एव नेत्याशयेनाह *न चेति। स्वाम्यसमक्षं बहुकालोपभोगेऽपि स्वत्वानुत्पादादुपभोक्ता चोरवद्दण्ड्य इति तदर्थः। *पश्यत इति। स्वामिनः समक्षम् अनाक्षेपोपभोगे विंशतिवर्षादूर्ध्वं तद्धा- निर्भवतीति उपभोगादुपभोक्तुः स्वत्वमुत्पद्यते इति तदर्थः। एवं च परोक्षत्वापरोक्षत्वरूपविशेषपरत्वेन न मिथो विरो- धो येन तद्भावः स्यादिति भावः। प्रतिज्ञामात्रेणार्थासिद्धेरत्र हेतुमाह *अनागममिति। उक्तविशेषं विना सामान्येन तादृशो- पभोक्तुर्दण्डनिर्देशान्न तथा व्यवस्था युक्तेति भावः।

८ । ननु तत्र सामान्योक्तावप्यत्र विशेषोक्त्या एतदन्यपरत्वं तस्येति युक्तैव व्यवस्था ऽत आह *नोपेति। उपभोगमात्रब- लादत्र न स्वत्वसिद्धिरित्यर्थः। तथा च कथं समक्षभोगेऽपि तन्मात्रात् स्वत्वहानिस्तदुत्पत्तिश्च। यदि तथा स्वीक्रियते तर्हि सामान्यैतद्वचनाविरोध इति भावः। नन्विदमपि परोक्षभोगवि- षयकमेवास्तामुक्तवचनैकवाक्यतया अत आह *समक्षेति। चो ऽन्ते योज्यः। अनाक्षेपेन स्वत्वानपगम उपभोगेन स्वत्वानिष्प- त्तिश्चेति प्रागुक्तरीत्या हानिकारणाभाव इति भावः। तस्मादेत- दनुपपत्तिस्तद्व्यवस्थेति सिद्धम्।

९ । नन्वेवं मा ऽस्त्वस्य प्रागुक्तोऽर्थः किं त्वन्य एवेत्याह *न चैतन्मन्तव्यमिति। इतीत्यन्तेन वक्ष्यमाणमित्यर्थः। *प्राव-

स्येति । आध्यादिषु तदपवादत्वेन सत्पूर्वक्रियायाः प्राबल्यमुक्तं तदपवादतया भूमौ विंशतिवर्षोपभोगसाध्योत्तरक्रिया प्रबला, धने तु दशवर्षोपभोगसाध्येति, इदानीं आध्यादिष्वपवादेन क्रिया प्राबल्यस्यैवार्थ इत्यर्थः । अत्र क्रिया करणम् । भूमौ विंशतिवर्षोपभोगाभावे धने च तदनन्तरभावे पूर्वकृताध्यादिक-मेव प्रबलं, ततो ऽन्यत्र तदंशेनोत्तरकालकृतबन्धेन तत्प्रबलमिति व्यवस्थेति भावः । हेतुमाह * यत इति । * तेषु आध्यादिषु । उत्तर-क्रियाया एव वस्तुनोऽभावात्पूर्वक्रियापेक्षया प्राबल्यं न संभ-वति । सति हि धर्मिणि धर्मचिन्तनमिति भावः । तदाह * स्व-मेव हीति । स्वत्वविशिष्टमेव हीत्यर्थः । तत्र हेतुमाह * न चेति । न हीत्यर्थः । वा चार्थे । प्रतिग्रहांशे पुनरन्तरमप्याह * अन्यस्येति ।

१० । अभ्युपेत्य एवं सति याज्ञवल्क्यस्य पूर्वापरविरोधादा-नर्थक्यापत्तिरपि दोषान्तरमित्याह * तथेति । अस्य श्लोकस्ये-त्यस्य मध्यमणिन्यायेनोभयत्रान्वयः । अपवादः अपवादत्वम् । आधौ पूर्वत उत्तरप्राबल्यंऽनेन बोधितं ऽग्रिमवचनेन आधौ एत-दपवादतयोत्तरकार्यप्राबल्यबोधने तत्रैव विपरीताभिधानेन मि-थो विरोधात्तदानर्थक्यमिति भावः । उपसंहरति * तस्मादिति । *हानिरिति । स्वत्वहान्या स्वरूपहानिरित्यर्थः ।

११ । ननु मा भूत्स्वरूपहानिः किं तु तदनन्तरं तद्वि-षयव्यवहारहानिरनेन प्रतिपाद्यते इत्यत आह * नापीति । तावत्पर्यन्तं परोपभोगे भोग्यवस्तुनो नष्टत्वात्तदभावनिमित्त-कनृपादिकृतवास्तवव्यवहाराहानिरित्यर्थः । तत्र हेतुमाह * यत इति । उक्तेत्यत्रान्वयः । *तस्य, वादिनः । उपेक्षामित्यनेन शारीरव्यापारशून्यत्वं, तूष्णीमित्यनेन वाग्व्यापारशून्यत्वं, तेन अब्रुवत इत्यर्थलाभः । * तिष्ठतः, विद्यमानस्य । अनेन द्वि

दिकं चोरविशेषणमित्याह * वन्दीति । आदिना वाजिकुञ्जर-हारिग्रहणम् । तत्र चेन गोरथादिग्रहणम् । प्रसह्येत्याद्यर्थो *ब-लावष्टम्भेनेति । * घातकान्, तांश्च । क्वचित्तथैव पाठः । न-रानित्यस्य व्याख्या * चोरानिति । बन्दि निरोधस्थानं ग्रा-ह्यन्ति ते बन्दिग्राहाः । ननु शूलानारोपयेदित्यनेन तेषां ता-वन्मात्रं प्रतीयते न वधः । तथा च श्रोत्रियायोपकल्पयेदित्य-त्रेवात्रापि तावन्मात्रेणैव विधिसिद्धेस्तन्मात्रमेव कृत्वा पुनरुत्ता-रणं कार्यं न वध इत्यत आह * अयं च वधेति । अत्र मा-नमाह * अग्न्यगारेति । हर्तॄंश्चेति पाठः । *आविचारयन्, अ-विलम्बयन् । अनेन तेषामपि एकदेशानुमतिद्वारा वधे सिद्धे केन प्रकारेण स इति विशेषाकाङ्क्षायां शूलारोपणरूपप्रकार-विशेषो मूले उक्त इति भावः ॥ २७३ ॥

मि० अव. किंच ।

या० उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ ।
कार्यौ द्वितीयापराधे करपादैकहीनकौ ॥ २७४ ॥

मि० वस्त्राद्युत्क्षिपत्यपहरतीत्युत्क्षेपकः । वस्त्रादिब-द्धं स्वर्णादिकं विस्रस्योत्कृत्य वा योऽपहरत्यसौ ग्र-न्थिभेदकः । तौ यथाक्रमं करेण, सन्दंशसदृशेन त-र्जन्यङ्गुष्ठेन च हीनौ कार्यौ । द्वितीयापराधे पुनः क-रश्च पादश्च करपादं तच्च तदेकं च करपादैकं तद्धीनं ययोस्तौ करपादैकहीनकौ कार्यौ । उत्क्षेपकग्रन्थि-भेदकयोरेकमेकं करं पादं च छिन्द्यादित्यर्थः ।

एतदप्युत्तमसाहसप्राप्तियोग्यद्रव्यविषयम् ।
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे ॥

णुश्च तद्विकारभाण्डानि चेत्यर्थः । आर्द्रं मूलं येषां तेषां शाकानाम् । अल्पमूल्यानामिति कल्पतरुपाठस्तु न युक्तः । पौनरुक्त्यापत्तेः । *पक्वान्नानाम्, अपूपादीनाम् । *कृतान्नानाम्, ओदनादीनाम् । *मत्स्यानाम्, मद्यानामिति कल्पतरौ पाठः । आमिषम् मांसम् । ओदनस्य चेति कल्पतरुधृतपाठस्तु न युक्तः । कृतान्नानामित्यनेन पौनरुक्त्यापत्तेः । * अल्पेति । माषतो न्यूनेत्यर्थः ।

१२ । तदेतत्साधयन् अस्य नारदस्य—

तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः ।
मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः ॥ ( व्यव. १४।७ )

इति साहसप्रकरणोक्तनारदविरोधं परिहरति *यःपुनरिति । साहसप्रकरणे उक्त इति शेषः । ततोऽप्यस्य यावन्न्यूनमल्पद्रव्यविषयकत्वमिति भावः ।

१३ । नारदस्य मनुविरोधं परिहरति *यत्पुनरिति । तदेवाह * तन्मूल्यादिति । ( मनु. ८ )

सूत्रकार्पासकिण्वनां गोमयस्य गुडस्य च ।
दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च ॥ ( ३२६ )
वेणुवैदलभाण्डानां लवणानां तथैवच ।
मृन्मयानां च हरणे मृदो भस्मन एव च ॥ ( ३२७ )
मत्स्यानां पक्षिणां चैव तैलस्य च घृतस्य च ।
मांसस्य मधुनश्चैव यच्चान्यत्पशुसम्भवम् ॥ ( ३२८ )
अन्येषां चैवमादीनाम् मद्यानामोदनस्य च ।
पक्वान्नानां च सर्वेषां तन्मूल्याद्विगुणो दमः ॥ ( ३२९ )

इति हि मनुना तु तत्र द्विगुणत्वमुक्तमिति विरोधः स्पष्ट एव। सूत्रमूर्णादि, कार्पासं सूत्रम्, किण्वं सुरावीजद्रव्यम्, वेणुखण्डानि-

इति नारदवचनात्। (व्यव. १५।८) तृतीयापराधे तु वध एव।

तथा च मनुः, (अ. ९ श्लो. २७७)

अङ्गुली ग्रन्थिभेदस्य छेदयेत्प्रथमे ग्रहे।

द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥ इति।

जातिद्रव्यपरिमाणतो मूल्याद्यनुसारतो दण्डः कल्पनीय इति ॥ २७४ ॥

बा० १। *विस्रस्य, ग्रन्थिं विमुच्य। *उत्कृत्य, छित्वा। उत्क्षेपकः करहीनो, ग्रन्थिभेदस्तर्जन्यङ्गुष्ठेन हीन इति भावः। सन्दंशपदं गौणलाक्षणिकमित्याह * सन्दंशसदृशेनेति। तर्जन्यङ्गुष्ठेनेति मध्यमपदलोपिसमासः। इदमर्थात्प्रथमापराधविषयम्। अत एवाह * द्वितीयापराधे पुनरिति। * करपादैकमिति। यद्यपि पूर्वकालैकेति समासे वैपरीत्यमुचितं तथापि बाहुलकान्मयूरव्यंसकादित्वाद्वा निर्वाहो बोध्यः। प्राग्वत् प्रतीयमानयथासंख्यस्य वक्ष्यमाणमन्वनुरोधेन निरासायाह * उत्क्षेपकेति।

२। विशेषमाह * एतदपीति। अपिना पूर्वसमुच्चयः। * द्रव्येति। तदपहारेत्यर्थः। तत्र मानमाह * तदङ्गेति।

३। न्यूनतां निराचष्टे * तृतीयेति। अङ्गुली इति द्विवचनम्। तद्द्वयं च तर्जन्यङ्गुष्ठात्मकमेव। संभवेन पूर्वं संदेशपदेन तस्यैव ग्रहात्। * प्रथमे इति। प्रथमे ग्रहणे इत्यर्थः। प्रथमचौर्ये इति यावत्। *हस्तेति। अत्रेतरेतरद्वंद्व आर्षः।

४। *जातीति। जातिश्च द्रव्यं च परिमाणं चेति द्वंद्वः। ततो यन्मूल्यादि तदनुरोधेनेत्यर्थः। अनुक्तदण्डस्थले इति भावः। * इतीति। इत्यन्यत्रोक्तत्वादित्यर्थः ॥ २७४ ॥

मितजलाहरणपात्राणि, यच्चान्यत् पशुसम्भवं मृगचर्मखड्गशृङ्गा-दि, अन्येषामप्येवंविधानाम् असारप्रायाणां मनःशिलादीनां, पक्वान्नानामोदनभिन्नानामपूपादीनाम्, अन्येषां प्रसिद्धानां चाप हारे कृते मूल्यात् द्विगुणो दण्ड इति तद्व्याख्यातारः । अल्पमू-ल्ये उक्तत्वादाह * अल्पप्रयोजनेति ।

इदं च अवतरणोक्तकालादीनामित्यादिसंग्राह्यं दण्डाल्पत्वे ।

१४ । अन्यदपि दण्डगुरुत्वे तत्सङ्ग्राह्यमाह *तथा ऽपराधे-ति । उक्तं मनुनेति शेषः सन्धिमित्यादेः ।

१५ । उक्तमुपसंहरति *एवमिति । उक्तप्रकारेणेत्यर्थः । वि-शेषमाह * पथिकादीनामिति । कर्तरि षष्ठी । तादृशद्विजक-र्तृकाल्पापहारे इत्यर्थः । * अध्वगः, पथिकः । * क्षीणवृत्तिः, क्षीणपाथेयश्च । * द्विजो, द्विजातिरित्यर्थः ।

१६ । अन्यदपि तदुक्तमेवाह * तथेति । व्रीह्यादिद्वन्द्वोत्तर-पदको द्वन्द्वः । *अनिषिद्धैः, स्वाम्यादिकृतनिषेधरहितैः । *भ-क्ते, चतुर्थदिनस्थे । तस्मिन्प्राप्ते सति । *अश्वस्तनेति । द्विती-यदिवसे यथा नोर्वरति तेन प्रकारेणेत्यर्थः । *हीनेति । अल्पा-चाराद्धर्तव्यो न तूत्कृष्टात्, नापि हीनजातेरित्यर्थः । किं च ।

वानस्पत्यं फलं मूलं दार्वग्न्यर्थं तथैव च ।
तृणं च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत् ॥

इति मनुः । अनिरुद्धेति प्रागुक्तगौतमादपरिवृतवन-स्पत्यादीनां वानस्पत्यं पत्रपुष्पादि मूलं फलं होमीयाग्न्यर्थं-दारु गोग्रासार्थं तृणं परकीयमस्तेयं मनुराह । तस्मान्न दण्ड इत्यर्थः ॥ २७५ ॥

मि० अव. अचौरस्यापि चौरोपकारिणो दण्डमाह ।

या० भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान् ।

मि० अव. जातिद्रव्यपरिमाणपरिग्रहविनियोगवयःशक्तिगुणदेशकालादीनां दण्डगुरुलघुभावकारणानामानन्त्यात्प्रतिद्रव्यं वक्तुमशक्तेः सामान्येन दण्डकल्पनोपायमाह ।

या० क्षुद्रमध्यमहाद्रव्यहरणे सारतो दमः ।
देशकालवयःशक्ति सञ्चिन्त्यं दण्डकर्मणि ॥ २७५ ॥

मि० क्षुद्राणां मध्यमानामुत्तमानां च द्रव्याणां हरणे सारतो मूल्याद्यनुसारतो दण्डः कल्पनीयः । क्षुद्रादिद्रव्यस्वरूपं च—

नारदेनोक्तम्, ( व्यव. १४ । श्लो. १४ । १५।१६ )
मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत् ।
शमीधान्यं कृतान्नं च क्षुद्रं द्रव्यमुदाहृतम् ॥
वासः कौशेयवर्जं च गोवर्जं पशवस्तथा ।
हिरण्यवर्जं लोहं च मध्यं व्रीहियवा अपि ॥
हिरण्यरत्नकौशेयस्त्रीपुङ्गोगजवाजिनः ।
देवब्राह्मणराज्ञां च द्रव्यं विज्ञेयमुत्तमम् ॥

अत्र त्रिप्रकारेष्वपि द्रव्येष्वौत्सर्गिकः प्रथममध्यमोत्तमसाहसरूपो दण्डनियमः—

तेनैव दर्शितः, ( व्यव. १४ । २१ )
साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः ।
स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमात् ॥ इति ।

मृन्मयेषु माणिकमल्लिकादिषु, गोगजाश्वव्यतिरिक्तेषु च महिषमेषादिपशुषु, ब्राह्मणसंबन्धिषु च कनकधान्यादिषु तरतमभावोऽस्तीति [illegible]

दत्त्वा चौरस्य वा हन्तुर्जानतो दम उत्तमः॥ २७६ ॥

मि॰ भक्तमशनम् । अवकाशो निवासस्थानम् । अग्निश्चौरस्य शीतापनोदाद्यर्थः । उदकं तृषितस्य । मन्त्रश्चौर्यप्रकारोपदेशः । उपकरणं चौर्यसाधनम् । व्ययः अपहारार्थं देशान्तरं गच्छतः पाथेयम् । एतानि चौरस्य हन्तुर्वा दुष्टत्वं जानन्नपि यः प्रयच्छाति तस्योत्तमसाहसो दण्डः । चौरोपेक्षिणामपि दोषः ।

शक्ताश्च यउपेक्षन्ते तेऽपि तद्दोषभागिनः ।

इति नारदस्मरणात् ( व्यव. १४ । १९)॥ २७६ ॥

वा॰ १ । * चौरोपकारिणइति । तथा च अथ तदतिदेश उच्यते इति भावः । भक्तेति द्वन्द्वः प्राग्वत् । अज्ञाने दोषाभावाय जानत इति । पदार्थानाह * भक्तमित्यादि । * चोरस्य, तदादेः । एवमग्रेऽपि बोध्यम् । वाक्यार्थमाह * एतानीति । भक्तादिव्ययान्तानि वस्तूनीत्यर्थः । एतानिंति पाठस्तु सम्यगेव । उभयसङ्ग्रहायाह * दुष्टत्वमिति ।

मनुरपि, ( अ.९।श्लो.२७१।२७२।२७३।२७४।२७५)

ग्रामेष्वपि च ये केचिच्चौराणां भक्तदायकाः ।
भाण्डावकाशदाश्चैव सर्वांस्तानपि घातयेत् ॥
राष्ट्रेषु रक्षाधिकृतान्सामन्तांश्चैव चोदितान् ।
अभ्याघातेषु मध्यस्थान् शिष्याच्चोरानिव द्रुतम्॥
यश्चापि धर्मसमयात्प्रच्युतो धर्मजीवनः ।
दण्डेनैव तमप्योषेत्स्वकाद्धर्माद्धि विच्युतम् ॥
ग्रामघाते हिताभङ्गे पथि मोषाभिदर्शने ।
शक्तितो नाभिधावन्तो निर्वास्याः सपरिच्छदाः ॥

शेषाकाङ्क्षायां मूल्याद्यनुसारेण दण्डः कल्पनीयः। तत्र च दण्डकर्मणि दण्डकल्पनायां तद्धेतुभूतं देश-कालवयःशक्ति सम्यक् चिन्तनीयम् ।

एतच्च जातिद्रव्यपरिमाणपरिग्रहादीनामुपलक्षणम्। तथाहि । अष्टापाद्यं स्तेये किल्बिषं शूद्रस्य द्विगुणोत्तराणीतरेषां प्रतिवर्णं विदुषोऽतिक्रमे दण्डभूयस्त्वमिति। अयमर्थः । किल्बिषशब्देनात्र दण्डो लक्ष्यते। यस्मिन्नपहारे यो दण्ड उक्तः स विद्वच्छूद्रकर्तृकेऽपहारे अष्टगुण आपादनीयः। इतरेषां पुनर्विट्क्षत्रब्राह्मणानां विदुषां स्तेये द्विगुणोत्तराणि किल्बिषाणि षोडशद्वात्रिंशच्चतुःषष्टिगुणा दण्डा आपादनीयाः । यस्माद्विद्वच्छूद्रादिकर्तृकेऽपहारे दण्डभूयस्त्वम्।

मनुनाऽप्ययमेवार्थो दर्शितः,(अ.८श्लो.३३७।३३८)

अष्टापाद्यं तु शूद्रस्य स्तेये भवति किल्बिषम्।
षोडशैव तु वैश्यस्य द्वात्रिंशत्क्षत्रियस्य तु ॥
ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतं भवेत्।
द्विगुणा वा चतुःषष्टिस्तद्दोषगुणवेदिनः॥ इति ।

तथा परिमाणकृतमपि दण्डगुरुत्वं दृश्यते।

यथाह मनुः, (अ. ८ श्लो ३२०)

धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः।
शेषेत्वेकादशगुणं दाप्यस्तस्य च तद्धनम्॥ इति।

विंशतिद्रोणकः कुम्भः। हर्तृह्रियमाणस्वामिगुणापेक्षया सुभिक्षदुर्भिक्षकालाद्यपेक्षया च ताडनाङ्गच्छेदनवधरूपा दण्डा योज्याः। तथा संख्याविशेषादपि

राज्ञः कोशापहर्तृंश्च प्रतिकूलेषु च स्थितान् ।
घातयेद्विविधैर्दण्डैररीणां चोपजापकान् ॥ इति,
अग्निदान्भक्तदांश्चैव तथा शस्त्रावकाशदान् । ( २७८ )
सन्निधातृंश्च मोषस्य हन्याच्चौरानिवेश्वरः ॥ इति,
योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम् ।(अ.८।३४०)
याजनाध्यापनेनापि यथा स्तेनस्तथैव सः ॥

इति च । रक्षेति । ग्रामनिवासिनः प्रजानां चौरादिभिरुपघाते क्रियमाणे मध्यस्थानुपेक्षकान् चौरवद्दण्डयेत् । हिताभङ्गः परक्षेत्रोत्पन्नसस्यविनाशनम् । मोषाभिदर्शने अपहृतद्रव्यदर्शने । मोषस्यापहृतद्रव्यस्य । अदत्तादायिनश्चौरस्य हस्ताद्यो ब्राह्मणो याजनाध्यापनप्रतिग्रहैरपि परकीयधनं ज्ञात्वा लब्धुमिच्छेत्स चोरतुल्यस्तद्वद् दण्ड्यः इत्यर्थः । विशेषमाह *चौरोपेक्षिणामिति । * दोषः, स एव दोषः ॥ २७६ ॥

मि० प्रव. किंच ।

या० शस्त्रावपाते गर्भस्य पातने चोत्तमो दमः ।
उत्तमो वाऽधमो वापि पुरुषस्त्रीप्रमापणे ॥ २७७ ॥

मि० परगात्रेषु शस्त्रस्यावपातने दासीब्राह्मणगर्भव्यतिरेकेण गर्भस्य पातने चोत्तमो दमः दण्डः । दासीगर्भनिपातने तु दासीगर्भविनाशकृदित्यादिना शतदण्डोऽभिहितः । ब्राह्मणगर्भविनाशे तु हत्वा गर्भमविज्ञातमित्यत्र ब्रह्महत्यातिदेशं वक्ष्यति । पुरुषस्य स्त्रियाश्च प्रमापणे शीलवृत्ताद्यपेक्षयोत्तमो वाऽधमो वा दण्डो व्यवस्थितो वेदितव्यः ॥ २७७ ॥

वा० १ । * किं चेति । अतिदेशप्रसङ्गादन्यस्यापि दण्डमा-

दण्डविशेषो रत्नादिषु,

( ना. परि. २७ )

सुवर्णरजतादीनामुत्तमानां च वाससाम् ।
रत्नानां चैव सर्वेषां शतादभ्यधिके वधः ॥
पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते।(म.८।१२२)
शेषेष्वेकादशगुणं मूल्याद्दण्डं प्रकल्पयेत् ॥ इति ।

तथा द्रव्यविशेषादपि, ( अ. ८ श्लो. ३२३ )

पुरुषाणां कुलीनानां नारीणां वा विशेषतः ।
मुख्यानांचैव रत्नानां हरणे वधमर्हति ॥

अकुलीनानां तु दण्डान्तरम् । ( ना. परि. २८ )

पुरुषं हरतो दण्ड उक्त उत्तमसाहसः ।
स्त्र्यपहारे तु सर्वस्वं कन्यां तु हरतो वधः॥ इति ।

क्षुद्रद्रव्याणां तु मोषतो न्यूनमूल्यानां-
मूल्यात्पञ्चगुणो दमः । ( ना. परि. २२।२३।२४ )

काष्ठभाण्डतृणादीनां मृन्मयानां तथैवच ।
वेणुवैणवभाण्डानां तथा स्नाय्वस्थिचर्मणाम् ॥
शाकानामार्द्रमूलानां हरणे फलमूलयोः ।
गोरसेक्षुविकाराणां तथा लवणतैलयोः ॥
पक्वान्नानां कृतान्नानां मत्स्यानामामिषस्य च ।
सर्वेषामल्पमूल्यानां मूल्यात्पञ्चगुणो दमः ॥

इति नारदस्मरणात् । यः पुनः प्रथमसाहसः क्षुद्रद्रव्येषु शतावरः पञ्चशतपर्यन्तः, असौ माषमूल्ये तदधिकमूल्ये वा यथायोग्यं व्यवस्थापनीयः । यत् पुनर्मानवं क्षुद्रद्रव्यगोचरं वचनं "तन्मूल्याद् द्विगुणो दम" इति, तत् अल्पप्रयोजनशरावादिविषयम् ।

हेत्यर्थः। एवमग्रेऽप्युभयत्र। पुरुषघ्नीति आर्षम्। स्मृत्यन्तराविरोधायाह * दासीब्राह्मणेति। तदेवाह *दासीगर्भेत्यादिना। * अभिहित इति। साहसप्रकरणे इति भावः। *विनाशे तु, विनाशने तु। * वक्ष्यतीति। प्रायश्चित्ताध्याये इति भावः। * प्रमापणे, मारणे। नायमैच्छिकविकल्प इत्याह *शीलेति। शीलं स्वभावः। वृत्तम् आचरणम्। आदिना धर्मः। तद्विशिष्टस्य पुरुषस्य तथा स्त्रियाश्च मारणे उत्तमसाहसः तद्राहित्ये तु प्रथमसाहस इति विकल्पव्यवस्था। द्वितीयवाशब्देन ईषच्छीलादिवैशिष्ट्ये तथा सति पारिशेष्यान्मध्यमसाहसपरिग्रह इति बोध्यम्॥ २७७॥

मि० अव. किंच।

या० विप्रदुष्टां स्त्रियं चैव पुरुषघ्नीमगर्भिणीम्।
सेतुभेदकरीं चाप्सु शिलां बध्वा प्रवेशयेत्॥२७८॥

मि. विशेषेण प्रदुष्टा विप्रदुष्टा भ्रूणघ्नी स्वगर्भपातिनी च, या च पुरुषस्य हन्त्री सेतूनां भेत्त्री च। एता गर्भरहिताः स्त्रीर्गले शिलां बध्वा अप्सु प्रवेशयेत् यथा न प्लवन्ते॥ २७८॥

बा. १। विप्रेण दुष्टामित्यर्थनिरासायाह * विशेषेणेति। तस्यार्थद्वयमाह * भ्रूणेति। सेतुभेदकरीत्यत्र टप्रत्ययः। तदाह * सेतूनामिति। अगर्भिणीमिति सर्वविशेषणं, स्त्रियमिति सर्वविशेष्यमित्याह * एता गर्भेति। साकाङ्क्षत्वादाह * गले इति। तात्पर्यार्थमाह * यथेति। तथा च घाते तात्पर्यं तत्र न तात्पर्यमिति भावः॥ २७८॥

मि० अव. किंच।

तथा अपराधगुरुत्वादपि दण्डगुरुत्वम् । (मनु. ९।२७६)

सन्धिं छित्त्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः ।
तेषां छित्त्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत् ॥

इति । एवं सर्वेषामानन्त्यात्प्रतिद्रव्यं वक्तुमशक्तेर्जातिपरिमाणादिभिः कारणैर्दण्डगुरुलघुभावः कल्पनीयः । पथिकादीनां पुनरल्पापराधे न दण्डः ।

यथाह मनुः, अ. ८ श्लो. ३४१ )

द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके ।
आददानः परक्षेत्रान्न दण्डं दातुमर्हति ॥

तथा,

चणकव्रीहिगोधूमयवानां मुद्गमाषयोः ।
अनिषिद्धैर्ग्रहीतव्यो मुष्टिरेकः पथि स्थितैः ॥

तथैव सप्तमे भक्ते भक्तानि षडनश्नता । (म. ११।१६)
अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः ॥ इति ॥२७५॥

बा० १ । इदमप्युपलक्षणमित्याह * जातीति । जातिश्च द्रव्यं च परिमाणं च परिग्रहश्च विनियोगश्च वयश्च शक्तिश्च गुणश्च देशश्च कालश्च तदादीनां स्मृत्यन्तरोक्तानामित्यर्थः । तत्र ब्राह्मणपरिगृहीताया गोर्हरणादधिको दण्ड इति ब्राह्मणपरिग्रहोऽधिकदण्डकारणम् । तथा यदि सैवाग्निहोत्रार्थदोहाय विनियुक्ता तदा तस्या हरणे ततोऽप्याधिको दण्ड इति तथा विनियोगोऽप्याधिकदण्डकारणम् । एवंविधपरिग्रहविनियोगयोरभावे तावेव न्यूनदण्डकारणे इति बोध्यम् । मद्दर्थ *उत्तमानामिति । वहुवचनान्तानां द्वन्द्व इति भावः ।

२।उत्तरार्द्धं व्याख्यातुमेतद्विषयं विवेचयितुं चोपयुक्तमाह * क्षुद्रादीति । *मृद्भाण्डेति । यथाऽत्र प्रयोगासिद्धिर्भवति तथा

या० विषाग्निदां पतिगुरुनिजापत्यप्रमापणीम् ।
विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रमापयेत् ॥२७९॥

मि० अगर्भिणीमित्यनुवर्तते । या च परवधार्थमन्नपानादिषु विषं ददाति क्षिपति, या च दाहार्थं ग्रामादिष्वग्निं तथा, या च निजपतिगुर्वपत्यानि मारयति, तां छिन्नकरकर्णनासौष्ठीं कृत्वा अदान्तैर्दुष्टबलीवर्दैः प्रवाह्य मारयेत् । स्तेयप्रकरणे यदेतत्साहसिकस्य दण्डप्रदानं तत्प्रासङ्गिकमिति मन्तव्यम् ॥ २७९ ॥

बा. १ । विषेति आर्षम् । विकर्णे यन्नाप्येवम् । युक्तिसाम्यादाह * अगर्भिणीमिति । अन्यथा दाने ऽदोषायाह * परेति * दाहार्थमिति च । अत्र क्रियानुषङ्गः । निजत्वं सर्वविशेषणमित्याह * निजपतीति । स्पष्टार्थमिदमिति बोध्यम् । *तां, सर्वाम् । वीत्यस्यार्थः *छिन्नेति । करकर्णेति प्राग्वत् । अन्यथा तदसंभवादाह *अदान्तैरित्यादि । *प्रवाह्य, वाहयित्वा ।

२ । ननु शस्त्रावपात इत्यादेरत्रानुपयोगस्तस्य साहसत्वात्, अत आह * स्तेयेति । तत्फलं तु विशेषलक्षणभेदेऽपि तत्सामान्यलक्षणस्यात्रापि सत्त्वमिति सूचनम् । * साहसिकस्य, तदवच्छिन्नवस्तुनः । सामान्ये नपुंसकम् । *दण्डप्रदानं, तदभिधानम् । क्वचित्तथैव पाठः ॥ २७९ ॥

मि० अव. अविज्ञातकर्तृके हनने हन्तृज्ञानोपायमाह ।

या० अविज्ञातहतस्याशु कलहं सुतबान्धवाः ।
प्रष्टव्या योषितश्चास्य परपुंसि रताः पृथक् ॥२८०॥

द्वन्द्वः कार्यः। एवं हिरण्यरत्नेत्यत्रापि। मृद्भाण्डं मृन्मयम्। शमीधान्यं माषादि।

माषादयः शमीधान्ये शूकधान्ये यवादय इत्यमरः।

कृतान्नं साधितान्नम् ओदनादि। वर्जमिति णमुल्। वर्जयित्वेत्यर्थः। *लोहं च, रजतादिकम्। *मध्यामिति। द्रव्यमुदाहृतमित्यस्यानुषङ्गः। अग्रे सर्वानुषङ्गो यथासम्भवम्। व्रीहीति बहुवचनान्तयोः "विभाषा वृक्ष" इति पाक्षिक इतरेतरद्वन्द्वः। *गोगजेति। एवं च गोवर्जमित्यत्र गोपदमनयोरप्युपलक्षणमिति भावः। *देवेति। अभ्यर्हितत्वात्पूर्वनिपातः। *च द्रव्यं, द्रव्याणि च।

३। एतत्प्रसङ्गादविरोधायाह *अत्रेति। *औत्सर्गिकः, सामान्यविहितः। *तेनैव, नारदेनैव। तच्चानुपदमेव व्याख्यातम्। नन्वेवं मूलविरोधस्तस्येति मूलस्य का गतिः, अत आह *मृन्मयेष्विति। मणिकादयस्तत्पात्रविशेषाः। इदं क्षुद्रद्रव्यमात्रोपलक्षणम्। *गोवाजीति। इदं मध्यमद्रव्यमात्रस्य। अभ्यर्हितत्वान्महिषस्य पूर्वनिपातः। एवं कनकेत्यत्रापि। इदमप्युत्तमद्रव्यमात्रस्योपलक्षणम्। तरतमभावोऽस्तीति पाठः। तारतम्येति पाठे स्वार्थे ष्यञ्। यद्वा तारतम्यस्यावान्तरवैलक्षण्यस्य भावः सत्ताऽस्तीत्यर्थः। प्रत्येकमिति शेषः त्रिष्वपि। अत एव मणिकादीत्यादिना प्रत्येकमुत्तमाधमयोर्ग्रहणं कृतम्। *उच्चावचेति। यद्यप्ययं मयूरव्यंसकादिः, तत्र च उदक् चावाक् चोच्चावचमित्यभियुक्तैर्व्याख्यातं तथाप्युच्चनीचमित्यर्थे स इति मतेनेदम्। तत्र लक्षणा वेति भावः। तथा च नारदतो यथाक्रमं तेषु त्रिषु त्रिविधोक्तरूपदण्डस्याविशेषेण प्राप्तौ अवान्तरतारतम्येन तद्विशेषाकाङ्क्षायां विशेषबोधकम् मूलवचनपूर्वार्द्धमि-

मि० अविज्ञातपुरुषेण घातितस्य सम्बन्धिनः सुताः प्रत्यासन्नाश्च बान्धवाः "केनास्य कलहो जात" इति कलहमाशु प्रष्टव्याः। तथा मृतस्य सम्बन्धिन्यो योषितो, याश्च परपुंसि रता व्यभिचारिण्यस्ता अपि प्रष्टव्याः ॥ २८० ॥

वा० १। एतत्प्रसङ्गादेवाग्रिमामित्याह * अविज्ञातकर्तृके, इति। अविज्ञातेन हत इति समास इत्याह * अविज्ञातपुरुषेणेति। तस्य कलहे च शाब्दोऽन्वय इत्याह * संवन्धीति। वान्धवपदार्थः * प्रत्यासन्ना इति। अस्येत्यस्यार्थो * मृतस्येति। दो व्युत्क्रमे इत्याह * याश्चेति। न वेश्या विवक्षिताः शब्दस्वारस्याभावादित्याह *व्यभीति। पृथगिति शेषः॥२८०॥

मि० अव० कथं प्रष्टव्या इत्यत आह।

या० स्त्रीद्रव्यवृत्तिकामो वा केन वाऽयं गतः सह॥
मृत्युदेशसमासन्नं पृच्छेद्वापि जनं शनैः ॥ २८१ ॥

मि० किमयं स्त्रीकामो द्रव्यकामो वृत्तिकामो वा। तथा कस्यां किंसम्बन्धिन्यां वा स्त्रियामस्य रतिरासीत्। कस्मिन् वा द्रव्ये प्रीतिः। कुतो वा वृत्तिकामः। केन वा सह देशान्तरं गत इति नानाप्रकारं व्यभिचारिण्यो योषितः पृथक्पृथक् विश्वास्य प्रष्टव्याः। तथा मरणदेशनिकटवर्तिनो गोपाटविकाद्या ये जनास्तेऽपि विश्वासपूर्वकं प्रष्टव्याः। एवं नानाप्रकारैः प्रश्नैर्हन्तारं निश्चित्य तदुचितो दण्डो विधातव्यः॥२८१॥

वा० १। चरमे एवोक्तज्ञानाभावाद्विशेषशङ्केत्याह * कथ-

ति अयं तात्पर्यार्थ इति आशयः ।

४ । मूल्यादीत्यादिशब्दसङ्ग्रहप्रदर्शकमूलोत्तरार्धं व्याच-ष्टे * तत्र चे ति । तस्यां पूर्वोक्तायामित्यर्थः । दण्डकर्मणी-ति मौलस्य व्याख्या * दण्डकल्पनायामिति । बीजमाह *तद्धेत्विति । * शक्तीति । अनेन मूलेऽपि समाहारद्वन्द्वः सू-चितः । पूर्वनिपातः प्राग्वत् । सम्–शब्दार्थमाह *सम्यगिति ।

५ । नन्वत्रैते एव चत्वार उक्ताः अवतरणे त्वन्येऽप्युक्ता इति विरोधः, अत आह * एतच्चेति । * परिग्रहादीनां, तेपा-मपि । आदिना विनियोगादिपरिग्रहः । तथा चात्रोपात्ता एव दण्डकल्पनायां हेतव इति न, किं तूपलक्षणतया स्मृत्यन्तरो-क्ता अन्येऽपि । अत एव तद्विरोधोऽपि नेति भावः ।

६ । तदेव स्मृत्यन्तरजातमनुक्रमेण दर्शयति * तथाही-त्यादिना । तत्र तावद्वर्णरूपजात्यपेक्षया गुणापेक्षया च स्ते यविशेषेण दण्डविशेषबोधकं वासिष्ठमाह * अष्टापाद्यमिति । अत्र दण्डानुक्तेरसम्बद्धत्वनिरासायाह * अयमर्थ इति । *ल-क्ष्यते इति । तस्य तत्कार्यत्वात् । अतिक्रमे इत्यस्य मध्यम-णिन्यायेनोभयत्रान्वयः । तदाह * स विद्वदिति । अष्टन्-शब्दोऽपि लाक्षणिक इत्याह * अष्टगुण इति । विदुष इति वचनविपरिणामेन विद्वादिविशेषणम् । * स्तेये, विषये । प्रतिवर्णमिति शेषः । *द्विगुणोत्तराणीति । उत्तरमुत्तरं द्विगुणा-नीत्यर्थः । मयूरेति समासः । तदर्थमाह * षोडशेति । उक्तहे-तोः अतिक्रमे इत्यादि हेतुपरमित्याह *यस्मादिति । अनेन यत इति शेषः सूचितस्तत्र । इतिरर्थसमाप्तौ । आपिना—

येन दोषेण शूद्रस्य दण्डो भवति धर्मतः ।
तेन विट्क्षत्रविप्राणां द्विगुणो द्विगुणो भवेत् ॥

मिति । इत्यत आहेति पाठः । इत्याहेति पाठे इत्याशङ्काया-माहेत्यर्थः । वृत्तिर्नियतजीवनम् । द्वंद्वान्ते श्रूयमाणस्य कामस्य प्रत्येकं संबन्धादाह * किमपमिति । एवं स्त्रीद्रव्येति सामान्येन व्याख्याय संभवात्तदेव विशिष्य व्याचष्टे * तथेति । तत्रापि प्रकारद्वयमाह *कस्यामिति । *कुतो वा, राजादितः ।

२ । द्वितीयपादं व्याचष्टे * केन वेति । * अन्यथेति । तत्रापीष्टासिद्धेराह * विश्वास्येति । अभयं दत्त्वेत्यर्थः । उत्तरार्द्धं व्याचष्टे * तथेति । गोपाश्च आटविकाश्च तदाद्या इत्यर्थः । मूले जातावेकवचनमिति भावः । शनैरित्यस्यार्थो * विश्वासेति । तात्पर्यार्थमाह * नानेति । एवमित्याद्यादिः । क्वचिदस्य पाठ एव ॥ २८१ ॥

मि० अघ. किञ्च ।

या० क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः ।
राजपत्न्यभिगामी च दग्धव्यास्ते कटाग्निना ॥ २८२ ॥

मि० क्षेत्रं पक्कफलसस्योपेतम्, वेश्म गृहम्, वनमटवीम् क्रीडावनं वा, ग्रामम्, विवीतमुक्तलक्षणम्, खलं वा ये दहन्ति, यश्च राजपत्नीमभिगच्छति, तान्सर्वान् कटैर्वीरणमयैर्वेष्टयित्वा दहेत् । क्षेत्रादेर्दाहकानां मारणदण्डप्रसङ्गाद्दण्डविधानम् ॥ २८२ ॥

इति स्तेयप्रकरणम् ।

वा० १ । पक्कानि फलानि येषां तादृशानि यानि सस्यानि तदुपेतं, पक्काभ्यां फलसस्याभ्यामुपेतं युक्तं वा । यद्यप्ययं द्वंद्वस्तथापि यौगपद्यासंभवादाह *खलंवेति । खलं खर्याण इति प्रसिद्धम् । कटसंबन्ध्यग्निनेत्यर्थे इष्टासिद्धेराह *कटैरिति । ततश्च

इति कातीयस्य समुच्चयः। *अष्टापाद्यमिति। अर्थः प्राग्वत्। एवशब्दः पूर्वपद्ये एव पूर्वोत्तरयोरपि सम्बध्यते। तद्दोषेत्यस्य तु सर्वत्र पद्यद्वये सम्बन्धः। तस्य वस्तुनो दोषगुणयोर्वेदने ज्ञाने सतीत्यर्थः। एवं वासिष्ठे विद्वत्ताऽप्येतद्विषयैव। तदर्थमेव मनूक्तिः। तद्दोषगुणवेदिन इति तत्र पाठान्तरं कल्पतर्वादिसंमतम्। गुणविद्विष इति त्वपपाठः। अर्थासङ्गतेः। ब्राह्मणस्य तु तत्रापि गुणाद्यपेक्षया पक्षत्रयमाह * ब्राह्मणस्येति। अत एव पूर्वत्रैवकारः सफलः। तथा चायं दण्डः शूद्रत्वादिजात्यपेक्षो विद्वत्स्वरूपगुणापेक्षश्चेति तयोरत्र हेतुत्वमिति भावः।

७। द्रव्यतः परिमाणेति भिन्नमिति सूचयन्व्युत्क्रमेणाह *तथा परिमाणेति। * धान्यमिति। दशसंख्येभ्यः कुम्भेभ्यो ऽभ्यधिकं धान्यं हरतो वधः। शेषे त्विति पाठः। शेषेऽपीति पाठे अपिस्त्वर्थे। शेषेष्विति पाठान्तरम्। एकस्मादारभ्य दशकुम्भपर्यन्तं हरणे अपहृतादेकादशगुणं दण्डो दाप्यः। स्वामिनश्चापहृतं धनं दाप्य इत्यर्थः। कुम्भोऽत्र न प्रसिद्धः, किं तु परिमाणविशेष इत्याह * विंशतीति। द्विपलशतं द्रोणः।

८। नन्वत्र वधदण्ड उक्तः स च ताडनादिप्राणवियोजनान्तव्यापाररूपः। तथा च सर्वत्र समुच्चयापत्तिः, अत आह *हर्तृह्रियमाणेति। हर्तुर्गुणापेक्षया ह्रियमाणस्य द्रव्यस्य गुणापेक्षया स्वामिनो गुणापेक्षया चेत्यर्थः।

९। परिमाणशब्दः परिच्छेदकमात्रपर इत्याह * तथा संख्येति। तत्रादौ नारदमाह *सुवर्णेति। *सर्वेषां, साधारणानाम्। अभ्याधिकमिति पाठः। एवं प्रागपि। मनुमाह * पञ्चाशत इति।

तथा धरिमेयानां शतादभ्यधिके वधः। (म. ८। ३२१)

तत्र मध्यमपदलोपिसमास इति भावः । यस्य तृणस्योशीरं मूलं तृणविशेषः ।

वीरणं स्याद्वीरतरं मूलेऽस्योशीरमस्त्रियामित्यमरः ।

ननु इदमपि नोपयुक्तमत्रेत्यत आह * क्षेत्रादेरिति ॥ २८२ ॥

इति स्तेयप्रकरणम् ।

---

सुवर्णरजतादीनामुत्तमानां च वाससाम् ॥

इति पूर्वमितः । धटितमेयानां तुलापरिच्छेद्यानां पूर्वोक्तानामेव पञ्चाशतोऽभ्यधिके हस्तच्छेदः । शतादि पलसम्बन्धि बोध्यम् । * शेषेषु, एकपलादारभ्य पञ्चाशत्पर्यन्तमपहारे ऽप हृतद्रव्यमूल्यादेकादशगुणं दण्डं दापयेदित्यर्थः । स्वामिने वस्तुदानं तु समानमेवेति भावः । * द्रव्यविशेषादपि, दण्डगुरुत्वं दृश्यते इत्यस्यानुषङ्गः । मनुमाह * पुरुषाणामिति । मुख्यानां चैव रत्नानामिति सर्वसंमतस्तृतीयपादे पाठः । रत्नानां चैव सर्वेषामित्यपपाठः । अत एव प्रागुक्तनारदाविरोधो न । अत एव च महाकुलजातानां मनुष्याणां विशेषेण स्त्रीणां महाकुलजातानां मनुष्याणां विशेषेण स्त्रीणां महाकुलप्रसूतानां श्रेष्ठानां च रत्नानां वज्रवैदूर्यादीनामपहारे वधमर्हतीति तद्व्याख्यातारः ।

१० । कुलीनानामित्युक्तेः फलमाह * अकुलीनानामिति । स्त्रीणां चेत्यर्थः । नारदमाह *पुरुषमिति । *स्त्र्यपराधेन, तदपहारे । *सर्वस्वं, तदपहारो दण्डः प्रोक्तः । स्त्र्यपहारे तु सर्वस्वमिति पाठान्तरम् । तत्रैव विशेषमाह * कन्यामिति । * वधः, दण्डः प्रोक्तः । सर्वस्वं हरतो नारीमिति कल्पतरौ तृतीयपादपाठः ।

कात्यायनोऽपि,

सर्वस्वं हरतः स्त्रीं तु कन्याया हरणे वधः ।
वाजिवारणवालानां चाददीत बृहस्पतिः ॥ इति ।
सर्वस्वमित्यस्यानुषङ्गः ।

११ । एवं दण्डगुरुत्वमुक्त्वा क्षुद्रद्रव्यविषये एव संभवादल्पानुसारेण लघुदण्डमाह * क्षुद्रेति । * माषेति । माषतो न्यूनेत्यर्थः । क्वचित्तथैव पाठः । अत्र मानमाह * काष्ठेति । तस्य भाण्डेत्यर्थः । अभ्यर्हितत्वात्पूर्वनिपातः । एवं लवणेत्यत्रापि । वे-

## अथ स्त्रीसङ्ग्रहणप्रकरणम् ॥ २४ ॥



मि० उ० स्त्रीसङ्ग्रहणाख्यं विवादपदं व्याख्यायते। प्रथमसाहसादिदण्डप्राप्त्यर्थं त्रेधा तत्स्वरूपं—

व्यासेन विवृतम्,

त्रिविधं तत्समाख्यातं प्रथमं मध्यमोत्तमम्।
अदेशकालसंभाषा निर्जने च परस्त्रियाः।
कटाक्षावेक्षणं हास्यं प्रथमं साहसं स्मृतम्॥
प्रेषणं गन्धमाल्यानां मृष्टभूषणवाससाम्।
प्रलोभनं चान्नपानैर्मध्यमं साहसं स्मृतम्॥
सहासनं विविक्तेषु परस्परमुपाश्रयः।
केशाकेशिग्रहश्चैव सम्यक् संग्रहणं स्मृतम्॥
स्त्रीपुंसयोर्मिथुनीभावः सङ्ग्रहणम्।

मि० अव. संग्रहणज्ञानपूर्वकत्वात्तत्कर्तुर्दण्डविधानस्य तज्ज्ञानोपायं तावदाह।

या० पुमान्संग्रहणे ग्राह्यः केशाकेशि परस्त्रिया।
सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा॥ २८३ ॥

मि० संग्रहणे प्रवृत्तः पुमान् केशाकेश्यादिभिर्लिङ्गैर्ज्ञात्वा ग्रहीतव्यः। परस्परस्य केशग्रहणपूर्विका क्रीडा केशाकेशि। "तत्र तेनेदमिति सरूपे" इति बहुव्रीहौ सति "इच् कर्मव्यतिहारे" इति समासान्त इच्प्रत्ययः। अव्ययत्वाच्च लुप्ता तृतीया विभक्तिः। तथाचायमर्थः। परभार्यया सह केशाकेशिक्रीडनेना-

भिनत्त्वैः करकङ्कणमादिकृतव्रणैः रागकृतैर्लिङ्गैर्द्वयोः संप्रतिपत्त्या वा ज्ञात्वा संग्रहणे प्रवृत्तो ग्रहीतव्यः । परस्त्रीग्रहणं नियुक्तावरुद्धादिव्युदासार्थम् ॥ २८३ ॥

त्रा० १ । साहसप्रकरणादाह *स्त्रीति । *त्रेधा, प्रथमादिभेदेन । * तत्, स्त्रीसंग्रहणम् । * मध्यमोत्तममिति । समाहारद्वंद्वः । तत्राद्यमाह * अदेशेति । अदेशे अकाले च संभाषा संभाषणमित्यर्थः । * निर्जने च, अरण्ये च । क्वचित्तथैव पाठः । संभाषणमिति शेषः । कटाक्षेत्यत्रार्शआद्यच् । सकटाक्षावेक्षणमित्यर्थः । परस्त्रिया इति षष्ठ्यन्तस्य सर्वत्रान्वयः । क्वचित्तृतीयान्तपाठः ।

२ । द्वितीयमाह * प्रेषणमिति । * मृष्टेति । शुद्धेत्यर्थः । समीचीनेति यावत् । धूपेति पाठान्तरम् । उभयविशेषणमिदम् ।

३ । तृतीयमाह * सहेति । शय्यासने इति पाठान्तरम् । * विविक्ते, एकान्ते । उभयान्वयीदम् । * परस्परमिति । आलिङ्गनहस्तावलम्बादिभिरन्योन्यसंश्रय इत्यर्थः । * केशाकेशिग्रहः, क्रीडासंबन्धिग्रहणम् । * सम्यक्, अर्थवत् संपूर्णम् उत्तममिति यावत् । अत एव ज्ञेय उत्तमसंग्रह इति पाठान्तरम् ।

४ । विशेषे उक्तेऽपि सामान्यस्य केनाप्यनुक्तत्वात्स्वयं सामान्यलक्षणं तत्सूचितमेवाह * स्त्रीति । एवं सलक्षणं त्रैविध्यमुक्त्वा मूलमवतारयति * संग्रहेति । * तत्कर्त्तुः, संग्रहणकर्त्तुः । तत् संग्रहणम् । सामान्येनार्थमाह * संग्रहणेइति । सप्तम्युपपत्तये आह *प्रवृत्त इति । तद्विषये प्रवृत्त इत्यर्थः । वक्ष्यमाणाशयेनाह * केशाकेश्यादिभिरिति । अर्थादाह * लिङ्गैर्ज्ञात्वेति । ननु केशाकेशीति किमर्थकं कथं वा तृतीयान्तम्, अत आह * परस्परेति । एतल्लाभार्थमाह * तत्रेति । सप्तम्यन्ते क्रि-

दासीभिः अवरुद्धाभिः बौद्धाभिः ब्रह्मचारिणीभिः सम्भाषां कुर्वन् किञ्चिद्दण्डमात्रं दाप्य इत्यर्थः ॥ २८५ ॥

मि० अव. तमिदानीं संग्रहणे दण्डमाह।

या० स्वजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः।
प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्तनम् ॥२८६॥

मि० चतुर्णामपि वर्णानां बलात्कारेण सजातीयगुप्तपरदाराभिगमने साशीतिपणसहस्रं दण्डनीयः। यदा त्वानुलोम्येन हीनवर्णां स्त्रियमगुप्तामभिगच्छति तदा मध्यमसाहसं दण्डनीयः। यदा पुनः सवर्णामगुप्तामानुलोम्येन गुप्तां वा व्रजति तदा—
मानवे विशेष उक्तः, (अ. ८ श्लो. ३७८।३८३)
सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद् व्रजन्।
शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह संगतः॥
सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन्।
शूद्रायां क्षत्रियविशोः सहस्रं तु भवेद्दमः॥ इति।
एतच्च गुरुसखिभार्यादिव्यतिरेकेण द्रष्टव्यम्। (व्यव. १२)
माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा॥(७३)
दुहिताऽऽचार्यभार्या च सगोत्रा शरणागता।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या॥(७४)
आसामन्यतमां गच्छन् गुरुतल्पग उच्यते।
शिश्नस्योत्कर्तनात्तत्र नान्यो दण्डो विधीयते॥(७५)
इति नारदस्मरणात्। प्रातिलोम्ये उत्कृष्टवर्णस्त्रीगमने क्षत्रियादेः पुरुषस्य वधः। एतच्च गुप्ताविष-

याविषये सरूपे पदे तृतीयान्ते च क्रियाविषये सरूपे पदे इदं क्रियारूपं वस्त्वित्यर्थे समस्येते कर्मव्यतिहारे स बहुव्रीहिसंज्ञ इति तदर्थः। इतिशब्दादयं विषयविशेषो लभ्यते । * इच् कर्मेति। कर्मव्यतिहारे यो बहुव्रीहिः तस्मादिच्समासान्त इति तदर्थः। क्रियाविनिमयः कर्मव्यतिहारः । इचि कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घ इत्यर्थकेन "अन्येषामपि दृश्यते" इत्यनेन पूर्वपदे दीर्घः। *अव्ययत्वादिति। तिष्ठद्गुप्रभृतिष्विचूप्रत्ययपाठादव्ययीभावत्वे ऽव्ययत्वे च तृतीयाया अनदन्तत्वेन अव्ययादाप्सुपिति लुगिति भावः।

५। विशिष्यार्थमाह *तथा चेति। तस्य तथार्थकत्वे सतीत्यर्थः । परस्त्रियेति मूले "सह युक्ते" इति तृतीयान्तामित्याह * परभार्ययेति। लिङ्गान्तरमाह * आभिनवैरिति । सद्य इत्यस्यार्थोऽयम्। *करजेति। कररुहेति पाठान्तरम्। ननु नखादिकृतव्रणानां नैतल्लिङ्गत्वं क्रोधप्रमादादितोऽपि तत्सम्भवात्, अत आह * रागकृतैरिति। कामजैश्चिन्हैरित्यस्यार्थोऽयम्।

६। तुर्यपादार्थं तृतीयं तदाह * द्वयोरिति। * प्रतिपत्ताविति। सप्तसप्तम्या फलितमाह * संप्रतिपत्त्येति । द्वयोः स्वैरिणीजारयोः संप्रतिपत्त्या अङ्गीकारेणेत्यर्थः।

७। ननु परग्रहणं व्यर्थं, स्वभार्यायां तथाकरणे दोषाभावात् वेश्यायां दोषस्य वक्ष्यमाणत्वात्, अत आह *परस्त्रीग्रहणमिति। अत एव परभार्ययेत्येवं तद्व्याख्यातम्। वैधपाणिग्रहणे एव भार्यात्वात् । यद्यपि नियुक्तायां नखक्षतादिचिह्नाभावः घृताभ्यङ्गविधानेन मिथुनीभावाविधानान्नखक्षतादिकरणस्य निषिद्धत्वात्, तथापि द्वयोः संप्रतिपत्तिरस्तीति वोध्यम्। अवरुद्धादिषु तु पूर्वोक्तानि सर्वाणि साधारणानि लिङ्गानि सन्ति,

यम् । अन्यत्र तु धनदण्डः ।

( अ. ८ श्लो. ३७७ । ३७८ )

उभावपि हि तावेव ब्राह्मण्या गुप्तया सह ।
विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥
ब्राह्मणीं यद्यगुप्तां तु सेवेतां वैश्यपार्थिवौ ।
वैश्यं पञ्चशतं कुर्यात्क्षत्रियं तु सहस्रिणम् ॥

इति मनुस्मरणात् । शूद्रस्य पुनरगुप्तामुत्कृष्टवर्णां स्त्रियं व्रजतो लिङ्गच्छेदनसर्वस्वापहारौ, गुप्तां तु व्रजतस्तस्य वधसर्वस्वापहाराविति—

तेनैवोक्तम्, ( अ. ८ श्लो. ३७४ )

शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन् ।
अगुप्तमङ्गसर्वस्वैर्गुप्तं सर्वेण हीयते ॥ इति ।

नार्याः पुनर्हीनवर्णं व्रजन्त्याः कर्णयोः, आदिग्रहणान्नासादेश्च कर्तनम् । आनुलोम्येन वा सवर्णं वा व्रजन्त्या दण्डः कल्प्यः । अयं च वधाद्युपदेशो राज्ञ एव । तस्यैव पालनाधिकारात् । न द्विजातिमात्रस्य । तस्य "ब्राह्मणः परीक्षार्थमपि शस्त्रं नाददीत" इति शस्त्रग्रहणनिषेधात् । यदा तु राज्ञो निवेदने कालविलम्बनेन कार्यातिपाताशङ्का तदा स्वयमेव जारादीन् हन्यात् ।

( मनु. अ. ८ श्लो. ३४८ )

शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ।

तथा, ( मनु अ. ८ श्लो. ३५१ )

नाततायिवधे दोषो हन्तुर्भवति कश्चन ।
प्रकाशं वाऽप्रकाशं वा मन्युस्तं मन्युमृच्छति ॥

इति शस्त्रग्रहणाभ्यनुज्ञानाच्च । तथा क्षत्रियवै-

(७) न्यायरत्नमाला–श्रीपार्थसारथिमिश्र।वि० सं० ( मीमांसा २

(८) ब्रह्मसूत्रभाष्यम्–बादरायणप्रणीत-वेदान्तसूत्रस्य यतीन्द्र श्रीमाद्विज्ञान-भिक्षुकृत व्याख्यानम्। सम्पूर्णम्। ( वेदान्तः ) ६

(९) स्याद्वादमञ्जरी–मल्लिषेणानिर्मिता सम्पूर्णा। ( जैनदर्शनम् ) २

(१०) सिद्धित्रयम्–विशिष्टाद्वैत–ब्रह्मनिरूपण-परम्–श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम्। सम्पूर्णम् ( वेदान्तः ) १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टा-रकाचार्यसंगृहीतः। आचार्यचित्सुख-मुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४

(१२) विभक्त्यर्थनिर्णयःन्यायानुसारिप्रथमादि-सप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः। सम्पूर्णः (न्यायः) ५

(१३) विधिरसायनम्। श्रीअप्पयदीक्षितकृतम्। सं० ( मीमांसा ) २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्ट-सोमेश्वरविरचिता। ( मीमांसा ) १६

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता। श्रीक्षेमराजविरचितवृत्तिसमेता। ( वेदान्तः ) २

(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशा-ऽध्यायार्थसंग्रहः ) श्रीभट्टनारायणात्मज-भट्टशङ्करविरचितः। ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि–मीमांसादर्शनम् ) महामहो-पाध्यायश्रीशालिकनाथमिश्रविरचितं, श्रीशङ्करभट्टकृतो मीमांसा-सारसंग्रहश्च सम्पूर्णः ( मीमांसा ) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्दव्यासप्रणीत-स्तत्कृतव्याख्यासमलङ्कृतश्च। ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम्। महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम्। १३

(२०) ब्रह्मसूत्रभाष्यम्। श्रीभास्कराचार्यविरचितम् ( वेदान्तः ) १

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम्। आनन्दपूर्ण-विरचितया खण्डनफक्किकाविभजनाख्यया व्या-ख्यया ( विद्यासागरी ) ति प्रसिद्धया समेतम्। ( वेदान्तः ) १३

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता। १

(२३) श्रीलक्ष्मीसहस्रम्–बालबोधिनीव्याख्यया-ऽवतरणिकया च सहितम्। ८

द्वयोरन्योन्यस्याभिगमने यथाक्रमं सहस्रपञ्चशतपणात्मकौ दण्डौ वेदितव्यौ ।

तदाह मनुः, (अ. ८ श्लो. ३८२)

वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् ।
यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः ॥ इति ॥ ३८६ ॥

वा० १ । *तामिति । यस्यातिदेशः पूर्वं कृतस्तमित्यर्थः । स्वजातावित्युक्तिस्वारस्यादाह *चतुर्णामिति । मूलानुरोधेनाह *साशीतीति । द्वितीयपादार्थमाह * यदात्विति । आनुलोम्यादौ स्वार्थे ष्यञ् । अभिगमने इति शेषः । सर्वत्र तत्फलितमाह *आनुलोम्येनेति ।

२ । उभयत्र दत्तयोर्गुप्तत्वागुप्तत्वयोर्मूलानुक्तयोर्विशेषणयोः फले आह * यदा पुनरिति । तत्रादौ अगुप्तासवर्णागमने दण्डमाह * सहस्रमिति । अत्र पूर्वार्द्धे स्वजातावितिमूलप्रथमपादोक्तसमानाविषयम् । ब्राह्मणपदं विप्रपदं च क्षत्रियादेरप्युपलक्षणम् । तथाच क्षत्रियादीनामपि गुप्तसवर्णपरदारगमने एष एव विधिर्ज्ञेयः । एतदुपयोगस्तु गुप्तां बलादिति विषयाविशेषस्य तत्र लाभ एव । एवंच पूर्वप्रकरणसिद्धिरपीति इदमपि व्याख्यात्रोक्तम् । प्रकृतोपयुक्तं तूत्तरार्धमेव । तथाच रक्षितां स्ववर्णां सवर्णो बलेनोपगच्छन्सहस्रं दण्ड्यः स्यात् । व्रजन्नित्यत्र व्रजेदिति पाठे वाक्यभेदो बोध्यः । उत्तरार्धे इच्छन्त्येति बलादित्यस्य विपरीतोक्त्या तस्योक्तविपरीतार्थपरत्वावधारणेन अगुप्तयेत्यर्थाल्लब्धम् । तथाच अरक्षितया इच्छन्त्या सवर्णया तु सह सङ्गतः सकृन्मैथुनः पञ्च शतानि दण्ड्यो भवेदित्यर्थः ।

३ । आनुलोम्येन गुप्तागमने दण्डमाह *सहस्रम् इति । इदं च तत्र पूर्वतः पद्यचतुष्टयेन व्यवहितम् । तत्रेतोऽव्यवहिते—

२४ ब्रह्मसूत्रवृत्तेः मरीचिका श्रीव्रजनाथभट्टकृता (वेदान्त) १

२५ स्फोटवादसंग्रहः। अत्र श्रीकाशीनाथ...। स्फोटतत्त्वनिरूपणम्... स्फोटसिद्धिः... वैयाकरणभूषणसारस्थ स्फोटवादः ... शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च स्फोटवादाः। (प्रथमः) १

२६ ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम्। श्रीसुन्दरभट्टविरचितसिद्धान्तसेतुकाऽभिधटीकासमेतं देवाचार्य-प्रणीतसिद्धान्तजाह्नवीयुतम् २

२७ षड्दर्शनसमुच्चयः। बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शन संग्रहः। मणिभद्रकृत-टीकया सहितः। हरिभद्रसूरिकृतः। १

२८ शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः। प्रमेयरत्नार्णवः १

२९ अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्याः ... टीका। १३

३० वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा संस्कारप्रकाशात्मकः। १२

३१ वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ५

३२ स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः। ४

३३ वेदान्तरत्नमञ्जूषा। श्रीभगवत्पुरुषोत्तमाचार्यकृता। २

३४ प्रस्थानरत्नाकरः। गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितः ३

३५ वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम्। १

३६ योगदर्शनम्। परमहंसपरिव्राजकाचार्य-नारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिका-समा-ख्यया संवलितम्। २

३७ वेदान्तदर्शनम्। परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वती स्वामिकृत ब्रह्मामृतवर्षिणी समाख्य व्याख्यासंवलितम्। ४

३८ विश्वप्रकाशः। कोशः। विद्वद्वर श्रीमहेश्वरसुधीविरचितः। २

३९ श्रीसुबोधिनी। श्रीवल्लभाचार्यविनिर्मिता। श्रीमद्भागवतव्याख्या गोस्वामीश्रीविट्ठलनाथदीक्षि-तविरचित टिप्पणीसहिता। २

४० वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः। ४

४१ वेदान्तसिद्धान्तसंग्रहः। श्रुतिसिद्धान्तापरनामकः। श्रीब्रह्मचारिवनमालिमिश्रविरचितः। द्वैता-द्वैतदर्शनानुगतः। २

४२ स्वानुभवादर्शः। श्रीमत्परमहंसपरिव्राजकाचार्य नारायणाश्रमशिष्यमाधवाश्रमविरचित। स्वकृतटीकाविभूषितश्च। १

४३ याज्ञवल्क्यस्मृतिः। बालम्भट्टीसमाख्य व्याख्यासमलङ्कृतमिताक्षरासहिता। व्यवहाराध्याय १०

पत्रादिप्रेषणस्थानम् } हरिदास गुप्तः, चौखम्बा, बनारस, सिटी,

वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् ।
यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः ॥ (८। ३८२)

इत्यत्र क्षत्रियावैश्ययोः प्रकृतत्वात् ते क्षत्रियावैश्ये गुप्ते रक्षिते अनिच्छन्त्यौ गच्छन् ब्राह्मणः सहस्रं दण्डं दापनीयः । शूद्रायां रक्षितायां गमने क्षत्रियवैश्ययोरपि सहस्रमेव दण्डो भवेदित्यर्थः ।

४ । अगुप्तास्थले तेनैवैतदग्रे उक्तं, ( ८ श्लो. ३८४।३८५)
क्षत्रियायामगुप्तायां वैश्ये पञ्चशतो दमः ।
मूत्रेण मौण्ड्यमिच्छेत्तु क्षत्रियो दण्डमेव वा ॥
अगुप्ते क्षत्रियावैश्ये शूद्रां वा ब्राह्मणो व्रजन् ।
शतानि पञ्च दण्ड्यः स्यात्सहस्रं त्वन्त्यजास्त्रियम् ॥ इति ।

मूत्रं गर्दभस्य । मुण्डनस्य दण्डस्य च विकल्पः । दण्डश्च पञ्चशतरूपः । शूद्रामित्यत्रापि अगुप्तामिति बोध्यम् । अन्त्यजश्चाण्डालादिः ।

५ । विशेषमाह * एतच्चेति । मूलाद्युक्तमुभयं चेत्यर्थः । सखा मित्रम् । आदिग्राह्यं वचने व्यक्तम् । माता सपत्नमाता । स्त्रीत्यस्य त्रिषु सम्बन्धः । अभ्यर्हितत्वात् तस्य पूर्वनिपातः । आचार्यो गुरुः । प्रव्रजिता बौद्धाभिक्षुकी । धात्री उपमाता । साध्वी पतिव्रता । * वर्णोत्तमेति । पुरुषोत्तम इतिवत्समासः । बहुव्रीहिर्वा । अतिदेशमाह * गुर्विति । अतएवाह * शिश्नेति । * उत्कर्तनात्, छेदनात् । अन्ययोगे पञ्चमी । * अन्यः, धनदण्डः ।

६ । मूलद्वितीयार्धाद्यपादं व्याचष्टे *प्रातिलोम्ये इति । इदं काक्षणिकमित्याह *उत्कृष्टेति । पुंस इत्यस्यार्थः * क्षत्रियादेरिति ।

७ । विशेषमाह * एतच्चेति । वधरूपदण्डनं चेत्यर्थः ।

December 1914.

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 204.

४३२ ८ ३६८

# व्यवहार- बालभट्टी

इति प्रसिद्धया लक्ष्मीनामिकया

पायगुण्डे इत्युपनामकेन बालंभट्टेन स्वपत्न्याः लक्ष्मीदेव्याः

स्मारकत्वेन तन्नाम्ना रचितया बृहत्या टीकया सहिता

मिताक्षरा 174.56

श्रीयुतगोविन्ददासमहाशयप्रदर्शितरीत्या

पर्वतीयनित्यानन्दपन्तेन परिष्कृत्य संशोधिता।

VYAVAHRA-BÂLAMBHATTI

THE EXTENSIVE COMMENTARY ON THE MITÂKSHARÂ

WITH THE ORIGINAL

BY

Bàlambhatta Páyagunde

EDITED BY

Pandit Nityanand Pant Parvatiya

Under the supervision of Shri Govinda Das.

FASCICULUS XI–११

PUBLISHED & SOLD BY THE SECRETARY;

CHOWKHAMBA SANSKRIT BOOK-DEPOT.

BENARES.

AGENTS:– OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHARAMA MUKUNDAJI BOMBAY:

PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press.*

BENARES.

*Price Rupee one.*

*अन्यत्र तु, अगुप्तायां तु। यद्यपि मानवे वक्ष्यमाणवाक्ययोर्व्युत्क्रमेणाव्यवहितपाठः, अतएव ताविस्यनेन वैश्यक्षत्रियपरामर्शः, तथापि अत्र एतच्चेतिमूलोक्ते अन्यत्रेत्यत्र च उक्तक्रमेणैव मानाकाङ्क्षेति तत्क्रमेण कथयन्नादावाद्ये मानमाह * उभावपीति। हिर्निश्चये। * तावेव, पूर्वोक्तावेव । तथा च क्षत्रियवैश्यावुभावपि रक्षितया ब्राह्मण्या सह विप्लुतौ सङ्गतौ कृतमैथुनौ शूद्रवत् दण्ड्यौ। गुप्ते सर्वेण हीयते इत्यत्रोक्तप्रकारेण सर्वेण शरीरेण धनेनच हीनौ कार्यौ। सर्वस्वं गृहीत्वा वध्यावित्यर्थः।

८। पक्षान्तरमाह *कटाग्निनेति। अत्र सर्वस्वग्रहणं नास्ति। कटाग्नीति मारणप्रकारविशेषोपदेशः। सच स्तेयप्रकरणे उक्तः।

वसिष्ठेन तत्र विशेष उक्तः,

शूद्रश्चेत् ब्राह्मणीमभिगच्छेद्वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत्, ब्राह्मण्याः शिरसि वापनं कृत्वा सर्पिषाऽभ्यज्य नग्नां खरमारोप्य महापथमनुव्राजयेत्, पूता भवतीति विज्ञायते । वैश्यश्चेत् ब्राह्मणीमभिगच्छेत् लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येत् । अग्रे प्राग्वत् । राजन्यश्चेत् ब्राह्मणीमभिगच्छेत् शरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येत् । अग्रे प्राग्वत् । एवं वैश्यो राजन्यायां मैथुनमाचरन्, शूद्रश्च राजन्यावैश्ययोरिति ।

इदं च प्राणान्तिकदण्डविधानं अत्यन्तश्रोत्रियदारत्वादिगुणवद्ब्राह्मणीविषयम् । दण्डगुरुत्वात् ।

वैश्यः सर्वस्वदण्डः स्यात्संवत्सरनिरोधतः ।
सहस्रं क्षत्रियो दण्ड्यो मौण्ड्यं मूत्रेण चार्हति ॥

इति मनुना (८ ३७५) इतः पूर्वमन्यत्र दण्डान्तरविधानाच्च।

९। एवमाद्ये संमतिमुक्त्वा द्वितीये तामाह * ब्राह्मणीमिति । सेवेतामिति पाठः । गच्छतामिति तदर्थः । पञ्चशतमि-

॥ श्रीः ॥

—:०:—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितमव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोदितम् ॥ २ ॥

स्तवकः—२०४

१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतकैः सुन्दरैः [illegible] एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्त[illegible] ।
२ प्राचीना दुर्लभाश्चामुद्रिता [illegible] एवात्र सुपरि[illegible] मुद्रयन्ते ।
३ काशिकराजकीयप्रधानसंस्कृतपाठशालाध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो [illegible] एतत्परिशोधनादिकार्यकारिणो भवन्ति ।
४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्-मुद्राः ७ आनकाः ८
५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... ... " " १ " ०
६ आपणव्ययः पृथग् नास्ति । ... ... ... ... ... ...

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे ... ... ... ... २
(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १०
(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०
(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् ( वेदान्तः ) २
(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १
(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपादः(मीमांसा) २
(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णा ( मीमांसा ) २
(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्णं । ( वेदान्तः ) ६
(९) स्याद्वादमञ्जरी मल्लिषेणनिर्मिता सम्पूर्णा २
(१०) सिद्धित्रयम्-विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्णं( वेदान्तः)२
(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४
(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादि सप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः ( न्यायः ) ... ... ... ५
(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् ( मीमांसा ) ... ... २
(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा ) १६

स्यत्र बहुव्रीहेरर्शआद्यच् । अरक्षितां ब्राह्मणीं तु यदि वैश्य-क्षत्रियौ गच्छतः तदा वैश्यं पञ्चशतदण्डयुक्तं कुर्यात् क्षत्रियं तु सहस्रदण्डोपेतं कुर्यात् इत्यर्थः । रक्षाद्यर्थमधिकृतत्वेन क्षत्रियस्य वैश्यापेक्षयाऽधिकदण्डविधिरिति भावः । वैश्ये चायं पञ्चशतदण्डः शूद्राभ्रमादिना निर्गुणजातिमात्रोपजीविब्राह्मणीगमनविषयः । तद्भिन्नब्राह्मणीगमने तु वैश्यस्यापि सहस्रदण्ड एवेति बोध्यम् ।

१०। अथ शूद्रे आह *शूद्रस्येति। *गुप्तांतु, उत्कृष्टवर्णाम् । * तस्य, शूद्रस्य । * तेनैव, मनुनैव । *शूद्र इति । अत्र सर्वत्र सामान्ये नपुंसकम् । द्वैजातमित्यत्र तस्येदमित्यण् । गच्छेदिति यदि तदेतिच शेषः ।

अगुप्तमङ्गसर्वस्वी गुप्तं सर्वेण हीयते ।

इत्युत्तरार्द्धपाठः । तथाच भर्त्रादिभिः रक्षितामरक्षितां वा द्विजातिस्त्रियं यदि शूद्रो गच्छेत्तदा तयोर्मध्ये अरक्षिताम् आवसन् गच्छन्, अङ्गं च सर्वस्वं च ते दण्डो यस्य तादृशो भवति । अत्र विशेषाश्रवणेऽपि अङ्गं लिङ्गमेव ।

आर्यस्त्र्यभिगमने लिङ्गोद्धारः सर्वस्वहरणंच गुप्तां चेद्वधोऽधिक इति गौतमवचनात् ।

तथाच लिङ्गच्छेदः सर्वस्वहरणञ्च कार्यम् । रक्षितां तु गच्छन् धनेन शरीरेणच हीनः कार्यः । सर्वस्वं गृहीत्वा वध्य इत्यर्थः । अङ्गसर्वस्वैरिति पाठे व्यक्त्यभिप्रायं बहुवचनम् । अत्र पाठान्तरं धृत्वा प्राचां व्याख्यानम् असम्बद्धं स्पष्टमेवेत्युपेक्षितम् । आविशेदिति पाठान्तरम् । अभिगच्छेदिति तदर्थः । येनाङ्गेनापराद्धं तेन हीन इति कल्पतरूक्तं तु न युक्तम् उक्तगौतमविरोधात् ।

तथा च तद्ग्रहणे प्राप्ते परभार्येत्यनेन तद्व्युदासः । आद्यायां नियोगसत्त्वेन तदावश्यकत्वादन्यस्यामप्यवरुद्धायांमेनैव तत्त्वासम्भवादिति भावः ॥ २८३ ॥

मि० अव. किंच ।

या० नीवीस्तनप्रावरणसक्थिकेशावमर्शनम् ।
अदेशकालसंभाषं सहैकस्थानमेव च ॥ २८४ ॥

मि० यः पुनः परदारपरिधानग्रन्थिप्रदेशकुचप्रावरणजघनमूर्द्धरुहादिस्पर्शनं साभिलाष इवाचरति, तथा अदेशे निर्जने जनताकीर्णे वाऽकालेऽन्धकाराकुले- वा संलापनं करोति, परभार्यया सहैकमञ्चकादौ रिरंसयेवावतिष्ठते, सोऽपि संग्रहणे प्रवृत्तो ग्राह्यः । एतच्चाशङ्क्यमानदोषपुरुषविषयम्। इतरस्य तु न दोषः ।

यथाह मनुः, ( अ. ८ श्लो. ३५५ )

यस्त्वनाक्षारितः पूर्वमभिभाषेत कारणात् ।
न दोषं प्राप्नुयात्किञ्चिन्न हि तस्य व्यतिक्रमः ॥ इति ।

यः परस्त्रिया स्पृष्टः क्षमते असावपि ग्राह्यः इति- तेनैवोक्तम्, अ. ८ श्लो. ३५८ )

स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तथा ।
परस्परस्यानुमते सर्वं संग्रहणं स्मृतम् ॥ इति ।

यश्च मयेयं विदग्धाऽसकृद्रमितचरेति श्लाघया भुजङ्गजनसमक्षं ख्यापयति असावपि ग्राह्य इति- तेनैवोक्तम्, ( ना. व्यव. १२ । ६९ )

दर्पाद्वा यदि वा मोहाच्छ्लाघया वा स्वयं वदेत् ।
पूर्वं मयेयं भुक्तेति तच्च संग्रहणं स्मृतम् ॥ इति ॥ २८४ ॥

११। नार्या इति तुर्यपादं व्याचष्टे *नार्याः पुनरिति। विनिगमनाविरहादाह * कर्णयोरिति । अयं न त्रितयशेषः। वधान्तर्गताङ्गच्छेदविधानात् । तथाच चरमशेषत्वेनास्य स्थलद्वये तदनुक्त्या न्यूनतापत्तिः, तां निराचष्टे * आनुलोम्येन वा सवर्णं वेति । प्रातिलोम्यस्थले प्रोक्तदण्डविधानात् तदन्यत्र गमने ऽल्पदोषत्वेनाङ्गच्छेदाभावस्य युक्तिसिद्धत्वेनानुलोम्यगमने गुणवदगुणवदाद्यपेक्षयोचितधनदण्डः सवर्णगमने तु धिक्कारादिदण्ड इति देशाद्यनुसारेण दण्डः कल्प्य इत्यर्थः ।

मनुना तु— ( ८ । ३६१ )

न सम्भाषां परस्त्रीभिः प्रतिषिद्धः समाचरेत् ।
निषिद्धो भाषमाणस्तु सुवर्णं दण्डमर्हति ॥

इति सामान्येनोक्तम् । षोडशमाषात्मकं सुवर्णम् ।

१२ । विशेषमाह * अयं चेति । राज्ञः अभिषेकादिगुणयुक्तस्य दुष्टशासनकर्तव्यतयेति भावः । * न द्विजातीति । न वर्णत्रयस्येत्यर्थः । मात्रं कात्स्न्यें । गौतममाह * ब्राह्मण इति ।

१३ । तत्रापि विशेषमाह * यदात्विति ।

* स्वयमेव, द्विजातिरेव । कार्यातिपातशङ्काया हेतुत्वस्योक्तत्वाद्धेत्वन्तरं मानवमाह * शस्त्रमिति । उपरुध्यते इत्यग्रे नाततायीत्यतः पूर्वम्— ( मनु. अ. ८ )

द्विजातीनां च वर्णानां विप्लवे कालकारिते ॥ ( ३४८ )
आत्मनश्च परित्राणे दक्षिणानाञ्च सङ्गरे ।
स्त्रीविप्राभ्युपपत्तौच घ्नन् धर्मेण न दुष्यति ॥ ( ३४९ )
गुरुं वा बालवृद्धौवा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥ ( ३५० )

इति पाठः । एतत्सूचनार्थमेव मध्ये तथेत्युक्तम् । ब्राह्म-

या० १। उपायान्तरमप्युच्यते इत्याह * किं चेति। नीवी कट्यंशुकग्रन्थिरिति कोशादाह *परिधानेति। तद्रूपप्रदेशेऽन्वर्थः। स्तनप्रावरणेत्येकमित्याह *कुचप्रावरणेति। इदमप्युपलक्षणमित्याह*आदीति। अन्यथा दोषाभावापात *साभिलाप इति। अस्यायोग्यत्वादाह * इवेति। अन्वयाय योग्यक्रियां पूरयति * आचरतीति। एवमग्रेऽपि बोध्यम्। अदेशेत्यनेन व्यासोक्तोभयं संगृह्णाति * निर्जने जनताकीर्णे वेति। तथा च तत्र अदेशे इत्यनेन जनताकीर्णे इत्यस्यैव ग्रहः। निर्जने इत्यस्य पृथगुपादानादिति बोध्यम्।

तथा च मनुः, (अ. ८। ३५६)

परस्त्रियं यो ऽभिवदेत्तीर्थे ऽरण्ये वने ऽपि वा।

नदीनां चापि सम्भेदे स संग्रहणमाप्नुयात्॥

इति। अकाले इत्यस्यार्थो ऽन्धकाराकुले वेति। अकाले इति च्छेदः। सहैकेत्यस्य तथा सहैकत्र स्थानं स्थितिं करोतीति शाब्दोऽर्थः। तत्फलितमाह * परेति। तत्र एवोऽप्यर्थे। तदाह * सोऽपीति।

२। विशेषमाह * एतच्चेति। संग्रहणप्रवृत्तग्रहणं चेत्यर्थः। आशङ्क्यमानेति बहुव्रीहिः। * यस्त्विति। यः पूर्वमनाक्षारितः परस्त्रीप्रार्थनाभिशापरहितः असौ विट इति न निन्दितः, केनचित् कारणेन जनसमक्षमप्याभिभाषणं कुर्यात्, न स दण्ड्यत्वादिदोषं प्राप्नुयात्, यस्मान्न कश्चित्तस्यापराधोऽस्तीत्यर्थः। एवं भिक्षुकादावपि न दोष इत्यपि—

तेनैवोक्तं, (अ. ८। ३६०)

भिक्षुका वन्दिनश्चैव दीक्षिताः कारवस्तथा।

---

१ पराभिलापस्य प्रत्यक्षायोग्यत्वादित्यर्थः।

णादिभिः खड्गाद्यायुधं प्राप्तं यत्र काले वर्णानामाश्रमाणां च साहसकारादिभिर्धर्मः कर्तुं न दीयते, तथा तेषामराजकेषु राष्ट्रेषु परचक्रादिना कालजनितसङ्करादौ आत्मरक्षार्थं च दक्षिणानां गोधनाद्यपहारनिमित्ते सङ्ग्रामे च स्त्रीब्राह्मणापत्तिनिवारणार्थं च धर्मयुद्धेनानन्यगतिकतया परान् हिंसन् न दोषभाग्भवति, परमारणे ऽप्यत्र साहसदण्डो न कार्यः । गुरुबालवृद्धबहुश्रुतब्राह्मणानाम् अन्यतमं वधोद्यतमागच्छन्तं विद्यावित्तादिभिरुत्कृष्टं पलायनादिभिरपि स्वानिस्तरणाशक्तौ निर्विचारं हन्यात् । अतएवोशना, गृहीतशस्त्रमाततायिनं हत्वा न दोषः ।

कात्यायनोऽपि,

आततायिनि चोत्कृष्टे तपःस्वाध्यायजन्मभिः ।
वधस्तत्र तु नैव स्यात्पापे हीने वधो भवेत् ॥ इति ।

मेधातिथिगोविन्दराजौ तु स्त्रीविप्रेति पूर्वस्यायमनुवादः । गुर्वादीनपि हन्यात् किमुतान्यानिति व्याचक्षाते।*नाततायीति।जनसमक्षे रहसि वा वधोद्यतस्य मारणे हन्तुर्न कश्चिदपि अ[illegible] यश्चित्ताख्यो दोषो भवति, यतो हन्तृगतो मन्युः [illegible] निनी देवता तं हन्यमानगतं क्रोधम् ऋच्छति विवर्जयति चेद [illegible] यतीत्यर्थः । अप्रकाशमितिच्छेदः ।

१४ । विशेषान्तर[illegible]दण्डमो[illegible]ति । अत्र न समुच्चयो विवक्षितः । प्रत्येकस्यैव पा[illegible]धाभिमा[illegible]गा च रक्षितेत्यपि बोध्यम् । मानवे तथोक्तेः । * योब्रा[illegible]नाश[illegible]भति । यो दण्डो ब्राह्मण्यामरक्षितायां गमने तयोः प्रतिपादि[illegible]ः—

वैश्यं पञ्चशतं कुर्यात्क्षत्रियं च सहस्रिणम् ।

इत्यनेन तमेव दण्डं दण्डद्वयं यथाक्रमं तावुभौ वैश्यक्षत्रियावर्हत इत्यर्थः । क्षत्रियस्य वैश्यापेक्षयोत्कृष्टत्वेऽपि रक्षा-

सम्भाषणं सह स्त्रीभिः कुर्युरप्रतिवारिताः ॥ इति ।

भिक्षुकाः भिक्षाजीविनः यतयो वा । वन्दिनः स्तुतिपाठकाः । दीक्षिता यज्ञार्थं कृतदीक्षाः । कारवः सूपकारादयः । एते भिक्षादिकार्यार्थं गृहिस्त्रीभिः सह सम्भाषणमानिवारिताः कुर्युः । एवं चैषां सम्भाषणं ता अपि कुर्युरित्यर्थः । निवारणे तु नैवमिति अप्रतिवारिता इत्यनेन सूचितम् ।

३ । विशेषान्तरमाह * य इति । * तेनैव, मनुनैव । एवमग्रेऽप्युभयत्र । * स्त्रियमिति । यः स्प्रष्टुमनुचिते स्तनजघनादिदेशे परस्त्रियं स्पृशेत्, तया वा वृषणादिके देशे स्पृष्टः क्षमते, तथाऽन्योन्याङ्गीकरणे सति यत्प्रवर्त्तमानं सङ्ग्रहणम्, इदं सर्वं सङ्ग्रहणं मन्वादिभिः स्मृतमित्यर्थः । * असकृदिति । भूतपूर्वे चरडिति चरट् ॥ २८४ ॥

मि० अव. प्रतिषिद्धयोः स्त्रीपुंसयोः पुनः संलापादिकरणे दण्डमाह ।

या० स्त्री निषेधे शतं दद्याद् द्विशतं तु दमं पुमान् ।
प्रतिषेधे तयोर्दण्डो यथा संग्रहणे तथा ॥ २८५ ॥

मि० प्रतिषिध्यते इति प्रतिषेधः । पतिपित्रादिभिर्येन सह संभाषणादिकं निषिद्धं तत्र प्रवर्तमाना स्त्री शतपणं दण्डं दद्यात् । पुरुषः पुनरेवं निषिद्धे प्रवर्तमानो द्विशतं दद्यात् । द्वयोस्तु स्त्रीपुंसयोः प्रतिषिद्धे प्रवर्तमानयोः संग्रहणे संभोगे वर्णानुसारेण यो दण्डो वक्ष्यते स एव विज्ञेयः ।

एतच्च चारणादिभार्याव्यतिरेकेण । (अ.८श्लो.३६२)
नैष चारणदारेषु विधिर्नात्मोपजीविषु ।

यामधिकृतत्वादधिकदण्ड इति उक्तम्। अयं च वैश्यस्य र-क्षितक्षत्रियागमने पञ्चशतरूपो दण्ड उक्तः स लघुत्वाद् गुणव-द्वैश्यस्य निर्गुणजातिमात्रोपजीविक्षात्रियायाः शूद्राभ्रान्त्यादि-गमनविषयो बोध्यः। अन्यत्र तु प्रागुक्तमेव। क्षत्रियस्यतु त-त्र ज्ञानतो युक्त एव सहस्रं दण्ड इति भावः॥ २८६॥

मि० अव. पारदार्यप्रसङ्गात् कन्यायामपि दण्डमाह।

या० अलङ्कृतां हरेत्कन्यामुत्तमं ह्यन्यथाऽधमम्।
दण्डं दद्यात्सवर्णातु प्रातिलोम्ये वधः स्मृतः॥ २८७॥

मि० विवाहाभिमुखीभूतामलङ्कृतां सवर्णां क-न्यामपहरन्नुत्तमसाहसं दण्डनीयः। तदनभिमुखीं सवर्णां हरन् प्रथमसाहसम्। उत्कृष्टवर्णजां कन्या-मपहरतः पुनः क्षत्रियादेर्वध एव। दण्डविधानाच्चा-पहर्तृसकाशादाच्छिद्यान्यस्मै देयेति गम्यते॥ २८७॥

बा० १। भिन्नविषयत्वात्सङ्गतिमाह * पारदार्येति। पर-दारगमनदण्डेत्यर्थः। * कन्यायामपि, तद्विषयहरणेऽपि। अलं-कृतामित्यस्यैव व्याख्या *विवाहाभिमुखीभूतामिति। उत्तमं द-ण्डं दद्यादित्यस्यार्थं * उत्तमेति। अन्यथेत्यस्यार्थः * तदन-भिमुखीमिति। विवाहानभिमुखीमित्यर्थः। * सवर्णामिति। अनेन सवर्णात्विति पाठः सूचितः। सवर्णास्विति पाठे भिन्नं वाक्यम्। तद्विषये पूर्वोक्तं बोध्यमित्यर्थः।

२। तुर्यपादार्थमाह * उत्कृष्टेति। ब्राह्मणस्य तदसम्भ-वादाह *क्षत्रियेति। प्रातिलोम्ये इति तत्र तद्धर्तृपरमिति भावः। तात्पर्यार्थमाह * दण्डेति। तस्य दुष्टत्वेनायोग्यत्वेनानाधिकृत-त्वेनानाधिकारिणा कृतमकृतमेवेति न्यायेन तस्याः कन्यात्वाक्ष-

सञ्जयन्ति हि ते नारीः निगूढाश्चारयन्ति च ॥

इति मनुस्मरणात् ॥ २८५ ॥

वा० १ । प्रतिषिद्धयोरिति । अनेन सह त्वया न सम्भाष्यमनया च सह त्वयेत्येवं पूर्वं प्रतिषिद्धयोः स्वैरिणीजारयोरित्यर्थः । *पुनः, पश्चात् । प्रत्यासत्त्या प्रतिषेधपदार्थमाह *प्रतीति । कर्मणि घञ् । अनेन निषेध इत्यत्राप्येवमिति सूचितम् ।

२ । वाक्यार्थमाह *पतीति । शेषमाह *प्रवर्तमानेति । द्वितीयपादार्थमाह *पुरुष इति ।

३ । उत्तरार्द्धमतिदेशविधेरित्याह *द्वयोस्त्विति । अनुक्तत्वादाह *वक्ष्यते इति । सर्वं वाक्यमितिन्यायेनाह *स एवेति ।

४ । विशेषमाह *एतच्चेति । उक्तदण्डनं चेत्यर्थः । चारणा नटादयः । आत्मनोपजीविनश्च तद्भिन्नाः वेश्यावृत्तिजीविनां दाराः । विधिर्नात्मोपेति पाठान्तरम् । तथा च एषः परस्त्रियं नाभिवदेदित्यादिः संम्भाषणादिनिषेधविधिः नटगायनादिदारेषु नास्ति । तथा भार्या पुत्रः स्वका इत्युक्तत्वात् भार्यैवात्मा तयोपजीवन्ति धनलाभाय तस्या लाभं क्षमन्ते ये तेषां नटादिभिन्नानां ये दाराः तेष्वपि निषेधविधिर्नास्ति । हि यस्मात् ते चारणा आत्मोपजीविनश्च परपुरुषानानीय तैः स्वभार्याः संश्लेषयन्ते, स्वयमागतांश्च पुरुषान् प्रच्छन्ना भूत्वा स्वाज्ञानं विभावयन्तो व्यवहारयन्तीत्यर्थः । तत्रापि विशेषः—

तेनैवोक्तः, ( ८ । ३६३ )

किञ्चिदेवतु दाप्यः स्यात्सम्भाषां ताभिराचरन् ।
प्रैष्यासु चैकभक्तासु रहः प्रव्रजितासु च ॥ इति ।

रहो निर्जनदेशे चारणादिस्त्रीभिः सम्भाषणं कुर्वन् स्वल्पं दण्डलेशं राज्ञा दाप्यः । तासामपि परकीयत्वात् । तथा

त्या विवाहो भवत्येवेति भावः ॥ २८७ ॥

मि० अथ. आनुलोम्यापहरणे दण्डमाह ।

या० सकामास्वनुलोमासु न दोषस्त्वन्यथा ऽधमः ।

मि० यदि सानुरागां हीनवर्णां कन्यामपहरति तदा दोषाभावान्न दण्डः । अन्यथा त्वनिच्छन्तीमपहरतः प्रथमसाहसो दण्डः ।

मि० अथ. कन्यादूषणे दण्डमाह ।

या० दूषणे तु करच्छेद उत्तमायां वधस्तथा ॥२८८॥

मि० अनुलोमास्वित्यनुवर्तते । यद्यकामां कन्यां बलात्कारेण नखक्षतादिना दूषयति तदा तस्य करश्छेत्तव्यः । यदा पुनस्तामेवाङ्गुलिप्रक्षेपेण योनिक्षतं कुर्वन्दूषयति तदा मनूक्तषट्शतसहितोऽङ्गुलिच्छेदः । (अ. ८ श्लो. ३६७)

अभिषह्य तु यः कन्यां कुर्याद्दर्पेण मानवः ।
तस्याशु कर्त्ये अङ्गुल्यौ दण्डं चार्हति षट्शतम् ॥ इति ।

यदा पुनः सानुरागां पूर्ववद् दूषयति तदापि तेनैव—विशेष उक्तः, (अ. ८ श्लो. ३६८)

सकामां दूषयंस्तुल्यो नाङ्गुलिच्छेदमर्हति ।
द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये ॥ इति ।

यदा तु कन्यैव कन्यां दूषयति विदग्धा वा तत्रापि विशेषस्तेनैवोक्तः, (अ. ८ श्लो. ३६९ । ३७०)

कन्यैव कन्यां या कुर्यात्तस्याः स्याद् द्विशतो दमः ।
या तु कन्यां प्रकुर्यात् स्त्री सा सद्यो मौण्ड्यमर्हति ।
अङ्गुल्योरेव वच्छेदं खरेणोद्वहनं तथा ॥ इति ।

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 174.

# व्यवहार- बालंभट्टी

इति प्रसिद्धया लक्ष्मीनामिकया

पायगुण्डे इत्युपनामकेन बालंभट्टेन स्वपत्न्याः लक्ष्मीदेव्याः

स्मारकत्वेन तन्नाम्ना रचितया बृहत्या टीकया सहिता

मिताक्षरा

श्रीयुतगोविन्ददासमहाशयप्रदर्शितरीत्या

पर्वतीयनित्यानन्दपन्तेन परिष्कृत्य संशोधिता ।

# VYAVAHÂRA-BÂLAMBHATTI

THE EXTENSIVE COMMENTARY ON THE MITÂKSHARÂ

WITH THE ORIGINAL

BY

Bâlambhatta Pâyagunde

EDITED BY

Pandit Nityanand Pant Parvatiya

Under the supervision of Shri Govinda Das.

FASCICULUS II.

*PUBLISHED AND SOLD BY THE SECRETARY.*

CHOWKHAMBÂ SANSKṚIT BOOK-DEPOT.

BENARES.

AGENTS:- OTTO HARRASSOWITZ: LEIPZIG:

PANDITA JYESHTHÂRAMA MUKUNDAJI BOMBAY:

PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Dasa Gupta,*

AT THE VIDYÂ VILÂSA PRESS

BENARES.

*Price Rupee one.*

Registered according to Act XXV of 1867. (All Rights Reserved.)

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितगुच्छाभराततच्छत्रगुम्फिता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादानन्दाऽऽमोदमोदितम् ॥ २ ॥

स्तबकः— १७५

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतकं सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो वि[illegible] एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः श्रीमद्भिः सिंहलद्वीपवासिभिश्च एतद्ग्राहकैः देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तबकम् " " १ " ०

६ आपणव्ययः पृथग् नास्ति।

७ साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

| | | मुद्रिताः स्तबकाः |
|---|---|---|
| (१) संस्काररत्नमाला। गोपीनाथभट्टकृता | (संस्कारः) | २ |
| (१) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः | (व्याकरणम्) | १० |
| (१) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम्। सम्पूर्णम्। | | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम्। विशिष्टाद्वैतदर्शनप्रकरणम्। श्रीमल्लोकाचार्य्यप्रणीतम्। श्रीनारायणतीर्थ विरचित भाट्टभाषा प्रकाशसहितम्। सं० | (वेदान्त) | २ |
| (५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः सम्पूर्णः | (ज्योतिषः) | १ |
| (६) भाट्टचिन्तामणिः। महामहोपाध्याय-श्रीगागाभट्ट विरचितः। तर्कपादः | (मीमांसा) | २ |

कन्यां कुर्यादिति कन्यां योनिक्षतवर्तीं कुर्यादित्यर्थः।

यदा पुनरुत्कृष्टजातीयां कन्यामविशेषात्सकामामकामां वाऽभिगच्छति तदा हीनस्य क्षत्रियादेर्वध एव।

( अ. ८ श्लो. ३६६ )

उत्तमां सेवमानस्तु जघन्यो वधमर्हति।

इति मनुस्मरणात्।

यदा सवर्णां सकामामभिगच्छति तदा गोमिथुनं शुल्कं तत्पित्रे दद्यात् यदीच्छति। पितरि तु शुल्कमनिच्छति दण्डरूपेण तदेव राज्ञे दद्यात्। सवर्णामकामां तु गच्छतो वध एव।

यथाह मनुः, ( अ. ८ श्लो. ३६६। ३६४ )

शुल्कं दद्यात्सेवमानः समामिच्छेत्पिता यदि॥

योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति।

सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः॥इति२८८॥

वा० १। *दण्डामिति। दण्डाभावपूर्वकं दण्डमित्यर्थः। तात्पर्यार्थमाह *न दण्डइति। अन्यथा त्वित्यस्यैव व्याख्या *अनिच्छन्तीमिति। अधम इत्यस्यार्थः * प्रथमेति।

उ० २। कन्येति। एवमपहारे दण्डशुल्केत्यादिः। अत्र सर्वत्र कन्यापदमविवाहितापरं लक्षणया। प्रातिलोम्यादौ वक्ष्यमाणत्वादाह * अनुलोमास्विति। आद्यपादं व्याचष्टे * यदीति। सकामादौ विशेषाणां वक्ष्यमाणत्वादाह * अकामामित्यादिना। नखक्षतादिनेत्यस्य फलमाह * यदापुनरिति। * तामेव, अकामां बलात्कारितां कन्यामेव। *अभिपद्येति। यो मनुष्योऽभिपद्य बलात्कारेण अभिभूयेति तु कल्पतरुः। * दर्पेणेति।

मियं वेश्या वर्णानुलोमजभिन्नगम्यजात्यन्तरान्तःपातिनी, उत वर्णानुलोमजान्तःपातिनी, उत प्रतिलोमजान्तःपातिनी। तत्राद्यं दूषयति * वर्णानुलोमेति। तादृशजात्यन्तराभावादेव तदन्तःपातित्वेन गम्यत्वाभाव इत्यर्थः। न द्वितीय इत्याह * तदन्तरिति। तत्त्वे च सति स्वैरिण्यादिवदेव तासां पतिपरायणत्वविधानादगम्यात्वमित्यर्थः।

६। नापि तृतीय इत्याह * प्रातिलोमजत्वे इति। * नतरामिति। आतिशयितगम्यत्वाभाव इत्यर्थः। नितरामिति पाठे न तासामिति पाठः। अगम्यत्वमिति पाठे प्रतिलोमजानां दुष्टात्वेन तद्गमनस्य निषिद्धत्वादित्यर्थः। गम्यात्वमिति पाठः। गम्यत्वमिति पाठे सामान्ये नपुंसकम्। एवमन्यत्रापि। स्वैरिण्यादयो न परपुरुषगम्या इत्याक्षेपमुपसंहरति * अत इति। उक्तहेतुजातादित्यर्थः। * तासां, वर्णानुलोमप्रतिलोमजानां सर्वासां स्वैरिण्यादीनाम्। * निन्दितेति। परपुरुषोपभोगस्य नेषिद्धत्वात्। * संसर्गस्य च, तस्यापि।

७। समाधत्ते * सत्यमित्यादिना। सत्यमित्यर्द्धाङ्गीकारे। तथापि योजयति * किं त्विति। * अत्र, नारदीयादौ। * पित्रादीति। पित्रादिरक्षकश्च राजदण्डश्च तयोर्भयादिरूपदृष्टदोषाभावाद् गम्यत्वरूपवाचोयुक्तिर्वचनमात्रमित्यर्थः। अथ तासामेव दण्डोऽस्तु अत आह *स्वैरिण्याद्यानामिति। हेत्वन्तरं मानवमाह *कन्यामिति। सम्भोगार्थमुत्कृष्टम् उत्कृष्टजातिं पुरुषं भजन्तीं सेवमानां कन्यां किञ्चिदपि स्वल्पमपि दण्डं न दापयेदित्यर्थः। ननु अयं निषेधः कन्याया एव न स्वैरिण्याद्याः, अत आह *लिङ्गेति। लिङ्गदर्शनं निमित्तमात्रं नाऽव्यभिचारितो हेतुः। अतः कन्यापि स्त्री स्वैरिण्यादयोऽपि स्त्रिय इत्युभयत्र स्त्रीत्वाविशेषा-

दर्पादिभिः समानजातीयां कन्यां गमनवर्जम् अङ्गुलिप्रक्षेपमात्रेणैव कुर्यात् नाशयेत् योनिक्षतवतीं कुर्यादिति यावत्। तस्य क्षिप्रमेवाङ्गुलिद्वयं छेत्तव्यं, स षट्शतं दण्डं चार्हतीत्यर्थः।

३। अकामामित्यस्य फलमाह * यदापुनरिति। अत एव न बलात्कार इति भावः। * पूर्ववत्, अङ्गुलिप्रक्षेपादिमात्रेण योनिक्षतकरणेन। *तेनैव, मनुनैव। एवमग्रेऽपि। दूषयंस्तुल्यो नाङ्गुलीति पाठः। तुल्यः समानजातिः इच्छन्तीं कन्यामङ्गुलिप्रक्षेपमात्रेण नाशयन्नङ्गुलिच्छेदं नार्हति न प्राप्नोति, किन्तु अतिप्रसक्तिनिवारणाय द्विशतं दण्डं दाप्य इत्यर्थः। दूषयन् कन्यां नाङ्गुलीति पाठान्तरम्। दूषयानस्तु नाङ्गुलीति च।

४। विशेषान्तरमाह * यदात्विति। एवेन पुरुषव्यवच्छेदः। एवं मानवेऽपि। अतएवाह * विदग्धावेति। * तत्रापि, उभयत्रापि। विशेष इत्यादि जातावेकवचनम्। * कन्येवेति। या कन्यैव परां कन्याम् अङ्गुलिप्रक्षेपमात्रेण कुर्यान्नाशयेत् तस्या द्विशतो दण्डः स्यादित्यर्थः। अस्योत्तरार्धे–(अ.८।३६९)

शुल्कं च द्विगुणं दद्याच्छिफाश्चैवाप्नुयाद्दश। इति।

सा तत्कन्या शुल्कं यत्तत् द्विगुणं तत्कन्यापित्रे दद्यात्। दश शिफाः अत्र जटारज्ज्वादिप्रहारास्तांश्चाप्नुयादिति तदर्थः। एवमाद्यायामुक्त्वा द्वितीयायामव्यवहितमाह * यात्विति। अत्र स्त्रीति सामान्यमप्यर्थाद्विदग्धापरम्। या तु विदग्धा कन्यां प्रकुर्यात् नाशयेद् दूषयेत् अङ्गुलिप्रक्षेपमात्रेण सा सद्यस्तत्क्षणमेव शिरोमुण्डनम् अर्हति। अपिचेति तथेति च समुच्चये। विदग्धात्वादेवाङ्गुलिद्वयव्यापार इत्याह * अङ्गुल्योरिति। तर्जन्यङ्गुष्ठयोरित्यर्थः। तयोश्छेदनं चार्हति गर्दभेन राजमार्गे वहनं चार्हतीत्यर्थः। अपिवेति पाठे अपिवाशब्दः चार्थे। एव-

स्कन्याया इव स्वैरिण्यादीनामपि दण्डाभाव इति भावः। ननु यदि दण्डाद्यभावस्तर्हि प्रायश्चित्तमपि न स्यात्, अत आह * प्रायश्चित्तमिति। * स्वधर्मेति। बहुव्रीहिणा पूर्वविशेषणम्। * गम्यानां, स्त्रीणाम् उक्तानाम्। * गन्तॄणां, पुरुषाणाम्।

८। वेश्यास्थले विशेषं प्रतिपादयितुं वेश्यानां वर्णाद्यन्तःपातित्वं कस्यचिदनुमानप्रमाणकमभिमतं, तन्मतमाह *यत्पुनरिति। वेश्या इति पक्षः। वर्णेति साध्यम्। आदिना प्रातिलोम्यपरिग्रहः। मनुष्यजात्येति हेतुः। यत्र यत्र तथा, तत्र तत्त्वम्, यथा ब्राह्मणादिष्विति दृष्टान्तः। आदिना मूर्द्धावसिक्तादिपरिग्रहः। हेतोर्व्यभिचारितत्वेन दूषयति * तन्न कुण्डेति। तैर्हेतोर्व्यभिचरितत्वादित्यर्थः। कुण्डादीनामाचाराध्याये वर्णाद्यन्तःपातित्वाभावस्योक्तत्वेन तत्र हेतुसत्त्वेऽपि साध्यस्याभावादिति भावः।

९। स्वमतमाह * अत इति। उक्तहेतोरित्यर्थः। तामेव जातिमाह * वेश्यायामिति। अनिषिद्धपुरुषोत्पन्नत्वे सति तत्र पुरुषसम्भोगवृत्तित्वं वेश्यात्वमित्यर्थः। एतद्धटकवेश्याया अपीदमेव लक्षणमिति ध्वनयन् दृष्टान्तमाह। * ब्राह्मण्यादिवदिति। अनादित्वाच्च संसारस्य न दोषः। एतत्सूचनार्थमेवानादिरित्युक्तम्। * हि, यतः। पञ्चमीति। ब्राह्मणत्वादिचतुष्टयापेक्षया पञ्चमीत्यर्थः। प्रकृतं तमेव सविशेषमाह * अत इति। इदमनवरुद्धायाम्। तत्रापि विशेषमाह * तासु चेति। वेश्यास्वपीत्यर्थः। * पशुवेश्येति। पश्वभिगमने वेश्याऽभिगमने चेत्यर्थः॥ २९०॥

मि० अव. अवरुद्धासु दासीष्वित्यनेन दासीस्वैरिण्यादिभुजिष्याभिगमने दण्डं विदधता तास्वभुजि-

वेति एवचेतिच पाठेऽप्येवम् । आद्ये मानत्वे कुर्यादित्यस्य विकुर्यात् दूषयेदित्यर्थः । तत्फलितमाह * कन्यामिति ।

५ । उत्तमायामिति द्वितीयपादं व्याचष्टे * यदापुनरिति । अस्याभिगमन१रत्वे संमतिमाह * उत्तमामिति । हीनजातिः उत्कृष्टामिच्छन्तीं गच्छन् जात्यपेक्षया ऽङ्गच्छेदनमारणात्मकं वधमर्हतीत्यर्थः ।

६ । अनुक्तविशेषानाह * यदेत्यादिना । * मिथुनं, तद्रूपं शुल्कम् । * इच्छति, पिता । * तदेव, गोमिथुनमेव । सर्वत्र मानमाह । * यथाहेति । * शुल्कामिति । इदं तदुत्तरार्थम् । * समां समानजातीयां तु इच्छन्तीं गच्छन् यदि पिता इच्छेत्तदा पितुः शुल्कं दद्यादात्मरूपं, तथाच न दण्ड्यः। साच कन्या तेनैव वोढव्येत्यर्थः । तृतीये मानमाह * योऽकामामिति । तत्पूर्वम् एकपद्यव्यवहितोऽयं श्लोकः । यस्तुल्यजातिरनिच्छन्तीं कन्यामभिगच्छति स तत्क्षणे एव विमेतरो लिङ्गच्छेदनादिकं वधमर्हति इत्यर्थः । इच्छेदिति सूचितं द्वितीये मानमाह * सकामामिति । इच्छन्तीं तु गच्छन्न वधार्हो मनुष्यो भवति किं तु तत्रोक्तरीतिरेवेत्यर्थः ॥ २८८ ॥

मि० अव. किंच ।

या० शतं स्त्रीदूषणे दद्याद्द्वे तु मिथ्याभिशंसने ।
पशून् गच्छन् शतं दाप्यो हीनां स्त्रीं गां च मध्यमम् ॥ २८९ ॥

मि० स्त्रीशब्देनात्र प्रकृतत्वात्कन्याऽवगम्यते । तस्या यदि कश्चिद्विद्यमानानेवापस्माररराजयक्ष्मादिदीर्घकुत्सितरोगसंसृष्टमैथुनत्वादिदोषान्प्रकाश्य इयमकन्येति दूषयति असौ शतं दाप्यः । मिथ्याभिशंसने

ष्यासु दण्डो नास्तीत्यर्थादुक्तं, तस्यापवादमाह ।

या० प्रसह्य दास्यभिगमे दण्डो दशपणः स्मृतः ।
बहूनां यद्यकामाऽसौ चतुर्विंशतिकः पृथक् ॥ २९१ ॥

मि० पुरुषसंभोगजीविकासु दासीस्वैरिण्यादिषु शुल्कदानाविरहेण प्रसह्य बलात्कारेणाभिगच्छतो दशपणो दण्डः । यदि बहव एकामनिच्छन्तीमपि बलात्कारेणाभिगच्छन्ति तर्हि प्रत्येकं चतुर्विंशतिपणमितं दण्डं दण्डनीयाः । यदा पुनस्तदिच्छया भाटिं दत्त्वा पश्चादनिच्छन्तीमपि बलाद् व्रजन्ति तदा तेषामदोषः । यदि व्याध्याद्यभिभवस्तस्या न स्यात् ।

व्याधिता सश्रमा व्यग्रा राजकर्मपरायणा ।
आमन्त्रिता चेन्नागच्छेददण्ड्या वडवा स्मृता ॥

इति नारदवचनात् ॥ २९१ ॥

या० १ । उत्तरसङ्गत्यर्थं फलितमाह * अरुद्धास्विति । विदधतेत्यस्यैव विशेषणम् । दण्डविधानादिति पाठान्तरम् । तास्वभुजिष्यास्विति पाठः । * तस्य, अभुजिष्यागमने दण्डाभावस्य । तत्र हेतुं सूचयन्नाह * पुरुषेति । दासीग्रहणमुपलक्षणमित्याह * स्वैरिण्यादिष्विति । प्रसह्येत्यस्य व्याख्या * बलादिति । तस्यैव विवरणं *शुल्केति । अत एवाभुजिष्यास्वपि तस्य दण्डः । एतावतैवास्य वचनस्य सार्थक्यम् । अन्यथाऽसंबद्धत्वं वैयर्थ्यं च स्पष्टमेव ।

२ । उत्तरार्धतात्पर्यार्थमाह * यदि बहव इति । मूलेऽसौ दास्यादिः । अत एव व्याख्यानं सामान्येन । * परीति । तत्परिच्छिन्नं समुदितं वास्त्वित्यर्थः ।

पुनरविद्यमानदोषाविष्कारेण दूषणे * शतं दाप्यनीयः। गोव्यतिरिक्तपशुगमने तु शतं दाप्यः। यः पुनर्हीनां स्त्रियमन्त्यावसायिनीमविशेषात्सकामामकामां वा, गां चाभिगच्छति, असौ मध्यमसाहसं दण्डनीयः॥२८९॥

वा० १। * किञ्चेति। कन्यास्थले प्रसङ्गादन्यदप्याहेत्यर्थः। पूर्वैकवाक्यत्वायाह *स्त्रीति। *अपस्मारेति। मिर्गीति प्रसिद्धः। राजयक्ष्मा क्षयः। आदिना कुष्ठी इत्यादिरूपाः दीर्घाः अचिकित्स्याः कुत्सिता रोगाः। संसृष्टं प्राप्तं मैथुनं सम्भोगो यया तस्या भावस्तत्त्वं, तेचैतदादयश्च, ते च ते दोषाश्च, तानित्यर्थः। मिथ्येत्यस्यैव व्याख्यानम् * अविद्यमानेति।

नच—

अदुष्टां च त्यजन् दण्ड्यो दूषयंस्तु मृषा शतम्।

इति प्राक् स्वोक्तविरुद्धमिदं, तत्र मिथ्याभिशंसने शतस्योक्तत्वादिति वाच्यम्। तस्य प्रकृतत्वात् वरविषयत्वात् एतस्य तदन्यविषयत्वादिति भावः।

ममतु प्रतिभाति। कन्यैव कन्यामितिमनूक्तविषयकमाद्यपादोक्तं, मिथ्याभिशंसनेत्यत्र भावप्रत्ययान्तादर्शआद्यजन्तादाप्। स्त्री विशेष्यभूता। तथाच तादृशस्त्रीविषयको द्वितीयपाद इति न विरोधशङ्काऽपि।

आद्ये मूलोक्तमनूक्तयोर्विकल्प इति।

२। गोः पृथग्वक्ष्यमाणत्वादाह *गोव्यतिरिक्तेति।

गौतमोऽपि, पशून् गच्छन् शतन्दाप्य इत्यादि।

मात्स्येऽपि,

तिर्यग्योनौ तु गोवर्जं मैथुनं यो निषेवते।
स शतं प्राप्नुयाद्दण्डं तस्याश्च यवसोदकम्॥ इति।

३। विशेषमाह * यदा पुनरिति। * भाटिं, संभृत्यम्। * तेषां, बहूनाम्। शुल्कस्य दानात्। तत्रापि विशेषमाह * यदीति। तथा च तत्र तथाकरणं पुनरपि तेषां दोष एवेति भावः। आदिसंग्राह्यं वचने एव व्यक्तम्। * वडवा, गृहदासी॥ २९१॥

या० गृहीतवेतना वेश्या नेच्छन्ती द्विगुणं वहेत्।
अगृहीते समं दाप्या पुमानप्येवमेव च॥ २९२॥

मि० यदा तु शुल्कं गृहीत्वा स्वस्थाऽपि अर्थपतिं नेच्छति तदा द्विगुणं शुल्कं दद्यात्। तथा शुल्कं दत्त्वा स्वयमनिच्छतः स्वस्थस्य पुंसः शुल्कहानिरेव।

शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत्।
अनिच्छन्दत्तशुल्कोऽपि शुल्कहानिमवाप्नुयात्॥
इति तेनैवोक्तम्। (व्यव. ६। १८)
तथाऽन्योऽपि विशेषः—
तेनैव दर्शितः,
अप्रयच्छंस्तथा शुल्कमनुभूय पुमान् स्त्रियम्।
आक्रमेण च संगच्छन् घातदन्तनखादिभिः॥
अयोनौ वाऽभिगच्छेद्यो बहुभिर्वापि वासयेत्।
शुल्कमष्टगुणं दाप्यो विनयं तावदेव तु॥
वेश्याः प्रधाना यास्तत्र कामुकस्यस्तद्गृहोषिताः।
तत्समुत्थेषु कार्येषु निर्णयं संशये विदुः॥ इति॥ २९२॥

या० १। ननु यदा पुनरित्यादिना तेषामदोष एवेति भाटिप्रतिपादनेन तस्या एव तत्र दोषलाभेन स वक्तव्यः, अत आह *गृहीतेति। मौलमिदम्। किं चेत्यपपादः। अत्रापि वेश्या-

हीनामित्यस्य व्याख्या * अन्त्येति । अन्त्यगामिनीं नत्वन्त्यामित्यर्थः । तत्र विशेषस्य वक्ष्यमाणत्वात् ।

अतएव नारदः, ( व्यव. १२ । ७६ )

पशुयोनावतिक्रामन्विनेयः सततं शतम् ।

मध्यमं साहसं गोषु भवेदन्त्यावसायिषु ॥ इति ।

अकन्येति तु यः कन्यां ब्रूयात् द्वेषेण मानवः ।

स शतं प्राप्नुयाद्दण्डं तस्या दोषमदर्शयन् ॥ इति —

मनुरपि (अ.८।२२५) दूषयंस्तु मृषाशतमिति मूलोक्तसमानविषयः। तत्र तस्या इत्यादि हेतुगर्भविशेषणम्। यत उक्तदोषं क्षतयोनित्वादिकमविभावयन् अतो युक्तोऽस्यायं पणशतात्मको दण्ड इत्यर्थः।

यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति ।

तस्य कुर्यान्नृपो दण्डं स्वयं षण्णवतिं पणान् ॥

इति अत्रैवानुशयप्रसङ्गे प्राग्वन्मनूक्तन्तु— ( ८ । २२४ )

अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम् ।( याज्ञ.अ.१।६६)

इति मूलोक्तविषये पक्षान्तरं बोध्यम् । नोन्मत्ताया इति सामान्येनोक्तत्वात् तत्र दण्डविशेषोक्त्यर्थं वा तत् । अतएव दोष उन्मादादिः । स्वयमित्यादरार्थम् ।

यत्तु, ( अ. ८ । २२६ )

पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः ।

नाकन्यासु क्वचिन्नृणां लुप्तधर्मक्रिया हि ताः ॥

इति तत्रैव मनुः, तस्यायम्भावः । "अर्यमणं नु देवं कन्या अग्निमयक्षत" इत्यादयो वैदिका मनुष्याणां विवाहसम्बन्धिनो मन्त्राः कन्याशब्दश्रवणात् कन्यास्वेव व्यवस्थिताः । अकन्याविषये क्वचिद्धर्मशास्त्रे विवाहसिद्धये न व्यवस्थिताः । असमवेतार्थतापत्तेः । अतएव हि यतः ताः क्षताः वैवाहिकमन्त्रैः सं-

ग्रहणमुपलक्षणम्। अत एव सामान्येन व्याचष्टे *यदा त्विति। नारदोक्तिरेवाह * स्वस्याऽप्यर्थपतिमिति।

२। तृतीयपादस्यायमर्थः। शुल्के निश्चितेऽप्यगृहीते सति नेच्छन्ती सा समं यावन्निश्चितं तावदेव दाप्येति। स्पष्टत्वाद्व्याख्यात्रा नोक्तम्।

३। तुर्यपादार्थमाह *तथेति। *स्वयं, स्वयमेव। *शुल्केति। यद्दत्तं तस्य हानिरेवेत्यर्थः। स्पष्टत्वाय नारदीयमाह *शुल्कमिति। चत इत्यादिः। *तथा, तद्वत्। * तेनैव, नारदेनैव। * अप्रयच्छन्निति। शुल्कमप्रयच्छन्पुमान् तथा बलात्कारेण व्याध्याद्यभिभूतां स्त्रियं भुक्त्वा शुल्कमष्टगुणं यावन्निर्णीतं तदष्टगुणं दाप्यः। घातस्ताडनम्। पादेति पाठान्तरम्। तथा च ताडनदन्तक्षतनखक्षतादिभिः कर्णेर्य आक्रमो वशीकरणं तेन सङ्गच्छंश्च तथा। अयोनौ योनिभिन्नइत्यर्थः। मुखादौ यो ऽभिगच्छेत्स च तथा। शुल्कमदत्त्वा एकमेव वा शुल्कं दत्त्वा यो बहुभिर्वासयेत्सङ्गमयति तां सोऽपि तथेत्यर्थः। * विनयं, दण्डम्। ननु कथं दोषनिर्णयस्तत्र, अत आह *वेश्या इति। तत्र तदीयगृहे याः कामुक्यः साभिलाषास्तद्गृहवासिन्यः प्रधानाः वृद्धाः वेश्याः सन्ति ताः मिथः समुत्पन्नविवादरूपकार्यविषयकसंशये सति तत्परिहाय निर्णयं जानन्तीत्यर्थः। वेश्याप्रधाना ये तत्र कामुका इति पाठान्तरम्। तदा तत्र वेश्यैव प्रधानमुपजीव्यमेषामेतादृशास्तद्गृहनिवासिनो ये कामुका विटाः सन्तीत्याद्यर्थः॥ २९२॥

मि० अव. किञ्च।

या० अयोनौ गच्छतो योषां पुरुषं वाऽभि मेहतः।

स्क्रियमाणा अपि अपगतधर्मविवाहादिशालिन्यो भवन्ति। नार्यां विवाहो धर्म्य इत्यर्थः ।

न तु क्षतयोनेर्विवाहादिमन्त्रहोमादिनिषेधकमिदम् ।

"या गर्भिणी संस्क्रियते" तथा "वोढुः कन्यासमुद्भवम्" इति क्षतयोनेरपि मनुनैव विवाहसंस्कारस्योक्तत्वात्

देवलेन च,

गान्धर्व्वेषु विवाहेषु पुनर्वैवाहिको विधिः ।

कर्त्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः ॥

इति गान्धर्वेषु विवाहेषु होममन्त्रादिविधिरुक्तः । गान्धर्वश्चोपगमनपूर्वकोऽपि भवति । तस्य क्षत्रियविषये धर्म्यत्वमपि मनुनोक्तम् । अतः सामान्यविशेषन्यायेनान्यविषयोऽयं क्षतयोनिविवाहस्याधर्मत्वोपदेश इति ॥ २८९ ॥

मि० साधारणस्त्रीगमने दण्डमाह ।

या० अवरुद्धासु दासीषु भुजिष्यासु तथैव च ।

गम्यास्वपि पुमान्दाप्यः पञ्चाशत्पणिकं दमम् ॥२९०॥

मि० गच्छन्नित्यनुवर्तते । उक्तलक्षणा वर्णस्त्रियो दास्यः। ता एव स्वामिना शुश्रूषाहानिव्युदासार्थं गृहे एव स्थातव्यमित्येवं पुरुषान्तरोपभोगतो निरुद्धाः अवरुद्धाः । पुरुषनियतपरिग्रहाः भुजिष्याः । यदा दास्योऽवरुद्धा भुजिष्या वा भवेयुस्तदा तासु, तथाचशब्दाद्वेश्यास्वैरिणीनामपि साधारणस्त्रीणां भुजिष्याणां ग्रहणम्, तासु च सर्वपुरुषसाधारणतया गम्यास्वपि गच्छन् पञ्चाशत्पणं दण्डनीयः। परपरिगृहीतत्वेन तासां परदारतुल्यत्वात् । एतच्च स्पष्टमुक्तम्-

चतुर्विंशतिको दण्डस्तथा प्रव्रजितागमे ॥ २९३ ॥

मि० यस्तु स्वयोषां मुखादावभिगच्छति पुरुषं वाऽभिमुखो मेहति तथा प्रव्राजितां वा गच्छति असौ चतुर्विंशतिं पणान्दण्डनीयः ॥ २९३ ॥

वा० १ । * किं चेति । एतत्प्रसङ्गादन्यदप्युच्यते इत्यर्थः । एवमग्रेऽपि । अन्यत्र दण्डाल्पत्वस्य गमनादौ मत्त्वादाह *स्वेति । अयोनावित्यस्यार्थो * मुखादाविति । आदिना पायुपरिग्रहः । * पुरुषं वेति । तदभिमुखः सन्मेहति मूत्रादिकं करोति सोऽपि । वाशब्दः चार्थे । प्रव्राजिता प्रागुक्ता । नन्विदं राज्ञी प्रव्रजिता धात्रीतिप्रागुक्तनारदविरुद्धम् । अत्र हि पणानां चतुर्विंशतिर्दण्ड उक्तः, तत्र शिश्नस्योत्कर्तनं दण्ड उक्त इति चेन्न । अत्यन्तगुणवत्प्रव्रजितागमनविषयकं तत्रैवाभ्यासविषयकं वा नारदीयम्, इदं तु तदन्यविषयकमिति भेदात् ॥ २९३ ॥

मि० अव. किञ्च ।

या० अन्त्याऽभिगमने त्वङ्क्य कुबन्धेन प्रवासयेत् ।
शूद्रस्तथाऽन्त्य एव स्यादन्त्यस्यार्यागमे वधः ॥ २९४ ॥

मि० अन्त्या चाण्डाली तद्गमने त्रैवर्णिकान्प्रायश्चित्तानभिमुखान् सहस्रं त्वन्त्यजास्त्रियामिति मनुवचनात्पणसहस्रं दण्डयित्वा कुबन्धेन कुत्सितबन्धेन भगाकारेणाङ्कयित्वा स्वराष्ट्रान्निर्वासयेत् । प्रायश्चित्ताभिमुखस्य पुनर्दण्डनमेव । शूद्रः पुनश्चाण्डाल्यभिगमेऽन्त्य एव चाण्डाल एव भवति । अन्त्यजस्य पुनश्चाण्डालादेरुत्कृष्टजातिस्त्र्यभिगमे वध एव ॥ २९४ ॥

इति स्त्रीसंग्रहणप्रकरणम् ॥

नारदेन, (व्यव. १२ । श्लो. ७८ ७९ ) १०२१

स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी च या।
गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः॥
आस्वेव तु भुजिष्यासु दोषः स्यात्परदारवत् ।
गम्यास्वपि हि नोपेयास्ता: परपरिग्रहाः॥ इति।
निष्कासिनी स्वाम्यनवरुद्धा दासी।

ननु स्वैरिण्यादीनां साधारणतया गम्यत्वाभिधानमयुक्तम् । नहि जातितः शास्त्रतो वा काश्चन लोके साधारणाः स्त्रिय उपलभ्यन्ते। तथाहि। स्वैरिण्यो दास्यश्च तावद्वर्णस्त्रिय एव। (याज्ञ. १।६७)

स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत्॥
वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः॥(याज्ञ.२।१८३)

इति स्मरणात् । न च वर्णस्त्रीणां पत्यौ जीवति मृते वा पुरुषान्तरोपभोगो घटते।
( मनु० अ. ५ श्लो. १५४ । १५७ )

दुःशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः ।
परिचर्यः स्त्रिया साध्व्या सततं देववत्पतिः ॥
कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ।
न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु ॥

इति निषेधस्मरणात् । नापि कन्यावस्थायाः साधारणत्वम् । पित्रादिपरिरक्षितायाः कन्याया एव दानोपदेशात् । दात्रभावेऽपि तथाविधाया एव स्वयंवरोपदेशात् । न च दासीभावात् स्वधर्माधिकारच्युतिः । पारतन्त्र्यं हि दास्यं न स्वधर्मपरित्यागः । नापि वेश्या साधारणी । वर्णानुलोमजन्यतिरेकेण गम्यंजा-

या० १ । स्वङ्कोति ल्यबन्तपाठः । त्वङ्कोति पाठे आर्षो ल्यप् व्याख्यानानुसारात् । यदा त्वङ्क इति प्रथमान्तपाठः, तेनाङ्कः, स तं प्रवासयेदित्यर्थस्तदा । व्याख्यानं फलितार्थकथनपरतया नेयम् । शूद्रस्याग्रे विशिष्योक्तेराह * त्रैवर्णिकानिति । न्यूनं मध्ये समूलं पूरयति * सहस्रामिति । वध्यतइति वन्धः । कुत्सितश्चासौ वन्धश्च कुवन्धः । तदर्थमाह * भगेति । प्रागुक्तमनोरिति भावः । दत्ताविशेषणफलमाह * प्रायश्चित्तेति । *दण्डनमेवेति । नाङ्कनमित्यर्थः । तथेत्यस्यार्थः * चाण्डाल्यभीति । सर्वसंग्रहायाह * उत्कृष्टेति ॥ २०४ ॥

इति स्त्रीसंग्रहणप्रकरणम् ॥

त्यन्तरासम्भवात्। तदन्तःपातित्वे च पूर्ववदेवाग-म्यत्वम्। प्रतिलोमजत्वे तु तासां नतरां गम्यत्वम्। अतः पुरुषान्तरोपभोगं तासां निन्दितकर्माभ्यासेन पातित्यात् पतितसंसर्गस्य निषिद्धत्वाच्च न सकल-पुरुषोपभोग्यत्वम्।

सत्यमेवम्। किं त्वत्र स्वैरिण्याद्युपभोगे पित्रादि-रक्षकराजदण्डभयादिदृष्टदोषाभावाद् गम्यत्ववाचो-युक्तिः। दण्डाभावश्च "अवरुद्धासु दासीषु" इति निय-तपुरुषपरिग्रहोपाधिनो दण्डविधानात्तदुपाधिरहिता-सु अर्थादवगम्यते। स्वैरिण्याद्यानां पुनर्दण्डाभावो विधानाभावात्,

कन्यां भजन्तीमुत्कृष्टं न किञ्चिदपि दापयेत्।

इति लिङ्गदर्शनाच्चावगम्यते। प्रायश्चित्तं तु स्वधर्म-स्खलननिमित्तं गम्यानां गन्तॄणां चाविशेषाद्भवत्येव।

यत्पुनर्वेश्यानां जात्यन्तरासम्भवेन वर्णान्तःपा-तित्वमनुमानादुक्तम्, वेश्याः वर्णानुलोमाद्यन्तःपा-तिन्यो मनुष्यजात्याश्रयत्वात् ब्राह्मणादिवदिति। तन्न। कुण्डगोलकादिभिरनैकान्तिकत्वात्। अतो वेश्याख्या काचिज्जातिरनादिः वेश्यायामुत्कृष्टजातेः समानजातेर्वा पुरुषादुत्पन्ना पुरुषसम्भोगवृत्तिर्वेश्येति ब्राह्मण्यादिवल्लोकप्रसिद्धिबलादभ्युपगमनीयम्। न च निर्मूलेयं प्रसिद्धिः।

स्मर्यते हि स्कन्दपुराणे, पञ्चचूडा नाम काञ्चनाप्सरसस्तत्सन्ततिर्वेश्याख्या पञ्चमी जातिरिति। अतस्तासां नियतपुरुषपरिणयनाविधि-

## अथ प्रकीर्णकप्रकरणम् ॥ २५ ॥

मि० उ० व्यवहारप्रकरणमध्ये स्त्रीपुंसयोगाख्यमप्यपरं विवादपदं मनुनारदाभ्यां विवृतम्।

तत्र नारदः, ( व्यव. १३ । १ )

विवाहादिविधिः स्त्रीणां यत्र पुंसां च कीर्त्यते ।
स्त्रीपुंसयोगसंज्ञं तद्विवादपदमुच्यते ॥ इति ।

मनुरप्याह, ( अ. ९ श्लो. २ )

अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम्।
विषयेषु च सज्जन्त्यः संस्थाप्या ह्यात्मनो वशे ॥

इत्यादि ।

यद्यपि स्त्रीपुंसयोः परस्परमार्थिप्रत्यर्थितया नृपसमक्षं व्यवहारो निषिद्धस्तथापि प्रत्यक्षेण कर्णपरम्परया वा विदिते तयोः परस्परातिचारे दण्डादिना दम्पती निजधर्ममार्गे राज्ञा स्थापनीयौ । इतरथा दोषभाग्भवतीति व्यवहारप्रकरणे राजधर्ममध्ये अस्य स्त्रीपुंसधर्मजातस्योपदेशः । एतच्च विवाहप्रकरणे एव समपञ्चं प्रतिपादितमिति योगीश्वरेण न पुनरत्रोक्तम् ।

सांप्रतं प्रकीर्णकाख्यं व्यवहारपदं प्रस्तूयते । तल्लक्षणं च कथितम्—

नारदेन, ( व्यव. १७ )

प्रकीर्णके पुनर्ज्ञेया व्यवहारा नृपाश्रयाः ।
राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणं तथा ॥ ( १ )

विधुरतया समानोत्कृष्टजातिपुरुषाभिगमने नादृष्टदोषो नापि दण्डः। तासु चानवरुद्धासु गच्छतां पुरुषाणां यद्यपि न दण्डस्तथाप्यदृष्टदोषोऽस्त्येव। स्वदारनियतः सदेति नियमात्।

पशुवेश्याभिगमने प्राजापत्यं विधीयते।

इति प्रायश्चित्तस्मरणाच्चेति निरवद्यम्॥ २९०॥

या० १। *साधारणेति। तत्त्वं च सर्वपुरुषगामित्वम्। अन्वयाह *गच्छन्निति। *उक्तेति। अभ्युपेत्याशुश्रूषाख्यप्रकरणे "गृहजातः तथा क्रीत" इत्यादिना साम्यादुक्तप्रायलक्षणा इत्यर्थः। निमित्तान्तरत्वनिरासायाह * ता एवेति। अत एव नारीष्विति कल्पतर्वादिपाठेनैकवाक्यता। *पुरुषान्तरोपभोगेति। स्वभोग्यत्वं तु नैवेति भावः। * पुरुषेति। स्वामिभिन्नेत्यर्थः।

२। एवं पदार्थानुक्त्वा वाक्यार्थमाह * यदेति। एवो दाप्य इत्यत्रान्वेतीत्याह * तथाचशब्दादिति। समुच्चयात्मकात्समुदितादित्यर्थः।

स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत्।(याज्ञ.१।६७)

इत्युक्तलक्षणा स्वैरिणी। आसां साधारणत्वं प्राग्वदेव। सान्निध्यातसम्भवाच्चाह * भुजिष्याणामिति। तदेवाह * सर्वेति। गम्यास्वपीत्यनेन सूचितमिदम्। अनुद्भूत्तिलब्धमाह। * गच्छन्निति। अपिः विरोधे। ननु साधारणत्वे कथं दण्डः, अतआह * परेति। एतदर्थमेव विशेषणद्वयमिति भावः। अब्राह्मणीति स्वैरिणीविशेषणम्। तादृशी साच। ब्राह्मणीत्युपलक्षणम्। अतः क्षत्रियादिस्त्रियोऽपि स्वैरिण्यो गृह्यन्ते। दासी चासौ निष्कासिनी चेति व्याख्यानमपास्तम्। मूलाशुद्धेः। कल्पतर्वाद्यसंमतत्वात्। पूर्वनिपातवैपरीत्यापत्तेः। पृथक्पद-

पुरप्रदानं सम्भेदः प्रकृतीनां तथैव च ।
पाखण्डिनैगमश्रेणीगणधर्मविपर्ययाः ॥ (२)
पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः ।
प्रतिग्रहविलोपश्च कोप आश्रमिणामपि ॥ (३)
वर्णसङ्करदोषश्च तद्वृत्तिनियमस्तथा ।
न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात्प्रकीर्णके ॥ इति । (४)

प्रकीर्णके विवादपदे ये विवादा राजाज्ञोल्लङ्घनतदाज्ञाकरणादिविषयास्ते नृपसमवायिनः । नृप एव तत्र स्मृत्याचारव्यपेतमार्गे वर्तमानानां प्रतिकूलतामास्थाय व्यवहारनिर्णयं कुर्यात् । एवं वदता यो नृपाश्रयो व्यवहारस्तत्प्रकीर्णकमित्यर्थाल्लक्षितं भवति ॥

अव. तत्रापराधविशेषेण दण्डविशेषमाह ।

मि० ऊनं वाऽभ्यधिकं वापि लिखेद्यो राजशासनम् ।
पारदारिकचौरं वा मुञ्चतो दण्ड उत्तमः ॥ २९५ ॥

मि० राजदत्तभूमेर्निबन्धस्य वा परिमाणान्न्यूनत्वमाधिक्यं वा प्रकाशयन् राजशासनं यो लिखति यश्च पारदारिकं चौरं वा गृहीत्वा राज्ञेऽनर्पयित्वा मुञ्चति तावुभावुत्तमसाहसं दण्डनीयौ ॥ २९५ ॥

वा० १ । * स्त्रीपुंसयोगाख्यमिति । तदाख्यमपरमपीत्यर्थः ।
*विवाहादीति । यत्र विवादपदे स्त्रीणां पुंसां च विवाहादिविधिः कीर्त्यते अनुमतितदभावाभ्यां प्रसिद्धो भवति तद्विवादपदं स्त्रीपुंसयोगसंज्ञमुच्यते इत्यर्थः । यत्र विवाहे स्त्रीपुंसयोर्व्यतिक्रमो भवति, तद्यथा, कन्यका यं वरमेकं काचित् वृणीते स म्रियमाणः पुमान् न तां दोषशङ्कादिना, एवमेव पुरुषोऽपि यां कां

त्वस्य व्याख्यातृसंमततया स्पष्टत्वादिति दिक् । दोषमुपपादयति * गम्यास्त्वपीति । आस्वित्यर्थः । गम्या अपीति पाठान्तरम् । हिः निश्चये । * यत्, यस्मात् । * ताः, भुजिष्याः स्वैरिण्यादयः । परेषां परिग्रहो यासामित्यर्थः । यास्ता इति पाठे हिर्हेतौ । निष्कासिनीति पृथक् पदं दासीविशेषणमिति आह * निष्कासिनीति ।

३ । तदर्थं कथयन्नाद्ये आह * स्वैरिणी चेति । द्वितीये आह *वर्णानामिति । अध्यायभेदेन भिन्नमिदम् ।

नन्वस्तु आसां वर्णस्त्रीत्वं तथापि सर्वपुरुषगामित्वेन साधारणत्वमित्यविरोधेन तत्कथनं युक्तमेवेति तदभावः कथम्, अत आह * नचवर्णस्त्रीणामिति । स्वपुरुषपरत्वविधानात् पुरुषान्तरपरत्वनिषेधाच्चेति भावः । तत्राद्यं तु स्वदारनिरतः सदेत्यग्रे स्फुटीभविष्यति । द्वितीयमाह * दुःशील इति । दुष्टस्वभावः । * कामेति । यथेच्छाचारी । इदं जीवद्विषयम् । अथ मृते आह * कामं त्विति । मानवमिदं वचनद्वयम् । * तथाविधाया इति । रक्षिताया इत्यर्थः । अदुष्टाया इति यावत् ।

४ । * नचदासीभावादिति । दासीत्वादित्यर्थः । यथा सूतकादिवशात् स्वधर्मभूतसन्ध्याद्याधिकाराभावः तथा दासीत्वात्स्वधर्मभूतस्वपुरुषपरत्वाद्यभावेन सर्वपुरुषगामित्वेन साधारणत्वमिति भावः । * हि, यतः । सूतकादौ वचनात्तदभावो न स्वरूपेण । अत्र तु न वचनं, नापि स्वरूपतः । यतो दास्यं पारतन्त्र्यमेव शिष्यत्वादिवत्, अतो न स्वधर्मपरित्यागो, येन साधारण्यं स्यादिति भावः ।

५ । ननु माभूद्दासीस्वैरिण्योः साधारणत्वाभावाद्गम्यात्वं, वेश्यायास्तु तत्त्वेन तत्त्वं भवतु, इत्यत आह * नापीति । कि-

चित्कन्यकां परिणेतुमिच्छति कन्या तु न तं दोषवशादिना, एवं चैतादृशस्थले तत्र व्यवहारप्रवृत्तिरेव। विवाहादीत्यादिना परपुरुषतः स्त्री रक्षणीया सर्वात्मना स्त्रियाऽपि भर्तृपरया भाव्यमित्यादिनियमपरिग्रहः। एतत्सर्वं स्त्रीपुंसयोगाख्यं विवादपदमिति भावः। आदिग्राह्यमेवाह * मनुरपीति। अत एव च आदौ नारदमुक्त्वाऽग्रे मनूक्तिरिति बोध्यम्। स्वैः स्वीयैर्भ्रात्रादिभिः दिवानिशं सदा विषयेषु अनिषिद्धेष्वपि रूपरसादिविषयेषु सज्जन्त्यश्च प्रसक्ता अपि आत्मनो वशे आयत्ततायां संस्थाप्याः आत्मवशाः कार्या इत्यर्थः।

पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः। ( अ. ९ । १ )
संयोगे विप्रयोगे च धर्मान्वक्ष्यामि शाश्वतान्॥ इति अस्यादिः।

इत्यादीत्यादिना—

पिता रक्षति कौमारे भर्ता रक्षति यौवने।
रक्षन्ति स्थाविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति॥

इत्यादिपरिग्रहः। इदं च यथासम्भवं द्रष्टव्यम्। *निषिद्ध इति। पूर्वमिति भावः। * प्रत्यक्षेण, साक्षात्। * अतिचारे, व्यतिक्रमे। * धर्मजातस्य, तत्समूहस्य। न्यूनतामत्र परिहरति * एतच्चेति। स्त्रीपुंसधर्मजातमित्यर्थः। * पुनः, पश्चात्।

इति स्त्रीपुंसयोगप्रकरणम्।

२। चस्त्वर्थे। एवं पुनरपि। यथेति पाठे आदौ संयोज्यः। तानेव दर्शयतीत्यर्थः। तथेति पाठे समुच्चयार्थः सः। * तत्कर्मेति। राजकार्याज्ञाविषयकर्मेत्यर्थः। * पुनः प्रदानमिति। कर्त्रा कृतस्य कर्मणः प्रत्यर्पणं राज्ञे इत्यर्थः। पुरप्रदानमिति पाठे दुर्गकुल्यास्थानादिरूपपुराणां पालनाय दानमित्यर्थः। पुत्रप्रधानसम्भेद इति कल्पतरुपाठः। प्रकृतीनां सम्भेदो मेलनम्,

निधाति यमानत्यव्यवच्छेदः । तेन पश्यन इत्यस्यार्थस्य लाभः । * निपत्रे,पूर्णे समाते इति पाठान्तरम् । * पूर्वोक्ते,स्मृतिनीति । व्यवहारहानेः मुख्यहेतुमाह * उपेक्षान्निद्वेति । अन्यथा तद्विशेषणानर्थक्यमेतेनोति भावः । तथा च उक्तार्थे हेतुत्वमेतस्य वचनस्यानेनोपपादितमिति बोध्यम् । उपेक्षायां यानि लिङ्गानि जडत्वबालत्वादीनि तेषां यो ऽभावः तत्कृता तन्निमित्तत्वेत्यर्थः । एवव्यवच्छेद्यमाह * न तु वस्त्वभावेनेति । पराक्रान्तत्वात्तत्सम्बन्धाभावकृततदभावेत्यर्थः । उपेक्षान्निद्वेष्वसत्सु एतावत्पर्यन्तं विपन्नवस्तुनः स्वीयत्वे किमित्यनेन व्यवहारो न कृत इति प्रत्यर्थिनोक्ते वादी निरुत्तरो भवतीत्येवं प्रकारेण व्यवहाराभावो नारदेनोच्यते । उपेक्षां कुर्वन इत्युक्तः । अन्यथा तदानर्थक्यं स्पष्टमेव । अतो न तथा ...भावकृतो व्यवहाराभावो वक्तुं शक्य इति तात्पर्यम् ।

१२। साधकान्तरमाह *तथेति । *विषयश्चास्य भुज्यते इति। विषये चास्येति पाठान्तरम् । विषये चास्य भुज्यते इति तृतीयपाठः । विषयो देशः । *अस्य, धनिनः । अजडश्चेदित्यादि ।

यत्किञ्चिद्दश वर्षाणि सन्निधौ प्रेक्षते धनी ।
भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति ॥ (मनु. ८।१४७)

इति पूर्वपक्ष इति मेधातिथिः । *तत्, धनिकरूपम् । *तद्धनं, तदुत्पन्नं फलरूपम् । *इति, इत्येवं प्रकारेण । प्रथमपक्षं निराचष्टे न वस्तुन इति । न तथा वस्त्वभावकृत इत्यर्थः ।

१३ । सर्वथा व्यवहारभङ्गे नानयोस्तात्पर्यम्, किन्तु वादिनिरुत्तरत्वे इति प्रतिपादयन्नाह *व्यवहारेति । भवतीतीत्यन्तेनान्वयः । वदतीत्यस्य उदास्ते इतीत्यत्रान्वयः । अजड इत्यादि उपलक्षणमन्येषामपीत्याह *अबाल इति । अस्येति अनन्तर-

योगे षष्ठी । तत्स्मृतिमाह *तादृशानीति । भुज्यते इति वर्त-मानसामीप्ये लडित्याह *भुक्तानीति । वक्तारमनुपेत्याह *तत्रेति । *भुज्यते, भुक्तम् । *उदास्ते, उदासीनः । अस्य फल-माह *एवमिति ।

। अथास्यान्यथा व्याख्यानमाह *अथ पश्यतीति । ना-दृष्टोपभोगान्न भूम्यादेः तद्विषयव्यवहारस्य च हानिः । किं तु तस्य तादृशस्य व्यवहारहानिशङ्का स्यादिति तन्निवृत्त्यर्थमारम्भो विधेय इत्यासेधस्यावश्यकर्तव्यतां विधत्ते इदं वचनमित्यर्थः । तदपि व्याख्यानं दूषयति *तच्च नेति । ननु तूष्णीं न स्थातव्य-मित्युपदेशः किमदृष्टार्थः उत दृष्टार्थः । न तावदन्त्यः, असंभ-वात् । व्यवहारहानिशङ्कायां सत्यां तन्निवृत्त्यर्थमुपदेशो वाच्यः । सा च कारणे सत्येव भवति नाशति । तच्च कारणं विंशतिव-र्षपरिमिता भुक्तिर्नान्यत् । तत्र नान्त्यः । वचनं ऽनुक्तः । नाद्य इत्याह *स्मार्तेति । स्मरणाविषयतायोग्यकालिकभुक्त्या व्यवहारहानिशङ्कैव नोत्पद्यते साक्ष्यादिसंभवादिति भावः । नाप्यदृष्टार्थ इत्याह *तूष्णीमिति । दोषद्वयप्रतिपादकोऽयं ग्र-न्थः । अविवक्षितं स्यादित्यस्योभयत्रान्वयः । तथा चैतावन्मात्राभिधित्सायामविवक्षितमनुपपन्नं स्यादित्याद्यर्थः । तूष्णीं नेति उपदेशस्यादृष्टं फलं विधिबलात्कल्प्यं यद्यपि तथापि कल्पनैव तावद्गरीयसी । किं चादृष्टसत्त्वमेव न ।

वालाग्रशतभागोऽपि न कल्प्यो निष्प्रमाणकः ।

इति न्यायात् । किं च वक्ष्यमाणप्रकारेण गत्यन्तरसंभवे तदभावमूलकतत्कल्पना ऽसंगता । एवं चादृष्टकल्पनयैवास्य सार्थक्यकल्पनायां बीजाभावान्नास्यादृष्टार्थत्वमिति भावः ।

१५। अस्योपदेशस्यादृष्टार्थत्वमभ्युपेत्याप्याह । *विंशतीति ।

अन्तर्भातः परस्परविरोधो वा । पाषण्ड्यादिचतुर्णां लक्षणान्युक्तानि, तेषां धर्मव्यत्यया इत्यर्थः । प्रतिग्रहस्य विलोपो नाशः, यथा ब्राह्मणाय प्रतिग्रहयोग्याय पात्रभूतायादानम् । यद्वा प्रतिग्रहस्य शूद्रादौ प्रतिग्रहप्रवृत्तेर्विलोपः सः । प्रतिग्रहविवादश्चेति पाठान्तरम् । आश्रमिणां ब्रह्मचार्यादीनां कोपः प्रकोपः उद्रेकः, स्वधर्मभ्रंश इति यावत् । मिथो विरोधो वा तेषां कोपः । लोपश्चाश्रमिणामपीति तु कल्पतरौ पाठः । वर्णसङ्करयोर्दोषश्च । तेषां वर्णानां सङ्कराणां च वृत्तेर्नियमः । व्यस्तपाठो न युक्तः । पूर्वोक्तेषु ऋणादानादिपदेषु यद्व्यवहारपदं न दृष्टं तच्च सर्वं प्रकीर्णके स्यादित्यर्थः ।

प्रकीर्णकं पुनर्ज्ञेयो व्यवहारो नृपाश्रयः ।

इति कल्पतरूक्तपाठाभ्रमाय तावन्मात्रं प्रतिज्ञासिद्ध्यर्थं व्याचष्टे * प्रकीर्णके इति । तदाख्ये इत्यर्थः । नृपाश्रया इति व्याचष्टे * नृपसमवायिन इति । तात्पर्यार्थमाह * नृप एवेति । एवेन प्राड्विवाकादिव्यवच्छेदः । * तत्र, तद्विषयविवादेषु । आस्थाय, निश्चित्य ।

३ । नन्वेतावताऽपि तल्लक्षणं नोक्तमिति प्रतिज्ञाहानिरेव, अत आह * एवं वदतेति । इत्येवं परिगणितानां विवादानां निर्णयोऽत्र प्रकीर्णके इति वदता नारदेनेत्यर्थः । एवं च वदतेति पाठान्तरम् । * यो नृपेति । केवलं नृपाश्रयः तन्मात्रनिर्णेयो व्यवहारः स इत्यर्थः ।

४ । अथ मूलमवतारयति * तत्रेति । प्रकीर्णके इत्यर्थः । पारदारिकचौरमिति समाहारद्वन्द्वः । समुद्राभ्रादितिवत्प्रयोगः । तदाह * पारदारिकं चौरंचेति ॥ २९५ ॥

मि० अव. प्रसक्तान्नृपाश्रयव्यतिरिक्तव्यवहारविष-

इति मनुस्मरणात् ॥ ३०२ ॥

म. १।अनिष्टमवक्तारमिति शेषषष्ठ्या समासः । *अमित्रेति । शत्रुस्तुत्यादेरित्यर्थः । मकृत्तथा करणे दोषाभावाय प्रार्थमाह * मकर्षेणेति । तस्याप्यर्थमाह * भूय इति । तस्यैवेत्यस्य व्याख्या * राज्ञ इति । णिन्यर्थमाह * शीलमिति ।

२ । तन्मन्त्रेति व्याचष्टे *तदीयेति । राजकीयेत्यर्थः । स च द्विविध इत्याह *स्वराष्ट्रेत्यादि । परस्य राष्ट्रपक्षयोः क्षयकरस्येत्यर्थः । कृञो हेत्विति टः । परराष्ट्रापक्षयकरस्येति पाठान्तरम् । तस्य भेदनासंभवादाह * अमित्रेति । तस्य राज्ञः शत्रुकर्णेष्वित्यर्थः ।

३।विशेषमाह * कोशेति । राज्ञ इत्यादिः । *राज्ञ इति । नित्यसाकाङ्क्षत्वादेकदेशान्वयः । प्रतिकूलेष्विति धर्मपरम् । तस्य प्रातिकूल्यविषये इत्यर्थः । उपजापकाः प्रोत्साहकाः । घातयेदिति स्वारस्यात्क्रमेणाह * सर्वस्वेति । तथा च घातो नाश इति बोध्यम् ।

४ । तत्राद्ये विशेषमाह * सर्वस्वेति । तत्रापि विशेषमाह * चौर्योपकरणमिति । आयुधैर्जीवन्ति ते तथा । वाह्यैर्वहनीयैर्बलीवर्दादिभिर्ये जीवन्ति ते तथा । अत्र वाह्यग्रहणमुपलक्षणमित्युक्तं * वाह्यादीनिति । * वेश्येति । वेश्यारूपस्त्रीणाम् । * तद्विदां, तज्ज्ञानाम् । वाद्यं चातोद्यं च तदादि । यद्यपि—

चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ।

इति अमरात्पर्यायता तथापि वीणादिसर्ववाद्यावान्तरभेदाभिप्रायकं पृथगुपादानम् । आनन्त्यात्सामान्येनाह * य-

---

१ इदं मनुस्मृतौ नोपलभ्यम् । किन्तु नारदस्मृतावुपलभ्यते । व्यव. १४ । १०

यमपि दण्डमाह।

या० अभक्ष्येण द्विजं दूष्य दण्ड्य उत्तमसाहसम्।
मध्यमं क्षत्रियं वैश्यं प्रथमं शूद्रमर्द्धिकम् ॥ २९६ ॥

मि० मूत्रपुरीषादिना अभक्ष्येण भक्षानर्हेण ब्राह्मणं दूष्य अन्नपानादिमिश्रणेन स्वरूपेण वा दूषयित्वा स्वादयित्वोत्तमसाहसं दण्ड्यो भवति। क्षत्रियं पुनरेवं दूषयित्वा मध्यमम्। वैश्यं दूषयित्वा प्रथमम्। शूद्रं दूषयित्वा प्रथमसाहसस्यार्द्धं दण्ड्यो भवतीति सम्बन्धः। लशुनाद्यभक्ष्यदूषणे तु दोषतारतम्याद्दण्डतारतम्यमूहनीयम् ॥ २९६ ॥

वा० १। असंबद्धत्वादाह *प्रसङ्गादिति। अपिना तस्यापि समुच्चयः। भक्ष्ये ऽर्हार्थे कृत्य इत्याह * भक्षानर्हेणेति। क्षत्रियादेरग्रे उपादानाद् द्विजपदं ब्राह्मणपरमित्याह * ब्राह्मणमिति। तत्रापि सम्भवात्प्रकारद्वयमाह * अन्नपानेति। दूष्येत्यत्रार्षो ल्यबित्याह * दूषयित्वेति। तत्तात्पर्यार्थमाह * स्वादयित्वेति। *दण्ड्यः, तथा कारकः। *एवम्, उक्तप्रकारेण। अस्याग्रेऽप्यनुषङ्गः। प्रत्यासत्तेराह * प्रथमेति। आर्द्धिके ऽत इनीति ठन्।

२। न्यूनतां निराचष्टे * लशुनाद्येति। भक्षार्हत्वेऽपि निषेधात्तत्त्वम्। * ऊहनीयमिति। दोषतारतम्यं च प्रायश्चित्तविधिपर्यालोचनया ब्राह्मणत्वादिवर्णसगुणनिर्गुणत्वादिपर्यालोचनया च ज्ञेयमिति भावः ॥ २९६ ॥

मि० अव० किञ्च।

या० कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी।

चेति । * कारुकाः, शिल्पिनः । * एतत्, प्रागुक्तमुपकरणत्वावच्छिन्नम् । तृतीये विशेषमाह * ब्राह्मणस्याल्पिनि । गौतमसंमानमाह * न शारीर इति । आदिग्राह्यं वचने एव व्यक्तम् । तच्च प्राग्व्याख्यातम् ॥ ३०२ ॥

मि० अथ० किञ्च ।

या० मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा ।
राजयानासनारोढुर्दण्ड उत्तमसाहसः ॥ ३०३ ॥

मि. मृतशरीरसंबन्धिनो वस्त्रपुष्पादेर्विक्रेतुः गुरोः पित्राचार्यादेस्ताडयितुः तथा राजानुमतिं विना तद्यानं गजाश्वादि आसनं सिंहासनादि आरोहतश्चोत्तमसाहसो दण्डः ॥ ३०३ ॥

वा. १ । लग्नविक्रेतुरिति शेषषष्ठीसमासः । एवमग्रेऽपि । अङ्गं नैकदेश इत्याह * शरीरेति । गुरुपदमुपलक्षणमित्याह * पित्रेति । अनुमतौ दोषाभावायाह * राजानुमतिमिति । आरोहति तस्येति पाठः । आरोहतश्चेति पाठान्तरम् ॥ ३०३ ॥

मि. अव. किञ्च ।

या० द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा ।
विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः ॥ ३०४ ॥

मि० यः पुनः क्रोधादिना परस्य नेत्रद्वयं भिनत्ति, यश्च ज्योतिःशास्त्रवित् गुर्वादिहितेप्सुव्यतिरिक्तो राज्ञो द्विष्टमनिष्टं "संवत्सरान्ते तव राज्यच्युतिर्भविष्यति" इत्यादिरूपमादेशं करोति तथा यः शूद्रो भोजनार्थं यज्ञोपवीतादिब्राह्मणलिङ्गानि दर्शयाति-तेषाम-

अङ्गहीनस्तु कर्तव्यो दाप्यश्चोत्तमसाहसम् ॥२९७॥

मि० रसवेधाद्यापादितवर्णोत्कर्षैः स्वर्णव्यवहारशीन्ः यः स्वर्णकारादिः यश्च विमांसस्य कुत्सितमांसस्य श्वादिसंबद्धस्य विक्रयशीलः सौनिकादिः । चशब्दात्कूटरजतादिव्यवहारी च । ते सर्वे प्रत्येकं करनासाकर्णरूपैस्त्रिभिरङ्गैर्हीनाः कार्याः। चशब्दादङ्गच्छेदनसमुचितमुत्तमसाहसं दण्डं दाप्याः ।

यत्पुनर्मनुनोक्तम् , ( अ. ९ श्लो. २९२ )

सर्वकण्टकपापिष्ठं हेमकारं तु पार्थिवः ।
प्रवर्तमानमन्याये छेदयेल्लवशः क्षुरैः ॥

इति, तद् देवब्राह्मणराजस्वर्णविषयम् ॥ २९७॥

बा० १ । *किं चेति। प्रकृतेऽपराधविशेषेण दण्डविशेषान्तरमाहेत्यर्थः । एवमग्रेऽपि । कूटैरित्यस्य व्याख्या * रसेत्यादिः । रसवेधः रसान्तरप्रवेशः । आदिना तेन घर्षणम् । णिन्यर्थमाह * शील इति । एवमग्रेऽपि । विर्विरोधे इत्याह * कुत्सितेति । तत्स्वरूपमाह * श्वादिसंबद्धस्येति । * सौनिकः, सूना वधस्थानं तत्र भवः सौनिकः । आद्यचार्थमाह *चशब्दादिति । अङ्गेति सामान्योक्तावपि स्मृत्यन्तरानुरोधेनाह * करनासाकर्णरूपैस्त्रिभिरिति । नासाकर्णकरैस्त्रिभिरित्यपपाठः । दोषद्वयसत्त्वात् । मूले यथाश्रुते दण्ड्यद्वयं दण्डद्वयं चोक्तमिति यथासंख्यं प्रत्येकं दण्ड इति भ्रमनिरासाय द्वितीयं चार्थमाह * चशब्दादिति । अङ्गच्छेदनसमुचितमिति पाठः । पूर्वचेन तृतीयस्य समुच्चयाद्दण्ड्यत्रयं दण्डद्वयमिति वैषम्याद्यथासंख्याप्रवृत्तेरिति भावः । मनुविरोधं परिहरति * यत्पुनरिति ।

ष्टशतो दमः। अष्टौ पणशतानि यस्मिन्दमे स तथोक्तः। श्राद्धभोजनार्थं पुनः शूद्रस्य विप्रवेषधारिणः तप्तशलाकया यज्ञोपवीतवद्दपुष्ट्यालिखेदिति स्मृत्यन्तरोक्तं द्रष्टव्यम्। वृत्त्यर्थं यज्ञोपवीतादिब्राह्मणलिङ्गधारिणो वध एव। द्विजातिलिङ्गिनः शूद्रान्घातयेदिति स्मरणात्॥ ३०४॥

वा. १। तथेति समुच्चये। भेदनेऽनुक्तं निमित्तमाह * क्रोधेति। आदिना लोभादि। व्यवहारदशायामपीति भावः। द्विनेत्रेत्यत्र समाहारद्विगुः पात्रादित्वं च। तदाह *नेत्रद्वयमिति। तत्र योग्यत्वायाह * ज्योतिरिति। ननु तेनापि तथोक्तावनिष्टापत्तिः, अत आह *गुर्वादीति। आदिना स्वस्यापि ग्रहणम्। द्विष्टं द्वेषविषयः, तदाह * अनिष्टमिति। तत्स्वरूपमाह * संवत्सरेति। द्विष्टादेशेति कर्मधारय इत्याह * रूपमादेशमिति। आदिश्यमानं वचनं भाषते इत्यर्थः। जीवत इत्यस्यार्थमाह *भोजनार्थमिति। विप्रत्वस्य वस्तुतस्तत्र बाधादाह *यज्ञोपेति। तेषां त्रयाणां प्रत्येकं तथोक्तिफलविशेषमाह * श्राद्धेति। *विप्रवेषेति। यज्ञोपवीतादिलिङ्गेत्यर्थः। एवमग्रेऽपि। क्वचित्तथा पाठ एव।

२। विशेषान्तरमाह * वृत्त्यर्थमिति। यावदायुर्जीविका वृत्तिः। * लिङ्गधारिणः, शूद्रस्य। व्यधिकरणबहुव्रीहेर्गमकसाध्यत्वादाह * द्विजातिलिङ्गिन इति॥ ३०४॥

मि० अव. रागलोभादिनाऽन्यथा व्यवहारदर्शने दण्डमाह।

या० दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु।

कण्टका दुष्टाः तेषु पापिष्ठम् । * तनुः, अल्पः ॥ २९७ ॥

मि० अथ. विषयविशेषे दण्डाभावमाह ।

या० चतुष्पादकृतो दोषो नापेहीति प्रजल्पतः ।

काष्ठलोष्टेषुपाषाणबाहुयुग्यकृतस्तथा ॥ २९८ ॥

मि० चतुष्पादैर्गोगजादिभिः कृतो यो दोषो मनुष्यमारणादिरूपोऽसौ गवादिस्वामिनो न भवति अपसरेति प्रकर्षेणोच्चैर्भाषमाणस्य । तथा लकुटलोष्टसायकपाषाणोत्क्षेपणेन बाहुना युग्येन च युगं वहताऽश्वादिना कृतो यः पूर्वोक्तो दोषः सोऽपि काष्ठादीन्मास्यतो न भवति अपसरेति प्रजल्पतः । काष्ठाद्युत्क्षेपणेन हिंसायां दोषाभावकथनं दण्डाभावप्रतिपादनार्थम् । प्रायश्चित्तं पुनरबुद्धिकरणनिमित्तमस्त्येव । काष्ठादिग्रहणं च शक्तितोमरादेरुपलक्षणार्थम् ॥ २९८॥

बा० १ । चतुष्पादेत्यत्र समासान्तविधेरनित्यत्वाल्लोपो नेत्याह * चतुष्पादैरिति । किं सर्वस्य, नेत्याह * अपसरेतीति । अपेहीत्यस्यायमर्थः । मार्थमाह * प्रकर्षेणेति । तस्याप्यर्थमाह * उच्चैरिति । काष्ठलोष्टेत्यत्र इषुपाषाणयोर्द्वन्द्वं कृत्वा काष्ठलोष्टाभ्यां द्वंद्वे मत्वर्थीयाचं कृत्वा बाहुशब्देन कर्मधारयं कृत्वा युग्यशब्देन शाकपार्थिवादिः, द्वंद्वो वा । पूर्वनिपातप्रकरणमनित्यमिति बोध्यम् । तदाह * तथेति । काष्ठपदार्थो * लकुटेति । लोष्टं मृत्पिण्डः इत्यर्थः । सायकेति पाषाणानामुत्क्षेपणं येनेति बहुव्रीहिणा बाहुविशेषणम् । पाषाणोत्क्षेपकेणेपि पाठान्तरम् । एतेन बाहुना कृत्वा पाषाणोत्क्षेपणेन करणेन यो दोषः कृतः स इत्यर्थः इति व्याख्या-

सभ्याः सजयिनो दण्ड्या विवादाद् द्विगुणं दमम् ॥३०५॥

मि० दुर्दृष्टान्स्मृत्याचारप्राप्तधर्मोल्लङ्घनेन रागलोभादिभिरसम्यग्विचारितत्वेनाशङ्कमानान् व्यवहारान्पुनः स्वयं सम्यग्विचार्य निश्चितदोषाः पूर्वसभ्याः सजयिनः जयिसहिताः प्रत्येकं विवादपदे यो दमः पराजितस्य तद्द्विगुणं दाप्याः ।

अप्राप्तजेतृदण्डविधिपरत्वाद्वचनस्य रागाल्लोभादित्यादिना श्लोकेनापौनरुक्त्यम् ।

यदा पुनः साक्षिदोषेण व्यवहारस्य दुर्दृष्टता तदा साक्षिण एव दण्ड्या न जयी नापि सभ्याः ।

पादो गच्छति कर्तारं पादः साक्षिणमृच्छति ।
पादः सभासदः सर्वान् पादो राजानमृच्छति ॥

इति वचनात् । ( ना. अ. ३ । १२ ) एतच्च प्रत्येकं राजादीनां दोषप्रतिपादनपरं न पुनरेकैकस्यैव पापापूर्वस्य त्रिभागाय । कर्तृसमवायिफलजननस्वभावत्वादपूर्वस्य ॥ ३०५ ॥

या. १ । * दर्शने, सभ्यादीनामिति शेषः । दुर्दृष्टानित्यत्र मतिबुद्धीति वर्त्तमाने क्त इत्याशयेन तदर्थमाह *स्मृत्येत्याद्याशङ्कमानानित्यन्तेन । रागेत्याद्युभयान्वयि । पुनर्दृष्टेति व्याचष्टे * पुनरिति । पश्चादित्यर्थः । * स्वयं, राजा । विवादविषयभूतधनादिति नार्थः, प्रागुक्तयुक्तेः।अतआह *विवादेति।

२ । अस्य "रागाल्लोभाद्भयाद्वापि" इत्येनन प्रागुक्तेन पौनरुक्त्यं परिहरति * अप्राप्तजेतृदण्डेति । यः पूर्वव्यवहारे जितस्तस्य सदोषत्वं यदि विचार्यमाणेऽस्ति तदा दुष्टत्वेन स

नमपास्तम्। * पूर्वोक्तः, मनुष्यमारणादिरूपः। * प्रास्यतः, प्रक्षिपतः। अपेहीत्यादेर्मध्यमणिन्यायेनान्वय इत्याह * अपसरेतीति। बाहुः स्वतन्त्रं निमित्तं व्याख्यात्रभिमतमित्यन्ये। दृष्टदोषाभावेऽप्यदृष्टदोषोऽस्त्येवेति माग्वदाह * काष्ठादीति। अल्पत्वायाह *अग्नुद्दीति। बहुव्रीहिः। न्यूनतां परिहरति *काष्ठादीति। चोऽप्यर्थे व्युत्क्रमे च। तोमरादिकस्यापि॥ २९८॥

मि० अघ. किञ्च।

या० छिन्ननस्येन यानेन तथा भग्नयुगादिना।
पश्चाच्चैवापसरता हिंसने स्वाम्यदोषभाक्॥ २९९॥

मि० नसि भवा रज्जुर्नस्या छिन्ना शकटादियुक्तबलीवर्दनस्या रज्जुर्यस्मिन् तत् छिन्ननस्यं शकटादि तेन, तथा भग्नयुगेन, आदिग्रहणाद्भग्नाक्षचक्रादिना च यानेन पश्चात्पृष्ठतोऽपसरता, चशब्दात्तिर्यग्गच्छता प्रतिमुखं चागच्छता च मनुष्यादिहिंसने स्वामी प्राजको वा दोषभाङ् न भवति। अतत्प्रयत्नजनितत्वाद्धिंसनस्य।

तथा च मनुः, (अ. ८ श्लो. २९१।२९२)

छिन्ननस्ये भग्नयुगे तिर्यक्प्रतिमुखागते।
अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च॥
छेदने चैव यन्त्राणां योक्त्ररश्म्योस्तथैव च।
आक्रन्दे चाप्यपेहीति न दण्डं मनुरब्रवीत्॥ इति॥२९९॥

बा० १। अन्यत्रापि दोषाभावमाह * किं चेति। फालितार्थमाह। * नसीति। निमित्तान्तरमाह। * पश्चात्पृष्ठत इति। भूमिवैषम्यादिनेति भावः। यानेनेत्यस्यानुषङ्गः। अत एवाह

जयी दण्ड्य इत्यनेन जेतृदण्डो विधीयते वचनान्तरेणाप्राप्तत्वात्, इतरांशे तु तेन प्राप्तत्वादनुवाद इति न पुनरुक्तिः। तत्र हि सभ्यमात्रग्रहणं न जयिनोऽपीति भावः।

३। विशेषान्तरमाह *यदा पुनरिति। *दोषेण, दोषेणैव।

४। विशेषान्तरमाह * यदा त्विति। उक्तप्रतिज्ञायां मानमाह * पादो गच्छतीति। कर्त्रादीनां सर्वेषामपि पापप्राप्तिप्रतिपादकैतद्वचनबलात्सर्वेऽपि दुष्टत्वेन दण्ड्या इत्यर्थः। नन्वेकस्यैव पापस्य कर्त्रादीनां पादरूपांशतः प्राप्तेरितो लाभेन दण्डोऽप्येतेषामेक एव स्यान्न पृथक् पृथगित्यत आह * एतच्चेति। उक्तवचनं चेत्यर्थः। अस्य वचनस्य दोषप्रतिपादने तात्पर्य न त्वंशतो दोषप्रापणे इत्यर्थः। उक्तेऽर्थे न्यायस्य जैमिनीयस्य मानत्वं सूचयन् हेतुमाह * कर्तृसमवायीति। इतः प्राक् यथोक्तमित्यपपाठः। "शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्" इति जैमिनीयन्यायेन यः कर्ता तस्मिन्नेव फलं समवेतमिति लभ्यते। तत्र फलं द्विविधम्, ऐहिकं पारलौकिकं च। तत्र प्रकृते ऐहिकं धर्मशास्त्रोक्तदण्डादि, पारलौकिकं नरकादि। एवं स्थिते रागाल्लोभादित्युपक्रम्य सभ्याः पृथक् पृथक् दण्ड्या इति प्रतिपुरुषमैहिकदण्डरूपसम्पूर्णफलसम्बन्धविधानादपूर्वस्य च यत्र कर्तरि स्वयमुत्पन्नं तत्रैव फलोत्पादकत्वस्वभावकत्वात्प्रत्येकं समग्रफलसम्बन्धविध्यनुपपत्त्या प्रत्येकं समग्रदुरितापूर्वसम्बन्ध इति भावः॥ ३०५॥

मि० अव. न्यायतो निर्णीतव्यवहारस्य प्रत्यावर्तयितुर्दण्डमाह।

या० यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः।

* चशब्दादिति । * हिंसने, नाशने । एतस्यासम्भवात् । ते-
नान्यत्र दोषसत्ता सूचिता । स्वामिग्रहणमुपलक्षणमित्याह * प्रा-
जक इति । यन्तेत्यर्थः । नायं पर्युदासः, किं तु प्रसज्यप्रतिषेध
इत्याह * दोषभाङ्नेति । तत्रानुक्तं बीजमाह * अनन्यगते-
ति । तस्य तत्त्वाभावादित्यर्थः । चादिसंग्राह्यांशे मानं कथय-
न्नाह * तथा चेति । ( अ. ८ । २९० )

यानस्य चैव यातुश्च यानस्वामिन एव च ।
दशातिवर्तनान्याहुः शेषे दण्डो विधीयते ॥

इति अस्यादिः । यानस्य रथादेः यातुः सारथ्यादेः या-
नस्वामिनश्च यस्य तद्यानं, तेषां छिन्ननस्यादीनि दश निमित्ता-
नि दण्डमतिक्रम्य वर्तन्ते । एषु निमित्तेषु सत्सु प्राणिमारणे
द्रव्यनाशे च तेषां दण्डो न भवति इति मन्वादय आहुः । ए-
तदन्यनिमित्ते तु दण्डोऽनुष्ठीयते इति तदर्थः । छिन्नेति । इदं
पूर्वार्धोक्तं सर्वं पूर्वोक्तरीत्या यानविशेषणम् । नस्येत्यत्र शरी-
रावयवादिति यत् । सा च तादृशबलीवर्दादिसंबन्धिनी न तु
या काचिदिति प्रागुक्तमेव । यानं च यथासम्भवं बलीवर्दा-
दिकं बोध्यम् । युगं काष्ठविशेषः । तादृशे रथादौ तिर्यक् ति-
रश्चीनं प्रतिमुखं वा ऽऽगते रथादौ । भूमिवैषम्यादिना यानस्य
चक्रान्तःप्रविष्टाक्षाख्यकाष्ठभङ्गे, तथैव चक्रभङ्गे च, यन्त्राणां
चर्मबन्धनानां छेदने च, तथैव योक्त्ररश्म्योश्छेदने च । योक्त्रं यु-
ग्यबलीवर्दादिग्रीवासंबन्धिरज्जुः काष्ठं वा । रश्मिः सामान्य-
रज्जुः प्रहरणं वा । दशमं निमित्तमाह * आक्रन्दे चापीति ।
अपसरेत्युच्चैः शब्दे सारथ्यादिना कृते च यानेन प्राणिहिंसा-
द्रव्यनाशयोः कृतयोः सारथ्यादेर्दण्डो नास्तीति मनुराहेत्यर्थः ।
नैवेत्येवः प्राग्वत् ॥ २९९ ॥

तमायान्तं पुनर्जित्वा दापयेद् द्विगुणं दमम् ॥३०६॥

मि० यः पुनर्न्यायमार्गेण पराजितोऽपि औद्धत्या-न्नाहं पराजितोऽस्मीति मन्यते तमायान्तं कूटलेख्या-द्युपन्यासेन पुनर्धर्माधिकरणमधितिष्ठन्तं धर्मेण पुनः पराजयं नीत्वा द्विगुणं दण्डं दापयेत् ।

नारदेनाप्युक्तम्, [ अ. १ । ६५ ]

तीरितं चानुशिष्टं वा यो मन्येत विधर्मतः ।

द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत् ॥ इति ।

तीरितं साक्षिलेख्यादिनिर्णीतमनुद्धृतदण्डम् । अनुशिष्टमुद्धृतदण्डं दण्डपर्यन्तं नीतमिति यावत् ।

यत्पुनर्मनुवचनम्, (अ. ९ श्लो. २३३ )

तीरितं चानुशिष्टं च यत्र क्वचन विद्यते ।

कृतं तद्धर्मतो ज्ञेयं न तत्प्राज्ञो निवर्तयेत् ॥ इति,

तत्, अर्थिप्रत्यर्थिनोरन्यतरवचनाद्व्यवहारस्याधर्म-तो वृत्तत्वाशङ्कायां पुनर्द्विगुणदण्डप्रतिज्ञापूर्वकं व्यव-हारं प्रवर्तयेत्, न पुनर्धर्मतोवृत्तत्वनिश्चयेऽपि राज्ञा लोभादिना प्रवर्तयितव्य इत्येवंपरम् ।

यत्पुनर्नृपान्तरेणापि न्यायापेतं कार्यं निर्वर्तितं तदपि सम्यक्परीक्षणेन धर्म्ये पथि स्थापनीयम् ।

न्यायापेतं यदन्येन राज्ञा ऽज्ञानकृतं भवेत् ।

तदप्यन्यायविहितं पुनर्न्याये निवेशयेत् ॥

इति स्मरणात् ॥ ३०६ ॥

बा. १ । * प्रत्यावर्त्तयितुः, वादिप्रतिवाद्यन्यतरस्य । औ द्धत्यादिनेति भावः । अपिरप्युक्तमे इत्याह * पराजितोऽपी-

मि० अथ. उपेक्षायां स्वामिनो दण्डमाह ।

या० शक्तो ह्यमोक्षयन्स्वामी दंष्ट्रिणां शृङ्गिणां तथा ।
प्रथमं साहसं दद्याद्विक्रुष्टे द्विगुणं तथा ॥ ३०० ॥

मि० अप्रवीणप्राजकप्रेरितैर्दंष्ट्रिभिर्गजादिभिः शृङ्गिभिर्गवादिभिर्वध्यमानं समर्थोऽपि स्वामी यद्यमोक्षयन् उपेक्षते तदा अकुशलप्राजकनियोजननिमित्तं प्रथमं साहसं दण्डं दद्यात् । यदा तु मारितोऽहमिति विक्रुष्टेऽपि न मोक्षयति तदा द्विगुणम् ।

यदा पुनः प्रवीणमेव प्राजकं प्रेरयति तदा प्राजक एव दण्ड्यो न स्वामी ।

यथाह मनुः, ( अ. ८ श्लो. २९४ )

प्राजकश्चेद्भवेदाप्तः प्राजको दण्डमर्हति । इति ।

प्राजको यन्ता । आप्तोऽभियुक्तः ।

प्राणिविशेषाच्च दण्डविशेषः कल्पनीयः ।

यथाह मनुः, ( अ. ८ श्लो. २९६ । २९७ । २९८ )

मनुष्यमारणे क्षिप्रं चौरवत्किल्बिषी भवेत् ।
प्राणभृत्सु महत्स्वर्द्धं गोगजोष्ट्रहयादिषु ॥
क्षुद्रकाणां पशूनां तु हिंसायां द्विशतो दमः ।
पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु ॥
गर्दभाजाविकानां तु दण्डः स्यात्पञ्चमाषकः ।
माषकस्तु भवेद्दण्डः श्वशूकरनिपातने ॥ इति ॥ ३०० ॥

वा. १ । यत्रापवर्त्तते युग्यं वैगुण्यात्प्राजकस्य तु ।
तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमम् ॥

इति मनोः ( अ. ८ । २९३ ) यत्र सारथेरकौशल्याद्यान-

ति। लिङर्थो ऽविवक्षित इत्याह * मन्यतइति। आयान्तमि त्यस्य व्याख्या * कूटेति। आदिना तथासाक्ष्यादिपरिग्रहः। *पुनः, पश्चात्। एवमग्रेऽपि। * धर्माधिकरणमिति। तन्निर्णयस्थानमित्यर्थः। अधिशीङिति कर्मत्वम्। तेनाधर्मे कृते ऽपि स्वयमधर्मो न कार्यो दोषादित्याह * धर्मेणेति। विरोधं परिहर्तुं सविशेषनारदसम्मतिमाह * नारदेनेति। तीरितमित्यस्य व्याख्या * साक्षीति। आदिना भुक्त्यादिपरिग्रहः। * अन्विति। अगृहीतदण्डामित्यर्थः। अनुशिष्टमित्यस्य व्याख्या * उद्धृतेति। गृहीतदण्डामित्यर्थः। तथा निर्णयपूर्वकामिति भावः, तदाह * दण्डेति। विधर्मत इत्यत्र तृतीयान्तात्तसिः। अधर्महेतुकं मन्येतेत्यर्थः। तामिति शेषः। *आस्थाय, दापयित्वा। * पुनः, पश्चात्। * उद्धरेत्, निश्चिनुयात्।

२। ननु नारदतो निर्णीतस्यापि व्यवहारस्य तथा सति दण्डविष्टम्भपुरःसरं पुनः करणं प्रतीयते, मानवे तु तद्वैपरीत्यमिति मिथो विरोध इत्याह, * यत्पुनरिति। यत्र क्वचन धर्माधिकरणे यत् व्यवहारपदं धर्मतस्तीरितं, पार तीर कर्मसमाप्तौ, तथा निश्चितम् असौ न पुनः प्रवर्त्तेतेति। यच्च न केवलं वाचा सत्यत्वेनोक्तं किं तु अनु शब्दोत्तरं शिष्टं च सदण्डं च कृतं तत् प्राज्ञो राजा कृतमेव विद्यान्न पुनर्निवर्तयेदित्यर्थः।

परिहरति * तादिति। मानवमित्यर्थः। अग्रेऽस्यान्वयः। तत्रादौ नारदतात्पर्यमाह * अर्थीति। वृत्तत्वं निष्पन्नत्वम्। अत एव तत्र विधर्मत इत्युक्तम्। *पुनः, पश्चात्। मनुतात्पर्यमाह * न पुनारिति। न त्वित्यर्थः। अत एव तत्र धर्मत इत्युक्तम्। धर्मतो व्यवहारो निर्णीत इति निश्चये न पुनस्तथेति मनुतात्पर्यम्। धर्मतो निर्णीतं न वेति सन्देहे तु पुनस्तथेति

मन्यथा यजति तत्र हिंसायामशिक्षितसारथ्यनियोगात्स्वामी द्विशतं दाप्यः स्यादित्यर्थस्यानुरोधेनाह * अप्रवीणेनेति । तत्र शेषं षष्ठीत्याह * गजादिभिरिति । शेषमाह * वध्यमानमिति । तत्र तथाशब्दः चार्थे । तदर्थमाह *यदीति । नियोजनेनेति तद्धर्मादिः । * विकुष्टेऽपि, आक्रोशनेऽपि ।

२। विशेषमाह * यदा पुनरिति । * तदेति । अन्यथा भावे इति शेषः । * अभियुक्तः, कुशलः । यदि स तादृश-स्तदा स एवोक्तं द्विशतं दण्डं, वक्ष्यमाणं च मनुष्यमारणे इ-त्यादिना, तं सर्वमर्हति न स्वामीत्यर्थः ।

किञ्च, ( अ. ८ )

युग्यस्थाः प्राजकेऽनाप्ते सर्वे दण्ड्याः शतं शतम् ॥ [२०४]

स चेत्तु पथि संरुद्धः पशुभिर्वा रथेन वा ।

प्रमापयेत्प्राणभृतस्तत्र दण्डो ऽविचारितः ॥ इति मनुः(२९५)

अकुशले तस्मिन्स्वामिसारथिभिन्ना अन्येऽपि यानारूढा अकुशलसारथिकयानारोहणात्सर्वे प्रत्येकं शतं शतं दण्ड्याः । स चेत्प्राजकः प्रचुरगव्यादिभी रथान्तरेण वा संरुद्धस्स्वर-थगमनानवधानात्प्रत्यक्समर्पणाक्षमः तुरगैः रथेन रथावयवैर्वा प्राणिनो व्यापादयति तत्राविचारितो दण्डः कार्य एवेत्यर्थः ।

३। विशेषान्तरमाह * प्राणीति । तस्मादपीत्यर्थः । उ-क्तसर्वस्थले एवेति भावः । मनुष्यमारणे प्राजकस्यानवधाना-धानेन कृते शीघ्रमेव तद्वत् किल्विषी दण्डवान् भवेत् । किल्वि-षमिति पाठान्तरम् । तत्र चोरदण्ड उत्तमसाहसरूपो भवेत् न तु मारणरूपः । अग्रे अर्द्धमिति श्रवणात् । गवादिषु महत्सु प्राणिषु हतेषु उत्तमसाहसस्यार्द्धं पञ्चशतात्मको भवेत् । क्षुद्र-काणां पशूनाम् । अपचितपरिमाणकाः क्षुद्रकास्तु तत्र वयसा

नारदतात्पर्यम् । तथा च नारदीयं संशयनिरासं, मानवं निश्चितविषयमिति भावः ।

४ । विशेषमाह * यत्पुनरिति । * न्यायापेतं, तद्रहितम् । न्यायापेतत्वे हेतुः अज्ञानकृतमिति । पुनः करणे हेतुमाह * अन्यायाविहितमिति । अन्यायविहितं तद्र्पात्यर्थः ॥ ३०६ ॥

मि० अथ. अन्यायगृहीतदण्डधनस्य गतिमाह ।

या० राज्ञाऽन्यायेन यो दण्डो गृहीतो वरुणाय तम् ।
निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम् ॥ ३०७॥

मि० अन्यायेन यो दण्डो राज्ञा लोभाद् गृहीतस्तं त्रिंशद्गुणीकृतं वरुणायेदमिति संकल्प्य ब्राह्मणेभ्यः स्वयं दद्यात् । यस्माच्च दण्डरूपेण यावद् गृहीतमन्यायेन तावत्तस्मै प्रतिदेयम् । इतरथाऽपहारदोषप्रसङ्गात् । अन्यायदण्डग्रहणे पूर्वस्वामिनः स्वत्वाविच्छेदाभावाच्चेति ॥ ३०७ ॥

इति श्रीमत्पद्मनाभभट्टोपाध्यायात्मजस्य श्रीमत्परमहंसपरिव्राजकाचार्यविज्ञानेश्वरभट्टारकस्य कृतौ ऋजुमिताक्षराख्यायां याज्ञल्कीयधर्मशास्त्रविवृतौ द्वितीयोऽध्यायो व्यवहाराख्यः समाप्तिमयात् ॥

वा. १ । * गृहीतेति । अन्यायेन गृहीतस्य दण्डरूपस्य धनस्येत्यर्थः । क्वचिद्दण्डस्येत्येव पाठः । अन्यायेनेति छेद इत्याह * अन्यायेनेति । तत्र निमित्तमाह * लोभेति । वरुणाय निवेद्येत्यस्यार्थमाह * वरुणायेदमिति । न ममेति शेषः । *स्वयं, स्वयमेव । दोषख्यापनार्थमिदम् । न्यूनतां परिहरति *यस्माच्चेति । चः समुच्चये व्युत्क्रमे च । विपक्षे बाधकमाह * इत-

९। अव्यवस्थानिरासायोक्तस्थानगर्भमाह *उपस्थेति। उपस्थादीनां मध्ये इत्यर्थः। उपस्थमत्र शिश्नमूलं प्रजननोत्पादकम्। यत्र च दण्डविशेषो नाम्नातस्तत्र यस्य येनाङ्गेनापराधस्तत्रैव पीडनीयः। तत्रागम्यागमने उपस्थनिग्रहः। अभक्ष्यभक्षणे उदरनिग्रह आहारनिवृत्त्यादिना। वाग्दण्डपारुष्ये जिह्वायाः। स च छेदः। चौर्ये हस्तयोः। पादेन चलनकुन्यनिक्षेपान् पादयोः। राजदारादिदर्शने चक्षुषोः। तन्तुलेपनाघ्राणे नासिकायाः। राजादिरहस्यं भित्त्याद्यन्तरे शृण्वतः कर्णयोः। महापातकिनो मारणे देहस्येति बोध्यम्।

१०। ननु आध्याद्यपहारे महादोषे अकिञ्चनस्य भित्तदण्डाद्युक्तमयुक्तं, तस्य स्वल्पापराधविषयत्वात्, अतः तत्रैव पक्षान्तरमप्याह *कर्मेति। अत्र क्रमोऽप्येवमेव बोध्यः। मेधातिथ्युक्तः, अग्रेऽशक्तावित्युक्तेश्च। अत्र मानमाह *यथोक्तमिति। *धनेनेति। सर्वथा धनदानाक्षमं ज्ञात्वा स्वाधीनं कर्म कारयेदित्यर्थः। *अशक्तौ, कर्मकरणाशक्तौ। ब्राह्मणादन्ये इति उभयोः शेष इति ध्वनयन्नाह *ब्राह्मेति। *पुनः, तु। अधिकरणस्य शेषत्वविवक्षया षष्ठी, प्रयोज्यानीत्यस्य कर्त्तव्यानीत्यर्थो वा। *अवृत्ताविति। अवृत्तौ दुराचारेऽन्यायिनि ब्राह्मणे स्वव्यापारनिरोधान्यायप्रख्यापनादीनि कर्त्तव्यानीत्यर्थः। ब्राह्मणे इति प्रकृतत्वाल्लब्धम्। *नारदेनापीति। उक्तोक्तमित्यत्रान्वयः। वधः प्राणवियोगानुकूलव्यापारः। निर्वासनेत्यस्य नित्यसापेक्षत्वेन पुरादिति विशेषणान्वितत्वेऽपि समासः। *तदङ्गेति। यदङ्गकृतोऽपराधस्तदङ्गेत्यर्थः। *वधादृते इति। एष दण्डविधिः स्मृत इत्यस्यानुषङ्गः। तदेव विशदयति *न वधमिति।

११। वधानुकल्पमाह *शिरस इति। अत एव—

ष्यम् । तस्य प्रसंगागतत्वात् । न चैवं षड्भिः परिहार्यो राज्ञेति मानुक्तलोकविरोध इति वाच्यम् । अस्यानन्तरव्यवहितपूर्वतनेन श्लोकेन "स एष बहुश्रुतो भवति लोकवेदवेदाङ्गविद्वाकोवाक्येतिहासपुराणकुशलस्तदपेक्षस्तद्वृत्तिश्चाष्टाचत्वारिंशता संस्कारैः संस्कृतस्त्रिषु कर्मस्वभिरतः षट्सु वा सामयिकाचारिकेष्वभिविनीत" इत्यनेन प्रतिपादितबहुश्रुतविशेषत्वेन ब्राह्मणमात्रविषयत्वाभावात् । प्रतिपादितमिदमधस्तात् व्याख्यातं च ।

८ । तदेतत् व्यवस्थितिशेषमाह *वधदण्डोऽपीति । *ब्राह्मणव्यतिरिक्तानां, ब्राह्मणव्यतिरिक्तानां तु । क्वचित्तथैव पाठः । अथ कश्चिद्वधदण्डोऽपि शारीरो ब्राह्मणव्यतिरिक्तानां नवधा दर्शित इति पाठः । स च वक्ष्यमाणाद्यव्याख्यानानुकूलः । आद्यपाठस्तु द्वितीयव्याख्यानानुकूलो दश स्थानानीत्युक्तिस्वरसतसिद्धः । शारीरो दशधा प्रोक्त इति नारदसंवादी चेति बोध्यम् । तत्र मानमाह *यथाहेति । त्रिषु क्षत्रियवैश्यशूद्रेषु वर्णेषु यानि दण्डस्य स्थानानि तानि दश सोऽब्रवीदित्यर्थः । इदमुपलक्षणमनुलोमादेरपि । तदेतत् व्यनयन्नाह *अक्षत इति । शारीरसकलवधदण्डरहित इत्यर्थः । *व्रजेत्, राजगृहात् पुराद्वा । *पञ्चमं, स्थानम् । अव्यवहितेनान्वेति । स्थानशब्दोऽत्र विषयपरः । तत्तत्प्रदेशे पीडनीय इति तात्पर्यम् । न च धनदण्डस्य पृथग्विहितत्वाच्छारीरभेदमध्ये तदुक्तिः पुनरयुक्ता ऽसम्बद्धा चेति वाच्यम् । धनकृतापराधे तद्दण्ड एव नान्य इत्येतदर्थं पुनस्तदुक्तिः । तन्मध्ये लेखस्तु तत्तुल्यत्वप्रतिपादनाय । यद्वा तत्पीडया शरीरपीडापरो ऽयमन्य एव ततो धनदण्डादिति प्रकारान्तरमत्र मेधातिथिनोक्तं, तद् तत एव बोध्यम् ।

---

१ एतच्चिह्नमध्यस्थः पाठः पुस्तकान्तरेऽस्ति ।

मनुः (अ. ९। श्लो. २३८। २३९)
असम्भोज्या असंयाज्या असम्पाठ्याविवाहिनः।
चरेयुः पृथिवीं दीनाः सर्वधर्मबहिष्कृताः॥
ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः।
निर्दया निर्नमस्कारास्तन्मनोरनुशासनम्॥ इति।
१३। *ललाटे चेति। अत एव
बृहस्पतिः,
हस्ताङ्घ्रिलिङ्गनयनं जिह्वा कर्णौ च नासिका।
ग्रीवा पादार्द्धसन्दंशं ललाटोष्ठं गुदं कटिः॥
स्थानान्येतानि दण्डस्य निर्दिष्टानि चतुर्दश।
ललाटेऽङ्को ब्राह्मणस्य नान्यो दण्डो विधीयते॥ इति।
१४। *प्रयाणमिति। अत एव—
यमः,
ब्राह्मणस्यापराधेषु चतुर्ष्वेव विधीयते।
शिरसो मुण्डनं दण्डः पुरान्निर्वासनं तथा॥
प्रख्यापनार्थं पापस्य प्रयाणं गर्दभेन च।
ललाटे चाङ्ककरणं कुर्याद्राजा यथाविधि॥ इति।
*दर्शितेति। मनुनेति शेषः। *गुर्विति।
ब्रह्महा च सुरापश्च स्तेयी च गुरुतल्पगः।
एते सर्वे पृथग् ज्ञेया महापातकिनो नराः॥(अ.९।२३५।)
चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्वताम्।
शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत्॥२३६ इत्यादिः।
*ध्वजेति। सुरासम्बन्धी यो ध्वजः स कार्य इत्यर्थः।
*श्वपदं, शुनः पदम्। अशिराः कबन्धः।
ब्राह्मणस्य च ब्रह्महत्यागुरुतल्पसुवर्णस्तेयसुरापानेषु कब-

मनुः, ( अ. ८ । )

अब्राह्मणः संग्रहणे प्राणान्तं दण्डमर्हति । ( श्लो. ३५९ । )

मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते ।

इतरेषां तु वर्णानां दण्डः प्राणान्तिको भवेत् ॥ (श्लो. ३७९)

न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम् ।

राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम् ॥ ( श्लो. ३८० । )

न ब्राह्मणवधाद्भूयानधर्मो विद्यते भुवि ।

तस्मादस्य वधं राजा मनसाऽपि न चिन्तयेत् ॥ इति ।

श्लो. ३८१ ।

यमोऽपि,

सर्वेषामेव वर्णानामन्योन्यस्यापराधिनाम् ।

शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत् ॥

जगत्सर्वमिदं हन्यात् ब्राह्मणस्य न तत्समम् ।

तस्मात्तस्य वधं राजा मनसाऽपि न चिन्तयेत् ॥

अवध्यान् ब्राह्मणान् प्राहुः सर्वपापेष्ववस्थितान् ।

यद्यदेतेषु कुशलं तत्तद्राजा समाचरेत् ॥ इति ।

सुमन्तुरपि,

नाततायिवधे दोषोऽन्यत्र गोब्राह्मणवधादिति ।

बृहस्पतिरपि,

महापातकयुक्तोऽपि न विप्रो वधमर्हति ।

निर्वासनाङ्कने मौण्ड्यं तस्य कुर्यान्नराधिपः ॥ इति ।

वधादृते ब्राह्मणस्य दण्डो भवति कर्हिचित् ।

अवध्या ब्राह्मणा गावो लोकेऽस्मिन्वैदिकी स्मृतिः ॥

इति स्मृत्यन्तरमपि ।

१२ । *पुरादिति । अत एव— . . . . . .

इति हारीतस्य,

सर्वत्र त्रयाणां वर्णानां धनहरणं वधबन्धक्रियाकरणानि महत्स्वपि पातकेषु विवासकरणं ब्राह्मणस्य प्रायश्चित्तानि वा शोधनम् अपीड्यो हि ब्राह्मण इति शङ्खलिखितयोः, प्रागुक्तस्मृतीनां च परिग्रहः । सर्वस्वहरणमपि ब्राह्मणस्य नास्ति । सद्रव्यः सपरिच्छद इत्यग्रे—

इतरे कृतवन्तस्तु पापान्येतान्यकामतः ।
सर्वस्वहारमर्हन्ति कामतस्तु प्रवासनम् ॥

इति मनूक्तेः । ( अ. ९।२४२ । )

त्रयाणां वर्णानां धनापहारवधबन्धनक्रियाविवासनाङ्ककरणं, न ब्राह्मणस्येति शङ्खोक्तेश्च । तत्र धनापहारः सर्वस्वापहारो विवक्षितो वधसाहचर्यात् । शारीरस्त्ववरोधादिरिति प्रागुक्तनारदीये वधसर्वस्वहरणयोः पाठाच्चेति । तस्मात् ब्राह्मणस्य शारीरः सर्वोऽपि दण्डो नास्ति कदाचिदपि । प्रागुक्तस्मृतिकदम्बात् ।

आचार्यं च प्रवक्तारं पितरं मातरं गुरुम् ।
न हिंस्याद् ब्राह्मणान् गाश्च सर्वांश्चैव तपस्विनः ॥
( म. अ. ४ । श्लो. १ ६ २ । )

इति मनूक्तेश्च । धनदण्डमध्ये सर्वस्वहरणं नास्ति । तदन्यधनदण्डस्त्वस्त्येव । समग्रधनमिति तु कृतसाहसविषयम् । ब्राह्मणे साहसः पूर्व इति मनूक्तमप्येवम् । तथा च धिग्दण्डवाग्दण्डौ मौण्ड्यं यत्किञ्चिदर्थदण्डो विवासनाङ्ककरणगर्दभयानानि च पर्यवसितानि । इदमपि प्रायश्चित्तानिच्छोः । तदिच्छोस्तु तदेव नैतत् । एवं बहुश्रुतस्यापि न किञ्चित् । किं तु स्वयमेव निष्कृतिं कुर्यात् । साऽपि स्वल्पा प्रायश्चित्तप्रकरणे स्फुटीभविष्यति । अत एवात्रापि साक्षिप्रकरणे मूले उक्तम्,

भगःश्वपदध्वजकबन्धानामेकतमेनाकारेण ललाटेऽङ्कयित्वा विषयान्ते नि-र्वासनमिति शेषागमः ।

ब्राह्मणस्यापराधेषु चतुर्ष्वङ्को विधीयते ।
गुरुतल्पे सुरापाने स्तेये ब्राह्मणहिंसने ॥
गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ।
स्तेये तु श्वपदं कृत्वा शिखिपित्तेन पूरयेत् ॥
निःशिराः पुरुषः कार्यो ललाटे द्विजघातिनः ।
असम्भाष्यस्तु कर्तव्यस्तन्मनोरनुशासनम् ॥ इति नारदः ।
व्य. प. १८ । श्लो. ( ४३ । ४४ । ४५ । )

शिलाञ्जनं शिखिग्रीवमित्यमरः । अस्यापवादोऽपि मनुनोक्तः. ( अ. ९ । श्लो. २४० । २४१ )

प्रायश्चित्तं तु कुर्वाणाः सर्वे वर्णा यथोदितम् ।
नाङ्क्या राज्ञा ललाटे स्युर्दाप्यास्तूत्तमसाहसम् ॥
आगःसु ब्राह्मणस्यैव कार्यो मध्यमसाहसः ।
निर्वास्यो वा भवेत् राष्ट्रात्सद्रव्यः सपरिच्छदः ॥ इति ।

परिच्छदशब्देन पुत्रदारभृत्यहस्त्यश्वादिसम्पदुच्यते । सपरिग्रह इति पाठान्तरेऽप्येवम् । तदङ्गच्छेदोऽपि ब्राह्मणस्य नास्तीति प्रतिपादयन् विरोधं परिहरति *यत्त्विति । *आपस्तम्बेनोक्तमिति । आपस्तम्बवचनमिति पाठान्तरम् । *न चक्षुरुद्धरणमिति । न चक्षुषोरुद्धरणं तस्यार्थ इत्यर्थः । क्वचित्तथैव पाठः । मनुं प्रागुक्तमाह *अक्षत इति । गौतममाह *न शारीरो ब्राह्मणे दण्ड इति । प्रथमादिना प्रागुक्तमनुगौतमवचनान्तरपरिग्रहः । द्वितीयादिना—

न त्वङ्गभेदं विप्रस्य प्रवदन्ति मनीषिणः ।
तपसा चेज्यया चैव ब्राह्मणः पूयते सदा ॥

[illegible]

[illegible] । [illegible]

[illegible] ॥ २६ ॥

मि० [illegible] की-

दृशो भोगः प्रमाण[illegible] आह ।

या० आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात्

मि० स्वत्वहेतुः प्रतिग्रहक्रयादिरागमः । स भोगादप्यधिको बलीयान् । स्वत्वबोधने भोगस्यागमसापेक्षत्वात् ।

यथाह नारदः । (व्य० प० १ श्लो० ८५)

आगमेन विशुद्धेन भोगो याति प्रमाणताम् ।
अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति ॥ इति ।

न च भोगमात्रात्स्वत्वावगमः । परकीयस्याप्यपहारादिनोपभोगप्रसङ्गात् । अत एव—

भोगं केवलतो यस्तु कीर्तयेन्नागमं क्वचित् ।
भोगच्छलोपदेशेन विज्ञेयः स तु तस्करः ॥

इति स्मर्यते । ( ना० व्य० प० १।८६ )

अतश्च सागमो दीर्घकालो निरन्तरो निराक्रोशः प्रत्यर्थिप्रत्यक्षश्चेतिपञ्चविशेषणयुक्तो भोगः प्रमाणमित्युक्तं भवति ।

तथा च स्मर्यते,

सागमो दीर्घकालश्चाविच्छेदोऽपरवोज्झितः ।

( या. अ. २। श्लो. ८१। ८२। )

पृथक् पृथक् दण्डनीयाः कूटकृत्साक्षिणस्तथा।
विवादाद् द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः॥
यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः।
स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत्॥ इति।
स्तेयप्रकरणेऽपि, ( या. अ. २। श्लो. २७०। )
सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत्।
इत्युक्तम्। मनुनाऽप्युक्तं, ( अ. ८। श्लो. १२३। )
कौटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान्धार्मिको नृपः।
प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत्॥ इति।

अस्यार्थोऽग्रे स्फुटीभविष्यति। अत्र प्रवासः ओष्ठच्छेदनं जिह्वाछेदनं प्राणवियोजनं चेति यथायथं बोध्यम्। विवासो निष्कासनं नग्नीकरणं वा गृहभङ्गो वेति यथायथं बोध्यम्। तत्रेयं व्यवस्था। लोभादिकारणविशेषपरिज्ञाने ऽनभ्यासे च ब्राह्मणस्यापि तत्र तत्रोक्तो ऽर्थदण्ड एव अभ्यासे त्वर्थदण्डो विवासनं च। तत्रापि जातिद्रव्यानुबन्धाद्यपेक्षया विवासनं नग्नीकरणं गृहभङ्गो देशान्निर्वासनं चेति व्यवस्था द्रष्टव्या। लोभादिकारणविशेषापरिज्ञाने ऽभ्यासे चाल्पविषये कौटसाक्ष्ये ब्राह्मणस्यापि क्षत्रियादिवदर्थदण्ड एव। महाविषये तु देशान्निर्वासनमेव। अत्राप्यभ्यासे सर्वेषामेव मनूक्तं बोध्यम्। अकिञ्चनस्य तु तस्य निमित्ततारतम्येन मौण्ड्याङ्ककरणगर्दभप्रयाणधिग्दण्डवाग्दण्डाः क्रमेण बोध्या इति। न च समग्रधनमित्याद्युक्त्या ब्राह्मणस्यार्थदण्डो नास्तीति वाच्यम्। अर्थदण्डाभावे शारीरदण्डे च निषिद्धे स्वल्पेऽप्यपराधे सधनस्य नग्नीकरणगृहभङ्गाङ्ककरणविप्रवासनं दण्डाभावो वा प्रसज्येत यतः। चतुर्णामपीति

अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।
चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः ॥

इत्युक्तम् । न चानागमं तु यो भुङ्क्ते इत्येकवचननिर्देशात् बहून्यब्दशतान्यपीति अपिशब्दप्रयोगात् प्रथमस्य पुरुषस्य निरागमे त्रिकालोपभोगेऽपि दण्डविधानमिति मन्तव्यम् । द्वितीये तृतीये वा पुरुषे निरागमस्य भोगस्य प्रामाण्यप्रसङ्गात् । न चैतद्युक्तम् ।

आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा ।

इति नारदस्मरणात् । ( नोपलभ्यते । )

तस्मात्सर्वत्र निरागमोपभोगे अनागमं तु यो भुङ्क्ते इत्येतत् द्रष्टव्यम् । यदपि—

अन्यायेनापि यद् भुक्तं पित्रा पूर्वतरैस्त्रिभिः ।
न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम् ॥

इति, तदपि पित्रा सह पूर्वतरैस्त्रिभिरिति योज्यम् । तत्रापि क्रमात् त्रिपुरुषागतमित्यनेनानेककालोपलक्षणम् । त्रिपुरुषाविच्छिन्नायामेकवर्षाभ्यन्तरेऽपि पुरुषत्रयातिक्रमसम्भवात् द्वितीये वर्षे निरागमस्य भोगस्य प्रामाण्यप्रसङ्गात् । तथा स्मृति—

स्मार्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते ।

इति स्मृतिविरोधः । अन्यायेनापि यद् भुक्तमित्येतच्च अन्यायेनापि भुक्तमपहर्तुं न शक्यम् किंपुनर्न्यायानिश्चये इति व्याख्येयम् । अपिशब्दश्रवणात् ।

यथोक्तं हारीतेन,

यद्विनाऽऽगममत्यल्पं भुक्तं पूर्वैस्त्रिभिर्भवेत् ।
न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम् ॥

प्रन्यायैर्मनिधानोऽपि परिभोगोऽपि पञ्चधा ॥ इति ।

क्वचिदागमनिरपेक्षस्यापि भोगस्य प्रामाण्यमि-त्याह "विना पूर्वक्रमागतादिति । पूर्वेषां पित्रादीनां त्रयाणां क्रमः पूर्वक्रमः तेनागतो यो भोगस्तस्माद्विना, आगमोऽभ्यधिक इति संबन्धः । स पुनरागमादभ्य-धिकः आगमनिरपेक्षः प्रमाणमित्यर्थः । तत्राप्यागम-ज्ञाननिरपेक्षो न सत्तानिरपेक्षः । सत्ता तु तेनैवावग-म्यते इति बोद्धव्यम् । विना पूर्वक्रमागतादित्येतच्च अस्मार्तकालप्रदर्शनार्थम् । आगमोऽभ्यधिको भोगा-दिति च स्मार्तकालविषयम् । अतश्च स्मरणयोग्ये काले योग्यानुपलब्ध्या आगमाभावनिश्चयसंभवादा-गमज्ञानसापेक्षस्यैव भोगस्य प्रामाण्यम् । अस्मार्ते तु काले योग्यानुपलब्ध्यभावेनागमाभावनिश्चयासम्भ-वादागमज्ञाननिरपेक्ष एव संततो भोगः प्रमाणम् । एतदेव स्पष्टीकृतम्—

कात्यायनेन,

स्मार्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते ।
अस्मार्तेऽनुगमाभावात्क्रमात्त्रिपुरुषागता ॥ इति ।

स्मार्तश्च कालो वर्षशतपर्यन्तः । शतायुर्वै पुरुष इति श्रुतेः । अनुगमाभावादिति योग्यानुपलब्ध्य-भावेनागमाभावनिश्चयाभावादिति । अतश्च वर्षश-ताधिको भोगः संततोऽप्रतिरवः प्रत्यक्षश्चागमाभावे त्वानिश्चिते अव्यभिचारादाक्षिप्तागमः स्वत्वं गमयति। अस्मार्तेऽपि कालेऽनागमस्मृतिपरम्परायां सत्यां न भोगः प्रमाणम् । अत एव—

प्रत्ययः । कायिकः पुनः कन्यादानादिष्वभिमर्शनादिरूपोऽनेकविधः ।

तत्र च नियमः स्मर्यते,

दद्यात्कृष्णाजिनं पृष्ठे गां पुच्छे करिणं करे ।
केसरेषु तथैवाश्वं दासीं शिरसि दापयेत् ॥ इति ।

आश्वलायनोऽप्याह,

अनुमन्त्रयेन प्राणमभिमृशेत्पाणिं कन्यायाश्चेति । तत्र हिरण्यवस्त्रादावुदकदानानन्तरमर्पणादानादिसम्भवात् त्रिविधोऽपि स्वीकारः सम्पद्यते । क्षेत्रादौ पुनः फलोपभोगव्यतिरेकेण कायिकस्वीकारासम्भवात् स्वल्पेनाप्युपभोगेन भवितव्यम् । अन्यथा दानक्रियादेः सम्पूर्णता न भवतीति फलोपभोगलक्षणकायिकस्वीकारविकल आगमो दुर्बलो भवति तत्सहितादागमात् । एतच्च द्वयोः पूर्वापरकालापरिज्ञाने । पूर्वापरकालपरिज्ञाने तु विगुणोऽपि पूर्वकालागम एव बलीयानिति ।

अथवा ।

लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधम्—इत्युक्तम् । एतेषां समवाये कुत्र कस्य वा प्राबल्यमित्यत्रेदमुपतिष्ठते,

आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात् ।
आगमेऽपि बलं नैव भुक्तिः स्तोकाऽपि यत्र नो ॥ इति ।

अयमर्थः । आद्ये पुरुषे साक्षिभिर्भावित आगमो भोगादभ्यधिको बलवान् । पूर्वक्रमागताद्भोगाद्विना । स पुनः पूर्वक्रमागतो भोगश्चतुर्थपुरुषालिखितेन भावि-

इति, तथाप्यत्यन्तमागमं विनेति अत्यन्तमुपलभ्यमानमागमं विनेति व्याख्येयम्, न पुनरागमस्वरूपं विनेति । आगमस्वरूपाभावे भोगशतेनापि न स्वत्वं भवतीत्युक्तम् । क्रमात्त्रिपुरुषागतमित्येतत् उदाहरणार्थम् । ननु स्मरणयोग्ये काले भोगस्यागमसापेक्षस्य प्रामाण्यमनुपपन्नम् । तथाहि । यद्यागमः प्रमाणान्तरेणावगतस्तदा तेनैव स्वत्वावगमान्न भोगस्य स्वत्वे आगमे वा प्रामाण्यम् । अथ प्रमाणान्तरेणागमो नावगतः कथं तद्विशिष्टो भोगः प्रमाणम् । उच्यते । प्रमाणान्तरेणावगतागमसहित एव निरन्तरो भोगः कालान्तरे स्वत्वं गमयति । अवगतोऽप्यागमो भोगरहितो न कालान्तरे स्वत्वं गमयितुमलम् । मध्ये दानविक्रयादिना स्वत्वापगमसम्भवादिति सर्वमनवद्यम् ।

आगमसापेक्षो भोगः प्रमाणमित्युक्तम् । आगमस्तर्हि भोगनिरपेक्ष एव प्रमाणमित्यत आह ।

या० आगमेऽपि बलं नैव भुक्तिः स्तोकाऽपि यत्र नो॥२७॥

यस्मिन्नागमे स्वल्पाऽपि भुक्तिर्नास्ति तस्मिन्नागमे बलं सम्पूर्णं नैवास्ति । अयमभिसन्धिः । स्वस्वत्वनिवृत्तिः परस्वत्वापादनं च दानम् । परस्वत्वापादनं च परो यदि स्वीकरोति तदा सम्पद्यते नान्यथा । स्वीकारश्च त्रिविधः, मानसो वाचिकः कायिकश्चेति । तत्र मानसो ममेदमिति सङ्कल्परूपः । वाचिकस्तु ममेदमित्याद्यभिव्याहारोल्लेखी · सविकल्पः

प्रत्ययः । कायिकः पुनरुपादानाभिमर्दनादिरूपोऽनेकविधः ।

तत्र च नियमः स्मर्यते,

दद्यात्कृष्णाजिनं पृष्ठे गां पुच्छे करिणं करे ।
केसरेषु तथैवाश्वं दासीं शिरसि दापयेत् ॥ इति ।

आश्वलायनोऽप्याह,

अनुमन्त्रणेन प्राणमभिमृश्योदपाणि कन्यां गामिति ।

तत्र हिरण्यवस्त्रादावुदकदानानन्तरमेवोपादानादिसम्भवात् त्रिविधोऽपि स्वीकारः सम्पद्यते । क्षेत्रादौ पुनः फलोपभोगव्यतिरेकेण कायिकस्वीकारासम्भवात् स्वल्पेनाप्युपभोगेन भवितव्यम् । अन्यथा दानक्रियादेः सम्पूर्णता न भवतीति फलोपभोगलक्षणकायिकस्वीकारविकल आगमो दुर्बलो भवति तत्सहितादागमात् । एतच्च द्वयोः पूर्वापरकालापरिज्ञाने । पूर्वापरकालपरिज्ञाने तु विगुणोऽपि पूर्वकालागम एव बलीयानिति ।

अथवा ।

लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधम्—इत्युक्तम् । एतेषां समवाये कुत्र कस्य वा प्राबल्यमित्यत्रेदमुपतिष्ठते,

आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात् ।
आगमेऽपि बलं नैव भुक्तिः स्तोकाऽपि यत्र नो ॥ इति ।

अयमर्थः । आद्ये पुरुषे साक्षिभिर्भावित आगमो भोगादभ्यधिको बलवान् । पूर्वक्रमागताद्भोगाद्विना । स पुनः पूर्वक्रमागतो भोगश्चतुर्थपुरुषलिखितेन भावि-

मादागमाद् बलवान् । मध्यमे तु भोगरहितादागमा-
त्स्तोकभोगसहितोऽप्यागमो बलवानिति ।

एतदेव नारदेन स्पष्टीकृतम्,

आद्ये तु कारणं दानं मध्ये भुक्तिस्तु सागमा ।
कारणं भुक्तिरेवैका सन्तता या चिरन्तनी॥इति ॥२७॥

या० १ । अव्यवहितेन सङ्गत्यभावाद् व्यवहितेन सङ्गतिमाह *स्वत्वे इति । पश्यतो ब्रुवत इत्यत्रेति भावः । *भोगमात्रस्य, केवल-भोगस्य । एवमग्रेऽपि । आद्यपादार्थे शान्दे स्वत्वोपपादकहेतो-रागमस्य भोगात्प्राबल्यरूपं विशिष्टभोगस्य स्वत्वे प्रामाण्यम-भिप्रायतोऽभिधास्यन्नाह *स्वत्वेति । तत्र हेतुमाह *स्वत्वबोधेति। भोगस्य स्वत्वे प्रामाण्यस्य प्रतिग्रहादिसापेक्षतया प्रतिग्रहादेस्तु स्वत्वोत्पत्तौ भोगानपेक्षतया सापेक्षनिरपेक्षयोर्निरपेक्षं बलीय इति न्यायेनागमस्य प्रतिग्रहाद्यात्मकस्य ततो बलीयस्त्वमिति भावः । अत्र मानमाह *यथेति । यथाकथञ्चिदागमस्यापि न तद्धेतुत्वमित्याह *विशुद्धेनेति । कापट्यरहितेनेत्यर्थः । इद-मेव व्यतिरेकमुखेन द्रढयति *अविशुद्धेति । तदेव विशदयति *न चेति । न हीत्यर्थः।एवं चेदप्रयुक्तमेवेति शङ्काशयः । समा-धत्ते *परेति । तथा च तस्य तद्व्यभिचारित्वेन तत्त्वमिति तद्यु-क्तमेवेति भावः । अत्रापि नारदमेवाह *अत एवेति । स्मर्यते इत्यत्रान्वयः।*केवलतः, केवलम्। सार्वविभक्तिकस्तासिः। अस्यैव व्यवच्छेद्यमाह *नागममिति । *कचित्, कचिदपि। यद्वा कापि व्यवहारविषये। *भोगेति। भोगच्छलस्योपदेशेन कथनेनेत्यर्थः। छलापदेशेनेत्यपपाठः, पौनरुक्त्यापत्तेः । फलितमाह *अतश्चेति। तस्य ततो बलवत्त्वाचेत्यर्थः । तत्र तावत्सामान्यत आह *सागम इति । सागमः विशुद्धागमसहितः । *दीर्घेति । बहुव्रीहिः ।

एवमग्रेऽपि । अविच्छेदः निरन्तरः । अपरिवर्जितः निराक्रोशः। विच्छेदापरवोज्झित इति पाठे विच्छेदश्चापरवश्च ताभ्यामुज्झितः रहितः । अविच्छेदोऽपरवोज्झित इति पाठस्तु युक्त एव । अपरव आक्रोशः । विच्छेदरहितो निरन्तरः । अपरवरहितो निराक्रोशः । *मत्यर्थीति । व्यधिकरणपदो बहुव्रीहिः । अपिः प्रकृतान्यसमुच्चायकः ।

२ । उक्तपञ्चविशेषणानां व्यवस्थार्थं पूर्वोक्तवचनमिव वचनान्तरमेव द्वितीयपादमभिप्रायतो व्याख्यातुमवतरणमाह *कानिचिदिति । कपिञ्जलाधिकरणन्यायेन वक्ष्यमाणवाक्यकदम्बानुरोधेन चाह *त्रयाणामिति। नित्यसापेक्षत्वाद्वृत्तिः। सम्भवत्येकवाक्यत्वे इति न्यायेनाह *आगम इति । तात्पर्यार्थमाह *स पुनरिति । स पूर्वक्रमागतो भोगस्त्वित्यर्थः । आगमादित्यादेस्तात्पर्यार्थमाह *आगमेति । शाब्दस्तु मानवत् । अत्र आगमनैरपेक्ष्यं तज्ज्ञाननैरपेक्ष्यकृतं, न तु तत्सत्तानैरपेक्ष्यकृतमिति विशेषमाह *तत्रापीति । आगमनिरपेक्ष इत्यत्रापीत्यर्थः । बोद्धव्यमित्यत्रान्वयः । तत्रापि कश्चिदागमोऽस्तीत्यागमसद्भावज्ञानापेक्षा नतु अयमागम इति शुक्लग्राहिकया तज्ज्ञानापेक्षेति भावः ।

३ । नन्वेवमपेक्षितसत्तासद्भावे किं मानमत आह *सत्तात्विति। *तेनैव, विशिष्टेनोपभोगेनैव। नन्वेवमन्योन्याश्रयप्रसङ्गः। तथाहि । प्रमाणभूतेन तादृशभोगेनागमसत्ताऽवगतिः आगमसत्ताऽवगतौ तत्सहकृतभोगस्य प्रामाण्यावधारणमिति । अत्राहुः। चिरकालोपभोगानुपपत्तिरूपार्थापत्त्याऽऽगमसत्तावगतिः। तस्यामवगतायां तत्सहकृतभोगस्य प्रामाण्यनिश्चय इति साक्षात्प्रमाणभूतेन भोगेनागमसत्ताया अनिश्चयान्नान्योन्याश्रयः। तेनैवेत्यस्य तु तद्द्वारकार्थापत्तिरूपप्रमाणेनैवेत्यर्थ इति नासङ्गतिः। तथा च

त्वादागमाद्बलवान् । मध्यमं तु भोगरहितादागमा-त्स्मोक्तभोगसहितोऽप्यागमो बलवानिति ।

एतदेव नारदेन स्पष्टीकृतम्,

आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा ।
कारणं भुक्तिरेवैका सन्तता या चिरन्तनी॥इति ॥२७॥

मा० १ । अव्यवहितेन सङ्गत्यभावाद् व्यवहितेन सङ्गतिमाह *स्वत्वे इति। पश्यतो ब्रुवत इत्यत्रेति भावः।*भोगमात्रस्य, केवल-भोगस्य । एवमग्रेऽपि । आद्यपादार्थं ज्ञानं स्वत्वोपपादकहेतो-रागमस्य भोगात्प्राबल्यरूपं विशिष्टभोगस्य स्वत्वे प्रामाण्यम-भिप्रायेणाऽभिधास्यन्नाह *स्वत्वेति ।तत्र हेतुमाह *स्वत्वबोधेति। भोगस्य स्वत्वे प्रामाण्यस्य प्रतिग्रहादिसापेक्षतया प्रतिग्रहादेस्तु स्वत्वोत्पत्तौ भोगानपेक्षतया सापेक्षनिरपेक्षयोर्निरपेक्षं बलीय इति न्यायेनागमस्य प्रतिग्रहाद्यात्मकस्य ततो बलीयस्त्वमिति भावः । अत्र मानमाह *यथोक्तेति । यथाकथञ्चिदागमस्यापि न तद्धेतुत्वमित्याह *विशुद्धेनेति । कापट्यरहितेनेत्यर्थः । इद-मेव व्यतिरेकमुखेन द्रढयति *अविशुद्धेति । तदेव विशदयति *न चेति । न हीत्यर्थः।एवं चेदमयुक्तमेवेति शङ्काशयः । समा-धत्ते *परेति । तथा च तस्य तद्व्यभिचारित्वेन तत्त्वामिति तद्यु-क्तमेवेति भावः । अत्रापि नारदमेवाह *अत एवेति । स्मर्यते इत्यत्रान्वयः।*केवलतः, केवलम्। सार्वविभक्तिकस्तासिः। अस्यैव व्यवच्छेद्यमाह *नागमामिति । *क्वचित्, क्वचिदपि। यद्वा क्वापि व्यवहारविषये। *भोगेति। भोगच्छलस्योपदेशेन कथनेनेत्यर्थः। छलापदेशेनेत्यपपाठः, पौनरुक्त्यापत्तेः । फलितमाह *अतश्चेति। तस्य ततो बलवत्वाच्चेत्यर्थः । तत्र तावत्सामान्यत आह *सागम इति । सागमः विशुद्धागमसहितः । *दीर्घेति । बहुव्रीहिः ।

गमाभावनिश्चयेन यद्यपि भोगो न प्रमाणं मूलच्छिन्नत्वात्, तथापि प्रकृते आगमाभावनिश्चयाभावात् मूलच्छिन्नत्वाभावेन तन्निरपेक्षत्वमिति तादृशो भोगः प्रमाणमित्यर्थः।

७। क्रिया प्रमाणम्। *अनुगमेति। तद्विषयज्ञानाभावादित्यर्थः। ये गत्यर्थास्ते ज्ञानार्था इति भावः। *क्रमात्, प्रपितामहादिक्रमेण। स्मार्तकालस्य परिमाणमाह *स्मार्तेति। अनुगमस्य साकाङ्क्षत्वात्तां पूरयन् प्रागुक्तकालानुस्मार्गं गमनीयं तत्पदं व्याचष्टे *अनुगमेति। *इति, अस्यार्थ इति शेषः।

८। विशेषं वक्तुं विना पूर्वेक्तस्य विषयं सविशेषमुपसंहरति *अतश्चेति। उक्तहेतोश्चेत्यर्थः। *वर्षेति। अनेन दीर्घकालत्वमुक्तम्। सन्ततो निरन्तरः। अप्रतिरवः निराक्रोशः। *अन्यक्षेति। प्रत्यर्थिन इत्यादिः। भोगस्य विशेषणान्तरमाह *आगमेति। उक्तरीत्येत्यादिः। *आक्षिप्तेति। वक्ष्यमाणः। आक्षिप्तागम इति पाठः। ततश्च पञ्चविशेषणमध्ये सागमत्वं स्मार्तकालविषयम्। अन्यच्चतुष्टयं तदन्यविषयमिति व्यवस्था सिद्धा। तं विशेषमेवाह *अस्मार्तेऽपीति।

९। अत्र मानं मनुमाह *अत एवेति। तस्यां सत्यां तस्याप्रमाणत्वादेवेत्यर्थः। अन्यथा ऽनागमोपभोगे विशेषेण दण्डविधानं मनूक्तमयुक्तं स्यादिति भावः।

१०। ननु बहून्यब्देत्यत्र अपिः समुच्चये, तथा चोक्तम्, अपिः सम्भावनानिवृत्त्यपेक्षासमुच्चयगर्हाशीःसमर्थभूषणप्रश्नेष्विति। तथा च बहून्यब्दशतान्यभिव्याप्यापि य उपभुङ्क्ते स दण्ड्य इत्यर्थेन एककर्तृकानेकवर्षोपभोग एव समुच्चयस्य सम्भवो नान्यथेत्यपिशब्दबलादुपभोक्तुरेकत्वं प्रतीयते। तथा य इत्याद्येकवचननिर्देशादपि। तथा च य एकश्चिरकालमनागममुपभुङ्क्ते स

आगमो ऽभ्यधिक इत्यत्र पादभेदेन द्विविधभोगस्य प्रामाण्यमभिमतं मुनेः। स्मार्तकालिकः अस्मार्तकालिकश्च सः।

४। तदुभयं विभज्य योग्यतया व्यवस्थार्थमपवादविषयनिर्णयं विना नोत्सर्गविषयानिर्णय इति व्युत्क्रमेणाह *त्रिनेति। *प्रदर्शनार्थमिति। विषयेत्यादिः। तथा सति आद्यचकारस्तदर्थे। अस्य तदपवादत्वे सतीति तदर्थः। अत एव सामान्यविशेषपर्यन्तत्वानेनाह *आगम इति। द्वितीयचकारस्त्वर्थे। *स्मार्तेति। स्मरणयोग्येत्यर्थः। अस्मार्तकालिको भोग आगमज्ञाननिरपेक्षः स्मार्तकालिकस्तु आगमज्ञानसापेक्ष इति भावः।

५। नन्वेकस्यैव भोगरूपप्रमाणस्य क्वचित्तत्सापेक्षत्वं क्वचिन्नेति कुतो ऽवगतमित्यतो मौलक्रमेण सान्निध्याद् व्युत्क्रमेण द्वितीयमेव साधयितुमाह *अतश्चेति। उभयोरुक्तरीत्या विषयभेदाच्चेत्यर्थः। वस्तुनः स्मृत्यभावेऽपि तत्त्वस्यैष्टत्वादाह *योग्ये इति। अभावप्रत्यक्षे योग्यानुपलब्धेः कारणत्वस्य तन्त्रान्तरे प्रसिद्धत्वादाह *योग्यानुपेति। स्मरणयोग्ये काले प्रतिग्रहादिरूपस्यागमस्य प्रमितियोग्यत्वे सत्यपि तदभावादागमाभावनिश्चयः। सिद्धे च तस्मिन्केवलभोगस्य बलात्कारेणापि सम्भवेनाप्रामाण्यप्रसङ्गात्तत्सापेक्षत्वमावश्यकमिति भावः।

६। अथाद्यं तादृशमाह *अस्मार्तेत्विति। अस्मरणयोग्ये इत्यर्थः। एतद्विशेषणाभावेऽपि विशेषणान्तरसत्ता ऽपेक्षितैवेत्याह *सन्तत इति। निरन्तर इत्यर्थः। इदमुपलक्षणं दीर्घकालादेरपि। योग्यत्वे सत्यनुपलब्धिर्योग्यानुपलब्धिः। अस्मृतियोग्ये काले प्रतिग्रहादिरूपस्य प्रमायोग्यत्वाभावादेव योग्यानुपलब्ध्यभावः। अतस्तेनागमो नास्तीति निश्चेतुं न शक्यते। अभावग्राहकप्रमाणस्य योग्यानुपलब्धेरभावात्। एवं च पूर्वे तत आ-

म् । अन्यायेनापीति वाक्ये अन्यायेनापि पित्रा यद् भुक्तं तथा पूर्वतरैस्त्रिभिर्यद् भुक्तं तत्राभियोक्तापि अपहर्तुं न शक्य इत्युक्त्या ऽनागमोपभोगस्य स्मरणयोग्यकालिकस्यापि प्रामाण्यप्रतीतिरि-त्याशयेनाह *यदप्यन्यायेनापीति । अत्रान्यायेनापीति निरा-गमभोगस्य प्रामाण्यप्रतिपादकं, पित्रेति स्मरणयोग्यकालिकत्वे-ति भावः । स्मार्त्तकालिकोपभोगस्य तन्निरपेक्षस्य न प्रामाण्य-मिति प्रागुक्तरीत्यैव परिहरति *तदपि पित्रा सहेति । अयं भावः । पित्रा यद् भुक्तमिति न पृथगन्वयो, येन पितुरुपभोगस्य स्मार्त्तकालिकत्वेन तादृशनिरागमोपभोगस्य प्रामाण्यं स्यात्, अपि तु सहार्थयोगे इयं तृतीया । तथा च पित्रा सह पूर्वतर-पुरुषत्रयोपभोगे क्रमेणाविच्छिन्ने तादृशे जाते तत् क्षेत्रादिकं त-स्मादपहर्तुं न शक्यमिति प्रागुक्तैकवाक्यतया, सम्भवतीति न्या-येन च एकवाक्यत्वेऽनेकपुरुषोपभोगस्य चिरतरकालं विनाऽस-म्भवेनास्मार्त्तकालिकोपभोगस्य प्रामाण्यमुक्तमिति न निराग-मस्य स्मार्त्तकालिकोपभोगस्य प्रामाण्यमिति ।

१३ । ननु त्रिपुरुषागतमित्यनेनानेकपुरुषोपभोगलाभेऽपि कथमस्मार्त्तकालोपभोगलाभो ऽत आह *तत्रापि क्रमादिति । लक्षणेति भावः । शक्यार्थत्यागे बीजमाह *त्रिपुरुषेति । पात्रा-दित्वात् स्त्रीत्वाभावस्तत्रात्र च । एवं पूर्वकालीयेऽपि । प्रसङ्गा-दिति पाठः । प्रसङ्ग इति पाठे यत इत्यादिः । इष्टापत्तिं निरा-चष्टे *तथा सतीति । नन्वस्तु अस्मार्तकालिको भोगः प्रमाणमि-ति, तथाऽपि तस्याप्यागमसत्तासापेक्षत्वेनान्यायेनापीत्युक्तिः कथ-मत आह *अन्यायेनापीति । चस्त्वर्थे । तत्र बीजमाह *अपी-ति । अन्यथा तदानर्थक्यं स्पष्टमेव ।

१४ । नन्वस्मार्त्तकालिकी भुक्तिरागमज्ञानं नापेक्षते तत्सत्तां

दण्ड्य इत्येकस्यैव दण्ड्यत्वं न बहूनाम् । पितृपरम्परायातभोगे तु भोक्तृणामनेकत्वादीदृशैकभोक्तुरभावेन प्रथममनागमेनोपभोक्तुरेकत्वेन तस्यैव चौरसदृशदण्डो न द्वितीयादेरिति, तत्र भोगस्य प्रामाण्यापत्त्या ऽनागमस्मृतिपरम्परायां भोगो न प्रमाणमिति यदुक्तं तदयुक्तमित्याशयेन शङ्कते *न चानागमं त्विति । यद्वा अपिशब्दः समर्थवाची, उक्तहेतोः । तथा चानागमचिरकालोपभोगे यः समर्थः स एव दण्ड्यो नान्य इत्यर्थेन प्रथमस्यैव समर्थत्वेन द्वितीयादेः परम्परायातभोगत्वे तादृशसामर्थ्याभावात्प्रथम एव दण्ड्य इत्याशयेनाशङ्कते *न चेति । *प्रयोगात्, प्रयोगात् । *प्रथमस्य, तस्यैव । इदमन्त्ये परम्परायातभोगविषयम् । अपिनैकमात्रकर्तृकानेकवर्षोपभोगसमुच्चयः । आद्ये त्वस्य साधारणत्वात् अपिना तद्वदल्पकालोपभोगसमुच्चयः ।

११ । इष्टापत्तिं निराचष्टे *न चैतदिति । नहीत्यर्थः । कारणं क्रिया । प्रमाणमिति यावत् । *नारदेति । मध्येऽपि सागमाया एव भुक्तेः प्रामाण्यबोधकनारदवचनादित्यर्थः । य इत्यत्रोद्देश्यगतत्वेन एकत्वस्याविवक्षितत्वाच्चेत्यपि बोध्यम् । तथा च सर्वत्र सागमभुक्तेः प्रामाण्यमिति द्वितीयादावपि निरागमोपभोगे दण्डो दुर्निवार इत्यनागमस्मृतिपरम्परायां सत्यां भोगो नैव प्रमाणमिति सिद्धम् । तदेतदुपसंहरति *तस्मादिति । *सर्वत्र, आदौ मध्येऽन्ते चेत्यर्थः । एवं चापिः सम्भावने, न समुच्चये नापि समर्थ इति । बह्वब्दशतव्यापित्वेन यस्य भोगः सम्भाव्यते स चेन्निरागमस्तर्हि तादृशोपभोगवानपि पुरुषो दण्ड्यः किमुतानागमाल्पभोगवानिति तात्पर्यार्थः ।

१२ । नन्वस्मरणयोग्यकालिकस्य पूर्वक्रमायातस्यैव भोगस्यागमज्ञाननिरपेक्षस्य प्रामाण्यमिति यत्सिद्धान्तितं तदयुक्त-

लविशेषे तदुपयोग इत्याह *प्रमाणान्तरेणेति । मानान्तरेणैवा-
गमावगमो यद्यपि तथापि तादृशागमविशिष्ट एव भोगः प्रतिग्र-
हाद्युत्तरभाविनि कालान्तरेऽपि स्वत्वबोधक इति भावः ।

१६ । ननु तथाऽप्यागमेनैव स्वत्वावबोधे किं भोगेने-
त्युक्तमेव अत आह *अपगतोऽप्यागम इति। *अलं, समर्थः । उपसं-
हरति *इतीति । कुत इत्यत आह *मध्ये इति ।

१७ । अव्यवहितसङ्गतिमाह * आगमेति । प्रमाणमित्यस्य
स्यादिति शेषः। स्तोकाऽपीत्यस्य व्याख्या *स्वल्पापीति । कृत्स्न-
मित्यस्य व्याख्या *सम्पूर्णेति । ननु अस्योदाहरणं किमत
आह *अयमिति। द्वितीयवस्त्वर्थे । *तत्र, तेषां मध्ये । *सविक-
ल्पेति । स तु स्वीकारो मदीयमेतदित्याद्यभिवदनात्मकवाग्ज-
न्यो वा सविकल्पकज्ञानरूप इत्यर्थः। यद्वा स इति भिन्नं पदं, वा-
चिकस्तु स स्वीकारो यस्तादृशविकल्पात्मकज्ञानरूप इत्यर्थः ।
*पुनः, तु। *तत्र च, उक्तरूपकायिकस्वीकारे च। *करं, शुल्का-
दण्डे । *दापयेत्, दद्यात् । स्वार्थे णिच् । निवृत्तमेषणादिति
प्रकारो वा ।

१८ । *अनुमन्त्रयेतेति । प्रतिग्राह्यो यदा प्राणी बलवान्
वक्तुं समर्थस्तदा तं प्रतिग्राह्यं प्रतिग्रहीता अनुमन्त्रयेत, अमुक
त्वं मदीयोऽसीति। सोऽपि ब्रूयादहं भवदीयोऽस्मीति। यदा प्र-
तिग्राह्यमप्राणि अभिवदनानभिज्ञं गवादि प्राण्यपि कन्या च,
तदुभयं प्रतिग्रहीताऽभिमृशेत् स्पृशेत् उक्तस्थले इत्यर्थः। प्रकृत-
माह *तत्रेति । तेषां मध्ये इत्यर्थः । *पुनः, तु । *तत्साहिता-
दिति । कायिकस्वीकारसहितागमापेक्षयेत्यर्थः ।

१९। ननूपभोगसहितागमापेक्षयोपभोगरहितस्यागमस्य दुर्ब-
लत्वे यत्रैकमेव क्षेत्रमेकस्याधीकृत्य पुनरन्यस्याधीकृत्य पुनर-

त्वेऽसत्यप्येतेनुक्तमयुक्तं, यद्विनाऽऽगममिति वाक्ये ऽत्यन्तमित्युक्त्या सर्वात्मना भुक्तेस्तदपेक्षत्वेन प्रामाण्यप्रतीतेरित्याशयेन शङ्कते *यथोक्तमिति । यदप्युक्तमित्यर्थः । अत्यन्तमागमं विनेत्यन्वयः । प्रागुक्तरीत्या परिहरति *तत्रापीति । उक्तवाक्येऽपीत्यर्थः । *इति, वाक्यम् । ०अत्यन्तम्, अतिशयेन । उक्तहेतोः फलमाह *उपेति । ०पुनस्त्वर्थे । आगमस्वरूपमपि विनेत्यर्थः । ज्ञातव्यमित्यस्यानुषङ्गः । अत्र हेतुमाह *आगमेति । यत इत्यादिः । अयं भावः । सर्वात्मना ऽऽगमज्ञानस्यास्मार्तकालिकोपभोगे ऽपेक्षाया अभावादत्यन्तं सर्वात्मना आगमज्ञानं विना ऽस्मार्तकालिकोपभोगे सति यद् भुक्तं वस्तु तदपाहर्तुं न शक्यमित्येव वाक्यार्थो न तु वस्तुन आगमसत्तां विनाऽप्युपभोगात्स्वत्वमस्तीति, येन प्रागुक्तविरोधः स्यादिति । उक्तवाद्विरोधमत्रापि परिहरति *क्रमादिति । *उक्तार्थमिति । अस्मार्तकालोपलक्षकत्वेनोक्तार्थकमित्यर्थः । तत्सिद्धमस्मार्तकालिक उपभोग आगमज्ञाननिरपेक्षः प्रमाणं स्मार्तकालिकस्तु तत्सापेक्षस्तथेति ।

१५ । तत्रान्त्यमाक्षिपति *नन्विति । *प्रामाण्येति । प्रामाण्यं यदुक्तं तदनुपपन्नमित्यर्थः । अनुपपत्तेः स्फुटतया ऽभासात्तामुपपादयति *तथा हीति । यमागममपेक्षते भोगः स किं प्रमाणान्तरेणावगतो ऽथ वा नेति विकल्पं हृदि निधायाद्ये दोषमाह *यद्यागम इति । *प्रमाणान्तरेण, भोगान्येन प्रत्यक्षादिना । *तेनैव, मानान्तरावगतागमेनैव । मानान्तरावगतत्वेनानुपयुक्तत्वादाह *आगमेवेति । तथा च मानान्तरप्रमिते उभयत्र ज्ञापकत्वासम्भवेनानुत्पादकत्वेन चाप्रामाण्यात्तत्सापेक्षो भोगः प्रमाणमिति दुर्वचमिति भावः । द्वितीये दोषमाह *अथेति । अनवगतागमेन वैशिष्ट्यासम्भवादिति भावः । प्रथमपक्षादरेऽपि का-

मि० पश्यतो ऽब्रुवत इत्यत्र विंशतिवर्षोपभोगादूर्ध्वं भूमेः धनस्यापि दशवर्षोपभोगादूर्ध्वं फलानुसरणं न भवतीत्युक्तम्। तत्र फलानुसरणवन्मूलानुसरणमपि न भविष्यतीत्याशङ्का पुरुषव्यवस्थया प्रामाण्यव्यवस्थया च दण्डव्यवस्थां दर्शयितुमाह।

या० आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत्।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥२८॥

मि० येन पुरुषेण भूम्यादेरागमः स्वीकारः कृतः स पुरुषः कृतस्ते क्षेत्रादिकमित्यभियुक्तस्तमागमं प्रतिग्रहादिः इति लिखितादिभिरुद्धरेत् भावयेत्। अनेन चास्य पुरुषस्यागममनुद्धरतो दण्ड इत्युक्तं भवति।तत्सुतो द्वितीयोऽभियुक्तो नागममुद्धरेत्। किंतु अविच्छिन्नामतिरचसमक्षभोगम्। अनेन चागममनुद्धरतो द्वितीयस्य न दण्डोऽपितु विशिष्टं भोगमनुद्धरतो दण्ड इति प्रतिपादितम्। तत्सुतः तृतीयो नागमं नापि विशिष्टं भोगमुद्धरेदपितु क्रमागतं भोगमात्रम्। अनेनापि तृतीयस्य क्रमायातभोगानुद्धरणे दण्डो नागमानुद्धरणे न विशिष्टभोगानुद्धरणे चेत्यभिहितम्। * तत्र, तयोर्द्वितीयतृतीययोर्भुक्तिरेव गरीयसी। तत्रापि द्वितीये गुरुस्तृतीये गरीयसीति विवेक्तव्यम्। त्रिष्वप्यागमानुद्धरणेऽर्थहानिः समानैव, दण्डे तु विशेष इति तात्पर्यार्थः।

उक्तं च हारीतेन,

आगमस्तु कृतो येन स दण्ड्यस्तमनुद्धरन्।

न्यस्याप्याधीकरोति तत्र यदि दैनात् पूर्वस्य भोगाभाव उत्तरस्य तु भोगोऽस्ति तत्रापि भोगरहितागमस्य दौर्बल्यं स्यात् । तथा चार्थो प्रतिभटे इति वचनाविरोधः स्यादत आह *एतश्चेति । सिद्धान्तितमुक्तरूपमित्यर्थः । इतीत्यस्य बोध्यमिति शेषः ।

२० । यद्यप्यागमोऽभ्यधिक इत्यस्य पूर्वमीपद्व्यवहितसङ्गत्या व्याख्यानं कृतं, तथाऽपि तन्न युक्तं, व्याख्याकृदुक्तार्थसङ्गतिलाभेऽपि मूलसङ्गत्यभावात् । किं च प्रतिपादितार्थस्य तात्पर्यविषयतया यथाकथञ्चित् योजनेऽप्यशाब्दत्वेन स्वारस्यानावहत्वात् । अतस्तत् प्रकारान्तरेण ततोऽपि व्यवहितसङ्गत्या शब्दमर्यादया व्याचष्टे *अथवेति । *समवाये इति । एतेषां लिखितादीनां समवाये मेलने इत्यर्थः । सर्वेषां सम्भवे इति यावत् । इदमर्थमाह *आगम इति । प्राग्वत् । द्वितीयपादार्थमाह *पूर्वेति । पूर्वक्रमायातभोगान्यभोगापेक्षयाऽऽगमो बलवानित्यर्थः । पूर्वक्रमागतभोगस्य विजातीयागमापेक्षया क्वचित् बलवत्त्वम् । तत्तात्पर्यविषयमाह *स पुनरिति । स त्वित्यर्थः । अत एव वचनेऽन्यथाक्रमसत्त्वेऽपि अत्रानुवादेऽन्यथा पठितम् । एतद्वचनक्रमेण द्वितीयार्धं तात्पर्यतो व्याचष्टे *मध्यमेत्विति । अपिर्बहुभोगसहितपरिग्राहकः । प्रतियोग्यन्तराभावेन स्वापेक्षया केवलस्त्वस्य प्राबल्यासम्भवेन च योग्यतयाऽभुक्तितो भुक्तेः प्राबल्यमनेन बोध्यते इति भावः । पूर्वार्धमेव समवायविषयमिति तात्पर्यम् । इतिः व्याख्यानसमाप्तौ ।

२१ । अत्र मानमाह *एतदेवेति । एतेन प्रागुक्तव्यवच्छेदः । चतुर्थपुरुषविषयमाह *कारणं भुक्तिरिति । एवेन प्रागुक्तागमव्यवच्छेदः । सन्तता निरन्तरा । चिरन्तनी दीर्घकाला । चिरन्तनेति पाठे आर्षत्वाट्टाप् ॥ २७ ॥

व्याख्या *तयोरिति । तद्व्याख्या *द्विविधेति । सर्वं वाक्यमिति न्यायेनाह *भुक्तिरेवेति । भुक्तेरप्य अनिर्णायकत्वेऽर्थात् त- त्त्वागमस्येन लब्धमाह *तत्रापीति । तयोर्वचनयोरित्यर्थः । परम- तात्पर्यमाह *स्थित्यपीति । अस्य पूर्वतः सागमो व्यवहारादनु मानमाह *उक्तं चेति । पादत्रयमध्योक्त प्रमाणैः । *भोगेनेति । अ- र्थहानिस्तदनुद्धरणे द्विगुणतुरीयपर्यायपर्यन्तार्थः । आपिनाऽऽगमस्य समुच्चयः ॥ २८ ॥

मि० अस्मार्तकालोपभोगस्यागमज्ञाननिरपेक्षस्य प्रामाण्यमुक्तं, विना पूर्वकमागमनादिन्यत्र ।

तस्यापवादमाह ॥

या० योऽभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत् ।
न तत्र कारणं भुक्तिरागमेन विना कृता ॥ २९ ॥

मि० यदा पुनराहर्त्रादिरभियुक्तोऽकृतव्यवहार- निर्णय एव परेतः परलोकं गतो भवेत्तदा तस्य रिक्थी पुत्रादिस्तमागममुद्धरेत् । यस्मात् तत्र तस्मिन्व्यव- हारे भुक्तिरागमरहिता साक्ष्यादिभिः साधितापि न प्रमाणम् । पूर्वाभियोगेन भोगस्य सापवादत्वात् ।

नारदेनाप्युक्तम्, ( व्य० प० १।९३ )

तथाऽऽरूढविवादस्य प्रेतस्य व्यवहारिणः ।
पुत्रेण सोऽर्थःसंशोध्यो न तं भोगो निवर्तयेत् ॥इति॥२९॥

व्या०१। सङ्गतिमाह *अस्मार्तेति। *पुनः, तु । यदर्थमाह *आ- हर्त्रादिरिति। आहर्त्रादिरभीति पाठः । अभियोगनिमित्तसूचना-

न मन्त्रुभक्तस्तत्सुतो वा भोगमृक्तानेस्तयोरपि॥इति॥२८॥

था॰ १ । एतस्य तत्तसङ्गतत्वादेव तेन उत्तरसङ्गतिमाह*पश्यत इति । *उक्तमिति । सिद्धान्तमतेनेति भावः । *तत्र, तथा सति । अन्वये दृष्टान्तः । *दर्शयितुम्, अनेनेत्र तात्पर्यतः प्रतिपादयितुम् । अयं भावः । आद्येन पुरुषेण प्रतिग्रहादिकमेवोपन्यसनीयं, द्वितीयेनाविच्छिन्नामातिरवगमसत्त्वादिविशेषणविशिष्टो भोग एवोपन्यसनीयः, तृतीयेन समक्षत्वादिविशेषणवैशिष्ट्यं विनापि क्रमागतभोगमात्रमुपन्यसनीयमिति नियमस्यानेन विधेर्नियमातिक्रमे दण्डविधानमप्यर्थसिद्धमेवेति दण्डव्यवस्थाप्रतिपादकत्वमुपपन्नमेव । एतेनात्र वचने दण्डव्यवस्थाविध्यभावादिदमयुक्तमित्यपास्तमिति ।

२ । *स्वीकार इति । प्रतिग्रहादिनेति भावः । *अभियुक्तः, परेण । क्षेत्रादिकमिति पाठः । तथा च प्रतिग्रहादिरिति तस्योत्तरमुक्त्वा तथा कार्यमिति भावः । प्रतिग्रहादेरितीति पाठे इत्युक्त्वा तमागममर्थात् प्रतिग्रहादिकमित्यर्थः । यथाश्रुतार्थासम्भवादाह *भावयेदिति । प्रतिपादयेदित्यर्थः । अङ्गीकारयेदिति वा । अस्य तात्पर्यार्थमाह *अनेन चेति ।

३ । न तत्सुत इत्यंशं शेषपूरणेन सानुषङ्गेण व्याचष्टे *तत्सुत इति । अत्र प्रागुक्तविशेषणचतुष्टयमध्ये दीर्घकालत्वमग्रे, तद्भिन्नमत्रेत्याह *अविच्छिन्नेति । *भोगमिति । उद्धरेदित्यस्यानुषङ्गः । एवमग्रेऽपि । *विशिष्टं भोगं, स्वोक्तम् ।

४ । तत्सुतो वेत्यत्र वा चार्थे इत्याशयेन तमंशं व्याचष्टे *तत्सुत इति । *नापि विशिष्टमिति । विशिष्टभोगानुद्धरणे चेति पाठः ।

५ । तुर्यपादमव्यवहितोभयशेषत्वेन व्याचष्टे *तत्रेति । अस्य

सिनां, यथा ग्रामनगरादयः । श्रेणयो नानाजातीनामेकजातीनामपि एकजातीयकर्मोपजीविनां संघाताः, यथा हैडाबुकानां ताम्बूलिककुविन्दचर्मकारादीनां च । कुलानि ज्ञातिसम्बन्धिबन्धूनां समूहाः । एतेषां नृपाधिकृतादीनां चतुर्णां पूर्वं पूर्वं यत्पूर्वं पठितं तत्तद् गुरु बलवज्ज्ञेयं वेदितव्यम्, नृणां व्यवहर्तॄणां व्यवहारविधौ व्यवहारदर्शनकार्ये । एतदुक्तं भवति । नृपाधिकृतैर्निर्णीते व्यवहारे पराजितस्य यद्यप्यसंतोषः कूटदृष्टबुद्ध्या भवति तथापि न पूगादिषु पुनर्व्यवहारो भवति । एवं पूगनिर्णीतेऽपि न श्रेण्यादिगमनम् । तथा श्रेणिनिर्णीते कुलगमनं न भवति । कुलनिर्णीते तु श्रेण्यादिगमनं भवति । श्रेणिनिर्णीते पूगादिगमनम् । पूगनिर्णीते नृपाधिकृतगमनं भवतीति ।

नारदेन पुनर्नृपाधिकृतैर्निर्णीतेऽपि व्यवहारे नृपगमनं भवतीत्युक्तम्, (अ० १। श्लो० ७)

कुलानि श्रेणयश्चैव गणाश्चाधिकृता नृपः ॥
प्रतिष्ठा व्यवहाराणां गुर्वेषामुत्तरोत्तरम् ॥ इति ।

तत्र च नृपगमने सोत्तरसभ्येन राज्ञा पूर्वैः सभ्यैः सह सपणे व्यवहारे निर्णीयमाने यद्यसौ कूटदृष्टवादी पराजितस्तदाऽसौ दण्ड्यः । अथासौ जयति तदाऽधिकृताः सभ्या दण्ड्याः ॥ ३० ॥

वा० १। अव्यवहितेन सङ्गतिमाह *अनिर्णीतेति ।*निवर्तते । संसाध्यते इति पाठान्तरम् । तेन नापगच्छति प्रवर्तत एवेत्यर्थः । *व्यवेति।पुनरित्यादिः।क्वचित्तथा पाठ एव। मूले अथशब्दः चार्थे।

साहशूंन्यापादानम् । तदसम्भवात् आदिना तत्पुत्रादिग्रहणम् । आर्थिकत्वात *भक्तेति । परेत इत्यस्य परमित इति व्युत्पत्तिलभ्यमर्थमाह *परलोकमिति । तदः प्रकृतबुद्धिस्थपरामर्शित्वादाह *आगममिति । अत्रोत्तरार्द्धे हेतुरिति यस्मादितिशेषेण व्याचष्टे *यस्मादिति । तत्रेत्यस्य व्याख्या *तस्मिन्नित्यादि आगमेन विनेत्यस्य व्याख्या *आगमेति । कृतेत्यस्य व्याख्या *साक्ष्यादिभिरिति । *न प्रमाणमिति । अत इति शेषः । यस्मादित्यस्यार्थमाह *पूर्वेति । एवं चात्रागमज्ञानसापेक्षस्य तस्य प्रामाण्यमिति भावः ।

२. *तथाऽऽरूढेति । तथाशब्दः पूर्वसमुच्चये । आरूढविवादस्य प्राप्तविवादस्य व्यवहारिणः प्रेतस्य मृतस्य सम्बन्धिना पुत्रेण सोऽर्थो विवादास्पदीभूतः संशोध्यः आगमेन संसाध्यो यतस्तमर्थं भोगो न निवर्तयेत् प्रत्यावर्त्तयेत् । भोगस्तत्र प्रमाणं न भवतीति यावदित्यर्थः ॥ २९ ॥

मि० आनिर्णीतव्यवहारे व्यवहर्तरि प्रेते व्यवहारो न निवर्तते इति स्थितम् । निर्णीतेऽपि व्यवहारे स्थिते च व्यवहर्तरि वा व्यवहारः क्वचित्पुनः प्रवर्तते क्वचिन्न प्रवर्तते इति व्यवस्थासिद्धये व्यवहारदर्शिनां बलाबलमाह ॥

या० नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च ।
पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम् ॥ ३० ॥

नृपेण राज्ञा अधिकृताः व्यवहारदर्शने नियुक्ताः "राज्ञा सभासदः कार्या" इत्यादिनोक्ताः । पूगाः समूहाः, भिन्नजातीनां भिन्नवृत्तीनाम् एकस्थाननिवा-

समुच्चय इति एकवाक्यतैव । नारदेन गुणभिन्नादि वक्ता व्या-
ख्याकृता प्रागुक्तचतुष्टयं नाभिमतमिति सूचितमेतेन बोध्यम् ।
नृप इति पाठः । *प्रतिष्ठा इति । व्यवहारदर्शनानां स्थानानीत्यर्थः ।
५ । तथा सति विशेषमाह *तत्र चेति । तेषां मध्ये इत्यर्थः ।
*सोत्तरेति । सभायां साधुः सभ्यः उत्तरश्चासौ सभ्यश्च तत्सहि-
तेनेत्यर्थः । पूर्वसभ्यतो भिन्नोत्कृष्टसभ्ययुक्तेनेति यावत् । *सपणे
इति । उभयकारितपणसहिते इत्यर्थः । अयमेव पणार्थः पूर्व-
त्रापि ज्ञेयः ॥ ३० ॥

मि० दुर्बलैर्व्यवहारदर्शिभिर्दृष्टो व्यवहारः परावर्तते प्रबलदृष्टस्तु न निवर्तते इत्युक्तम् ।

इदानीं प्रबलदृष्टोऽपि व्यवहारः कश्चिन्निवर्तते इत्याह ॥

या० बलोपाधिविनिर्वृत्तान् व्यवहारान्निवर्तयेत् ।
स्त्रीनक्तमन्तरागारबहिःशत्रुकृतांस्तथा ॥ ३१ ॥

मि० बलेन बलात्कारेण उपाधिना भयादिना विनिर्वृत्तान्निष्पन्नान्व्यवहारान्निवर्तयेत् । तथा, स्त्रीभिः नक्तं रात्रावस्त्रीभिरपि अन्तरागारे गृहाभ्यन्तरे बहिः ग्रामादिभ्यः शत्रुभिश्च कृतान् व्यवहारान्, निवर्तयेदिति संबन्धः ॥ ३१ ॥

बा० १ । उपसंहरन्नव्यवहितसङ्गतिमाह *दुर्बलैरिति । *कश्चित्, न सर्वः । बलं चोपाधिश्च ताभ्यां विनिर्वृत्तानिति व्युत्पत्तेराह *बलेनेति । उपधीति पाठान्तरम् । शत्रुशब्दान्तद्वन्द्वे कृतशब्देन शेषषष्ठ्या समासे आद्यन्तयोस्तत्र कर्तृत्वेनान्वयो मध्यमानामधिकरणत्वेन फलतीत्याह *तथा स्त्रीभिरिति । अपौनरुक्त्यायाया-

नृपेणाधिकृता इति भिन्नमित्यादिग्रन्थेन वाक्यार्थज्ञानोपयोगितया आदौ पदार्थानाह *नृपेणेति । प्रकृतयोग्यतयाऽऽह *व्यवेति । ते के इत्यत आह *राज्ञेति । आकाङ्क्षाशान्तये ऽसाङ्कर्याय चाह *भिन्नेति । *नानेति । उभयोः सङ्घाता इत्यत्रान्वयः । इदमुभयं साङ्कर्यनिवारकमिति सूचयन् आवश्यकम् उभयशेषमाह *एकजा-तीयेति । तत्राद्योदाहरणं, *देशेति । देशाद्देशान्तरं गत्वा प्रस्थाप्य वा ऽर्थविक्रेतारो देशपुत्राः । गुर्जरदेशे प्रसिद्धोऽयं तत्र शब्दः । द्वितीयोदाहरणं *नानाकुविन्दकेति । तार्किकेत्यर्थः । कुवि-न्दस्तन्तुवायः । आदिना तक्षादयः । सङ्घाता इत्यस्यानुषङ्गः । सम्बन्धी जामात्रादिः ।

२ । अथ वाक्यार्थमाह *एतेषामिति । *चतुर्णां, मध्ये इति शेषः । पूर्वत्वं न कारणत्वादिकृतं किन्तु पाठकृतमित्याह *य-त्पूर्वं पठितमिति । कुत्रेत्याह *नृणामिति । प्रकृतयोग्यत्वा-दाह *व्यवेति । योग्यतया व्यवहारशब्दो दर्शनपरः कर्मक्ति-प्रत्ययान्तो विधिशब्द इत्याह *व्यवहारेति ।

३ । अवतरणोक्तं स्पष्टयितुं तात्पर्यार्थमाह *एतदिति । कु-दृष्टेत्यनेन वास्तवासन्तोषबीजनिरासः जातव्यवहारस्य यथार्थत्वं च सूचितम् । व्युत्क्रमेण व्यतिरेकमाह *कुलेति ।

४ । विशेषं स्वल्पमाह *नारदेति । *पुनः, तु । यद्यप्यत्र गणा इति पठितं, मूले च पूगा इति, अस्ति च तयोर्भेदः, तत्र पूगस्वरूपमुक्तं, सर्वेषां हीनवर्णानां सङ्घातो गणः, अत एव पूग-श्रेणिगणादीनामिति प्राक् उक्तं, तथापि तत्स्थाने मुनिद्वयप्रामा-ण्यादुभयोर्विकल्पेन ग्रहणम्, अत एव चतुर्णामिति व्याख्या-कृदुक्तिसङ्गतिः । यद्वा गणाश्चेति चेन तदग्रे पूगानां समुच्चयः । मूलेऽथशब्दस्य चार्थस्य पूगा इत्यत्रान्वयेन तदग्रे तेन तेषां

त्। तथाहि। "शिष्यशिष्टिरवधेन, अशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्याम्, अन्येन घ्नन् राज्ञा शास्य" इति गौतमस्मरणात्, नोत्तमाङ्गे कथंचनेति मनुस्मरणाच्च, यदि गुरुः कोपावेशवशान्महता दण्डेनोत्तमाङ्गे ताडयति तदा स्मृतिव्यपेतेन मार्गेणाधर्षितः शिष्यो यदि राज्ञे निवेदयति तदा भवत्येव व्यवहारपदम्।

तथा,

भूर्या पितामहोपात्तेत्यादिवचनात् पितामहोपात्ते भूम्यादौ पितापुत्रयोः स्वाम्ये समाने यदि पिता विक्रयादिना पितामहोपात्तं भूम्यादि नाशयति तदा पुत्रो यदि धर्माधिकरणं प्रवेशयति तदा पितापुत्रयोरपि भवत्येव व्यवहारः।

तथा, (याज्ञ. २।१४७)

दुर्भिक्षे धर्मकार्ये च व्याधौ संप्रतिरोधके।
गृहीतं स्त्रीधनं भर्ता नाकामो दातुमर्हति॥

इति स्मरणात् दुर्भिक्षादिव्यतिरेकेण यदि स्त्रीधनं भर्ता व्ययीकृत्य विद्यमानधनोऽपि याच्यमानो न ददाति तदा दम्पत्योरपीष्यत एव व्यवहारः।

तथा। भक्तदासस्य स्वामिना सह व्यवहारान् वक्ष्यति। गर्भदासस्यापि गर्भदासादीनधिकृत्य—

यश्चैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात्।
दासत्वात्स विमुच्येत पुत्रभागं लभेत च॥

इति नारदोक्तत्वात् (व्य.प.७।३०) तदमोचने पुत्रभागादाने च स्वामिना सह व्यवहारः केन वार्यते। तस्मात् दृष्टादृष्टयोः श्रेयस्करो न भवति गुर्वादिभिर्व्यवहार;

* अर्थीभिरर्थानि । मध्ये इत्यर्थकान्तरशब्देन षष्ठीसमासे राजदन्तादित्वात्परनिपात इत्याह * गृहाभ्यन्तरे इति । तथा-ऽभिमाः * नीति । कृतांश्चेत्यर्थः । मध्यमणिन्यायेनान्वयादाह , * निवर्तयेदिति ॥ ३१ ॥

मि० अपिच ।

या० मत्तोन्मत्तार्तव्यसनिबालभीतादियोजितः ।
असंबद्धकृतश्चैव व्यवहारो न सिध्यति ॥ ३२ ॥

मि० मत्तो मदनीयद्रव्येण । उन्मत्त उन्मादेन पञ्चविधेन वातपित्तश्लेष्मसंनिपातग्रहसंभवेनोपसृष्टः । आर्तो व्याध्यादिना । व्यसनमिष्टवियोगोऽनिष्टप्राप्तिः तज्जनितं दुःखं तद्वान् व्यसनी । बालो व्यवहारायोग्यः । भीतोऽरातिभ्यः । आदिग्रहणात्पुरराष्ट्रादिविरुद्धः ।

पुरराष्ट्रविरुद्धश्च यश्च राज्ञा विसर्जितः ।
अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः ॥

इति मनुस्मरणात् ।

एतैर्योजितः कृतो व्यवहारो न सिद्ध्यति । अनियुक्तासंबद्धकृतोऽपि व्यवहारो न सिद्ध्यतीति संबन्धः ।

यत्तु स्मरणम्,
गुरोः शिष्ये पितुः पुत्रे दम्पत्योः स्वामिभृत्ययोः ।
विरोधेऽपि मिथस्तेषां व्यवहारो न सिद्ध्यति ॥ इति,

तदपि गुरुशिष्यादीनामात्यन्तिकव्यवहारप्रतिषेधपरं न भवति । तेषामपि कथंचिद्व्यवहारस्येष्टत्वा-

त्यादिपदग्राह्यं वचने एव स्फुटम् । *गुर्विति । गुरुनिरुद्धो राज-विरुद्ध इत्यर्थः । यः एवं स वादः तेनवादेव उदाहृतः कथितो भवेदित्युत्तरार्धार्थः । एवं च नस्यार्थस्य निग्रहीतव्या ।

२ । वाक्यार्थमाह *एतदिति । असम्बद्धकृत इत्येतम् अनियुक्तपदाध्याहारेण व्याचष्टे *अनियुक्तासम्बद्धेति । अनियुक्तत्वं-नाधेयितत्वेन प्रकृतव्यवहारासम्बद्धो यस्तत्कृत इत्यर्थः । नार्थ-माह *अपीति । इतिरर्थसमाप्तौ ।

३ । ननु मत्तादिकृतव्यवहारो न सिध्यतीत्यत्र मत्तादिग्रह-णमुपलक्षणं न वा । आद्ये ऽन्यकृतव्यवहारासिद्धेरपि संग्रह इति न स्मृत्यन्तरविरोध इति फलं यद्यपि, तथाप्येवकारासङ्ग-तिः । द्वितीये एवकारवलेनास्य नियामकत्वलाभेनैवकारसङ्ग-तिरूपफलसत्त्वेऽपि वचनान्तरविरोध इति संशये श्रुतैवकारब-लेनाद्यस्य दुर्वचत्वेन द्वितीयमेव वाच्यम् । यद्यप्याद्येऽप्यादिश्रु-तिरस्ति तथापि सर्वथा ऽनन्यगतिकसंग्रहेणैव तत्साफल्यं सग-तिकसङ्कोचो नेति तात्पर्यार्थः । तथा सति वचनान्तरविरोधः । तेनान्यकृतव्यवहारस्यासिद्धिप्रतिपादनेन नियमस्य दुर्वचत्वादि-त्याशयेन शङ्कते ।

४ । यत्त्विति । विरोधे इति पूर्वान्वयि । मिथ इत्युत्तरान्व-यि । गुरोः शिष्ये विरोधे त्वित्यादौ सति तेषां गुरुशिष्यादीनां मिथो व्यवहारो न सिध्यतीत्यर्थः । अपिनैतज्जातीयस्मृत्यन्तर-समुच्चयः । त्वर्थे वा सः । आत्यन्तिकत्वं प्रतिषेधविशेषणम् । *कथञ्चित्, केनचित्प्रकारविशेषेण । तथा च तत्र चार्थस्तुः सि-ध्यतीत्यग्रे योज्यः । तेन सिद्धिसमुच्चयः । तयोर्व्यवस्था तु व-क्ष्यमाणप्रकारेण। यद्वा तुर्मिथ इत्यग्रे योज्यः। मिथस्तु मिथ एव न सिध्यति किं तु व्यवहारदर्शिभिः सिध्यतीत्यर्थः । यद्वा

इति प्रथमं शिष्यादयो निवारणीयाः राज्ञा सभ्येन, इति गुरोः शिष्य इत्यादेः श्लोकस्य तात्पर्यार्थः । अन्यत्र निर्बन्धे तु शिष्यादीनामप्युक्तरीत्या प्रवर्तनीयो व्यवहारः । यदपि—

एकस्य बहुभिः सार्द्धं स्त्रीणां प्रेष्यजनस्य च ।
अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः ॥
इति नारदवचनम् । तत्रैकस्यापि—
गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः ।(याज्ञ.२।१८७)

तथा, एकं घ्नतां बहूनां चेत्यादिस्मरणादेकार्थैर्बहुभिः सार्द्धं व्यवहार इष्यते एवेति भिन्नार्थैर्बहुभिरेकस्य युगपद्व्यवहारो न भवतीति द्रष्टव्यम् । स्त्रीणामित्यपि गोपशौण्डिकादिस्त्रीणां स्वातन्त्र्याद्व्यवहारो भवत्येवेति । तदन्यासां कुलस्त्रीणां पतिषु जीवत्सु तत्पारतन्त्र्यादनादेयो व्यवहार इति व्याख्येयम् । प्रेष्यजनस्य चेत्येतदपि प्रेष्यजनस्य स्वामिपारतन्त्र्यात् स्वार्थव्यवहारेऽपि स्वाम्यनुज्ञयैव व्यवहारो नान्यथेति योजनीयम् ॥ ३२ ॥

या० १।*अपि चेति।अन्योऽपि कश्चित्तादृशो व्यवहारो निवर्त्तते इत्याहेत्यर्थः । वाक्यार्थबोधायादौ पदार्थानाह *मत्त इत्यादि । आर्तोद्भितान्तद्वन्द्वं कृत्वा पुनस्तेन मत्तोन्मत्ताभ्यां कृत्वा बहुव्रीहितत्पुरुषौ कार्यौ । करणेऽनीयर् । पञ्चविधेनेत्यस्य व्याख्या *वातेति। *सम्भवेनेति। ग्रहान्तपञ्चकजन्येनेत्यर्थः। कारणभेदेन कार्यभेदात्तस्य पञ्चविधत्वम् ।*जनितमिति । एतदन्यतरजनितमित्यर्थः । *व्यवेति।न तु स्तनन्धयादिरेवेति भावः। राष्ट्रादी-

८। दासभेदा वक्ष्यन्ते भक्तदासगर्भदासादयः, तत्राद्ये तयो-स्तदाह *तथेति। भक्तमन्नम्। "भक्तमन्धोऽन्नमिति" अमरः। द्वितीये तयोस्तदाह *गर्भेति। अयं द्विविध इत्यन्यत्र स्पष्टम्। स्वामिना संहत्यग्रेतनेनान्वयः। *यश्चैषामिति। एषां गर्भदासा-दीनां मध्ये यः कश्चिदित्यर्थः। *विशुध्यते, पोषणीयः। *स्वपेन, भापयेत्। *तत्, तस्माद्दासत्वात्। नन्वेवं तस्य का गतिरत आह *तस्मादिति। मध्यमपित्युक्तिस्वारस्यादाह *अदयन्तीति। अश्रे-यस्करत्वे क्रोधादिनैष्ठ्यापत्त्यङ्गीकारे त्वित्यर्थः।

एवमन्यविरोधं परिहरति *यदप्येकस्येति। याद इत्यस्य त्रि-भिरन्वयः प्रागुक्तैकवाक्यतया। तत्राद्यस्यार्थमाह *तत्रैकेति। तेषां त्रयाणां मध्ये इत्यर्थः। अपिनाऽनेकसमुच्चयः। एकार्थैरित्य-ग्रिमेणान्वयः। *गणेति।

सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत्। (याज्ञ. २।१८७)

इत्युत्तरार्धम्। व्यवहारद्रष्टेति शेषः। स्मृत्यन्तरमाह *तथेति। *एकमिति। यथोक्तात् द्विगुणो दम इति वचनशेषः। गणद्रव्यहार्यादेः सर्वस्वहरणादिविधानमेकहन्तॄणां बहूनां च द्वि-गुणदण्डविधानं स्मृतावुक्तम्। इदमुभयमपि व्यवहारमुखेन तादृशा-पराधवतामेव भवतीति व्यवहारोऽस्तीति भावः। प्रागुक्तमेव वि-शेषमाह *एकार्थैरिति। अत एवोक्तनारदाभिप्रायमाह * भि-न्नार्थैरिति। प्रागुक्तयुक्तेराह * युगपदिति। किं त्वीदृशविषये क्रमेण व्यवहार इति भावः। द्वितीयतात्पर्यं प्रागनुक्तमाह *स्त्री-णामिति। इति व्याख्येयमित्यत्रान्वयः। गोपशौण्डिकेत्यत्र वक्ष्यमाणयुक्तेराह * गोपेति। तत्रापि विशेषं सूचयन्हेतुमाह *पतिष्विति। तथा च तदभावे तत्रापि व्यवहार उपादेय एवेति भावः। अयं च तस्याः पत्या साकं न किंत्वन्येनेतिबोध्यम्। एव-

एवं द्रव्यशक्य यथाश्रुत एव । तथा च मूलवाक्यस्थैवकारस्य न सिध्यतीत्यग्रे योजनं कृत्वा मत्तादिकृतो व्यवहारः सर्वात्मना न सिध्यत्येवेत्यर्थः । अयं तूक्तरीत्या कृतः सिध्यत्यन्यथा नेति । यद्वा यथाश्रुत एव सः । तदन्तं चावृत्त्या भिन्नं वाक्यम् । यद्यपि वक्ष्यमाणरीत्या न सिध्यति तथापि प्रबलविरोधपूर्वकदुराग्रहेण तु सिध्यत्येवेत्यर्थः इति न कोऽपि दोष इति भावः ।

५ । नन्वयोग्यत्वादेतेषां व्यवहार एव नोचितो ऽसम्भवश्च तस्य अतस्तमुपपादयति * तथाहीति । तत्र तावत् गुरुशिष्ययोर्व्यवहारस्थलमाह *शिष्येति । स्मृतिव्यपेतमार्गप्रदर्शनाय हेतुद्वयमिदम् । शिष्टिः शिक्षा । * अवधेन,अताडनेन। अशक्तौ तथा कर्त्तुं शक्यते न चेत्तदा सूक्ष्मेण रज्जुखण्डेन वेणुखण्डेन च तच्छिक्षा कार्या । अन्येन उक्तभिन्नेन स्थूलेन रज्जुखण्डेन वेणुखण्डेन च घ्नन् ताडयन् गुरू राज्ञा शास्यः शिक्षणीय इत्यर्थः । यदीत्यनेनान्यथा व्यवहारपदत्वाभावः सूचितः । एवमग्रेऽपि ।

६ । पितापुत्रयोस्तदाह *तथेति ।

भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव च ।
तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैवहि ॥ (याज्ञ.२।१२१)

इति वक्ष्यमाणमूलवचनादित्यर्थः । साम्ये हेतुरयम् । समाने सतीति शेषः । * धर्मेति । धर्मनिर्णयस्थानमित्यर्थः ।

७ । दम्पत्योस्तदाह * तथेति । *सम्पतीति । सर्वस्वहरणं कृत्वा दुर्गादौ परबलैर्निरोधकरणं सम्पातिरोधकम् । * नाकाम इति । प्रागुक्तस्थलान्यतमे गृहीतं स्त्रीधनं पुनस्तस्यै दातुमनिच्छुश्चेन्न दद्यादित्यर्थः । व्यतिरेके हेतुरयम् । विद्यमानेत्यादिविशेषणद्वयेन तदभावे तदभावः सूचितः । अपिर्मिथः समुच्चये।

यदा पुनः संवत्सरादूर्ध्वमागच्छति तदा किञ्चिद्रक्षणमूल्यं गृहीत्वा शेषं स्वामिने दद्यात्।

यथाह, (मनु० ८।३३)

आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः।

दशमं द्वादशं वापि सतां धर्ममनुस्मरन्॥ इति।

तत्र प्रथमे वर्षे कृत्स्नमेव दद्यात्। द्वितीये द्वादशं भागं तृतीये दशमं चतुर्थादिषु षष्ठं भागं गृहीत्वा शेषं दद्यात्। राजभागस्य चतुर्थोऽंशोऽधिगन्त्रे दातव्यः। स्वाम्यनागमे तु कृत्स्नस्य धनस्य चतुर्थमंशमाधिगन्त्रे दत्त्वा शेषं राजा गृह्णीयात्।

यथाह गौतमः,

प्रनष्टस्वामिकमधिगम्य संवत्सरं राज्ञा रक्ष्यमूर्ध्वमधिगन्तुश्चतुर्थोऽंशो राज्ञः शेषमिति।

अत्र संवत्सरमित्येकवचनमविवक्षितम्। राजा त्र्यब्दं निधापयेदिति स्मरणात्। हरेत परतो नृप इत्येतदपि स्वामिन्यनागते त्र्यब्दादूर्ध्वं व्ययीकरणाभ्यनुज्ञा। ततः परमागते तु स्वामिनि व्ययीभूतेऽपि द्रव्ये राजा स्वांशमवतार्य तत्समं दद्यात्। एतच्च हिरण्यादिविषयम्। गवादिविषये वक्ष्यति, "पणानेकशफेदद्यात्" इत्यादिना॥ ३२॥

बा० १। प्रसङ्गसङ्गतिमाह *परावर्त्यमिति। प्रनष्टेति कर्मधारयो न तु पञ्चमीसमास. इत्याह *प्रनष्टमिति। धनमित्यस्यार्थमाह *हिरण्यादीति। *शौल्किकेति। द्वन्द्वं कृत्वा बहुव्रीहिः कार्यः। असमर्पणे तेषां दण्डसत्त्वादाह *राज्ञे इति। उत्तरार्धसूचितमार्थिकं पूर्वशेषमाह *यदीति। उत्तरार्धार्थं कथयन् चेदर्थमाह *यदि

मंत्रेऽपि। तृतीयनातपर्यमाह * प्रेष्येति । इति योजनीयमित्याग्रे-मेणान्वयः । ० स्वार्थेति । भृत्यार्थेत्यर्थः अपिना तदर्थ-व्यवहारसमुच्चयः । तस्मादुक्त एवाशय इति न कोऽपि दोषइति तत्त्वम् ॥ ३२ ॥

मि० परावर्त्यं व्यवहारमुक्त्वा इदानीं परावर्त्यं द्रव्यमाह ।

या० प्रनष्टाधिगतं देयं नृपेण धनिने धनम् ।
विभावयेन्न चेल्लिङ्गैस्तत्समं दण्डमर्हति ॥ ३३ ॥

मि० प्रनष्टं हिरण्यादि शौल्किकस्थानपाला-दिभिरधिगतं राज्ञे समर्पितं यत् तत् राज्ञा धनिने दातव्यम्, यदि धनी रूपसंख्यादिभिर्लिङ्गैर्भावयति । यदि न भावयति तदा तत्समं दण्ड्यः । असत्यवा-दित्वात् । अधिगमस्य स्वत्वानिमित्तत्वात् स्वत्वे प्राप्ते तत्परावृत्तिरनेनोक्ता ।

अत्र च कालावधिं वक्ष्यति, ( याज्ञ० २।१७३ )

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।
अर्वाक्संवत्सरात्स्वामी हरेत परतो नृपः ॥ इति ।

मनुना— ( अ० ८।३० )

पुनः संवत्सरत्रयमवधित्वेन निर्दिष्टम्,

प्रनष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् ।
अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेत् ॥ इति।

तत्र वर्षत्रयपर्यन्तमवश्यं रक्षणीयम् । तत्र यदि संवत्सरादर्वाक् स्वाम्यागच्छेत्तदा कृत्स्नमेव दद्यात् ।

तत्र राजभागस्यैवाभावात् । एतदर्थमेवेदमुक्तम् । अन्यथा च- तुर्थोऽस्य इत्येव वदेत् राजभागसंबन्धिचतुर्थांशदानाभिप्रायेण तु आ- ददीताथ षड्भागमिति वचनविरोधः स्यात् । तथा च मनष्टाधि- गतं द्रव्यं यः शौल्किकादी राज्ञे समर्पयति तस्य, राज्ञो यो भागः षष्ठादिरूपः तच्चतुर्थांशः तत्तुल्य उद्धृतषष्ठादिभागाद्धनादवशिष्टा- ज्ञातव्यो दापनीयो न तु राज्ञोऽंशात् नाष्टांशात्मकादित्यर्थो बोध्यः । उभयत्र तुर्यपादार्थतात्पर्यं वक्तुं निक्षेपमाह *प्रना- ष्टेनेति । *अधिगन्त्रे, शौल्किकप्रभृतये । अत्र मतद्वय मा- नमाह * यथार्हेति । * मनष्टेति । पूर्ववत् । * ऊर्ध्वमधिगन्तुरिति । संवत्सरादिति शेषः । तथा च संवत्सरानन्तरं स्वामिन्यागते ऽधिगन्तुश्चतुर्थोऽशो भवति, शेषं राज्ञो भवतीत्यर्थः । तत्राधि- गन्त्रे चतुर्थांशदाने इयान्भेदः, स्वामिन्यागते प्रागुक्तरीत्या राज्ञः षष्ठाद्यंशमुद्धृत्यावशिष्टधनाद्राज्ञः चतुर्थांशसमभागो देयः, अना- गते तु तस्मिन्सर्वस्य धनस्य चतुर्थांशो देय इति । एवं राज्ञः शेष- मित्यत्रापि तस्मिन्नागते पूर्वोक्तरीत्या षष्ठादिभागरूपम्, अनागते तु तस्मिन्सर्वधनं दत्तचतुर्थांशकमिति भेदो बोध्यः । एवं च राज्ञ इत्यस्य मध्यमणिन्यायेनान्वयो बोध्यः ।

३ । मनुतात्पर्यविरोधं परिहरति *अत्रेति । गौतमीये इत्यर्थः । उद्देश्यविशेषणत्वादिति भावः । तथा सत्यनतिप्रसङ्गाय तन्मूलं तदुक्तमेव हेतुमाह * राजेति ।

४ । नन्वेवं सर्ववचनानां व्यवस्थायां पादत्रयार्थलाभेऽपि मनुमूलयोस्तुर्यपादार्थस्य निर्विषयत्वापत्तिरेव, चतुर्थादिष्वपि अवशिष्टदानस्य स्वामिने प्रतिपादितत्वादित्यत आह *हरेते ति । अपिना मनूक्ततुर्यपादसमुच्चयः । यद्यप्यत्र संवत्सरादिति प्रक्रान्तं तथाप्युक्तरीत्या मन्वेकवाक्यतयैवाह * त्र्यब्दादि-

नेति । द्रिकर्थोऽनिनाशित इत्याह *भावयतीति । *तत्समं, प्रनष्टाधिगतद्रव्यसमम्। पूर्वं मदीयमेतदिति निवेद्य पश्चाद्यदि न साधयति तदा स दण्ड्य इत्यर्थः । तदेव ध्वनयन्नाह *अस-दर्शनेति । ननु प्रनष्टाधिगतस्य परकीयत्वेनादेयत्वाद्देयमित्युपदेशो व्यर्थ एव अत आह *अधिगमस्येति।द्रव्यनाशानन्तरं तदलब्ध्वा स्वामिनो देशान्तरगमने विशेषमाह *अत्र चेति । प्रनष्टाधिगत-स्य प्रतिदानविषये इत्यर्थः । अत्र सर्वत्र प्रनष्टेति दन्त्यपाठः । नशेरिति नत्निषेधात् । तदेव मूलोक्तमाह *शौल्किकैरिति । शुल्कं गृह्णन्ति ते शौल्किकाः । स्थानपालाः तन्मात्ररक्षकाः । *नष्टेति । नष्टं सत् अधिगतं राज्ञे समर्पितमित्यर्थः । यद्वा नष्ट-मपहृतं चाधिगत्य राज्ञे समर्पितमित्यर्थः ।

२ । अत्र विशेषमाह *मनुना पुनरिति । मनुना त्वित्यर्थः । मनुमेवाह *प्रनष्टेति । स्वामिनः सकाशात्प्रनष्टं प्रनष्टस्वामिकम् । राजदन्तादिः । स्वार्थे कः।अत एव पूर्वैकवाक्यता उत्तरार्द्धसङ्गति-श्चेति भावः । यद्वोक्तरीत्या तदनन्तरं देशान्तरगतस्वामिकमिति यथाश्रुत एवार्थः । हृतं नष्टं च लभ्यते इतिवत् प्रयोग इति न कोपि दोषः । एवं सति प्रसक्तविरोधपरिहाराय व्यवस्थां कथयन्नादौ मनुतात्पर्यमाह *तत्रेति । तथा सतीत्यर्थः । *अव-श्यमिति । तन्मध्ये व्ययं न कुर्यादित्यर्थः । निधापयेदित्यु-क्तिस्वारस्यादिति भावः । *तत्र, तावत्पर्यन्तरक्षणीये।तस्मिन्स-ति मूलतात्पर्यमाह *यदीति ।पुनस्त्वर्थे । अत्र मानमाह *यथा-हेति । अस्य पक्षत्रयस्य व्यवस्थां कथयितुमादौ मूलोक्तमेवाह *तत्रेति । तेषां मध्ये इत्यर्थः। अन्यथा तदानर्थक्यं स्पष्टमेव । द्वादश-भागमित्यादेर्गृहीत्वेत्यादिना अन्वयः । विशेषमाह * राजभागे-ति । * चतुर्थोंऽश इति । अयं च विशेषो द्वितीयादौ न त्वाद्ये ।

णेभ्यो दत्त्वा शेषं कोशे निवेशयेत्। ब्राह्मणस्तु विद्वान् श्रुताध्ययनसम्पन्नः सदाचारो यदि निधिं लभेत तदा सर्वमेव गृह्णीयात्। यस्मादसौ सर्वस्य जगतः प्रभुः। इतरेण तु राजविद्वद्ब्राह्मणव्यतिरिक्तेन अविद्वद्ब्राह्मणक्षत्रियादिना निधौ लब्धे राजा षष्ठांशमधिगन्त्रे दत्त्वा शेषं निधिं स्वयमेवाहरेत्।

यथाह वसिष्ठः,

अप्रज्ञायमानं वित्तं योऽधिगच्छेद्राजा तद्धरेत् षष्ठमंशमधिगन्त्रे दद्यादिति।

गौतमोऽपि,

निध्यधिगमो राजधनं भवति, न ब्राह्मणस्याभिरूपस्य, अब्राह्मणोऽप्याख्याता षष्ठमंशं लभेतेत्येके इति।

अनिवेदित इति कर्तरि निष्ठा। अनिवेदितश्चासौ विज्ञातश्च राज्ञेत्यनिवेदितविज्ञातः। यः कश्चिन्निधिं लब्ध्वा राज्ञे न निवेदितवान् विज्ञातश्च राज्ञा स सर्वं निधिं दाप्यो दण्डं च शक्त्यपेक्षया। अथ निधेरपि स्वाम्यागत्य रूपकसंख्यादिभिः स्वत्वं भावयति तदा तस्मै राजा निधिं दत्त्वा षष्ठं द्वादशं वांऽशं स्वयमाहरेत्।

यथाह मनुः (अ. ८ श्लो० ३५)

ममायमिति यो ब्रूयान्निधिं सत्येन मानवः।
तस्याददीत षड्भागं राजा द्वादशमेव वा॥इति।

अंशविकल्पस्तु वर्णकालाद्यपेक्षया वेदितव्यः॥३४॥३५॥

पा० १। अव्यवहितसङ्गतिं प्रसङ्गरूपामाह * रथ्येति। इदं नष्टपद-

ति। तथा चात्र परत इत्यत्र व्यवहारादिति शेषो बोध्यः। ननु व्यर्थीकरणानन्तरं तदागमने कथं प्रागुक्ततदानसंभवोऽत आह *आगतं त्विति। *अवतार्य, पृथक्कृत्य। तास्मिन्प्रक्षिप्य। *तत्समम्, अवशिष्टतुल्यम्। तथा च राजा स्वांशं षष्ठांशं तथा कृत्वा तत्समं यावदधिगन्तृहस्ताद् गृहीतं तत्संख्याकं स्वामिने दद्यादित्यर्थः। तत्रापि न तज्जन्यवृद्धिं दद्यादपि तु मूलमात्रमेव। "इतरे परत" इत्यनेन व्ययवत् व्यवहारस्यानुज्ञानात्। तथा च व्यर्थीकरणे व्यवहारे सति वृद्धिद्रव्येण तत्समत्वं तदभावे स्वांशप्रक्षेपेण। ततोऽप्यपूर्तौ तत्समत्वं स्वकोशद्रव्येणैव, न त्वधिगन्त्रे यश्चतुर्थांशो दत्तस्तद्ग्रहणेनापि। तस्मै भृतिरूपेण दत्तत्वात्। भृतिरूपस्याप्यादाने कालान्तरे प्रनष्टाधिगतमत्यर्पणादिकं न स्यात्। स्वांशमवतार्येति विशेषोक्तेश्चेति बोध्यम्।

५। विशेषमाह *एतच्चेति। अत एव प्राक् तथैव व्याख्यातम्। सङ्कोचे मानमाह *गवादीति। मूलच्छेदेनेति भावः॥ ३३॥

मि० रथ्याशुल्कशालादिनिपतितस्य सुवर्णादेर्नष्टस्याधिगमे विधिमुक्त्वा अधुना भूमौ चिरनिखातस्य सुवर्णादेर्निधिशब्दवाच्यस्याधिगमे विधिमाह।

या० राजा लब्ध्वा निधिं दद्याद् द्विजेभ्योऽर्द्धं द्विजः पुनः।
विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यतः॥ ३४॥
इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत्।
अनिवेदितविज्ञातो दाप्यस्तं दण्डमेव च॥ ३५॥

मि० उक्तलक्षणं निधिं राजा लब्ध्वा अर्द्धं ब्राह्म-

त्येके इत्यर्थः । अपिना विद्वद्ब्राह्मणसमुच्चयः । तथा च तस्यापि षष्ठांशपात्रप्राप्तौ प्रागुक्तविरोधो ऽत आह *एके इति । अनेन तदीयसर्वग्रहणेन सह षष्ठांशग्रहणस्य पुरुषभेदेन विकल्पः सूचित इति बोध्यम् ।

२। नन्वनिवेदितविज्ञात इत्ययुक्तं, स्वयंनिधिप्राप्तौ निध्यधिगन्त्रा अन्येन वाऽनिवेदने राज्ञो ज्ञानाभावात्, किं च दाप्य इत्यनेनान्वयासम्भवात्, अत आह *अनिवेदित इतीति । तत्त्वार्थाकर्षणकल्पनेनेति भावः । पदार्थमुक्त्वा वाक्यार्थमाह *यः कश्चिदिति । विद्वद्ब्राह्मणस्तद्भिन्नो वेत्यर्थः । तमित्यस्यार्थमाह *तं निधिमिति । विशेषानुक्तेः केवलार्थकशब्दस्वरसादाह *शक्त्यपेक्षयेति । यदि निध्यधिगन्ता स्वयं निवेदने साक्षात्कर्ता प्रयोजको वा न भवति अपित्वन्यैर्निवेदितः सन् राज्ञा विज्ञातो भवति तदा स तं निधिं दण्डं च यथाशक्ति दाप्य इति तात्पर्यम्।

३। इतरेणेत्येतत्सूचितमेव विशेषमाह *अथेति । अपिः प्रागुक्तमनष्टसमुच्चायकः । *भावयति, साधयति । अत्र मानमाह *यथाहेति । *ममायामिति । *अनेन कर्मणा द्विकर्मकत्वं ब्रुवः । *सत्येन, रूपसंख्यादिकथनेन । *तस्येति । अवधेः सम्बन्धित्वविवक्षया षष्ठी । प्राग्वद् व्यवस्थामाह *अंशेति । *वर्णेति । सदसद्वर्णचिराचिरकालाद्यपेक्षयेत्यर्थः ॥ ३४ ॥ ३५ ॥

मि० चौरहृतं प्रत्याह ।

या० देयं चौरहृतं द्रव्यं राज्ञा जानपदाय तु ।
अददद्धि समाप्नोति किल्बिषं यस्य तस्य तत् ॥३६॥

मि० चौरैर्हृतं द्रव्यं चौरेभ्यो विजित्य जानपदाय स्वदेशनिवासिने यस्य तत् द्रव्यं तस्मै राज्ञा दातव्य-

व्याख्यानम्। एतेनमाक्तनम् मनष्टपदमपि व्याख्यातम्। *एवम्, उक्तप्रकारेण। *इत्तेति। भूमौ चिरनिखातं सुवर्णादीत्यर्थः। तुर्यपादवलात् द्विजपदं ब्राह्मणपरमित्याह *ब्राह्मणेभ्य इति। एवमग्रेऽपि। फलितमाह *शेषमिति। पुनःशब्दार्थमाह *त्विति। विद्वानित्यस्य व्याख्या *श्रुतेति। न केवलमिषा इत्यादिस्मृत्यन्तरादिदमुपलक्षणमित्याह *सदेति। पुनःशब्दानुपङ्गेण द्वितीयपद्यार्थमाह *इतरेणत्विति। इतरत्वमुभयापेक्षमित्याह *राजेति। शेषपूरणेन व्याचष्टे *अधिगन्त्र इति। यद्यप्यत्र अपष्ठांशमिति छेदेन वाक्यपूर्तिः सिद्धा तथापि उपक्रमे वासिष्ठे च दद्यादित्युक्त्या दानशाब्दत्वस्यैवेष्टत्वेनात्रार्थिकत्वे तद्विरोधापत्तेः शेषपूरणापत्तेः, विद्वद्विप्रविषये सर्वस्येति हेतूक्त्याऽन्यविषये राज्ञः प्रभुत्वसूचनेन तत्रापि तदाहरणस्यार्थसिद्धत्वेन विध्यनुपयोगात्, अत एवानिवेदितेत्यनेन विप्रस्यापि वैपरीत्योक्तेः, अतएव च दानपूर्वकाहरणस्यैव विवक्षितत्वेन तदीयलाभापत्तेश्च, अतएवोपक्रमवाक्यं तथा व्याख्यातम्। अत इग्यण इतिसूत्रादिभाष्यसिद्धान्तमूलकेन प्रविश पिण्डीम् इत्यादिवद्वाक्यैकदेशन्यायेन तन्त्रादिना द्वितीयपादस्य शाब्दमर्थमाह *राजेति। यथाश्रुतार्थत्यागेन तथा व्याख्याने बीजमाह *यथाहेति। *अप्रज्ञायमानामिति। चिरनिखातमित्यर्थः। अनेन वित्तस्य निधित्वं सूचितम्। *तत्, ततः। *निध्यधिगम इति। अधिगम इति कर्मणि घञ्। कर्मधारयः। कडारादिः। अधिगम्यमानो निधिः राजधनं नाधिगन्तुः। *अभिरूपस्य, श्रुताध्ययनादिसम्पन्नस्य ब्राह्मणस्य तु स न राजधनम् अपि तु तस्यैव। एवंचेदं वाक्यत्रयं यथासंभवं शेपानुषङ्गाभ्याम् इति बोध्यम्। *अब्राह्मणोऽपि विद्वद्ब्राह्मणभिन्नोऽप्याख्याता तत्कथयिता यदि तदा तस्य षष्ठमंशं लभेते-

दोषेषु साकाङ्क्षत्वात्तेषां पूरणमिति *नत्वेति । द्विविधस्तावदर्थ-माह *तस्य चोरस्य चेति । किल्बिषमित्यादेरन्वयः । यथाश्रुता-र्थं विहाय एवं व्याख्याने मानमाह *यथाहेति । एतदपि व्रजान इति । तदुपयुञ्जान इति पाठान्तरम् । अत्र मनुस्मृत्यां यथाश्रुतं विरुद्धमुक्तम् । अतो मन्वेकवाक्यत्वेनैव मूलस्य सम्भवात् नैवर्त-स्यासम्भवात् द्वेधा व्याख्यानं कृतमिति । तस्यापहृतदानं राजा तयोः उभयोः किल्बिषभागीत्युक्तं, तथा सति मनुवचने प्राप्त-न्यूनतानिरासाय विषयव्यवस्थामाह *यद्वेति । अनेन मनुविरोधः प्रदर्शितः । मूलविषयमाह *अथेति । एवमपि मूलोक्तार्थस्य नुचो-जत्वात्तस्य व्यवस्थितत्वादिति भावः । मनुमूलपूर्वार्द्धतात्पर्यमाह

२। *अथेति । तावदित्यनेन न्यूनाधिकभावो निरस्तः । अत्र मानमाह *यथाहेति । *यथास्थानमिति । यस्य तद्धनं तं प्राप-येदित्यर्थः । *कृष्णेति । व्यासोऽप्याहेत्यर्थः । *अशक्तस्तु, अ-शक्त एव । राजा भवेदिति शेषः । *हि. तदा । द्विविधमिति न्या-येन सत्यां शक्तौ तथा न कार्यमिति स्पष्टार्थमाह *अशक्ते-नेति । *महीति । महीं क्षयति निवासयति गमयति वा, क्षि-णोति हिनस्ति शास्ति दण्डयति वा महीक्षित् तेनेत्यर्थः ।

३। *इत्यसाधारणव्यवहारमातृकेति । इति साधारणासाधा-रणव्यवहारमातृकेति पाठान्तरम् । तस्य च पूर्वं तथा पाठाभावो वक्ष्यमाणप्रकारो वा ऽभिप्रायः ॥ ३६ ॥

म्। हि यस्मात् अददत् अप्रयच्छन् यस्य तत् अपहृतं द्रव्यं तस्य किल्बिषमाप्नोति। तस्य चौरस्य च।

यथाह मनुः, (अ० ८ श्लो० ४०)

दातव्यं सर्ववर्णेभ्यो राज्ञा चौरहृतं धनम्।
राजा तदुपभुञ्जानश्चौरस्याप्नोति किल्बिषम्॥ इति।

यदि चौरहस्तादादाय स्वयमुपभुङ्क्ते तदा चौरस्य किल्बिषमाप्नोति। अथ चौरहृतमुपेक्षते तदा जानपदस्य किल्बिषम्। अथ चौरहृताहरणाय यतमानोऽपि न शक्नुयादाहर्तुं तदा तावद्धनं स्वकोशाद्दद्यात्।

यथाह गौतमः,

चौरहृतमवजित्य यथास्थानं गमयेत् कोशाद्वा दद्यादिति।

कृष्णद्वैपायनोऽपि,

प्रत्याहर्तुम् अशक्तस्तु धनं चौरहृतं यदि।
स्वकोशात्ताद्धि देयं स्यादशक्तेन महीक्षिता॥ इति।

इति असाधारणव्यवहारमातृकाप्रकरणम्॥ ३६॥

या० १। *चौरेति। मनष्टप्रसङ्गादित्येवेति भावः। ननु स्वयमलब्धं कथं देयम् अत आह *चौरेभ्य इति। ततः शासनपूर्वं गृहीत्वेत्यर्थः। जनपदे भवो जानपदः। अनतिप्रसङ्गाय तस्य च सम्बन्धिशब्दत्वादाह * स्वदेशेति। तथाप्यनतिप्रसङ्गायाह * यस्येति। अनेन वर्णसामान्यपरामर्शः। अत एव मन्वेकवाक्यता। तुः पादपूरणे। यस्येत्यन्तं भिन्नं वाक्यं, तस्येति च भिन्नं, तदित्यस्योभयत्रान्वयः, तदाह * हीति। अस्यार्थमाह *यस्मादिति। तदित्यस्य व्याख्या *अपहृतं द्रव्यमिति। यत्त-

त्रिचतुःपञ्चकं शतं धर्म्यं भवति । ब्राह्मणेऽधमर्णे द्वि-
कं शतं क्षत्रिये त्रिकं वैश्ये चतुष्कं शूद्रे पञ्चकं, मासि-
मासीत्येव । द्वौ वा त्रयो वा चत्वारो वा पञ्च वा द्वि-
त्रिचतुःपञ्चाः अस्मिन् शते वृद्धिर्दीयते इति त्रिचतु-
तुःपञ्चकं शतम् । तदस्मिन् वृद्ध्यायलाभशुल्कोपदा
दीयते इति संख्याया अतिशदन्तायाः कन् । तदन्त-
विधिश्चात्र द्रष्टव्यः ।
इयं च वृद्धिर्मासि मासि गृह्यते इति कालिका । इय-
मेव वृद्धिर्दिवसगणनया विभज्य प्रतिदिवसं गृह्यमा-
णा कायिका भवति ।

तथा च नारदेन, ( व्य० प० १।१०२।१०३।१०४ )

कायिका कालिका चैव कारिता च तथा परा ।
चक्रवृद्धिश्च शास्त्रेषु तस्य वृद्धिश्चतुर्विधा ॥

इत्युक्त्वोक्तम्,

कायाविरोधिनी शश्वत्पणपादादिकायिका ।
प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका मता ॥
वृद्धिः सा कारिता नामाधमर्णिकस्वयंकृता ।
वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता ॥ इति ॥ ३७ ॥

बा० १। पूर्वोत्तरयोर्ग्रन्थसन्दर्भयोः सङ्गतिमाह *साधारणासाधार-
णेति । प्रथमप्रकरणे साधारणमातृका ऽभिहिता, द्वितीयप्रकरणे
ऽसाधारणमातृका । एवं च प्रकरणद्वयस्य निरपेक्षस्योत्तरग्रन्थो-
पयोगित्वेन ताभ्यामुत्तरग्रन्थसङ्गतिरिति भावः । यद्वा ऽनन्त-
रप्रकरणमेवं साधारणासाधारणात्मकम् । देशाद्देशान्तरं यातीत्या-
दिदुष्टलक्षणं सर्वसाधारणम्, छलं निरस्य भूतेनेत्यादिकमपि ।

## अथ ऋणदानप्रकरणम् ॥ २ ॥

मि॰ साधारणासाधारणरूपां व्यवहारमातृकामभिधायाधुनाऽष्टादशानां व्यवहारपदानामाद्यमृणादानपदं दर्शयति, "अशीतिभागो वृद्धिः स्यात्" इत्यादिना

"मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने"

इत्येवमन्तेन । तत्र ऋणादानं सप्तविधम् । ईदृशमृणं देयम्, ईदृशमदेयम्, अनेनाधिकारिणा देयम्, अस्मिन् समये देयम्, अनेन प्रकारेण देयमित्यधमर्णे पञ्चविधम् । उत्तमर्णे दानविधिरादानविधिश्चेति द्विविधमिति । एतच्च—

नारदेन स्पष्टीकृतम्, ( व्य॰ प॰ १।१ )

ऋणं देयमदेयं च येन यत्र यथा च यत् ।
दानग्रहणधर्मश्च ऋणादानमिति स्मृतम् ॥ इति ।

तत्र प्रथममुत्तमर्णस्य दानविधिमाह । तत्पूर्वकत्वादितरेषाम् ।

या॰ अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ॥
वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा ॥ ३७ ॥

मि॰ मासि मासि, प्रतिमासम् । बन्धकं विश्वासार्थं यदाधीयते आधिरिति यावत् । बन्धकेन सह वर्त्तते इति सबन्धकः प्रयोगस्तस्मिन् सबन्धके प्रयोगे प्रयुक्तस्य द्रव्यस्य अशीतितमो भागो वृद्धिर्धर्म्या भवति। अन्यथा बन्धकरहिते प्रयोगे वर्णानां ब्राह्मणादीनां क्रमेण द्वि-

*ब्राह्मण इति। शतपिताम्नाश्च वर्णक्रमानुवादः। एवं भर्तृविषयत्वा-
पि। मासि मासीत्यनुवर्तनं इत्याह *मासीति। तथा न प्रति-
मासं ब्राह्मणादिक्रमान् तथा भवतीत्यर्थः।

५। ननु कथमुक्तार्थलाभस्तत्र इत्यत आह *द्वैतेति। संख्य-
याऽन्वयेति बहुव्रीहिरिति भावः। * तदस्मिन्निति। तथा च फलः
सर्वत्र सम्बन्ध इति भावः। उक्तवृद्धेर्ग्राधिभेदान्मूलानुक्तं द्वैविध्यं
कथयन्नाह * इयं चेति। मूलोक्तेत्यर्थः।

६। मूलानुक्तमाह *इयमेवेति। मूलोक्तेत्यर्थः। विशेषमा-
ह *दिवसेति। मासस्येति भावः। अत्र मानमाह * तथा
चेति। उक्तोक्तमित्यत्रान्वयः। *तस्य, ऋणस्य। उक्तेति शे-
षः। *कायेति। तदविरोधिनी तदनुकूला यथा तस्य प्रति-
दिनं वृद्धिस्तथा शरीरसत्त्वे प्रतिदिनं वृद्धिरिति तथा दीयमा-
नेत्यर्थः। यद्वा यया खेदेन शरीरनाशो न भवति तादृशी स्व-
ल्पेत्यर्थः। अधिकदाने खेदेन देहस्यारक्षणेन नाशसंभवात्।
* शश्वत्, मुहुर्मुहुः प्रतिदिनमिति यावत्। * पणेति। पण-
स्य पादश्चतुर्थांश इत्यर्थः। तथा च पणपादादिरूपा तदविरोधि-
नी प्रतिदिनं स्रवन्ती कायिकेत्यर्थः। *स्रवन्ती, आगच्छन्ती।
उभयत्र मत्वर्थीयष्ठन्। अधमर्णिके वक्तव्य इत्यनुकम्पादौ ठच्।
ऋणिकेनेति पाठान्तरम्। तदा मत्वर्थीयष्ठन्॥ ३७॥

मि० ग्रहीतृविशेषेण वृद्धेः प्रकारान्तरमाह।

या० कान्तारगास्तु दशकं सामुद्रा विंशकं शतम्।

मि० कान्तारमरण्यं तत्र गच्छन्तीति कान्तार-
गाः। ये वृद्ध्या धनं गृहीत्वाऽधिकलाभार्थमतिगहनं
प्राणधनविनाशशङ्कास्थानं प्रविशन्ति ते दशकं शतं

इतरद्व्यावर्त्तनम्। समासानुभयात्मकत्वेन प्रकरणसमापनामिति भावः। *व्यवहारपदानां, मध्ये इति शेषः।

२। तत्र तावत् ऋणस्य अदानम् आदानं वा यस्मिन्निति व्युत्पत्त्यावपि योगरूढोऽयम् ऋणादानशब्दः। तदेतदभिप्रेत्याह *तच्चेति। तत्र तावत् अधमर्णसम्बन्धिभेदानाह * ईदृशामिति। याचनापूर्वकत्वादृणस्य तस्याश्च अधमर्णनिष्ठत्वात् मल्लग्रामादिवद्वेति भावः। एतेन सूत्रीकटाहन्यायेन वैपरीत्यमुचितमित्यपास्तम्। नारदवचनाच। अस्वतन्त्रैरपि स्त्र्यादिभिः कुटुम्बरक्षणार्थं यदृणं गृहीतं तद्देयम्, उक्तवैपरीत्येतु न देयं, पुत्रपौत्रादिरूपेणाधिकारिणा देयम्, अस्मिन्काले देयं, क्वचित्सवृद्धिकं देयं क्वचिदवृद्धिकमित्येतदन्यतरदित्येवमधमर्णे देयं पञ्चप्रकारम्, उत्तमर्णे द्विविधमित्यर्थः।

३। * एतच्चेति। उक्तभेदकथनेनास्य योगरूढत्वं चेत्यर्थः। येन देयमित्यधिकारिनिर्देशः। यत्र देयमिति कालनिर्देशः। यथाचेति प्रकारनिर्देशः। देयमित्यस्य सर्वत्रान्वयः। धर्मश्चेति पाठः। द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकं सम्बन्धः। तदिति पाठे यदिति शेषः। वैपरीत्ये वैपरीत्यम् इति। यत् तदृणादानमित्यन्वयः।

एवं स्मृत्यन्तरानुरोधेनास्य सप्तविधत्वमग्रिमोपयुक्तं प्रतिपाद्य अधुना मूलवचनमवतारयति *तत्रेति। तेषां मध्ये इत्यर्थः।

४। द्वयोरेवेतिभ्रमनिरासाय वीप्साद्विर्वचनेनाह *प्रतीति। *प्रयोगे, दाने। अत्र विशेषोल्लेखेऽनुपयोगात्फलेऽविशेषाच्चाह *द्रव्यस्येति। अशीतिपदं तत्संख्यापूरके लाक्षणिकं भागपदसाहचर्यादित्याह *अशीतितम इति। तथा च तत्र कर्मधारयो बोध्यः। शास्त्रविहितत्वादेवाह * धर्म्येति। लिङ्गार्थाविवक्षयाऽऽह *भवतीति। उत्तरार्धं व्याचष्टे *अन्यथेति। अस्य व्याख्या *वन्धकेति। सामान्येनोक्तं स्पष्टार्थं विशिष्याह

यथाह,

स्वदेशेऽपि स्थितो यस्तु न दद्याद्याचितः क्वचित् ।
तं ततोऽकारितां वृद्धिमनिच्छन्तं च दापयेत् ॥ इति ।

अनाकारितवृद्धेरपवादो नारदेनोक्तः. (अ. २।३६)

पण्यं मूल्यं भृतिर्न्यासो दण्डो यश्च प्रकल्पितः ।
वृथादानाक्षिकपणा वर्धन्ते नाविवक्षिताः ॥ इति ।

अविवक्षिता अनाकारिता इति ॥ ३८ ॥

बा० १। *गृहीतमिति। अधमर्णादिः । *उत्तमर्णमिति। पूर्ववत् । *त्रिपक्षमिति। स्वरूपकथनम्। प्रकरणादृणेऽपत्यादिन्याह *अरण्यमिति । कर्मणोऽधिकरणत्वविवक्षया सप्तमी *तत्रेति । तादृ-त्यर्थः । परिक्रान्तवन्तः । अत एव तथैव पदार्थमुक्त्वा वाक्यार्थमाह *ये इति । तत्रापि अरण्यसामान्यं न विवक्षितमिति सूचयन्नाह *अटवीति । अभ्यर्हितत्वादरण्यस्य पूर्वनिपातः । वस्तुतोऽविनाशस्थानेऽपि आह *यद्वेति । तत्रापि मरणं इत्याह *मृतेति। अपकर्षेणाह *दस्युरिति ।

२। *ये च, ये तु। सामुद्रा इत्यत्रेदृपर्येऽपीति सूचयन्नाह *समुद्रगा इति । दस्युरित्यस्यानुषङ्गः । मासि मासीत्यनुवर्तते सामर्थ्यादित्याह *मासीति ।

३। ननु तथा सति यदि विनाशस्तावत्प्रदानमपि कथमतः तात्पर्यार्थमाह *एतदिति । आदातव्येति भावः। इदं चानन्तर्यादन्यकथयोगाविषयम् । अत एवाह *मूलेति ।

४। *कारितामिति। अत एव मूले वाशब्दो विकल्पार्थः । तदाह *सर्वे इति । अस्य व्याख्या *ब्राह्मणेति । अत्र च ब्राह्मणादीनामधमर्णत्वं प्रदर्शनमात्रं, हीनोत्तमभावमपरिगणय्य यथाकथंचिदुत्तमर्णत्वमधमर्णत्वं च भवतीत्यर्थः । संकोचे

दद्युः, ये च समुद्रगास्ते विंशकं शतं, मासि मासीत्येव। एतद्वृक्तं भवति। कान्तारगेभ्यो दशकं शतं सामुद्रेभ्यश्च विंशकं शतम् उत्तमर्ण आदद्यात्। मूलनाशस्यापि शङ्कितत्वादिति।

मि० इदानीं कारितां वृद्धिमाह।

या० दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ॥३८॥

मि० सर्वे वा ब्राह्मणादयोऽधमर्णाः अबन्धके सबन्धके वा स्वकृतां स्वाभ्युपगतां वृद्धिं सर्वासु जातिषु दद्युः। क्वचिदकृतापि वृद्धिर्भवति।

यथाह नारदः, (व्य० प० १।१०८)

न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित्।
अनाकारितमप्यूर्ध्वं वत्सरार्द्धाद्विवर्द्धते॥ इति।

यस्तु याचितकं गृहीत्वा देशान्तरं गतस्तं प्रति—
कात्यायनेनोक्तम्,

यो याचितकमादाय तमदत्त्वा दिशं व्रजेत्।
ऊर्ध्वं संवत्सरात्तस्य तद्धनं वृद्धिमाप्नुयात्॥ इति।

यश्च याचितकमादाय याचितोऽप्यदत्त्वा देशान्तरं याति तं प्रति—

तेनैवोक्तम्,

कृत्वोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत्।
ऊर्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात्॥ इति।

यः पुनः स्वदेशे स्थित एव याचितो याचितकं न ददाति तं याचनकालादारभ्य वृद्धिं दापयेद्राजा।

इत्यग्रे योज्यो यथाश्रुत एव । यान्ति इत्यत्र अर्थानि शेषः ।

९ । चतुर्थविशेषणमाह *यः पुनरिति । यदित्यर्थः । *याचितः, याचितोऽपि । *याचितेनेति । अधमर्णेनाचितेन्यर्थः । * स्वैरिति । यस्तु स्वदेशे स्थितः सन् याचितोऽपि कृतिन्कर्तागतस्य दद्यादित्यर्थः । क्वचिदिति देशविशेषणं वा । अनिच्छन्तं न यच्छन्तम् अकारिताम् अकृतामपि वृद्धिं प्रागुक्तरीत्या गतां ऽधमर्णयाचनकालादारभ्य राजा दापयेदित्युत्तरार्धार्थः ।

१०। *अनाकारितेति । न वृद्धिः प्रतीति नारदेनेव षण्मासानन्तरं प्रीतिदत्ते उक्ताया इत्यर्थः।*नारदेनेति। तेनैवेत्यर्थः । पण्यं विक्रेयं वस्तु । मूल्यं धान्यादि । भृतिर्वेतनम् । वृथादानेति त्रयाणामितरेतरद्वन्द्वः । वृथादानं वन्दिचारणादिभ्यो दानम् । आक्षिकं द्यूतजितम् । पणः व्यवहारे क्रियमाणनिबन्धः । न्यासान्यपण्यादिषु दास्यामीति दत्तप्रतिज्ञायां कृतायां सत्यां तावतेषां पण्यादीनां परकीयत्वेनादानेऽनाकारितवृद्धिः प्राप्ताऽनेनापोद्यते इति भावः ।

११। न्यासपदेन तु न्यासविशेषो ग्राह्यः । तथा हि । यत्र विश्वस्ते पुरुषे रूपसंख्याप्रदर्शनेन द्रव्ये न्यस्ते स यदि मर्यतव्यवहियते कालान्तरे एतत्संख्याकमेतज्जातीयं च द्रव्यं दास्यामीति स्वामिनः पुरस्तात् कथयति स च स्वामी तथैवाङ्गीकुरुते तादृशे न्यासे ऽकृता वृद्धिर्नास्तीत्यर्थः । षण्मासं वृद्ध्यभावस्य सिद्धत्वात् स्वामिने ऽकथयित्वैव व्यहारे कृते सोदयस्य देयत्वाच्चेति बोध्यम् । अविवक्षितां इत्यत्र अर्शआद्यच् । तदाह *अनाकारिता इति ॥ ३८ ॥

मि० अधुना द्रव्यविशेषेण वृद्धिविशेषमाह ।

मानाभावादाह * अवन्धके इति । प्रयोगे इति शेषः । यथा-श्रुतासंगतेराह * स्वाभ्युपेतेति । उद्देश्यस्याधिकरणत्वविवक्षया आह * सर्वास्विति ।

५। विशेषमाह *कारितेति । *न वृद्धिरिति। वृद्धिं कुर्व-न्नधमर्णमुत्तमर्णः प्रयुङ्क्ते इति णिचि निष्ठायाम् आङा कारिता-शब्दस्य समासे नञो नञा तस्य समास इति कश्चित् । अकृते-ति स्वारस्यात् प्रार्थयन्तीं निवन् णिजिति तु तत्त्वम् । अत एव स्वकृतामित्युक्तं मूले । एवं प्रीतिः कारितेत्यत्रापि बोध्या । अत एव स्वयं कृतेत्येव तत्रोक्तम् । एवं चाकृता वृद्धिस्तत्रं यथेच्छं व्यवहरेति दत्तानां क्वचिदपि न स्यात् । अत्र प्रीतिदत्तेत्यनेन ग्रहीतुर्याचनाभावः सूचितः। अत एव तत्र विशेषं वक्ष्यति ईदृशेऽपि स्थले । हिस्त्वर्थे । *वत्सरार्धादि, वत्सरार्धात्तु। *ऊर्ध्वं, षण्मा-सोत्तरं तु । * अनाकारितमपि, अर्शआद्यजन्तं, धनं वर्धते इत्यर्थः । विवर्धेत इति पाठान्तरम् । काश्चिन्मते ऽकृतेत्यर्थः स्वोक्तात्विरुद्ध इति बोध्यम् । वर्द्धनप्रकारस्तु सबन्धाबन्धक-प्रकारभेदकृतः प्रागुक्तो द्रष्टव्यः ।

६। विशेषान्तरमाह *यास्त्वति । याच्ञाप्राप्तं याचितकमि-त्यमरः। वृद्धिं विना प्रार्थनया गृहीतामित्यर्थः । *तं, तादृशमर्थं, विना याचनामिति शेषः । अत एव तत्र विशेषं वक्ष्यति ।

७। तृतीयं विशेषमाह *यश्चेति । योऽपीत्यर्थः । यातीति वर्त्तमानसामीप्ये इति भूते लट् ।

८। *तेनैव, कात्यायनेनैव। *कृत्वोद्धारमिति। याचितकरू-पेणोद्धारमादायेत्यर्थः। कृतोद्धारमिति पाठे कर्मधारयः। गृहीत-याचितकमित्यर्थः । उधार इति भाषाप्रसिद्ध उद्धारः । कर्मणि घञ् । उदित्यस्य वृद्धिमुल्लङ्घ्येत्यर्थः । * तु, अपि । यद्वा य

शादलचयापचयविषया वृद्धिः पञ्चगुणान्तं नातिक्रामती-ति। तत्राधमर्णयोग्यतावशेन दुर्भिक्षादिकालवशेन च व्यवस्था द्रष्टव्या। एतच्च सकृत्प्रयोगे सकृदाहर-णे च वेदितव्यम्। पुरुषान्तरसंक्रमणेन प्रयोगान्तर-करणे तस्मिन्नेव वा पुरुषे अनेकशः प्रयोगान्तरकरणे सुवर्णादिकं द्वैगुण्यमतिक्रम्य पूर्ववद्वर्द्धते। सकृत्प्र-योगेऽपि प्रतिदिनं प्रतिमासं प्रतिसंवत्सरं वा वृद्ध्या-हरणेऽधमर्णदेयस्य द्वैगुण्याभावात्पूर्वाहृतवृद्ध्या सह द्वैगुण्यमतिक्रम्य वर्द्धत एव।

यथाह मनुः, (अ० ८।१५१)

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहिता। इति।

सकृदाहृतेत्यपि पाठोऽस्ति। उपचयार्थं प्रयुक्तं द्रव्यं कुसीदं तस्य वृद्धिः कुसीदवृद्धिः द्वैगुण्यं नात्ये-ति नातिक्रामति, यदि सकृदाहिता सकृत्प्रयुक्ता। पुरुषान्तरसंक्रमणादिना प्रयोगान्तरकरणे द्वैगुण्यमत्ये-ति। सकृदाहृतेति तु पाठे शनैःशनैः प्रतिदिनं प्रति-मासं प्रतिसंवत्सरं वा ऽधमर्णादाहृता द्वैगुण्यम् अत्ये-तीति व्याख्येयम्।

तथा गौतमेनाप्युक्तम्, चिरस्थाने द्वैगुण्यं प्र-योगस्येति।

प्रयोगस्येत्येकवचननिर्देशात्प्रयोगान्तरकरणे द्वै-गुण्यातिक्रमोऽभिप्रेतः। चिरस्थाने इति निर्देशात् श नैः शनैर्वृद्धिग्रहणे द्वैगुण्यातिक्रमो दर्शितः ॥ ३९ ॥

वा० १। *स्त्रीणां चेति। दासीनां नकुलस्त्रीणामित्यर्थः। त्वर्थमाह *एवेति। एतत्प्रसङ्गमाह *पशूनामिति। *पुष्टीति। द्वन्द्वोत्तरं

या० सन्ततिस्तु पशुस्त्रीणां

मि० पशूनां स्त्रीणां च सन्ततिरेव वृद्धिः । पशूनां स्त्रीणाम् पोषणासमर्थस्य तत्पुष्टिसन्ततिकामस्य प्रयोगः सम्भवति । ग्रहणं च क्षीरपरिचर्यार्थिनः ।
३ अधुना प्रयुक्तस्य द्रव्यस्य वृद्धिग्रहणमन्तरेणापि चिरकालावस्थितस्य कस्य द्रव्यस्य कियती परा वृद्धिरित्यपेक्षिते आह ।

या० रसस्याष्टगुणा परा ।
वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा ॥ ३९ ॥

मि० रसस्य तैलघृतादेर्वृद्धिग्रहणमन्तरेण चिरकालावस्थितस्य स्वकृतया वृद्ध्या वर्द्धमानस्याष्टगुणा वृद्धिः परा नातः परं वर्द्धते । तथा वस्त्रधान्यहिरण्यानां यथासङ्ख्यं चतुर्गुणा त्रिगुणा द्विगुणा च वृद्धिः परा ।

वसिष्ठेन तु रसस्य त्रैगुण्यमुक्तम्,

द्विगुणं हिरण्यं त्रिगुणं धान्यं धान्येनैव रसा व्याख्याताः पुष्पमूलफलानि च । तुलाधृतम् अष्टगुणमिति ।

मनुना तु— ( अ० ८।१५१ )

धान्यस्य पुष्पमूलफलादीनां च पञ्चगुणत्वमुक्तम्,
धान्ये शदे लवे वाह्ये नातिक्रामति पञ्चताम् । इति ।

शदः क्षेत्रफलं पुष्पमूलफलादि । लवो मेषोर्णाचमरकेशादिः । वाह्यो बलीवर्दतुरगादिः । धान्यः

रूपकेषु दत्तेषु प्रतिदिनं प्रतिमासं प्रतिसंवत्सरं वा वृद्धिग्रहणे कालविलम्बवशात् वृद्धेर्द्वैगुण्यातिक्रमणेनापि वृद्धिः प्राप्ता, तत्र सवृद्धिकमूल्यैकदेशे गृह्णत्सु नगणो मूल्यद्विगुणं तेन सह विंशतिरूपकपरिमितं द्रव्यं गृहीतवान् इत्याभिप्रायः ।

७। अस्य प्रत्युदाहरणमाह *पुनःपात्रान्तरेति। अन्यदर्थं पुनःप्राय दानेनेत्यर्थः । प्रयोगान्तरकरणं द्वेधा, तत्रैकमुक्त्वा द्वितीयमाह *तस्मिन्नेवेति । *अनेकशः, पुनः पुनः । अनेकश इत्यत्र रेकसेकाभ्यामिति पाठे प्रयुक्तद्रव्यैकदेशग्रहणेन न्यूनीकरणं रेकः तत्रैव प्रक्षेपेणाधिकीकरणं सेकः । रिच वियोजनसम्पर्चनयोः षिच क्षरणे । तत्र तेन सर्वग्रहणादाह *प्रत्यर्पणेति । *पूर्ववत्, अशीतिभाग इत्याद्युक्तप्रकारेण । अयं भावः । यदा तद्देव विंशतिसंख्याकं द्विगुणद्रव्यम् अन्यस्मै दीयते पूर्वं यस्मै दत्तं तस्मा एव वा दीयते प्रयोगान्तरेण तथा वा क्रियते तदा पूर्वप्रयोगे द्विगुणीभूतमिति कृत्वा पुनः क्रियमाणे प्रयोगान्तरे न वर्द्धते इति न। तदा दीयमानस्य तस्यैव मूलत्वेन वृद्धेरित्युक्तत्वात् । अत एव प्रथमप्रयोगे एव द्वैगुण्याद्यतिक्रमेण वृद्धिर्न, द्वितीयादिप्रयोगे तु द्वैगुण्याद्यप्यत्येतीति ।

८। प्रकृतोदाहरणे चेत्यस्य प्रत्युदाहरणमाह *सकृदिति । *देयस्य, मूलस्य । असंभवस्त्वेवं, प्रतिदिनादिक्रमेण तद्दाने यस्मिन् दिने या वृद्धिर्दीयते तद्दिनात्पूर्वमभिवृद्धस्य धनस्य विच्छेदः पुनरपि नूतनत्वेन वृद्धिः एवं च वस्तुतः प्रयोगान्तरमिव भवतीति यावत् द्वैगुण्यं प्राप्नोति तावदविच्छेदेन वृद्धस्य द्रव्यस्यावस्थित्यभाव इति ।

९। अत्रोभयत्र मानमाह *यथाहेति । आहितत्यस्येतीति शेषः। क्वचित्तथा पाठ एव। पाठभेदेन द्वयोर्लाभो नेकल्पादित्याह

बहुव्रीहिः । इदं दातुरुक्तम् । अथप्रतिग्रहीतुराह *ग्रहणं चेति । *क्षीरेति । द्वन्द्वोत्तरं तत्पुरुषः । यथासंख्यमुभयत्र बोध्यम् ।

२।०प्रयुक्तेति । वृद्धिलोभेनेति भावः । अत एवाह *वृद्धीति। ग्रहणं न तु करणम्। *वास्थितस्येति। विषये। तेषां मध्ये इति शेषः। स्थितत्वे इति पाठेऽपि तेषां मध्ये इति शेषः । अन्यथा निर्धारणे बहुवचनानित्यत्वेन यथाश्रुतासम्बद्धत्वं स्पष्टमेव । *परा, उत्कृष्टा चरमेति यावत् । *तैलेति । घृततैलादेरित्युचितं, शाकपार्थिवादित्वां । तस्य लभ्यतरत्वात् । कारितवृद्ध्याभिप्रायेणाह *स्वेति । *परेत्यस्य तात्पर्यार्थमाह *नातः परमिति ।

३ । उत्तरार्धार्थमाह *तथेति । हिरण्यशब्देनात्र धनं द्रव्यापरपर्यायं सर्वम् ।

४ । पक्षान्तरं रसे आह *वासिष्ठेन त्विति । परत्वं वृद्धेरिति शेषः । अतिदिशति *धान्येनैवेति । *फलानिचेति । व्याख्यातानीति शेषः । *तुलेति । तुलायां धृतं निहितं त्रितयं हिरण्यधान्यरसात्मकमदत्तं चिरकालस्थितमित्यर्थः ।

५ । धान्यपुष्पाद्यंशे पक्षान्तरमाह *मनुनात्विति । भाग्वत् । आद्विग्रायं वचने स्पष्टम् । पूर्वनिपातप्रकरणानित्यत्वात्पुष्पस्य पूर्वनिपातः । बलीवर्दस्याभ्यर्हितत्वात्तः । पदार्थानुक्त्वा वाक्यार्थमाह *धान्येति । सर्वत्र विषयसप्तमीत्याह *विषयेति । पञ्चतामित्यस्य लक्ष्यार्थमाह *पञ्चगुणत्वमिति । इतीत्यस्य अर्थ इति शेषः । एवं सति सम्भवात् तस्य दुष्टत्वाच्च विकल्पान्यप्रकारेण विरोधं परिहरति *तत्रेति । तेषु पक्षेष्वित्यर्थः । परकीययोग्यतायास्तथ्यतः स्पष्टमज्ञानादाह *दुर्भिक्षेति ।

६ । विशेषमाह *एतच्चेति । एकस्मिन्नेव ऋणदानप्रयोगे एकदैव च सवृद्धिकमूलग्रहणे चेत्यर्थः । एकस्मिन् ऋणदानप्रयोगे दश-

भूषणादिग्रहणेन । आचरितेन भोजनेन । पञ्चमेनोपायेन बलेन निगडबन्धनादिना । उत्तमर्णः प्रयुक्तं द्रव्यमेतैरुपायैरात्मसात्कुर्यादिति । प्रपन्नं साधयन्नर्थं न वाच्य इति वदन् अप्रतिपन्नं साधयन् राज्ञा निवारणीय इति दर्शयति । एतदेव स्पष्टीकृतं—

कात्यायनेन,

पीडयेद्यो धनी कश्चिदृणिकं न्यायवादिनम् ।
तस्मादर्थात्स हीयेत तत्समं चाप्नुयाद्दमम् ॥ इति ।

यस्तु धर्मादिभिरुपायैः प्रपन्नमर्थं साध्यमानो याच्यमानो नृपं गच्छेत् राजानमभिगच्छ साधयन्तमभियुङ्क्ते स दण्ड्यो भवति शक्त्यनुसारेण, धनिने तद्धनं दाप्यश्च राज्ञा ।

दापने च प्रकारा दर्शिताः,

राजा तु स्वामिने विप्रं सान्त्वेनैव प्रदापयेत् ।
देशाचारेण चान्यांस्तु दुष्टान् संपीड्य दापयेत् ॥
रिक्थिनं सुहृदं वापि छलेनैव प्रदापयेत् । इति ।

साध्यमानो नृपं गच्छेदित्येतत् स्मृत्याचारव्यपेतेनेत्यस्य प्रत्युदाहरणं च बोद्धव्यम् ॥ ४० ॥

धा० १ ।सङ्गतिमाह *ऋणप्रयोगेति । ऋणदानेत्यर्थः । प्रपन्नमित्यस्य व्याख्या *अभ्युपगतमधमर्णेनेति । अर्थपदार्थो *धनमिति । व्याख्यानान्तरमाह *साक्ष्यादीति । अत एवान्यथा शेषं पूरयति *धर्मादिभिरिति । लिङर्थविवक्षया आह *भवतीति ।

२ । तानेवाह *धर्मादयश्चेति । तेत्वित्यर्थः । प्रकृतोपयोग्यानर्थानाह *प्रीतीत्यादिना । तद्भावितत्वादाह *उपन्यासेनेति । यथाश्रुतार्थासम्भवाल्लक्ष्यार्थमाह *उत्सवेति । आचरितेनेत्यस्यार्थो

०सकृदिति । तत्रार्थपाठेनार्थलाभ इत्याह *यदीति । एतद्विशेषणान्तरमाह ०पुरुषान्तरेति । आदिना प्रागुक्तद्वितीयपरिग्रहः । द्वितीयेन द्वितीयलाभ इत्याह * सकृदिति । सकृदाहृतेतितु पाठे इति पाठः । यदि सकृदाहृता मूलसहिता वृद्धिरेकदैव गृहीतेत्यार्थः । एतत्तात्पर्यमाह *शनैः शनैरिति । अन्यथेत्यादिः । शनैरित्यस्यैव व्याख्या *प्रतीति ।

१०। मानान्तरमाह *तथेति । तद्वदित्यर्थः । अत एव अपिना पौनरुक्त्यं न । स्थानं स्थितिः । प्रयोगस्य प्रयुज्यमानऋणस्य प्रतिदिनादिक्रमेण वृद्धिग्रहणं विना चिरकालस्थितौ सत्यां द्वैगुण्यं भवतीत्यर्थः । उक्तमित्यस्य ध्वनितमित्यर्थ इति सूचयन्नाह *प्रयोगेति । अनेनाद्यार्थलाभ उक्तः । द्वितीयस्य तमाह * चिरेति । *शनैरिति । उक्तरीत्येति भावः । *दर्शितः, अभिप्रेतः ॥३९॥

मि० ऋणप्रयोगधर्मा उक्ताः । सांप्रतं प्रयुक्तस्य धनस्य ग्रहणधर्मा उच्यन्ते ।

प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत् ।

साध्यमानो नृपं गच्छेत् दण्ड्यो दाप्यश्च तद्धनम् ॥४०॥

प्रपन्नमभ्युपगतमधर्णेन धनं साक्ष्यादिभिर्भावितं वा साधयन्प्रत्याहरन् धर्मादिभिरुपायैरुत्तमर्णो नृपतेर्न वाच्यो निवारणीयो न भवति । धर्मादयश्चोपाया मनुना दर्शिताः, (अ. ८।४९)

धर्मेण व्यवहारेण छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥ इति ।

धर्मेण प्रीतियुक्तेन सत्यवचनेन । व्यवहारेण साक्षिलेख्याद्युपन्यासेन । छलेन उत्सवादिव्याजेन

व्यवहारपदत्वमुक्तम्, अत्र तु तद्विरुद्धमार्गेणार्पितत्वाद्राज्ञे न निवेदनीयम्, यदि निवेदयति तदा तद्विवेचनं व्यवहारपदं न भवति । अत एव दण्डादिमात्रं विधीयते । तथाप्यादौ दण्डस्य पश्चात् तस्येति निःशङ्कमविचार्य तथा कार्यमिति तद्दर्शनोदाहरणमेतदित्यर्थ इति ॥ ४० ॥

मि० बहूत्तमर्णिकेषु युगपत्प्राप्तेष्वेकोऽधमर्णिकः केन क्रमेण दाप्यो राज्ञेत्यपेक्षित आह ।

या० गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः ।
दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम् ॥ ४१ ॥

मि० समानजातीयेषु धनिषु येनैव क्रमेण धनं गृहीतं तेनैव क्रमेणाधमर्णिको राज्ञा दाप्यः । भिन्नजातीयेषु तु ब्राह्मणादिक्रमेण ॥ ४१ ॥

या० उत्तमर्णिके बहुत्व इति अनुकम्पादौ ठन् । एवमधमर्णिकेऽपि बोध्यम् । अभ्यर्हितसङ्गतिरनेनोक्ता । * गृहीतेति । ग्रहणानुक्रमादित्यर्थः । धनिनामित्युद्देश्यस्य सम्बन्धत्वविवक्षया षष्ठी । धनमिति शेषः । उत्तरार्धलक्ष्यां व्यवस्थामाह * समानेति । सत्सु इति शेषः । तुरुक्तवैलक्षण्ये । तथा च नृपतेरित्युपलक्षणमग्रिमस्यापि ॥ ४१ ॥

मि० यदा पुनरुत्तमर्णो दुर्बलः प्रतिपन्नमर्थं धर्मादिभिरुपायैः साधयितुमशक्नुवन् राज्ञा साधितार्थो भवति तदाऽधमर्णस्य दण्डमुत्तमर्णस्य च भृतिदानमाह ।

या० राज्ञाऽधमर्णिको दाप्यः साधिताद्दशकं शतम् ।
पञ्चकं तु शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः ॥ ४२ ॥

*भोजनेनेति। तद्दानेनेत्यर्थः। अन्तरितेन अभोजनेनेति पाठान्तरम्। तस्य भोजनाभावेनेत्यर्थः। चर गतिभक्षणयोः। एतेषां सर्वेषामुपायत्वं सूचयन्नाह *उपायेनेति। छलेनेत्यस्य व्याख्या* निगडेति।

३। एवं पदार्थानुक्त्वा वाक्यार्थमाह *उपचर्येति। एतैः पञ्चभिर्व्यस्तैः समस्तैर्वा यथासम्भवम्। इतीत्यस्य अर्थ इति शेषः।

४। ध्वनितमाह *अप्रकृतमिति। अप्रतिपन्नम् अनङ्गीकृतादि साधयन् मत्वाहरन्, एतैरुपायैरिति शेषः। ध्वनितत्वेनास्पष्टत्वात् नित्यः। ऋणिके मत्वर्थीयष्ठन्। *न्यायेति। यथार्थानङ्गीकाराद्विभाषिणमित्यर्थः। *दमं, दण्डम्।

५। उत्तरार्धार्थमाह *यास्त्विति। उपायैरित्यस्य साध्येत्यत्रान्वयः। कर्मणि लडित्याह *याच्येति। गमनमात्रेण नानिष्टम्, अतस्तस्य लक्ष्यार्थमाह *राजानमिति। लिङर्थाविवक्षया आह *अभियुङ्क्त इति। अनेन गच्छन्नित्यपपाठ इति सूचितम्। विशेषाभावादाह *शक्त्यनुसारेणेति।

६। प्रपन्नसाधने उत्तमर्णस्य प्रागुक्तप्रकारवदत्रापि शेषसूचनाय तानाह *दापनेचेति। मनुनैवेति भावः। अधमर्णविशेषेणात्र प्रकारभेद इत्याह *विप्रमिति। एवं प्रागपि बोध्यम्। *सान्त्वेन, प्रीतियुक्तसत्यवचनेन। एवेनेतरव्यवच्छेदः। एवमग्रेऽपि। *देशेति। साक्षिलेख्याद्युपन्यासरूपव्यवहारेण भोजनादिरूपेण च विप्रान्यानित्यर्थः। अनेन प्रागुक्तद्वयसंग्रहः। तत्रैव विशेषमाह *दुष्टानिति। अयं प्रागुक्तपञ्चमः प्रकारः। तृतीयमाह *रिक्थिनमिति। विषयद्वयमत्र। एवं च सामादयो नीतिशास्त्रोक्ता उपाया एवात्र शब्दान्तरेणोक्ता इति बोध्यम्।

७। नन्वत्र व्यवहाराभावेन कथं दण्डादिदापनं राजकृतमत आह *साध्येति। अयं भावः। स्मृत्याचारेत्यनेन तादृशस्य

वेनाधमर्णे अङ्गीकृतार्थादानरूपापराधस्य सत्त्वेनाः सधनत्वे-नोत्तमर्णे ऽपराधाभावेन कलहाशक्तिमत्त्वेन गुरुत्वरूपत्वेनाधम-र्णेनाधमर्णादपराधेन दण्डस्य ग्रहणमुत्तमर्णाद्ग्रहणाया भूतेरिति तात्पर्यात् ।

७। ननु सधनार्थसाधने इदं सर्वमुक्तम् असतिधने तु का गतिरत आह ७अधनीति। ७हृदयेति। गत्वापनमस्कार इत्यादिः। तत्रापि वक्ष्यते इत्युक्तं स्थितं, तदत्रोक्तप्रयेति बोध्यम्॥ ४२॥

मि॰ सधनमधमर्णिकं प्रत्युक्तम्। अधुना निर्धन-मधमर्णिकं प्रत्याह।

या॰ हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत्।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम्॥ ४३॥

मि॰ ब्राह्मणादिरुत्तमर्णो हीनजातिं क्षत्रियादि-जातिं परिक्षीणं निर्धनमृणार्थं ऋणानिवृत्त्यर्थम् कर्म स्वजात्यनुरूपं कारयेत् तत्कुटुम्बाविरोधेन। ब्रा-ह्मणः पुनः परिक्षीणो निर्धनः शनैः शनैः यथोदयं यथासम्भवमृणं दाप्यः। अत्र च हीनजातिग्रहणं समजातेरप्युपलक्षणम्। अतश्च समानजातिमपि परिक्षीणं यथोचितं कर्म कारयेत्। ब्राह्मणग्रहणं च श्रेष्ठजातेरुपलक्षणम्।अतश्च क्षत्रियादिरपि परिक्षीणो वैश्यादेः शनैः शनैर्दाप्यो यथोदयम्।

एतदेव मनुना स्पष्टीकृतम्। (अ. ८. श्लो. १७७.)
कर्मणापि समं कुर्याद्धनिकेनाधमर्णिकः।
समोऽपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैः॥ इति।

उत्तमर्णेन समं निवृत्तोत्तमर्णाधमर्णव्यपदेशमा-

मि० अधमर्णिको राज्ञा प्रतिपन्नार्थात्साधिताद्दशकं शतं दाप्यः । प्रतिपन्नस्य साधितार्थस्य दशमांशं राजाऽधमर्णिकाद्दण्डरूपेण गृह्णीयादित्यर्थः । उत्तमर्णस्तु प्राप्तार्थः पञ्चकं शतं भृतिरूपेण दाप्यः । साधितार्थस्य विंशतितमं भागमुत्तमर्णाद्राजा भृत्यर्थं गृह्णीयादित्यर्थः । अप्रतिपन्नार्थसाधने तु दण्डविभागो दर्शितो निह्नवे भावितो दद्यादित्यादिना ॥ ४२ ॥

बा० १। अनन्तरणं ससङ्गतिकमाह *यदा पुनरिति। यदात्वित्यर्थः । अशक्तौ हेतुं सूचयन्नाह * दुर्बल इति । चस्त्वर्थे, व्युत्क्रमेण समुच्चये वा । * भृतिदानं, शब्दानुशासनमाचार्यस्येति वत्प्रयोगः ।

२। शाब्दमर्थमाह *अधमर्णिक इति । साधितादित्यस्य साकाङ्क्षं प्रकृतं शेषमाह *प्रतीति । कर्मधारयः । *दशकमिति । पञ्चद्दशतौ वर्गे वेति पक्षे परिमाणार्थककन्नन्तम् । शतमित्यत्र प्रतीति शेषः, तत् प्रति दशसंख्यकमित्यर्थः । एवं पञ्चकं शतमित्यत्रापि बोध्यम् ।

३। तत्र शतग्रहणमुपलक्षणमिति प्रतीत्यत्र कर्मधारयम् अन्यस्य दापनाविवक्षां च सूचयन्नस्य तद्दशमांशत्वसम्भवात्फलितमर्थमाह *प्रतीति। प्राग्वत् अर्थद्वयमाह क्रमेण*उत्तमर्ण इत्यादिना । मूलेतुर्व्युत्क्रमे इत्याह *उत्तमर्णस्त्विति । *प्राप्तेति। अनेनातथात्वे नैवमिति सूचितम् । एतत्सूचक एव हिः । भृतिर्वेतनम् । अत्र तस्य तत्त्वासम्भवादेतस्यैव सम्भवादाह * विंशतीति ।

४ । नन्विदमुभयमयुक्तं, भृतिदण्डयोरत्रानुक्त्या राज्ञस्तत्तदंशग्रहणमात्रप्रतीतेरिति चेन्न । ग्रहणप्रतीतेर्निर्विवादत्वेन तत्र हेतुपरामर्शे दृष्टे सति अदृष्टकल्पनाया अन्याय्यत्वेन तत्सम्भवे तदभा-

र्णेन दीयमानमुत्तमर्णो वृद्धिलोभादि न गृह्णाति तदाऽधमर्णेन मध्यस्थहस्ते स्थापितं यदि स्यात्तत ततः स्थापनादूर्ध्वं न वर्द्धते । अथ स्थापितमपि याच्यमानो न ददाति ततः पूर्ववद्वर्द्धते एव ॥ ४४ ॥

वा० १। क्रिमेति। उत्तमर्णेऽन्यद्ग्रहणं वर्त्तत इत्यर्थः। उत्तरार्थानुरोधेनाह * उपचयेति । स्वकमित्यत्र स्वार्थे कनित्याह * स्वकीयमिति। योग्यतया आह * अधमर्णेनेति । न इत्यस्यार्थः * उत्तमर्णइति । अग्रहणे हेतुं पूरयति * वृद्धीति । तदर्थमाह * यदीत्यादि । मध्यस्थपदं लाक्षणिकमित्याह * हस्ते इति । * तत्, धनम् । तत इत्यस्य व्याख्या * स्थापनादिति । पदमिति व्याचष्टे * ऊर्ध्वमिति ।

२। तुल्ययुक्त्या तदनुक्तं विशेषमाह * अथेति । * याच्येति । उत्तमर्णेनाधमर्ण इत्यर्थः । * ततः, तस्मात् । * पूर्ववत्, स्थापनतः प्राग्वत् ॥ ४४ ॥

मि० इदानीं देयमृणं यदा येन च देयं तदाह ।

या० अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत् ।
दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ॥४५॥

मि० अविभक्तैर्बहुभिः कुटुम्बार्थमेकैकेन वा यदृणं कृतं तदृणं कुटुम्बी दद्यात् । तस्मिन्प्रेते प्रोषिते वा तद्रिक्थिनः सर्वे दद्युः ॥ ४५ ॥

वा० १। एवमुत्तमर्णे प्रकारद्वयमुक्तम्, अथाधमर्णे आह * इदानीमिति । यदेति कालनिर्देशः । येनेत्यधिकारिनिर्देशः । * तत्, त्रितयम् । अविभक्तैरित्यत्र बहुवचनबलाद्बहुत्वं विवक्षितम् । तथा च समस्तैर्व्यस्तैर्वा तैरित्यर्थः । तदुक्तवैलक्षण्ये, तत्फलितमाह

त्मानमधमर्णः कर्मणा कुर्यादित्यर्थः ॥ ४३ ॥

बा० १। हीनजातिमित्यत्र शूद्रादिरेव न विवक्षितः उत्तरार्धस्वारस्यादित्याह *ब्राह्मणेति। योग्यतयाऽऽह *उत्तमर्ण इति। परिक्षीणमित्यस्य व्याख्या अनतिप्रसङ्गाय योग्यतया * निर्धनापीति। मक्षिकार्थो धूम इतिवत् ऋणार्थमितीत्याह *ऋणनिवृत्त्यर्थमिति। योग्यतयाऽनतिप्रसङ्गायाह *स्वेति। नन्वेवं तत्कुटुम्बविनाशः स्याद्रक्षणाभावादत आह * तदिति। तदुपयोगि सम्पाद्य अवशिष्टकाले इदं तेन कार्यमिति भावः।

२। उत्तरार्धार्थमाह *ब्राह्मणइति। त्वर्थमाह *पुनरिति। शनैरित्यत्र वीप्सान्तर्भाव इत्याह * शनैः शनैरिति। यथोदयमित्यस्य प्रसिद्धार्थो नेत्याह * यथासंभवमिति।

३। विशेषद्वयमाह * अत्र चेत्यादि। मूलवचने इत्यर्थः। अपिना तस्यापि संग्रहस्तेन न सर्वथा न्यूनता। *समानजातिमपि,ब्राह्मणादिकम्। च्विः प्राग्वत्। * कर्मेति। समोऽपकृष्टजातिश्चाधमर्णिको धनिकेन सार्धमात्मानं कर्मणाऽपि समं तुल्यं कुर्यात्। श्रेयांस्तु तद्धनं शनैर्दद्यादित्यर्थः। अपिनोक्तसमुच्चयः।

४। तत्रास्पष्टांशमाह *उत्तमर्णेनेति। कर्मणा धनादिकृततुल्यत्वासंभवात्सममिति व्याचष्टे * निवृत्तोत्तमर्णेति। अयमुत्तमर्णनिरूपिताधमर्णव्यपदेशस्तत्र यथा नास्ति एवं स्वस्मिन्नपीत्यर्थः। यद्वा दृष्टान्तार्थमुत्तमर्णग्रहणम्। तयोर्मिथः ससंबन्धिकत्वादन्यतरनिवृत्तावपरस्यापि निवृत्तिः ॥ ४३ ॥

किञ्च।

या० दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम्।
मध्यस्थस्थापितं चेत्स्याद्वर्धते न ततः परम् ॥ ४४ ॥

मि० उपचयार्थं प्रयुक्तं स्वकीयं धनम् अधम-

ति । सर्वमिति न्यायेनाह * नैनेति ।

३। द्वितीयपादार्थमाह * तयेति ।

४। तुर्यपादार्थमाह * तयेति । योग्यतया क्षीपदार्थमाह *भार्येति । न दद्यादित्यस्यानुषङ्गः ।

५। अव्यवहितसंबन्धभ्रमनिरासायाह *कुटुम्बेति । सर्वशेष इति पाठः । यथजपः पुंसीत्युक्तेः । शेषमिति पाठस्तस्य प्रायोवादत्वेन । यद्वा सर्वस्य शेषः शेषत्वं यस्य तत् । अत एव तस्यात्युदाहरणतया पूर्वकृतान्यत्तत्परमाह *अतश्चेति । *कृतम्, ऋणमिति शेषः । *तद्वायहरैः, यैः कैश्चित् ।

नारदोऽपि, ( व्य० प० १।१६।१७ )

न स्त्री पतिकृतं दद्यादृणं पुत्रकृतं तथा ।
अभ्युपेतादृते यद्वा सह पत्या कृतं भवेत् ॥
दद्यादपुत्रा विधवा नियुक्ता या मुमूर्षुणा ।
यो वा तद्रिक्थमादद्याद्यत्र रिक्थमृणं ततः ॥ इति ।

कात्यायनोऽपि,

भर्त्रा पुत्रेण वा सार्द्धं केवलेनात्मना कृतम् ।
ऋणमेवंविधं देयं नान्यथा तत्कृतं स्त्रिया ॥
मर्तुकामेन वा भर्त्रा उक्ता देयमृणं त्वया ।
अप्रपन्नाऽपि सा दाप्या धनं यद्याश्रितं तया ॥ इति ॥४६॥

मि० पुत्रपौत्रैर्ऋणं देयमिति वक्ष्यति, तस्य पुरस्तादपवादमाह ।

या० सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम् ।
वृथादानं तथैवेह पुत्रो दद्यान्न पैतृकम् ॥ ४७ ॥

मि० सुरापाणेन यत्कृतमृणं,कामकृतं स्त्रीव्यसननिर्वृ-

*अविभक्तैरिति । कुटुम्बेत्यस्य वक्ष्यमाणन्यायेनान्वयः । कुटुम्बार्थं इत्यत्रयं तत्रेत्याह * अर्थमिति । अस्योभयत्रान्वयः । तथा च बहुभिरेकैकेन वा कुटुम्बरक्षणार्थं यदृणं कृतमित्यर्थः । अनेन देयर्णं कथितम् । उत्तरार्द्धस्वारस्येन शेषं पूरयति *तदृणं कुटुम्बी दद्यादिति । अनेनाधिकारिकथनम् । *तस्मिन्, कुटुम्बिनि । *तदिति । तस्य कुटुम्बिनो ये रिक्थग्राहका इत्यर्थः । बहुवचनलभ्यमाह * सर्वे इति । अत्र प्रेते प्रोषिते चेति कालाभिधानं, तद्विरहेण इत्यपि अधिकारिप्रदर्शकमेवेति भावः ॥ ४५ ॥

मि॰ येन देयमित्यत्र प्रत्युदाहरणमाह ।

या॰ न योषित् पतिपुत्राभ्यां न पुत्रेण कृतं पिता ।

दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा ॥ ४६ ॥

मि॰ पत्या कृतमृणं योषिद्भार्या नैव दद्यात् । पुत्रेण कृतं योषिन्माता न दद्यात् । तथा पुत्रेण कृतं पिता न दद्यात् । तथा भार्याकृतं पतिर्न दद्यात् । कुटुम्बार्थादृते इति सर्वशेषः । अतश्च कुटुम्बार्थं येन केनापि कृतं तत् कुटुम्बिना देयम् । तदभावे तद्दायहरैर्देयमित्युक्तमेव ॥ ४६ ॥

या॰ १। *प्रत्युदाहरणमिति । पूर्ववचनेन कुटुम्ब्यादिभिराधिकारिभिरृणं देयमिति येनेत्यंशोऽपि दृत्तः । तत्र योषिदादीनामपि कुटुम्ब्यादित्वेनाधिकारित्वेन तस्य देयत्वं यद्यपि प्राप्तं तथापि विषयविशेषे देयमिति पूर्वाभिहितम् ऋणस्य देयत्वं व्यावर्त्यते इति प्रत्युदाहरणत्वमित्यर्थः । तथाचानेनादेयमृणमुच्यते इति भावः ।

२। कृतमित्यस्य पूर्वत्रापि संबन्धः । योषित्पदं योग्यतया भार्यामिति पृथक् व्याचष्टे *पत्येति । पूर्वतोऽनुवृत्तेराह *ऋणमि-

शिष्टमित्यर्थासंभवाचाह *धूर्त्तेति। तथा च तदनुरूपो व्यापारोऽत्र प्रतिशब्दस्य एवेति भावः।

३। धूर्त्तादिभ्यो दत्तस्य वृथादानत्वं समूलयति *वृथे इति। *कितवे, द्यूतकारिणि। *चाटे,विदूषके। अत्र निष्फलमित्युक्त्या पारलौकिकफलाभावाद् वृथादानत्वं विवक्षितं, न तु दृष्टफलाभावादिति भावः।

४। पदार्थानुक्त्वा वाक्यार्थमाह *एतदिति। पैतृकमिति व्याचष्टे * पित्रेति। अयं फलितार्थः। आगत इत्यधिकारे पितुर्यथेति तद्विधानात्। उत्सर्गानुरोधेन पुत्रपदमुपलक्षणमित्याह * पुत्रादिरिति। इहेति व्याचष्टे *शौर्यादौ इति। तस्य तत्त्वविवक्षया तत्र सप्तमी।

५। विशेषमाह * अत्रेति। वचनं इत्यर्थः। * तु पुत्रेण, पुत्रेण च। * व्यावहारिकमिति। न कुटुम्बोपयोगीत्यर्थः।

६। *मद्येति। अत्र मद्यादिदण्डान्तपदसन्दर्भे व्ययीकृतानि द्रव्याणि लक्ष्यन्ते।तानि पितृसंबद्धानि पुत्रान्नाभ्यावहेयुरित्यर्थः। अभिभवेयुरिति पाठान्तरम्। पराभवेयुरिति उभयार्थः।तात्पर्यार्थमाह *न पुत्रस्येति। तथा च दण्डशुल्कावशिष्टकमित्यत्र त्रयाणां समाहारद्वंद्वः। कन्स्वार्थे। अवशिष्टं चोपस्थितत्वात्तयोरेवेत्येवं विवक्षितं न तु प्रागुक्तमिति अनेन सूचितमिति बोध्यम्। उपसंहरति *अनेनेति। उभयेनेत्यर्थः॥ ४७॥

मि० न पतिः स्त्रीकृतं तथेत्यस्यापवादमाह।

या० गोपशौण्डिकशैलूषरजकव्याधयोषिताम्।
ऋणं दद्यात्पतिस्तेषां यस्माद्वृत्तिस्तदाश्रया॥४८॥

मि० गोपो गोपालः,शौण्डिकः सुराकारः, शैलूषो

र्थं, द्यूते पराजयनिर्वृत्तं, दण्डशुल्कयोरवशिष्टं, वृथा-
दानं धूर्तबन्दिमल्लादिभ्यो यत्प्रतिज्ञातम् ।

धूर्ते बन्दिनि मल्ले च कुवैद्ये कितवे शठे ।
चाटचारणचौरेषु दत्तं भवति निष्फलम् ॥

इति स्मरणात् । एतदृणं पित्रा कृतं पुत्रादिः
शौण्डिकादिभ्यो न दद्यात् । अत्र दण्डशुल्कावशि-
ष्टकमित्यवशिष्टग्रहणात्सर्वं दातव्यमिति न मन्त-
व्यम् ।

दण्डं वा दण्डशेषं वा शुल्कं तच्छेषमेव वा ।
न दातव्यं तु पुत्रेण यच्च न व्यावहारिकम् ॥

इत्यौशनसस्मरणात् ।

गौतमेनाप्युक्तं, मद्यशुल्कद्यूतकामदण्डाः पुत्रा-
न्नाध्यावहेयुरिति । न पुत्रस्योपरि भवन्तीत्यर्थः । अ-
नेनादेयमृणमुक्तम् ॥ ४७ ॥

बा० १। *तस्येति । अदेयमक्रमादिति शेषः । तथाचैतदर्थ-
मेवमुक्तौ इतः परस्यापि पाठक्रमादिति न्यायेनार्थक्रमतः पूर्व-
भावादपवादत्वमिति न काचिदसंगतिरिति भावः ।

२।द्यूतान्तद्वंद्वस्य कृतशब्देन तृतीयातत्पुरुषः । तस्य च प्रत्ये-
कं सबन्धः । सुरापदं च तत्पाने लाक्षणिकं साहचर्यादित्याह
*सुरापाणेनेति । वा भावकरणयोरिति णत्वविकल्पः । कामो
रत्यभिलाप इत्याह *स्त्रीति । बहुव्रीहिः । एवमग्रेऽपि । द्यूते
द्वैविध्यसत्त्वेऽपि जये तदभावादाह *पराजयेति । लक्षणेति
भावः । दण्डेत्यत्र द्वन्द्वोत्तरं षष्ठीतत्पुरुषः स्वार्थे कन् इत्याह
*दण्डेति । रक्षानिर्वेशो राजभागः शुल्कम् । *वृथेति । वृथा-
दानमित्यस्य वृथादीयमानमित्याद्यर्थे शाब्दे बाधात्पूर्ववत्तदव-

( मनु० ८।४१६ )

भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः ।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥

इति वचनान्निर्धनत्वेन प्रतिपन्नादिस्वदानाशङ्कायामिदमुच्यते, प्रतिपन्नं स्त्रिया देयमित्यादि । नचानेन स्त्र्यादीनां निर्धनत्वमभिधीयते । पारतन्त्र्यमात्रप्रतिपादनपरत्वात् । एतच्च विभागप्रकरणे स्पष्टीकरिष्यते । नान्यत्स्त्री दातुमर्हतीत्येतर्हि न वक्तव्यम् । विधानेनैवान्यत्र प्रतिषेधसिद्धेः । उच्यते ।

प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम् ।

इत्यनयोरपवादार्थमुच्यते, अन्यत् सुराकामादिवचनोपात्तं प्रतिपन्नमपि पत्या सह कृतमपि न देयमिति ॥ ४९ ॥

वा० १ । आद्यपादार्थमुक्तक्रमेण स्मृत्यन्तरानुरोधेनाह *मुमूर्षुणेति । परलोकं गन्तुमिच्छता देशान्तरं गमिष्यता वा भर्त्रा ऋणदाने तद्विषये नियुक्तया प्रेरितया भार्यया यत्प्रतिपन्नं यद्दानमङ्गीकृतं तत् तादृशं तया देयमित्यर्थः ।

२ । द्वितीयपादार्थमाह *यच्चेति । अनेन वा चार्थे इति सूचितम् । एवमग्रेऽपि । अत्र पत्या सहेत्युक्त्या तस्याप्राधान्यं सूचितम् । एवमप्युक्तरीत्या उभयोरभावे तस्या दानाधिकारादाह *भर्त्रभावे इत्यादि ।

३ । तृतीयपादार्थमाह *यच्चेति । मध्यमतो भेदाय सर्वमिति न्यायेनाह * स्वयमेवेति ।

तथा च नारदः,

न स्त्री पतिकृतं दद्यादृणं पुत्रकृतं तथा ।

नटः, रजको वस्त्राणां रञ्जकः, व्याधो मृगयुः। एतेषां योषिद्भिर्यदृणं कृतं तत् पतिभिर्देयं,यस्मात्तेषां वृत्ति-र्जीवनं तदाश्रया योषिदधीना। यस्माद् वृत्तिस्तदाश्र-येति हेतुव्यपदेशादन्येऽपि ये योषिदधीनजीवनास्ते-ऽपि योषित्कृतमृणं दद्युरिति गम्यते॥ ४८॥

या० १। गोपेति। अभ्यर्हितत्वात्पूर्वनिपातः। व्याधान्तद्वंद्वे योषिद्भिरित्युक्तः। आद्यं पदार्थमाह *गोप इति। अथ वाक्यार्थ-माह *एतेषामिति। अनेन द्वंद्वः सूचितः। पतिरिति जातावेकव-चनमित्याह * पतिभिरिति।

२। तत्र बीजमाह *यस्मादिति। *तेषां, तत्पतीनाम्। अनेन तासामित्यपपाठ इति सूचितम्। नेदं परिगणनं किन्तूपलक्षणमि-त्यनेनैव सूचितमित्याह * यस्मादिति। * अन्येपि, एतद्भिन्नाः सर्वे ब्राह्मणादयोऽपि॥ ४८॥

मि० पतिकृतं भार्या न दद्यादित्यस्यापवादमाह।

या० प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम्।
स्वयं कृतं वा यदृणं नान्यत्स्त्री दातुमर्हति॥ ४९॥

मि० मुमूर्षुणा प्रवत्स्यता वा पत्या नियुक्तया ऋण-दाने यत् प्रतिपन्नं तत् पतिकृतमृणं देयम्। यच्च पत्या सह भार्यया ऋणं कृतं तदपि भर्त्रभावे भार्यया अपुत्रया देयम्। यच्च स्वयमेव कृतम् ऋणं तदपि देय-म्। ननु प्रतिपन्नादित्रयं स्त्रिया देयमिति न वक्तव्य-म्। संदेहाभावात्।

उच्यते।

रापानादिव्यसनेनोपात्तं कृतपित्रर्थः । इतिगंगणार्था । एतेन-
तच्छेपविषयता प्रागुक्तनिर्णयरूपेति व्यवस्थितं पुनरुक्तं नान्यार्थमिति
व्याख्यानमपास्तम् । तथा पुत्रस्याभावात् ॥ ४९ ॥

पुनरपि यदृणं दातव्यं येन च दातव्यं यत्र च
काले दातव्यं तत्त्रितयमाह ।

पितरि प्रोपिते प्रेते व्यसनाभिप्लुतेऽपि वा ।
पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ॥५०॥

पिता यदि दातव्यमृणमदत्त्वा प्रेतो दूरदेशं गतोऽचिकित्सनीयव्याध्याद्यभिभूतो वा तदा तत्कृतमृणमवश्यम् अपनेयं पुत्रेण पौत्रेण वा, पितृधनाभावेऽपि पुत्रत्वेन पौत्रत्वेन च। तत्र क्रमोऽप्ययमेव पित्रभावे पुत्रः पुत्राभावे पौत्र इति । पुत्रेण पौत्रेण वा निह्नवे कृते अर्थिना साक्ष्यादिभिर्भावितमृणं देयं पुत्रपौत्रैरित्यर्थः।अत्र पितरि प्रोपिते इत्येतावदुक्तम्। कालविशेषस्तु—
नारदेनोक्तो द्रष्टव्यः, ( व्य० प० ३।१४ )

नार्वाक्संवत्सराद्विंशात्पितरि प्रोपिते सुतः ।
ऋणं दद्यात्पितृव्ये वा ज्येष्ठे भ्रातर्यथापि वा ॥ इति।

प्रेतेऽप्यप्राप्तव्यवहारकालो न दद्यात् । प्राप्तव्यवहारकालस्तु दद्यात् ।

सच कालस्तेनैव दर्शितः, ( व्य० प० १३५।३६ )

गर्भस्थैः सदृशो ज्ञेय आऽष्टमाद्वत्सराच्छिशुः ।
बाल आषोडशाद्वर्षात्पौगण्डश्चेति शब्द्यते ॥
परतो व्यवहारज्ञः स्वतन्त्रः पितराष्टृते । इति ।

अभ्युपेतनादृते यद्वा सह पत्या कृतं भवेत् ॥
दद्यादपुत्रा विधवा नियुक्ता या मुमूर्षुणा ।
यो वा तद्रिक्थमादद्यात्स रिक्थमृणं ततः ॥ इति ।
कात्यायनोऽपि,
भर्त्रा पुत्रेण वा सार्धं केवलेनात्मना कृतम् ।
ऋणमेवंविधं देयं नान्यथा तत्कृतं स्त्रिया ॥
मर्तुकामेन वा भर्त्रा उक्ता देयमृणं त्वया ।
अप्रपन्नाऽपि सा दाप्या धनं यद्याश्रितं स्त्रिया ॥ इति ।

४। *त्रय एवेति। एवोऽप्यर्थे। एते त्रयोऽर्जितधना अपि अधना एव अस्वामिनो धने स्मृता इत्यर्थः। *यत्ते इति। ते भार्यादयो यत्किंचित्समधिगतधनमर्जयन्ति तद्धनं यस्य ते भार्यादयस्तस्य भवतीत्यर्थः। यस्य ते इति पाठः। यस्यै ते इति पाठान्तरम्।

५। नन्वनेन तस्या निर्धनत्वे प्रतीयमाने सति प्रतिपन्नमित्यादिवचनशतैर्देयत्वोक्तावपि कथं तया देयं निर्धनत्वादत आह * न चेति। नहीत्यर्थः। * अनेन, मनुवचनेन। अत एवाशङ्कायामिति प्राक् उक्तम्। *पारतन्त्र्येति। तन्मात्रप्रतिपादनतात्पर्यकत्वादित्यर्थः। तथा चानुज्ञां विना नाधिकारः स्वातन्त्र्येण यत्र कुत्रचिद्विनियोगे, सत्यां तु तस्यां सोऽस्तीति भावः।

६। नन्वत्र किं नियामकं, तथैवार्थः कुतो न, अयमपूर्वो विधिरस्तु,तथा चैतदन्यविषयत्वं तस्येति व्यवस्थासंभवाददोषोऽत आह *एतच्चेति।

७। एवं सति तुर्यपादांशे एव शङ्कते *नान्यदिति। *सिद्धेरिति। अर्थादिति शेषः। प्राप्तेरेवाभावादिति भावः। यथाकथंचित्स्वयं कृतस्यावश्यदेयत्वादाह *अनयोरिति। *सुरेति। सु-

ऋणमात्मीयवत्पित्र्यं देयं पुत्रैर्विभावितम् ।
पैतामहं समं देयमदेयं तत्सुतस्य तु ॥

इति बृहस्पतिवचनात् । अत्र विभावितमित्य-विशेषोपादानात्साक्षिविभावितमित्यत्र साक्षिग्रहणं प्रमाणोपलक्षणम् । समं यावद्गृहीतं तावदेव देयं न वृद्धिः । तत्सुतस्य प्रपौत्रस्यादेयमगृहीतधनस्य । एत-च्चोत्तरश्लोके स्पष्टयिष्यते ॥ ५० ॥

बा० १। सिंहावलोकनन्यायादेवेणाह *पुनरपीति । ऋणविशेषं वक्तुमिति भावः । वक्ष्यमाणक्रममाह *पितेति । प्रागुक्तक्रमेणाह *प्रेतइति । प्रोषिते इत्यस्यार्थो *दूरेति । गुह्यपानादिव्यसना-क्रान्तऋणस्यादेयत्वस्योक्तत्वात् व्यसनेत्यस्य व्याख्या *अनि-कित्सेति । आदिनाऽऽधिः । देयमित्यस्य व्याख्या *अवश्येति । आवश्यके कृत्य इति भावः । द्वंद्वादुभाभ्यां युगपद्देयमिति प्रतीयमानार्थनिरासायाह * पुत्रेणेति । वकुवचनं व्यत्ययाभिप्रायम् । तत्त्वादेवाह *पित्र्येति । पितुरागतेत्यर्थः । पितृधनेति पाठान्तरम् । *तत्र, दाने । तुर्यपादार्थमाह *पुत्रेणेति । वक्ष्यमाणरीत्या साक्षिपदमुपलक्षणमित्याह *साक्ष्यादीति । सर्वस्यानुगम इत्याह *ऋणमिति ।

२। अत्र छन्दोनुरोधेन यथाश्रुतोक्तिक्रमेणार्थे विशेषमाह *अत्रेति । *विंशात्, विंशतेः पूरणात् । तत्र पितरीत्युपलक्षणमिति सूचयन्नाह *पितृव्ये इति । कनिष्ठनिरासायाह * ज्येष्ठे इति । इदं चाविभक्तत्वे तदीयधनग्रहणे चेति बोध्यम् । द्वितीये विशेषमाह *प्रेतेऽपीति । पितरीति शेषः । अग्रे पुत्रादिरिति शेषः ।

३। *तेनैव, नारदेनैव । *आऽष्टमात्, आङभिव्याप्तौ । एव-

यद्यपि पितृमरणादूर्ध्वं बालोऽपि स्वतन्त्रो जातस्तथापि नर्णभाग्भवति ।

यथाह, ( ना० व्य० प० १।३१ )

अप्राप्तव्यवहारश्चेत्स्वतन्त्रोऽपि हि नर्णभाक् ।
स्वातन्त्र्यं हि स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतम् ॥ इति ।

तथा आसेधाह्वाननिषेधश्च दृश्यते, (ना.अ०१।५४)

अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती ।
विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः ॥ इति ।

तस्मात्—

अतः पुत्रेण जातेन स्वार्थमुत्सृज्य यत्नतः ।
ऋणात्पिता मोचनीयो यथा न नरकं व्रजेत् ॥ इति,

पुत्रेण व्यवहारज्ञतया जातेन निष्पन्नेनेति व्याख्येयम् । श्राद्धे तु बालस्याप्यधिकारः । न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनादिति गौतमस्मरणात् । पुत्रपौत्रैरिति बहुवचननिर्देशाद् बहवः पुत्रा यदि विभक्ताः स्वांशानुरूपेण ऋणं दद्युः, अविभक्ताश्चेत्संभूयसमुत्थानेन, गुणप्रधानभावेन वर्तमानानां प्रधानभूत एव वा दद्यादिति गम्यते ।

यथाह नारदः, ( व्य० प० १।२ )

अत ऊर्ध्वं पितुः पुत्रा ऋणं दद्युर्यथांशतः ।
अविभक्ता विभक्ता वा यस्तामुद्वहते धुरम् ॥ इति ।

अत्र च यद्यपि पुत्रपौत्रैर्ऋणं देयमित्यविशेषेणोक्तं तथापि पुत्रेण यथा पिता सवृद्धिकं ददाति तथैव ऋणं देयम् । पौत्रेण तु समं मूलमेव दातव्यं न वृद्धिरिति विशेषोऽवगन्तव्यः ।

वचनम्, *इति एवं व्याख्येयमित्यर्थः। अन्यथा विरोधो दुष्प-रिहर इति भावः। *अतः, पुत्रत्वात्। ७अव्रतः, संस्कृत। संस्काट श्रयर्थेति। तथा च जातमात्रेण शूद्रेण न कृतान्येन इति नार्थः किं तु व्यवहारक्षमतया ज्ञानेन तद्रूपेणापि तेन स तथो ऽस्य इत्यर्थः।

७. नन्वेवं तस्य श्राद्धेऽप्यधिकारो न स्यात् व्यवहारानभि-ज्ञतया वैदिकव्यवहारानभिज्ञत्वस्य सुतरां सत्त्वादत आह ८श्रा-द्धेऽपीति। तुल्यत्वलक्षण्ये। अपिः शान्वत्। *न ब्रह्मेति। ब्रह्म वेदं नाभिभाषयेदन्येन वान्दः। स्वधा स्वधाकारः निर्वाप्य प्रणीयते ऽस्मिन् श्राद्धे, तत्स्वधानिनयनं ततो ऽन्यत्र श्राद्धा-दन्यत्र नाभिभाषयेदित्यर्थः। अयं भावः, श्राद्धे वेदोच्चारणं कार्यं यदि स्वयमनुपनीतः, उपनीतस्य स्वयमेवोच्चारणे ऽधि-कारात्। एवं च बालस्यापि प्रयोजककर्तृत्वमतीतिबलात्कृता-नतायनीनिरधिकारोक्तीति।

८। वस्तुतस्तु ब्रह्म वेदमन्त्र ऋत्विगादिः प्रयोजककर्ता अनुपनीतं बालं नाभिव्याहारयेत् तं वेदोच्चारणे न प्रयोजये-त्स्वधानिनयनादन्यत्रेत्यर्थः।

मनुरपि,

न ह्यस्मिन्युज्यते कर्म किञ्चिदामौञ्जिबन्धनात्।

नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते॥ इति।

एवं च कृतचूडस्यानुपनीतस्यापि श्राद्धे ऽधिकारस्तस्य मुख्यत्वात्। एवं च तदुपयोगी तस्य मन्त्रपाठोऽपि भवत्येवेति बोध्यम्।

कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च।

स्वधाकारं प्रयुञ्जीत मन्त्रोच्चारं न कारयेत्॥

मोऽपि। तस्माद्व्यवहारेण नाम शिशुरिति। षोडशादिति उक्तम्। पौगण्ड इति बाल्यस्य संज्ञान्तरम्। *शक्तः सन्, कल्प्यते। *परतः, षोडशवर्षाद् ध्वम्। *पितराविते, तौ विना। तत ऊर्ध्वं स तयोरभावे स्वतन्त्र इत्यर्थः।

४। ननु षोडशवर्षानन्तरं तस्य तत्वतत्तयोरभावे स्वातन्त्र्यमिति नियमो वचनतोऽप्ययुक्तः। यतः पूर्वमपि पित्रोर्मरणे स्वातन्त्र्यसिद्धिः। तथा च तद्वत्स्यापि तद्दानाधिकारित्वमित्यप्राप्तव्यवहारस्यापि ऋणं देयं स्यादिति, अन्यथा प्रागुक्तमयुक्तमित्यत आह *गर्भस्थेति। पित्रोर्मरणेत्यर्थः। अपिना शिशुसमुच्चयः। व्युत्क्रमेणोक्तिरियम्। *यथाहेति। यतः स एव आहेत्यर्थः। *अप्राप्तेति। अप्राप्तव्यवहारः षोडशवर्षातिक्रमरहितः। *चेत्, यदि। *हि, तदा। अनयोरभावात्स्वतन्त्रोऽपि ऋणभाक् न भवतीत्यर्थः। अपिना अस्वतन्त्रसमुच्चयः। ननु तत्र तद्वत्स्वातन्त्र्यमपि माऽस्तु अत आह *स्वातन्त्र्यमिति। हि यतः स्वातन्त्र्यं ज्येष्ठे स्मृतं न तु तत्रैवेत्यर्थः। ननु तद्वत्तदा तदपि न अत आह *ज्यैष्ठ्यमिति। तथा च तयोरभावादुभयकृतज्यैष्ठ्याभावात्तस्मिन् तत्त्वेन तत्त्वेपि वचनान्न तत्त्वमित्युक्तवचने तयोरभावाच्चः स्वतन्त्रः स परतो व्यवहारज्ञ इत्यन्वयो न तु परत इत्यस्याग्रेऽपीति न कोऽपि दोषः। अत एव तथैव प्रतिज्ञानम्।

५। तत्राप्राप्तव्यवहारत्वदृढीकरणेनोक्तार्थे युक्त्यन्तरमपि सूचयन्नन्यदप्याह *तथेति। उक्तनिषेधवदित्यर्थः। *आसेधेति। आसेधाह्वानयोर्निषेधोऽपीत्यर्थः। *विषमेति। सङ्कटस्थाश्चेत्यर्थः। अत्र पञ्चानां निषेधः।

६। एवं सति प्राप्तस्मृत्यन्तरविरोधं परिहरति *तस्मादिति। यतोऽप्राप्तव्यवहारो न ऋणभाक् उक्तवचनात् तस्मात्, *इति

सह प्राप्तविरोधपरिहारः सामान्यस्य विशेषे उपसंहार इति न्यायेन तन्त्रान्तरसिद्धेन कर्तु यद्यप्युचितमन्यथापि सामान्यस्यापिकर्म-ग्राहकत्वेन सफलत्वेन प्रबलत्वाद्विशेषस्य न्यूनत्वेन दुर्बलत्वेन तथा प्रकृते दुर्वचमिति वैपरीत्येन विरोधं परिहरति * अत्रेति। बृहस्पतिवाक्ये इत्यर्थः । *अविशेषेति । सामान्येनेत्यर्थः । *इ-त्यत्र, मूलवाक्ये । *प्रमाणोपलक्षणमिति । प्रमाणमात्रोपलक्षण-मित्यर्थः । तथा च येन केनापि प्रमाणेन साधितमृणं पुत्रादिना देयमित्यर्थेन न वचनयोर्मिथो विरोध इति भावः । अत एव प्राक् तथा व्याख्यातम् ।

१३। अस्योत्तरार्धार्थमाह * समपित्यादि । विशेषान्तरमाह *तत्सुतेति । विशेषान्तरमाह * अगृहीतेति । नन्वत्र किं मानमत आह *एतच्चेति ॥ ५० ॥

मि० ऋणापाकरणे ऋणी तत्पुत्रः पौत्र इति त्रयः कर्तारो दर्शिताः। तेषां च समवाये क्रमोऽपि दर्शितः।

इदानीं कर्त्रन्तरसमवाये च क्रममाह ।

या० रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च ।

पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः॥५१॥

मि० अन्यदीयं द्रव्यमन्यस्य क्रयादिव्यतिरेकेण य-त्स्वीभवति तद्रिक्थम् । विभागकारेण रिक्थं गृ-ह्णातीति रिक्थग्राहः । स ऋणं दाप्यः । एतदुक्तं भवति । यो यदीयं द्रव्यं रिक्थरूपेण गृह्णाति स तत्कृतमृणं दाप्यो न चौरादिरिति । योषितं भार्यां गृह्णातीति योषिद्ग्राहः । स तथैव ऋणं दाप्यः। यो यदीयां योषितं गृह्णाति स तत्कृतमृणं

इति व्यासनाम्ना लिखितं वचनं यदि समूलं तदा मन्त्रनिर्णये विकल्पो द्रष्टव्यः।

९। व्यक्तविभागेण कृतबहुवचनस्य फलमाह *पुत्रपौत्रैरिति। पत्रम्यन्तस्य गम्यत इत्यत्रान्वयः। * विभक्ता इति। तदेति शेषः। क्वचित् पाठ एव। एवमग्रेऽपि। *सम्भूयेति। मिलित्वा देयमिति सङ्केतेनेत्यर्थः, मिलित्वा एकीकरणेन वा। अंशतो दानमत्रापि। पूर्वं भेदेन दानमत्र तु मेलनेनेति विशेषः। अत एव नार्वक्यावश्यता। दद्युरित्यस्यानुषङ्गः। इदमग्रे स्फुटीभविष्यति तद्विवादप्रकरणे। इदमपि समप्रधानभावविषयम्, अत एवाह *गुणेति। *वर्तमानानां,वर्तमानानां तु। *प्रधानेति। मुख्येत्यर्थः। उक्तत्रये मानमाह *यथांशेति। अतः पुत्रा ऊर्ध्वं पितुः तन्मरणानन्तरम् विभक्ता वेत्यन्त एकोऽन्वयः। यथांशत इत्यस्योभयत्रान्वयः। अनेन प्रकारद्वयमुक्तम्। तृतीयप्रकारमाह *य इति।

१०। विशेषमाह * अत्र चेति। पुत्रपौत्रैरित्यस्मिन्वचने इत्यर्थः। *समं, गृहीतसदृशम्। मूलमेवेत्येवव्यवच्छेद्यमाह *न वृद्धिरिति। एवमग्रेऽपि।

११। अत्र मानमाह * ऋणमिति। आत्मीयवदित्यनेन सवृद्धिकदानमुक्तम्। *सममिति। अर्थात्पौत्रेण। *तत्सुतस्येति। पौत्रसुतस्य प्रपौत्रस्येत्यर्थः।

१२। पुत्रपौत्रैरिति विशेषस्यानेन गुरुवाक्येन सामान्यपरेण

१ पुत्रपौत्रैरिति याज्ञवल्क्यवाक्ये साक्षिभावितमितिप्रमाणविशेषोपन्यासात्तस्य विशेषत्वम्। ऋणमात्मीयवदिति बृहस्पतिवाक्ये विभावितमिति प्रमाणविशेषानुपन्यासात् सामान्यत्वम्। तथापि तथा प्रकृते दुर्वचमित्यन्वयः। दुर्वचत्वे हेतुः सामान्यस्येत्यादिः दुर्बलत्वेनेत्यन्तः। दुर्वचमिति इत्यनन्तरं हेतोरिति शेषः। वैपरीत्येनेत्यस्य तन्त्रान्तरसिद्धन्यायवैपरीत्येनेत्यर्थः।

निरंशका" इति वचनानि । तथा, सवर्णापुत्रोऽन्यन्यायवृत्तिर्न लभेतैकेषामिति गौतमस्मरणात् । अतश्च क्षेत्रजादिषु पुत्रेषु सत्सु अन्यायवृत्ते न सवर्णापुत्रे सति रिक्थग्राही पितृव्यतत्पुत्रादिः । योषिद्ग्राहो यद्यपि शास्त्रविरोधेन न सम्भवति तथाप्यनिवृत्तान्तनिषेधः पूर्वपतिकृतर्णापाकरणाधिकारी भवत्येव । योषिद्ग्राहो यश्चतसृणां स्वैरिणीनामन्तिमां गृह्णाति यश्च पुनर्भुवां तिसृणां प्रथमाम् ।

यथाह नारदः, ( व्य० प० १२।४५-५२ )

परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् ।
पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा ॥
कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ।
पुनर्भूः प्रथमा नाम पुनःसंस्कारकर्मणा ॥
देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते ।
उत्पन्नसाहसाऽन्यस्मै सा द्वितीया प्रकीर्तिता ॥
उत्पन्नसाहसा उत्पन्नव्यभिचारा ।
असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते ।
सवर्णाय सपिण्डाय सा तृतीया प्रकीर्तिता ॥
स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति ।
कामात्समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा ॥
कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता ।
पुनः पत्युर्गृहं यायात्सा द्वितीया प्रकीर्तिता ॥
मृते भर्तरि तु प्राप्तान्देवरादीनपास्य या ।
उपगच्छेत्परं कामात्सा तृतीया प्रकीर्तिता ॥
प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या ।

दाप्यः । गोपिनोऽविभाव्यद्रव्यत्वेन रिक्थव्यपदेशानर्हत्वाद्भेदेन निर्देशः । पुत्रश्चानन्याश्रितद्रव्यः ऋणं दाप्यः । अन्यमाश्रितमन्याश्रितम् अन्याश्रितं मातृपितृसम्बन्धिद्रव्यं यस्यासावन्याश्रितद्रव्यः न अन्याश्रितद्रव्यः अनन्याश्रितद्रव्यः । पुत्रहीनस्य रिक्थिन ऋणं दाप्या इति सम्बन्धः । एतेषां समवाये क्रमश्च पाठक्रम एव । रिक्थग्राह ऋणं दाप्यस्तदभावे योपिद्ग्राहस्तदभावे पुत्र इति । नन्वेतेषां समवाय एव नोपपद्यते ।

न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः ।

( मनु० अ० ९।१८५ )

इति पुत्रे सति अन्यस्य रिक्थग्रहणासम्भवात् । योपिद्ग्राहोऽपि नोपपद्यते । (मनु. अ. ५. श्लो. १६२.)

न द्वितीयश्च साध्वीनां क्वचिद्भर्त्तोपदिश्यते ।

इति स्मरणात् । तथा ऋणं पुत्रो दाप्य इत्यप्ययुक्तम् । पुत्रपौत्रैर्ऋणं देयमित्युक्तत्वात् । अनन्याश्रितद्रव्य इति विशेषणमप्यनर्थकम् । पुत्रे सति द्रव्यस्यान्याश्रयणासम्भवात् । सम्भवे च रिक्थग्राहीत्यनेनैव गतार्थत्वात् । पुत्रहीनस्य रिक्थिन इत्येतदपि न वक्तव्यम् । पुत्रे सत्यपि रिक्थग्राही ऋणं दाप्य इति स्थितम् । असति पुत्रे रिक्थग्राही सुतरां दाप्य इति सिद्धमेवेति ।

अत्रोच्यते । पुत्रे सत्यप्यन्यो रिक्थग्राही सम्भवति । क्लीबान्धबधिरादीनां पुत्रत्वेऽपि रिक्थहरत्वाभावात् । तथाच क्लीबादीननुक्रम्य "भर्तव्यास्तु

रिक्थिन इति । रिक्थशब्देन योषिदेवोच्यते । सैव चास्य धनं स्मृतमिति स्मरणात् ।

यो यस्य हरते दारान् स तस्य हरते धनम् । इति च ।

ननु योषिद्ग्राहाभावे पुत्र ऋणं दाप्यः, पुत्राभावे योषिद्ग्राह इति परस्परविरुद्धम् । उभयसद्भावे न कश्चिद्दाप्य इति । नैष दोषः । अन्त्यस्वैरिणीग्राहिणः प्रथमपुनर्भूग्राहिणः सधनस्त्रीहारिणश्चाभावे पुत्रो दाप्यः, पुत्राभावे तु निर्धननिरपत्ययोषिद्ग्राही दाप्य इति ।

एतदेवोक्तं नारदेन, ( व्य० प० १।२३ )

धनस्त्रीहारिपुत्राणामृणभाग् यो धनं हरेत् ।
पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः ॥ इति ।

धनस्त्रीहारिपुत्राणां समवाये यो धनं हरते स ऋणभाक् । पुत्रोऽसतोः स्त्रीधनिनोः—स्त्री च धनं च स्त्रीधने ते विद्येते ययोस्तौ स्त्रीधनिनौ तयोः स्त्रीधनिनोरसतोः पुत्र एव ऋणभाक् भवति । धनिपुत्रयोरसतोः स्त्रीहार्येव ऋणभाक् । स्त्रीहार्यभावे पुत्र ऋणभाक्, पुत्राभावे स्त्रीहारीति विरोधप्रतिभासपरिहारः पूर्ववत् ।

पुत्रहीनस्य रिक्थिन इत्यस्यान्या व्याख्या । अत्र एते धनस्त्रीहारिपुत्रा ऋणं कस्य दाप्या इति वीक्षायाम् उत्तमर्णस्य दाप्यास्तदभावे तत्पुत्रादेः । तत्पुत्राद्यभावे कस्य दाप्या इत्यपेक्षायामिदमुपतिष्ठते, पुत्रहीनस्य रिक्थिन इति । पुत्राद्यन्वयहीनस्योत्तमर्णस्य यो रिक्थी रिक्थग्रहणयोग्यः सपिण्डादिस्तस्य

तथाहमित्युपगता सा चतुर्थी प्रकीर्तिता ॥
अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम् ।
ऋणं तयोः पतिकृतं दद्यायस्ते ऽपाश्रितः॥ इति।
( व्य० प० १।२४ )

तथा, अन्योऽपि योषिद्ग्राह ऋणापाकरणेऽधिकारी तेनैव दर्शितः, ( व्य० प० १।२१ )

या तु सप्रधनैव स्त्री सापत्या वाऽन्यमाश्रयेत् ।
सोऽस्या दद्यादृणं भर्तुरुत्सृजेद्वा तथैव ताम् ॥

प्रकृष्टेन धनेन सह वर्तते इति सप्रधना, बहुधनेति यावत् । तथा— ( ना० व्य० प० १।२२ )

अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम् ।
ऋणं वोढुः स भजते सैव चास्य धनं स्मृतम्॥ इति।

पुत्रस्य पुनर्वचनं क्रमार्थम् । अनन्याश्रितद्रव्य इति षट्सु पुत्रेषु रिक्थाभावे अंशग्रहणयोग्यस्यैव ऋणापाकरणेऽधिकारो नायोग्यस्यान्धादेरित्येवमर्थम्। पुत्रहीनस्य रिक्थिन इत्येतदपि पुत्रपौत्रहीनस्य प्रपौत्रादयो यदि रिक्थं गृह्णन्ति तदृणं दाप्याः नान्यथेत्येवमर्थम् । पुत्रपौत्रौ च रिक्थग्रहणाभावेऽपि दाप्यावित्युक्तम् ।

यथाह नारदः, ( व्य० प० १।४ )

क्रमादव्याहृतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतम् ।
दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्तते ॥

इति सर्वं निरवद्यम् ।

यद्वा । योषिद्ग्राहाभावे पुत्रो दाप्य इत्युक्तम् । पुत्राभावे योषिद्ग्राहो दाप्य इत्युच्यते, पुत्रहीनस्य

पर्यान्तरनिरासाय तत्तदर्थमाह *पत्न्यपीति । तदर्थमाह *मातेति ।

५। तुर्यपादार्थमाह *पुत्रहीनेति । स्थित इति प्रवासाद्यु-वचनान्तमित्याशयेन गमननिर्धारणार्थमनानुपूर्व्याह *ऋणमिति।

६। एवं ऋक्थिनां उक्तेऽपि क्रमो नोक्त इत्येषां रिक्थग्राहा-दीनां मेलने केन क्रमेणैते ऋणं दाप्या इत्याकाङ्क्षायां श्लोकान्त-रित्यवतरणासङ्गतिरत आह *एतेषामिति । तमेवाह *रिक्थेति । असति बाधके उपाचवननपाठक्रमत्यागे मानाभावादिति भावः । तुर्ये विशेषस्य वक्ष्यमाणत्वादत्रानुक्तिः ।

७। ननु रिक्थग्राहादीनां सति समवाये क्रमनियमो न एव नास्तीत्याह *नन्वेतेषामिति । तमेव तदभावं क्रमेणोपपादय-ति । *न भ्रातर इति । पितुः भ्रातरः पितरश्च न रिक्थहरा अपि तु पुत्रा एव तथेति मनूक्तत्वात् पुत्रे सत्यन्यस्य तत्त्वा-सम्भवात्पुत्ररिक्थग्राहयोर्मेलनं नास्तीत्यर्थः । ननु माऽस्तु तयोः समवायः पुत्रयोषिद्ग्राहयोस्तु सम्भवत्येवेति चेन्न । तद-भावादेव तयोस्तस्य दुर्वचत्वादित्याह *योषिदिति । अत्र हेतु-माह *न द्वितीय इति। द्वितीयभर्तृनिषेधादेव योषिद्ग्राहाभाव इति भावः । पुत्र इत्यपि व्यर्थं पुनरुक्तं चेत्याह *तथा ऋणमिति । तत्र हेतुमाह *पुत्रेति । तथाचास्यार्थस्य तेनैवोक्तत्वेन पौन-रुक्त्यादत्र पुनः कथनमयुक्तमिति भावः । एवं विशेष्यानर्थक्य-मुक्त्वा विशेषणानर्थक्यं भेदेनाप्याह *अनन्येति । अत्रोपपत्ति-माह *पुत्रे सतीति । अन्यनाश्रयणेत्यर्थः । तथा च तस्य सत्त्वे तस्यान्यागामित्वात्तद्व्यर्थमिति भावः। सत्यपि तस्मिन् तत्त्वम् अ-भ्युपेत्यापि दोषमाह *सम्भवे चेति । तत्र सत्यपि यदि रिक्थ-ग्राहोऽन्यः सम्भवति तदा केवलं पुत्रो न ऋणं दाप्यः किं

रिक्थिनो दाप्याः ।

तथा च नारदेन, ( व्य० प० १।१२।११३ )

ब्राह्मणस्य तु यद्देयं सान्वयस्य नचास्ति सः ।
निर्वपेत्तत्स्वकुल्येषु तदभावेऽस्य बन्धुषु ॥

इत्यभिधायाभिहितम्,

यदा तु न सकुल्याः स्युर्न च सम्बन्धिबान्धवाः ।
तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेत् ॥

इति ॥ ५१ ॥

बा० १ । सङ्गतिं प्रदर्शयन्नाह *ऋणापाकरणे इति । ऋणनिवारणे इत्यर्थः । *ऋणी, ऋणग्राही । *च समवायेइति । समवाये चेत्यर्थः । *कर्त्रन्तरेति । उक्तादन्येषां समवाये क्रमं चेत्यर्थः ।

२ । * अन्यदीयमिति । अन्यस्वामिकेत्यर्थः । अत एव च्विः । व्यतिरिक्तप्रकारमेवाह * विभागेति । एवमाद्यपादार्थमुक्त्वा तत्तात्पर्यार्थमाह * एतदिति । न चोरेति । तस्य स्तेयादिना तद्ग्राहकत्वेऽप्युक्तरीत्या रिक्थग्राहकत्वाभावादिति भावः ।

३ । द्वितीयपादार्थमाह *योषितमिति । अस्याभिमतार्थविशेषमाह *भार्यामिति । तथैव चेत्यस्य व्याख्या *ऋणमिति । यद्वा तद्वद्वेत्यर्थः । तस्यानुषङ्गः । अस्यापि तात्पर्यार्थमाह * यदीयामिति । ननु योषितोऽपि द्रव्यत्वेन रिक्थरूपत्वाद्रिक्थग्राह इत्यनेनैवेष्टसिद्धेरिदं न वाच्यमत आह * योषित इति । यद्यपि योषित् द्रव्यं भवति तथापि रिक्थशब्दवाच्यत्वं नास्ति तस्याः । विभागार्हद्रव्ये एव लोके रिक्थशब्दप्रयोगात् । योषितश्च विभागानर्हत्वादिति भावः । अविभाज्येति पाठः । ण्यदन्तत्वात् ।

४ । तृतीयपादार्थमाह *पुत्रश्चेति । न अन्यो ऽनन्य इत्या-

ऋणामिति । निर्धारणे सर्वा षष्ठी । *प्रथमाश्रितेति । पूर्वार्धेनानु-पद्यते । स्वैरिणीनां चातुर्विध्यं पुनर्भुवां च त्रैविध्यं तत्र न त-द्ग्राह्ययोरेवाधिकार इत्येतत्सर्वं नारदोक्तं प्रकाशयति *यथा-हेत्यादिश्रितइतीत्यन्तेन । *परेति । परः पतिः पूर्वा यासां ता इत्यर्थः । *तासां, सप्तानाम् । कन्येत्यस्य व्याख्या *अक्षते-ति । एतेन व्यभिचारकृतदोषनिरासः । नहि किं प्रयुक्तोऽस्या दोषोऽस्त आह *पाणीति । तेनैव दूषिता नान्येनेत्यर्थः । तथा च इदमेवास्या दूषकताबीजं नान्यत्तदपि नास्ति किं तु द्वितीय-मित्याह *पुनःसंस्कारेति । ईदृशी या सा तेन पुनर्भूः प्रथ-मोक्तेत्यर्थः । *देशेति । दानसम्बन्धिन इत्यर्थः । *अन्यस्मै द्वितीयस्मै सवर्णाय असपिण्डाय । प्रकृतेऽन्यसाहसासम्भवादाह *व्यपीति । अग्रे ऽकारप्रश्लेषः । *पत्यौ जीवत्येव, सति । *का-मात्, स्वेच्छया । एवमग्रेऽपि । *अन्यं, यं कञ्चित् । *कौमार-मिति । अपूर्वपतिं कुमारीमुपपन्नमित्यर्थः । *प्राप्तानिति । नियो-गविधिना प्राप्तान्देवरादीन्परित्यज्येत्यर्थः । *परम्, अन्यं यं कञ्चित् । *प्राप्ता देशादिति । देशान्तरात्प्राप्ता सती या धन-क्रीता भवति सा, या च क्षुत्पिपासातुरा सती तवाहमित्येवं प्राप्ता भवति सा च स्त्री चतुर्थी स्वैरिणी कथितेत्यर्थः । *अन्ति-मेति । तासां मध्ये याऽन्तिमा तासां मध्ये च या प्रथमा ते यौ उपाश्रितौ तौ तयोः पतिकृतम् ऋणं दद्यातामित्यर्थः । *तथा, तद्वत् उभयवत् । *अन्यः, उभयान्योऽपि । *तेनैव, नारदेनैव । वा चार्थे । क्वचित् चपाठ एव । अनेन विशेषणद्वयेनान्याश्रयणे आत्मादेर्धनस्य च रक्षणमात्रं निमित्तं न तु कामादिरिति सू-चितम् । पत्यौ मृते इति शेषः । अस्या भर्तुरित्यन्वयः । व्यवहारा-नभिज्ञतया तया ऋणं न दत्तमिति भावः । *तथैव, यथा स-

त्वनन्याश्रितद्रव्यः स्वगमेव तद्ग्राहस्तदित्येवमत्र पक्षे तद्विशेषण-
सार्थक्यमिति भावः । मूले यस्यर्णमन्तं तथाप्यविशेषात् णि-
न्यन्तेनाह *रिक्थग्राहीति । याज्ञरूपन्यायेनेति भावः । रिक्थ-
भागृणं दाप्य इति पाठान्तरम् । उक्तरीत्याऽत्र पक्षे विशेषण-
साफल्येऽपि अस्यार्थस्याद्यपादेनैवोक्तत्वात् विशिष्टं निष्फलं
पुनरुक्तं चेति भावः । तुर्यपादानर्थक्यमप्याह *पुत्रेति । तदा-
शयमाह *पुत्र इति । यत इत्यादिः । वचनपाठक्रमस्य मान-
न्यात् तत्र सत्यपि स दाप्यस्तदा किमु वाच्यमसति तत्र स
ऋणं दाप्य इतीत्येवं कैमुतिकन्यायेनैवास्यार्थस्य सिद्धत्वादि-
दमपि व्यर्थमिति भावः ।

८ । एवं सर्ववचनमाक्षिप्य क्रमेण परिहरति *अत्रोच्यते
इत्यादिना । पुत्रे सत्यन्यस्य रिक्थग्रहणासम्भव इति यदुक्तं
तत्राह *पुत्रे इति । अत्र मानमाह *तथा चेति । *वक्ष्यति,
मूलकृत् । अन्यथापि सम्भवं प्रदर्शयन् तत्र मानान्तरमाह *त-
थेति । *एकेषां, मते । यद्वा एकेषां साधुवृत्तानां पितॄणाम् । यद्वा
एकेषां साधुवृत्तानामन्येषामसवर्णापुत्राणां समवाये । उपसंहर-
ति *अतश्चेति ।

९ । उक्तदोषस्य दृढत्वाद्योपिद्ग्राहसद्भावस्य क्लिष्ट-
त्वसूचनाय तत्सद्भावं शङ्कापूर्वकमाह *योपिदिति । शास्त्रविरो-
धेनेति पाठः । नञ्घटितोऽपपाठः।शास्त्रेण भर्त्रन्तरनिषेधाद्यद्यपि
स्त्रीणां द्वितीयः शास्त्रीयो नास्ति तथापि शास्त्रोल्लङ्घनकृतो यो-
षिद्ग्राहत्वसम्भवात्तादृशस्य तत्पतिकृतऋणनिवारणे ऽधिकारो
भवत्येवेत्यर्थः । नन्वेवं प्रकारेणास्तु तत्सम्भवः । तथापि स्व-
स्मृत्यन्तरानुरोधेन तस्या अनेकविधत्वेनानेकविधत्वादनेके
सर्वेपि किं ते तत्राधिकारिण इत्याशङ्कायां नियमयत *स्व-

दमाह *यथाहेति। * अभ्याहतं, निष्कासनम्। क्रमान्तरमपि निर्देशेन व्याख्या * पुत्रेति। धनं, ऋणम्। * तद्गामी, रिक्थग्राहिण इत्यर्थः। आदत्त इति शेषः।

१३। ननु स्त्रीधनो न तद्धनदायप्रतीतिः। किं तु तावन्मात्रतः सामान्येनैव निषेधप्रतीतिः, तत्सङ्गते ऋणदानप्रकारान्तराभावश्च, अतस्तं तुर्यांशमन्यथा व्याचष्टे *यद्वेति। पुत्रस्याहृतः। *ऋणानीति। त्रयाणां क्रमः प्रागुक्त एवेति भावः। ननु द्वितीयतृतीययोर्वैपरीत्यमपीत्याह * पुत्राभावेइति। अत्र पक्षे तत्र बहुत्वासम्भवात् बहुवचनासङ्गते रिक्थिन इति पञ्चम्यन्तम्। विभक्तिलिङ्गविपरिणामेन ऋणं दाप्य इत्यस्यानुषङ्गात् तस्य यो रिक्थी तस्मादृणं दाप्यमित्यर्थः। तदेतत् स्वमतेन फलितमाह * योषिद्ग्राह इति। ननु रिक्थिन इत्यतः कथमुक्तार्थलाभोऽत आह * रिक्थेति। भक्तते इति शेषः। अतो न पूर्वविरोधः। अन्यथाऽनुपपत्तिस्तु न। उक्तवक्ष्यमाणप्रकाराभ्यां व्याख्यानसम्भवात्। अतोऽत्र साधकान्तरं प्रागुक्तनारदमेवाह * सैव चेति। साधकान्तरमाह *य इति। अत्र यो यस्य दारान् हरते स तस्य धनमपि हरेदिति न, विधिबोधकाभावात्। किं तु यतो दारा एव धनमतो यो यस्य दारान् हरते स तस्य धनमेव हरते इति। तद्दारान् हरन् तद्व्यपदेशभागिव तद्धनहारीतिव्यपदेशभागपि भवतीत्यर्थः। अस्य चोपयोगः प्रायश्चित्तादौ बोध्यः।

१४। पुत्रस्तादृशः। *योषिद्ग्राह इति। ऋणं दाप्य इत्यस्यानुषङ्गः। * विरुद्धमिति। द्वितीयतृतीययोर्यः क्रमः प्रागुक्तस्तद्विपरीतस्तुर्यस्य एवंव्याख्यायां प्रतीयते इति मिथः क्रमे विरुद्धमित्यर्थः। दोषान्तरमाह * उभयेति। द्वयोः सत्त्वे मिथोऽभावोपलक्षितयोरेव तयोः तत्प्रदत्त्वानियमेनोपलक्षकाभावे सति

भागता नर्भेन, कथमपि सर्वथाऽस्पृष्टमिति यावत् । प्रगतधनस-हितेत्यर्थनिरासायाह * प्रकृष्टेनेति । अन्यमुचितमाह * तथे-ति । नदुक्तिरेवेयमपि । हिशब्दार्थे । * वोढुः, पत्युः । अत्र हेतुमाह *संबंति । गो ग्रर्थे । । * अस्य, पत्युः ।

१० । तृतीयपादे दत्तदोषद्वयमुद्धर्तुमादौ विशेष्यसाफल्यमाह *पुत्रस्येति । पुत्रोऽनन्येत्यत्र पुत्रग्रहणम् उक्तयोरुभयोरभावे तेन ऋणं देयमित्येवंविधक्रमबोधनार्थं न तु तत्र तस्याधिकारप्रदर्श-नार्थं, येन पौनरुक्त्यं स्यादित्यर्थः । विशेषणस्यापि सार्थक्यमाह *अनन्येति । तस्य तत्त्वेन तत्राधिकारो न पुत्रत्वमात्रेणेति अ-न्धादीनामन्याश्रितत्वपत्वेनान्धत्वादिदोषयुक्तत्वेन पितृरिक्थांश-ग्रहणायोग्यत्वेन नाधिकारस्तत्र किं त्वनन्धादीनामेव तत्त्वेना-धिकार इत्येतदर्थकतया विशेषणस्य सार्थक्यमिति भावः । तथा च योग्यपुत्रत्वेन तत्राधिकारो न पुत्रत्वमात्रेणेति सूचनार्थं तदिति तत्त्वम् । एवं च पुत्रत्वेनेत्यादि यत् पुत्रपौत्रैरित्यत्रोक्तं तदप्येवंपरतया व्याख्येयमिति न प्रागुक्तविरोधोऽपीति बोध्यम् ।

११ । तुर्यपादे दत्तदोषमुद्धरति *पुत्रेति । पुत्रग्रहणं तत्रोपलक्ष-णमित्याह * पौत्रेति । पूर्वत्र द्वयोरेवोपात्तत्वान्नातिप्रसङ्गः । रिक्थिन इति प्रथमाबहुवचनान्तमेवेत्याह * प्रपौत्रादय इति । * तदृणमिति । तदा प्रपितामहर्णमित्यर्थः । * अन्यथा, तदी-यरिक्थग्रहणाभावे । रिक्थभाज एव प्रपौत्रादेस्तादृशप्रपिताम-हादेर्ऋणदानेऽधिकारो नान्यस्येत्येतत्प्रतिपादकतयेदमपि सफ-लमिति तात्पर्यार्थः ।

१२ । तद्धीनत्वानिवेशस्य फलमाह *पुत्रपौत्रैस्त्विति । योग्या-वित्यर्थः । अत एव तत्र नातिप्रसङ्ग इत्युक्तमनुपदमेव । *इत्युक्त-मिति । पुत्रपौत्रैर्ऋणं देयमित्यत्रेत्यर्थः । अत्र नान्यथेत्यत्र संवा-

(७) न्यायरत्नमाला–श्रीपार्थसारथिमिश्र वि० सं० ( मीमांसा २

(८) ब्रह्मसूत्रभाष्यम्–बादरायणप्रणीत- वेदान्तसूत्रस्य यतीन्द्र श्रीमद्विज्ञान- भिक्षुकृत व्याख्यानम्। सम्पूर्णम्। ( वेदान्त. ) ६

(९) स्याद्वादमञ्जरी–मल्लिषेणनिर्मिता सम्पूर्णा। ( जैनदर्शनम् ) २

(१०) सिद्धित्रयम्–[illegible]प्रणीत–ब्रह्मनिरूपण- परम्–श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम्। सम्पूर्णम् ( वेदान्तः ) १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टा- रकाचार्यवर्यप्रणीतः। आचार्यचित्सुख- मुनिविरचितव्याख्यासंवलितः ( वेदान्तः ) ४

(१२) विभक्त्यर्थनिर्णयः न्यायानुसारिप्रथमादि- सप्तविभक्त्यर्थस्वरूपनिरूपकः म० म० श्रीगिरिधरोपाध्यायविरचितः। सम्पूर्णः ( न्यायः ) ५

(१३) विधिरसायनम्। श्रीअप्पय्यदीक्षितकृतम्। सं० ( मीमांसा ) २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्ट- सोमेश्वरविरचिता। ( मीमांसा ) १६

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता। श्रीक्षेमराजविरचितवृत्तिसमेता। ( वेदान्तः ) २

(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशा- ध्यायार्थसंग्रहः ) श्रीभट्टनारायणात्मज- भट्टशङ्करविरचितः। ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि–मीमांसादर्शनम् ) महामहो- पाध्यायश्रीशालिकनाथमिश्रविरचितं, श्रीशङ्करभट्टकृतो मीमांसा- सारसंग्रहश्च सम्पूर्णः ( मीमांसा ) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्दव्यासप्रणीत- स्वकृतव्याख्यासमलङ्कृतश्च। ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम्। महामहोपाध्यायश्रीकर्का- चार्यविरचितभाष्यसहितम्। १३

(२०) ब्रह्मसूत्रभाष्यम्। श्रीभास्कराचार्यविरचितम् ( वेदान्तः ) १

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम्। आनन्दपूर्ण- विरचितया खण्डनफक्किकाविभजनाख्यया व्या- ख्यया ( विद्यासागरी ) ति प्रसिद्धया समेतम्। ( वेदान्तः ) १२

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता। १

(२३) श्रीलक्ष्मीसहस्रम्–बालबोधिनीव्याख्यया- ऽवतरणिकया च सहितम्। ८

July. 1912.

THE

# CHOWKHAMBA SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 175.

# व्यवहार- बालभट्टी

इति प्रसिद्धया लक्ष्मीनामिकया

पायगुण्डे इत्युपनामकेन बालंभट्टेन स्वपत्न्याः लक्ष्मीदेव्याः

स्मारकत्वेन तन्नाम्ना रचितया बृहत्या टीकया सहिता

मिताक्षरा

श्रीयुतगोविन्ददासमहाशयप्रदर्शितरीत्या

पर्वतीयनित्यानन्दपन्तेन परिष्कृत्य संशोधिता ।

# VYAVAHÂRA-BÂLAMBHATTI

THE EXTENSIVE COMMENTARY ON THE MITÂKSHARÂ

WITH THE ORIGINAL

BY

Bâlambhatta Pâyagunde

EDITED BY

Pandit Nityanand Pant Parvatiya

Under the supervision of Shri Govinda Das.

FASCICULUS III.

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT BOOK-DEPOT.

BENARES.

AGENTS:- OTTO HARRASSOWITZ LEIPZIG:

PANDITA JYESHTHÂRAMA MUKUNDAJI BOMBAY:

PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Dasa Gupta,*

AT THE VIDYÂ VILÂSA PRESS

BENARES.

*Price Rupee one.*

( Registered according to Act XXV. of 1867. ( All Rights Reserved. )

रत्वेन स्त्रीशब्दस्य पूर्वनिपातः । इत्यन्तेन द्वन्द्वेन इत्यन्तपर्यायैक-देशेन वा इष्टार्थलाभादाह * स्त्री चेति । कर्म वाक्यमिति न्या-येन सानुषङ्गेणाह * पुत्र एवेति । एवमग्रेऽपि । अत्रापि यत्तं भजन् विशेषं मातुरुक्तर्णस्य परिहरति * स्त्रीति ।

१६। नास्तिक्यमपि व्याख्यानमयुक्तं, उक्तस्मृतिभ्यां स्त्रियो धन-त्वलाभेऽपि रिक्थत्वालाभात् । तथैव कृत्ये तत्प्रयोगात् । सांक-मासिद्धिः शास्त्रमसिद्धेः मानत्वादत आह * पुत्रहीनस्येति । प्रतिज्ञातव्याख्यानान्तरमेवाभिधानुपादायाकाङ्क्षापूर्वकमर्थसिद्धं किञ्चिदाह * पूर्व इति । रिक्थेत्यादिना इत्यन्तेनोक्ता इत्यर्थः । ऋणं दाप्या इत्युक्तेः आकाङ्क्षोदयादिति भावः । अत्र पक्षे रिक्थिन इति संप्रदानस्य संबन्धत्वाविवक्षया पाठान्तरमिति तदनुरोधेनाह * कस्येति । एवमग्रेऽपि । * उत्तमर्णस्ये-ति । आदौ तस्यैवोपस्थितेर्योग्यत्वाच्च । आदिना पौत्रादिग्रहण-म् । एवमर्थसिद्धमुक्त्वा तदाह * पुत्राद्यभावे इति । पुत्रपदमुपल-क्षणमिति सूचयन्नर्थमाह *पुत्राद्यन्वयेति । अन्वयो वंशपरम्परा । ननु न सामानाधिकरण्यं याथितार्थकत्वादत आह * यो रिक्-थीति । तदसत्त्वेपि निर्वाहार्थमाह * योग्य इति । * तस्येति । तादृशस्य सपिण्डादेरेते रिक्थग्राहादयः पूर्वोक्तक्रमेण ऋणं दाप्या इत्यर्थे वचनविपरिणामेनाह * दाप्या इति ।

१७। अत्र सर्वत्र मानमाह *तथा चेति । अग्रेऽन्वयः। तस्य तु यद्देयं तत्सान्वयस्येत्यर्थः। *सः, यस्य देयं सः सान्वयो ब्राह्मणः। एवमग्रेऽपि । चश्चेदर्थे । तदेति शेषः । * निर्वपेत्, प्रक्षिपेत् । *कुल्येषु,तत्सकुल्येषु। क्वचित्तत्सकुल्येष्वित्येव पाठः। तदृणमिति शेषः। *अस्य, ब्राह्मणस्योत्तमर्णस्य।एवं प्रागपि।निर्वपेदित्यस्या-नुषङ्गोऽग्रे । सगोत्रसपिण्डाः सकुल्याः । असगोत्रसपिण्डा बन्ध-

केनापि ऋणं न देयं स्यादित्यर्थः । इष्टापत्तिस्त्वत्र न ।

यदा तु न सकुल्याः स्युर्न च सम्बन्धिबान्धवाः ।
तदा दद्यात् द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेत् ॥

( ना० ऋ० प० १।११३ )

इति तद्वाक्यस्यदेयत्वप्रतिपादकस्मृतिविरोधापत्तेरिति भावः ।

* नैष दोष इति । जातानेकवचनम् । प्रागुक्ताः प्रकृतोपयुक्ता अपि योषिद्ग्राहा अनेके यद्यपि तथापि कोटिद्वयं तेषां कार्यम् । अन्तिमस्वैरिणीग्राही प्रथमपुनर्भूग्राही सधनस्त्रीग्राही चेत्येका कोटिः । निर्धननिरपत्यस्त्रीग्राहीति त्वन्या कोटिः । एवं सति व्यवस्थासम्भवान्न दोष इत्याशयेनाद्यकोट्याशयेनाद्यपक्षमाह * अन्तिमेति । यत इत्यादिः । एवं चैतत्कोट्यन्तर्भूतयोषिद्ग्राहाभावे पुत्र ऋणं दाप्य इति तस्यार्थ इति भावः । द्वितीयकोट्याशयेन द्वितीयपक्षमाह *पुत्राभावे त्विति । तथा च तदभावे एतत्कोट्ययोषिद्ग्राह ऋणं दाप्य इति तदर्थः । तथा च यदि सामान्येन तत्तदभावे स स दाप्य इत्युक्तं स्यात्तदोक्तदोषः स्यात् । तदेव न । किं तूक्तरीत्या ऽवान्तरभेदपुरस्कारेणेति न क्रमे विरोधो नापि तद्वचनविरोधोऽवश्यदेयत्वस्यैवानेन प्रतिपादनादिति भावः ।

१८। ननु विनिगमकाभावे वैपरीत्यमेव कुतो न, अत आह * एतदेवेति । एवेन तद्व्यवच्छेदः । एवं च तदनुरोधेनैवमेवोक्तं न त्वन्यथा । तद्विरोधापत्तेरिति भावः । अभ्यर्हितत्वाद्धनस्य पूर्वनिपातः । पुत्रयोरितीति पाठः । धनस्त्रीहारिणौ च पुत्रश्चेति द्वन्द्व इत्याशयेन व्याचष्टे * धनेति । शेषमाह * समवायेइति । लिङ्गाविवक्षया आह * हरते इति । क्वचिदत्रापि हरेदित्येव पाठः । * स्त्रीधनिनोरिति । अभ्यर्हितत्वाविवक्षया ऽल्पाच्तर-

विभागाभावश्चापस्तम्बेन दर्शितः, जायापत्यो-र्न विभागो विद्यते इति ।

सत्यम् । श्रौतस्मार्ताग्निसाध्येषु कर्मसु तत्फलेषु च विभागाभावो न पुनः सर्वकर्मसु द्रव्येषु च । तथा हि । जायापत्योर्न विभागो विद्यत इत्युक्त्वा किमि-ति न विद्यते इत्यपेक्षायां हेतुमुक्तवान्, पाणिग्रह-णाद्धि सहत्वं कर्मसु तथा पुण्यफलेषु चेति । य-स्मात्पाणिग्रहणादारभ्य कर्मसु सहत्वं श्रूयते "जाया-पती अग्निमादधीयाताम्" इति तस्मादाधाने सहाधि-कारादाधानसिद्धाग्निसाध्येषु कर्मसु सहाधिकारः । तथा, कर्म स्मार्तं विवाहाग्नावित्यादिस्मरणाद्विवाह-सिद्धाग्निसाध्येष्वपि कर्मसु सहाधिकार एव । अत-श्चाग्न्यविभागादग्निनिरपेक्षेषु कर्मसु पूर्तेषु जायापत्योः पृथगेवाधिकारः संपद्यते । तथा, पुण्यानां फलेषु स्व-र्गादिषु जायापत्योः सहत्वं श्रूयते, दिवि ज्योतिरजर-मारभेतामित्यादि । येषु पुण्यकर्मसु सहाधिकारस्ते-षां फलेषु सहत्वमिति बोद्धव्यम्, न पुनः पूर्तानां भर्त्रनुज्ञयाऽनुष्ठितानां फलेष्वपि ।

ननु द्रव्यस्वामित्वेऽपि सहत्वमुक्तम्, द्रव्यपरि-ग्रहेषु च न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमु-पदिशन्तीति ।

सत्यम् । द्रव्यस्वामित्वं पत्न्या दर्शितमनेन, न पुनर्विभागाभावः। यस्माद् द्रव्यपरिग्रहेषु चेत्युक्त्वा त-त्र कारणमुक्तम्। भर्तुर्विप्रवासे नैमित्तिकेऽवश्यकर्तव्ये दानेऽतिथिभोजनभिक्षाप्रदानादौ यस्मान्न स्तेयमुप-

गः । सम्बन्धी उक्त एव । अनेन पुत्राद्यन्वयाभावे सपिण्डाद्यभावे च कस्य तं दाप्यास्तदित्यप्याकाङ्क्षा शान्तिं गता । अत्रैते धनेत्यादितत्पुत्रादेरित्यन्तेन उक्तार्थेऽर्द्धश्लोकः किञ्चिन्न्यूनो मानम् । पुत्राद्यभावे इत्यादिदाप्याइत्यन्तेनोक्तार्थे श्लोकद्वयं तावन्मात्रन्यूनं मानम् । स चार्थोऽनेनान्वयव्यतिरेकाभ्यां दृढीकृतः । तत्र निर्वपेदित्यन्तेनान्वयः । तदन्वयाभावे तत्सकुल्यादिषु निर्वपेदित्यन्वयमुखेनाभिधानात् । यदा तु न सेति व्यतिरेकः । तथा च सकुल्याद्यभाव एव द्विजादौ निक्षिपेदित्युक्त्या सत्सु तेषु द्विजादावृणदाननिषेधध्वननद्वारा प्रागुक्तार्थदृढीकरणमिति भावः ॥ ५१ ॥

मि० अधुना प्रकृपविशेषे ऋणग्रहणं प्रतिषेधन् प्रसङ्गादन्यदपि प्रतिषेधति ।

या० भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ॥ ५२ ॥

मि० प्रतिभुवो भावः प्रातिभाव्यम् । भ्रातॄणां दम्पत्योः पितापुत्रयोश्चाविभक्ते द्रव्ये विभागात्प्राक्प्रातिभाव्यमृणं साक्ष्यं च न स्मृतं मन्वादिभिः । अपि तु प्रतिषिद्धं, साधारणधनत्वात् । प्रातिभाव्यसाक्षित्वयोः पक्षे द्रव्यव्ययावसानत्वात् । ऋणस्य चावश्यप्रतिदेयत्वात् । एतच्च परस्परानुमतिव्यतिरेकेण । परस्परानुमत्या त्वविभक्तानामपि प्रातिभाव्यादि भवत्येव । विभागादूर्ध्वं तु परस्परानुमतिव्यतिरेकेणापि भवति ।

ननु दम्पत्योर्विभागात्प्राक्प्रातिभाव्यादिनिषेधो न युज्यते । तयोर्विभागाभावेन विशेषणानर्थक्यात् ।

र्थमाह * द्रव्ये इति । * क्रूरं, नष्टरूपम् । * नेति । पुत्रान्तर्योऽत्र । तुल्यविलक्षणकृत्वानामगोत्वोपपत्तावितराकनयाह * अपिति-ति । नेवेति भावः । नत्र हेतुमाह * साधारणधनत्वादिति । कर्मधारये हेतोर्विशेषणकल्पनापत्तिः । अतः साधारणं समुदितं सर्व-स्वत्वापन्नं धनं येषां भ्रात्रादीनां तेषां भावस्तत्त्वं तस्मादित्यर्थः ।

३। नन्वेतावतापि कुतस्तद्भागोऽत आह * ह्यानिभाष्येति । श्रुते तात्पर्यात्पूर्वनिपातः । * पशुः, अध्वर्यकृतदानामानतरो । * द्रव्येति । द्रव्यस्वत्वस्य तदानस्थानसाने प्रतिमानं यतोऽस्त्व-त्वादित्यर्थः । नत्र यद्यपि दानमतिरुचि निःसन्दिग्धमिदं तथा-पि वक्ष्यमाणरीत्या दर्शनमन्यथानुपपत्तिसुखांगिन साक्षिणोऽपि नष्ट-स्तीति स्फुटीभविष्यति । साधारणेन धनेन तु द्रव्यैकेन कर्तुम-शक्यमिति तात्पर्यम् ।

४। अत एव विशेषणमाह * एतयोरिति । * अविभक्तानामपि, भ्रात्रादीनाम् । नन्वेवमविभक्ता इति वाक्यार्थविशेषणं व्यर्थमत आह * विभागादिति । अपिना तस्या अपि समुच्चयः । एत-द्विशेषबोधकमेव तदिति भावः ।

५। दम्पत्यंशे यत्प्रागुक्तं तद्विशेषणांशे आक्षिपति * नन्विति । *निषेधः,प्रागुक्तः । अत्र हेतुमाह * तयोरिति । तयोर्विभागस्यै-वाभावेन तदंशेऽविभक्ते इति वाक्यार्थविशेषणानर्थक्यादित्यर्थः। तथा च तयोः सार्वकालिकतया निषेधे वाच्ये तथा निषेधोक्ति-रयुक्तेत्यर्थः । ननु तत्रैव किं मानमत आह * विभागाभावश्चेति ।

६। अर्द्धाङ्गीकारेण परिहरति * सत्यमिति । आपस्तम्बार्थ-माह * श्रौतेति । * न पुनः,न तु । विभागाभाव इत्यस्यानुषङ्गः । ननु तथैवार्थः कुतो न, अतो हेतुमाह * तथाहीति । * हि, यतः । * तथा, व्रक्तार्थेनैव तमुक्तवानित्यर्थः । पाणीत्यादिव्याचष्टे

दिशन्ति मन्वादयस्तस्माद्भार्यायामपि द्रव्यस्वामित्वमस्ति । अन्यथा स्त्रैणं स्यादिति । तस्माद्भर्तुरिच्छया भार्याया अपि द्रव्यविभागो भवत्येव न स्वेच्छया ।

यथा वक्ष्यति, ( या० अ० २।११५ )

यदि कुर्यात्समानंशान्पत्न्यः कार्याः समांशिकाः ।

इति ॥ ५२ ॥

बा० १ । सङ्गतिमाह * अधुनेति । तुर्यपादस्य चरमव्याख्यानेन रिक्थेन ऋणं शुश्रैयान्नान्य इति नियमलाभेन रिक्थग्रहणायोग्यपुरुषविशेषस्य ऋणग्रहणनिषेधस्याप्यर्थाल्लाभेनार्थिकऋणग्रहणप्रतिषेधप्रसङ्गेन पुरुषविशेषे वक्ष्यमाणे ऽन्यदपि प्रातिभाव्यादिकम् अवान्तरप्रकारभेदं वक्तुं प्रतिषेधतीत्यर्थः । अपिना ऋणग्रहणसमुच्चयः । अन्यथैतत्प्रकरणे एतदसङ्गतिः स्पष्टैवेति भावः । इदं च ऋणग्रहणप्रतिषेधप्रसङ्गादिति क्वचित्कासम्बद्धपाठाभिप्रायेण व्याख्यातम् । वस्तुतस्तु ऋणग्रहणं प्रतिषेधन्प्रसङ्गादिति मन्जुरः पाठो युक्तश्चेति बोध्यम् । तदा अधुना अधमर्णीयपञ्चविधग्रहणधर्मादिकथनानन्तरं वक्ष्यमाणे पुरुषविशेषे ऋणग्रहणस्य प्रतिषेधं कुर्वन् तत्प्रतिषेधप्रसङ्गात्तदर्थं प्रातिभाव्यादिकमपि प्रतिषेधतीत्यर्थः । अपिः प्राग्वत् । तदसङ्गतिः स्पष्टैवेति भावः । मूलस्थम् अथेति सर्वादौ योज्यम् । उच्यते इति शेषः । एतदर्थ एवाधुनेत्यादिनोक्तः ।

२। पदार्थमुक्त्वा वाक्यार्थमाह * भ्रातॄणामिति । चः पितापुत्रयोः समुच्चायक इत्याह * पुत्रयोरिति । सर्वसमुच्चायकत्वार्थमाह *चेति । अविभक्तइत्यस्य भावप्रत्ययान्तस्य न भ्रात्रादिधर्मपरत्वं, तस्य स्वत एव सिद्धत्वात् । द्रव्यद्वारकविभागग्रहणे क्लिष्टत्वमिति सूचयन् कर्मप्रत्ययेनाह * द्रव्ये इति । सत्सप्तमी । स्पष्टत्वायैतद-

अत्र हेतुमाह * भर्त्रेति । भर्तुर्विभागे निमित्तेन प्रत्यासत्तिः पति भार्यायां नैमित्तिकस्नानविधाने हि सतो न स्वयं स्वामित्वमुपदिशन्तीति । द्रव्यस्वाम्येऽपि सहत्वाभिधानात् तद्वत् द्रव्येऽपि विभागो नास्तीत्यर्थः ।

११। अर्द्धाङ्गीकारेण परिहरति * पत्न्यं द्रव्येति । * स्वामित्वं तन्मात्रम् । तथा च तन्मात्रप्रतिपादनेनोक्तं न तु तत्र सहत्वं येन विभागाभावः स्यादिति भावः ।

१२। इदमेव विशदयति * यस्मादित्यादिनीत्यन्तेन । यस्मादित्यस्य उक्तमित्यनेनान्वयः । * द्रव्येति । अत्र पक्षेऽयमर्थः। द्रव्यार्जनेष्वपि सहत्वं दम्पत्योरिति हेतुस्तथासिद्धोऽप्यर्थवार्थो न मायुक्तः । एतच्च सहत्वमपि तात्त्विकं न मुख्यम् । तथा हि । यथाऽऽधानादिषु तयोरन्यतराभावे आधानादिस्वरूपासिद्धिर्नैवं द्रव्यार्जनेऽपि तु पतिरर्जयिता पत्नी चार्जितं रक्षतीति योगक्षेमावुभाभ्यां क्रियेते इत्युभयानुसन्धानासिद्धत्वेन सहत्वमिव । एवं च यत्राधानादिषु सहत्वं तत्र स्वत्वमस्तीत्यत्रापि-द्रव्यपरिग्रहेषु सहत्वमतीतेः स्वत्वमस्तीति । तदेतत् स्वत्वमेवाह * उक्ता तत्रेति । वचनं स्वरूपेणोक्तमिति अर्थत आह * भर्तुरिति । नित्यसङ्काशायाह * अत्रञ्येति । तथा च तदुपलक्षणमिति न्यूनता प्रथमत्यागश्चेति भावः । यद्वा तत्रापि तत्त्वसत्वात्तदुपलक्ष्यार्थमाह * अत्रञ्येति। काकेभ्यो दधीत्यादिवदिति भावः । वचनस्थहेर्व्याख्या *यस्मादिति । क्वचित् हि यस्मादित्येव पाठः । * भार्यायामपि। भार्याया अपीति पाठान्तरम् । * अन्यथा, द्रव्यस्वामित्वाभावे। तथा च नेदं सहत्वं विधत्तेऽपि तु लोकसिद्धमेव तत् स्यात्। सहितयोरेव स्वाम्यात् । न च विवाहात्प्रागर्जिते द्रव्ये पुरुषस्यैव स्वत्वं तत 'ऊर्ध्वमर्जिते तु

*यस्मादिति। मर्थोऽयम्। कचित् हि यस्मादित्येव पाठः। पञ्चम्युपपत्तिं आह *भार्येति। *सहत्वं, साहित्यम्। श्रुतिमाह *जायेति। आकाङ्क्षाशान्तये पूरयति *तस्मादिति। *सहेति। तच्छ्रवणादित्यर्थः। *सहाधिकार इति। सिद्ध इति तयोस्तत्र विभागो नास्तीति शेषः।

७। श्रौते उक्तां स्मार्त्ते आह *तथेति। *अग्निसाध्येष्वपि कर्मस्विति। अग्निसाध्येषु कर्मस्वपीत्यर्थः। एवेन विभागव्यवच्छेद इति तद्भावः।

८। एवमुभयत्र सहाधिकारविधिबलादर्थसिद्धमर्थमाह *अतश्चेति। *पूर्त्तेषु, तडागादिषु। पूर्त्तं खातादिकर्मणीत्यमरः। तथापुण्येति व्याचष्टे *तथेति। चार्थोऽयम्। तत्रत्यतथेत्यस्य तु तद्वदित्यर्थः। कर्मधारयनिरासायाह *पुण्यानामिति। दिवि द्युलोकादौ अजरं कारणभूतसुकृतनाशपर्यन्तमविनश्वरं जरारहितं वा ज्योतिः तेजःप्रधानं कलेवरमारभेतामित्यर्थः।

९। नन्वेवं सर्वत्र तस्य सर्वकर्मसु तत्त्वापत्त्या पूर्त्तेष्वपि प्रागुक्तपृथगधिकारो न सिध्येत्, अतो निष्कृष्टार्थमाह *येष्विति। *पुनः, तु।

१०। द्रव्येषु चेत्यंशं दृढयितुमाह *ननु द्रव्येति। यथा तद्बलादुक्तस्थले सहत्वं विभागाभावश्च तथा द्रव्यस्वाम्येऽपि सहत्वविधायकवचनबलात्सहत्वसिद्ध्या द्रव्यसाध्यपुत्रादिफलेष्वपि दम्पत्योः सहत्वापत्तिः। सहितयोरेव द्रव्यस्वाम्यात् द्रव्यस्याविभाज्यतापत्तिरपि। तथा च द्रव्येऽपि दम्पत्योर्विभागाभावात् प्रागुक्तदोष एवेति भावः। *उक्तम्, आपस्तम्बेन। तमेवाह *द्रव्येति। पाणिग्रहणाद्धि सहत्वमित्यनुवर्त्तते। तत आरभ्य द्रव्येषु परिग्रहेषु पुत्रादिजनेषु च सहत्वमेव दम्पत्योरित्यर्थः।

प्रतिपन्नयोरिति भाव्यम् । तथा सति पुत्रस्यापि स्वजन्मतः प्राक् पित्रार्जिते द्रव्ये स्वत्वाभावापत्तेरिति भावः ।

१३ । अत्र नैमित्तिके इत्युक्त्याऽन्यत्र स्तेयमस्त्येवेति सूचितम् । एतेन तत्साम्येऽपि वैषम्यं, यत् पतिर्यथेष्टं विनियुङ्क्ते जाया त्वेतावदेवेति । नच पत्युर्जायानुमत्यपेक्षा ।

स्वतन्त्रत्वात् यथा राजा राष्ट्रे तद्वदसौ गृहे ।

अत एव तस्या एव स्तेयशङ्का न भर्त्तुः । एवं पुत्रादावपीति बोध्यम् ।

१४ । सविशेषमुपसंहरति *तस्मादिति । एतेन तदभावव्यवच्छेदः । भर्त्तुरित्यस्य कृत्यमाह *न स्वेच्छेति । अत्र मानमाह *यथेति । कुर्यादित्यतस्तदिच्छाया एव प्रतीतेरिति भावः । इदं तत्रैव स्फुटीभविष्यति ॥ ५२ ॥

मि० अधुना प्रातिभाव्यं निरूपयितुमाह ।

या० दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते ।
आद्यौ तु वितथे दाप्यावितरस्य सुता अपि ॥ ५३ ॥

मि० प्रातिभाव्यं नाम विश्वासार्थं पुरुषान्तरेण सह समयः । तच्च विषयभेदात्त्रिधा भिद्यते । यथा दर्शने दर्शनापेक्षायाम्, एनं दर्शयिष्यामीति । प्रत्यये विश्वासे, मत्प्रत्ययेनास्य धनं प्रयच्छ नायं त्वां वञ्चयिष्यते, यतोऽमुकस्य पुत्रोऽयम् उर्वराप्रायभूरस्य, ग्रामवरो वाऽस्तीति । दाने यद्ययं न ददाति तदानीमहमेव दास्यामीति । प्रातिभाव्यं विधीयते इति प्रत्येकं संबन्धः । आद्यौ तु दर्शनप्रत्ययप्रातिभुवौ वितथे अन्य-

उत्पन्नो यदि पिता दिवं गतस्तदा तस्य पुत्रेण मूल्यमेव दातव्यं न वृद्धिरिति व्याख्येयम्। यत्र दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वा बन्धकं पर्याप्तं गृहीत्वा प्रतिभूर्जातस्तत्र तत्पुत्रा अपि तस्मादेव बन्धकात् प्रातिभाव्यायातमृणं दद्युरेव।

यथाह कात्यायनः,

गृहीत्वा बन्धकं यत्र दर्शनेऽस्य स्थितो भवेत्।
विना पित्रा धनात्तस्मात्प्राप्यः स्यात्तदृणं सुतैः॥ इति।

दर्शनग्रहणं प्रत्ययस्योपलक्षणम्। *विना पित्रा, पितरि प्रेते दूरदेशं गते वेति॥ ५४॥

बा० १। पौत्रकं निराचष्टे *एतदिति। उत्तरस्येत्यादिनोक्तमेवेत्यर्थः। यत्रेति व्याचष्टे *यदेति। अपिशब्दसूचितमाह *मान्यथेति इति। मृत इत्यस्य व्याख्या *दिवं गत इति। दिष्टं गत इति पाठान्तरम्। तत्र कालं गत इत्यर्थः। कालो दिष्टोऽप्यनेहाऽपीत्यमरः। तथा चेदं न प्रोषिते इति बोध्यम्। तत्पुत्रा इत्यत्र द्विवचनान्तेन समास इत्याह *तयोरिति। तयोरधमर्णत्वेन प्राप्तस्यानिषेधायाह *प्रातिभाव्येति। तेन प्राप्तमित्यर्थः।

२। अनुषङ्गेण तुर्यपादं व्याचष्टे *यस्त्विति। अत्रैकवचनान्तेन समास इत्याह *तस्येति। *पुत्राः, ते एव। अत एवाह *नपौत्रा इति।

३। विशेषमनुक्तमाह *ते चेति। दानप्रतिभुवः पुत्राश्चेत्यर्थः। व्यासवचनं क्रमेण वाक्यत्रयेणोभयपरत्वेन क्लिष्टत्वात् व्याचष्टे *प्रातिभाव्येति। इदं विशेषणमर्थसिद्धार्थकथनपरम्। तत्र तेषामनधिकारात्। सममित्युभयशेष इत्याह *सममिति। शेषमाह *दद्युरिति। पौत्रा इत्युक्तेरिति भावः। क्वचित्तु मूले

सम्भवादाह * शाठ्येनेति। दौर्जन्येन धनाभावेन वा ऽधमर्णे उत्तमर्णाय धने अप्रतिकुर्वति अप्रयच्छति सति दानप्रतिभूर्दाप्य इत्यर्थः।

४। सूचितं विशेषद्वयमाह *इतरस्येति। *न पौत्रा इति। तत्र अपिस्तु तत्समुच्चायक इति भावः॥ ५३॥

मि० एतदेव स्पष्टीकर्तुमाह।

या० दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा॥

न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय यः स्थितः॥५४॥

मि० यदा दर्शनप्रतिभूः प्रात्ययिको वा प्रातिभूर्दिवं गतः तदा तयोः पुत्राः प्रातिभाव्यायातं पैतृकमृणं न दद्युः। यस्तु दानाय स्थितः प्रातिभूर्दिवंगतस्तस्य पुत्रा दद्युर्न पौत्राः। ते च मूलमेव दद्युर्न वृद्धिम्।

ऋणं पैतामहं पौत्रः प्रातिभाव्यागतं सुतः।

समं दद्यात्तत्सुतौ तु न दाप्याविति निश्चयः॥

इति व्यासवचनात्। प्रातिभाव्यव्यतिरिक्तं पैतामहमृणं पौत्रः समं यावद् गृहीतं तावदेव दद्यान्न वृद्धिम्। तथा तत्सुतोऽपि प्रातिभाव्यागतं पित्र्यमृणं सममेव दद्यात्। तयोः पौत्रपुत्रयोः सुतौ प्रपौत्रपौत्रौ च अप्रातिभाव्यायातं प्रातिभाव्यायातं च ऋणं यथाक्रममगृहीतधनौ न दाप्याविति।

यदपि स्मरणम्,

खादको वित्तहीनः स्याल्लग्नको वित्तवान्यदि।

मूल्यं तस्य भवेद्देयं न वृद्धिं दातुमर्हति॥ इति,

तदपि "लग्नकः प्रातिभूः" "खादकोऽधमर्णः"

कात् । न्यूनतया प्रतिग्रहीतार्थादित्यर्थः *दर्शनेति । मूलेकतुल्य-त्वादिति भावः । *प्रत्ययेति । तत्त्वार्थनिर्णयः । अधमर्णद्रव्य मप्रान्तमाह *पित्र्येति। अनेन पूर्वं मूल इत्यपक्षापकमिति सूचि-तमिति केचित् । अर्थेन तयोस्तुल्यभावकल्पनमपरे ॥ ५४ ॥

मि० यस्मिन्ननेकप्रतिभूकं प्रयोगे तत्र कथं दातव्यमि-त्याह ।

या० बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ।
एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि ॥ ५५ ॥

मि० यद्येकस्मिन्प्रयोगे द्वौ बहवो वा प्रतिभुवः स्युस्त-दृणं संविभज्य स्वांशेन दद्युः। एकच्छायाश्रितेषु-एक-स्याधमर्णस्य छाया सादृश्यं तामाश्रिताः एकच्छाया-श्रिताः ।अधमर्णो यथा कृत्स्नद्रव्यदानाय स्थितस्तथा दाने प्रतिभुवोऽपि प्रत्येकं कृत्स्नद्रव्यदानाय स्थिताः। एवं दर्शने प्रत्यये च । तेष्वेकच्छायाश्रितेषु प्रतिभूषु सत्सु धनिकस्योत्तमर्णस्य यथारुचि यथाकामम्।अतश्च धनिको वित्ताद्यपेक्षायां स्वार्थं यं प्रार्थयते स एव कृ-त्स्नं दद्यान्नांशतः। तेष्वेकच्छायाश्रितेषु यदि कश्चिद्दे-शान्तरं गतस्तत्पुत्रश्च संनिहितस्तदा धनिकेच्छया स सर्वं दाप्यः। मृते तु कस्मिंश्चित्तत्सुतः स्वपित्र्यंशमवृद्धिकं दाप्यः ।

यथाह कात्यायनः,
एकच्छायां प्रविष्टानां दाप्यो यस्तत्र दृश्यते ।
प्रोषिते तत्सुतः सर्वं पित्र्यंशं तु मृते समम्॥इति ॥५५॥

व्याख्याने चैकवचनान्तपाठ एव पौत्र इति, तदा समं दद्यादि-त्युभयत्रोप इति न कोपि दोषः । अपिः समदानांशे प्रोक्तपौत्र-समुच्चायकः । एवेन वृद्धिव्यवच्छेदः । तत्सुतावित्यत्रापि द्विवच-नान्तेन समास इत्याह *तयोरिति । तयोः स्वरूपे आह *प्रपौ-त्रपौत्राविति ।

४ । पदार्थमुक्त्वा वाक्यार्थमाह * अप्रातिभाव्येति । समुच्चय-वारणायाह *यथाक्रममिति । पौत्रसुतः प्रपौत्रोऽप्रातिभाव्यागतं ऋणं न दद्यात्, पुत्रसुतः पौत्रः प्रातिभाव्यागतं तत्र दद्यादित्य-र्थः । तुसूचितं विशेषमाह *अगृहीतेति ।

५। व्यासवाक्यस्यान्यविरोधमाह *यदपीति । व्यासवाक्येन दानप्रतिभूपुत्रस्य मूलदानमुक्तम्, अनेन तु लग्नकस्य प्रतिभुव एव मूलदानमुक्तमिति विरोधः । तं परिहरति * तदपीति । व्याख्येयमित्यत्रान्वयः। अप्रसिद्धत्वात्पदार्थमाह *लग्नक इति। अथ वाक्यार्थमाह *लग्नक इति। तदैक्याय [१]शेषद्वयमाह *मृत इति, पुत्रेणेति च । अनेन वृद्धिमित्यत्र तस्येत्यस्यानुषङ्गः । पुत्र इति शेष इति सूचितम् । *मूल्यमिति । मूलेन समं मूल्यं, नौवयोधर्मेत्यादिना यत् । तदेवेत्यर्थः । क्वचित् उभयत्र मूलमित्येव पाठः ।

६ । तयोः मृता न दाप्या इत्युक्तस्यापवादं क्वाचित्कं विशेष-माह *यत्रेति । यत्रत्वित्यर्थः । क्वचित्तथा पाठ एव । एवेनादान-व्यवच्छेदः । अत्र तस्मादेवेत्यनेन बन्धकस्य कालवशेन ऋणा-पर्याप्तत्वेऽपि यावद् बन्धकं तावदेव देयं न तु ततोऽधिकं,यावदृणं तावत्स्वीयमपीति सूचितम् । *तस्मात्, तत एव धनात् बन्ध-

१ लग्नको वित्तवान् यदि इत्यत्र मृत इति मूल्यं तस्य भवेद्देयम् इत्यत्र च पुत्रेणेति शेपद्वयमित्यर्थः ।

मू० प्रतिभूर्दापितो यत्र प्रकाशं धनिनो धनम् ।
द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत् ॥ ५६ ॥

मि० यद्द्रव्यं प्रतिभूस्तत्पुत्रो वा धनिकेनोपपीडितः प्रकाशं सर्वजनसमक्षं राज्ञा धनिनो धनं दापितो न पुनर्द्वैगुण्यलोभेन स्वयमुपेत्य दत्तवान्.

यथाह नारदः,
यं चार्थं प्रतिभूर्दद्याद्धनिकेनोपपीडितः ।
ऋणिकं तं प्रतिभुवे द्विगुणं प्रतिदापयेत् ॥ इति,

ऋणिकेनाधमर्णेन तस्य प्रतिभुवस्तद्द्विगुणं प्रतिदातव्यं स्यात् । तच्च कालविशेषमनपेक्ष्य सद्य एव द्विगुणं दातव्यम् । वचनारम्भसामर्थ्यात् । एतच्च हिरण्यविषयम् । ननु इदं प्रतिभूवचनं द्वैगुण्यमात्रं प्रतिपादयति । तच्च पूर्वोक्तकालकलाक्रमायातेनाप्युपपद्यते । यथा जातेष्टिविधानं शुचित्वापादनेन । अपि च सद्यः सवृद्धिकदानपक्षे पशुस्त्रीणां सद्यः सन्तत्यभावान्मूलदानमेव प्राप्नोतीति । तदसत् ।

वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा ।

इत्यनेनैव कालकलाक्रमेण द्वैगुण्यादिसिद्धेः द्वैगुण्यमात्रविधाने इदं वचनमनर्थकं स्यात् । पशुस्त्रीणां तु कालक्रमेण द्वैगुण्यादिक्रमपक्षेऽपि सन्तत्यभावे स्वरूपदानमेव । यदा प्रतिभूरपि द्रव्यदानानन्तरं तावता कालेनाधमर्णेन संघटते तदा सन्ततिरपि संभवत्येव । यद्वा पूर्वसिद्धसन्तत्या सह पशुस्त्रियो दास्यतीति न किंचिदेतत् । अथ प्रातिभाव्यं प्रीतिकृतम्, अतश्च

भा० १। *अनेकेति। ते च सजातीया विजातीयावेति भावः। *इत्याह. इत्यत आह। तत्रादावुत्तरार्धानुरोधेन विजातीयस्थले आह *यत्रैकस्मिन्निति। बहुत्वमनेकत्वोपलक्षणमित्याह *द्वाविति। *स्वांशेनेति। स्वस्वांशेनेत्यर्थः। क्वचित्तथैव पाठः। अत एव स्वांशैरिति बहुवचनोपपत्तिः। सजातीयस्थले उक्तम् *एकच्छायाश्रितेष्विति। तत्प्रतीकं धृत्वा पदार्थकथनपूर्वकं व्याचष्टे *एकेति। सादृश्यं विशदयति *अधमर्णस्येति।

२। *एवमिति। स यथा दर्शनाय विश्वासाय च स्थित एवं तेऽपीत्यर्थः।

३। एष्वित्यस्य व्याख्या *प्रतिभूष्विति। *यथाकाममिति। दद्यादिति शेषः। रुचिर्बीजं कथयन् तात्पर्यार्थमाह *अतश्चेति। आदिना सत्यवाक्त्वाभिजात्यादि। *स्वार्थं, स्वधनम्। विशेषमाह *एकेति। तेषां मध्ये इत्यर्थः। *सः, सोपि। *सर्वं, सवृद्धिकम्।

४। *मृते तु कस्मिंश्चिदिति। तेषां मध्ये कस्मिंश्चित्प्रतिभुवि मृते इत्यर्थः। वैलक्षण्यसूचकस्तुः। *अंशमिति। अवशिष्टं तु अर्थादवशिष्टानां मध्ये यथारुचि दाप्य इति भावः। *एकेति। तेषां मध्ये स दाप्यः, यस्तत्र दृश्यते यो धनिकेच्छाविषयत्वेन ज्ञायते। तेषां मध्ये कस्मिंश्चिद्देशान्तरं गते सति तत्सुतोऽपि तदिच्छया सर्वं दाप्यः। तेषां मध्ये कस्मिंश्चिन्मृते तु तत्सुतः स्वपित्र्यमंशमेव दाप्यो न सर्वम्। तत्रापि समम्, अवृद्धिकमेवेत्यर्थः। पित्रंशमिति पाठः। पित्र्यंशमिति पाठे शकन्ध्वादित्वं बोध्यम्॥५५॥

मि० प्रातिभाव्ये ऋणदानविधिमुक्त्वा प्रतिभूदत्तस्य प्रतिक्रियाविधिमाह।

४। अनूपं जलप्रायं निर्जलं मरुप्रायमित्यादि • प्रती-
ति । न तत्र वृद्धिरित्यर्थः ।

५। वचनस्यास्यार्थगौरवम् । तथाच वृद्धिविशेषमाशेषेति—
* तान्निवृत्तिरिति । तत्र तत्रेत्यर्थः । प्राग्वदेव प्रवृत्तिरित्य-
र्थः । * पूर्वोक्तेति । पूर्वोक्तः, प्राक् प्रागुक्तो कल्पा वृद्धिक्रमः
क्रमः, तदवधेरनतिक्रम इत्यर्थः । स्वकृतवृद्धिक्रमेण यदा प्राप्तान्तं
द्वैगुण्यमिति धनं तदेव दत्तवतः प्रतिभुवे द्विगुणं दातव्यमव-
गन्तव्यमिति द्वैगुण्यमात्रमाशेषादकेनानेन वचनेन बोध्यते । अन्यथा
तु यावती वृद्धिस्तत्सहितं मूलधनं देयं न द्विगुणम्, इति यथा
द्विगुणदानमयुक्तमिति भावः ।

६। अत्राथनोपपत्तौ दृष्टान्तमाह * यथेति । ननु पूर्वोक्तवाक्ये
समद्दशाधिकरणे द्वितीयवर्णके, फलसंयोगश्रावाद्दिनि न स्यात्सं-
योगस्याशेषभूतत्वादिति । वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते
इत्यादि श्रूयते । तत्र संशयः, पुत्रजन्मानन्तरमेवेष्टिः कार्येति
जातकर्मानन्तरमेवेति । निमित्तस्य पुत्रजन्मनो नियोज्यविशेषण-
त्वेन निमित्तानन्तरमेव कार्येति जातकर्मणः प्रागेवेति पूर्वपक्षः ।

७। सिद्धान्तस्तु न केवलं जन्म विशेषणं नियोज्यस्य, अपि तु
पुत्रगतपूतत्वादिकमपि । एवं च जन्मपूतत्वरूपनिमित्तयोः संव-
लितयोरेव नियोज्यविशेषणत्वम् । पुत्रगतपूतत्वादिकं च पुत्रे जी-
वत्यभिलषितं पितुर्न तद्विपरीत्ये । जीवनं च स्तनपानादेव । स्तन-
पानं च जातकर्मणः प्राङ् निषिद्धम् । अतो जातकर्मानन्तरमेवेष्टिः।
एवं च जन्मानन्तरभाविन्या इष्टेर्जातकर्मानन्तरमुत्कर्षे आशौचा-
नन्तरमेव कार्या न जातकर्मानन्तरम् । कालशौचरूपाङ्गत्यागे
मानाभावात् । शुचिना कर्म कर्त्तव्यमित्यस्यापवादाभावादिति ।

८। इदं च गुरुमतेनोक्तम् । भट्टमते तु संशयान्तं प्राग्वत् ।

प्रतिभुवा दत्तं प्रीतिदत्तमेव । नच प्रीतिदत्तस्य याचनात्प्राग्वृद्धिरस्ति ।

यथाह, (ना० ऋ० प० १।१०९)

प्रीतिदत्तं तु यत्किञ्चिद्वर्द्धते न त्वयाचितम् ।
याच्यमानमदत्तं चेद्वर्द्धते पञ्चकं शतम् ॥ इति ।

अतश्चास्य प्रीतिदत्तस्यायाचितस्यापि दानादिवसादारभ्य यावद्विगुणं कालक्रमेण वृद्धिरित्यनेन वचनेनोच्यते इति। तदप्यसत् । अस्यार्थस्यास्माद्वचनादप्रतीतेः । द्विगुणं प्रतिदातव्यमित्येतावादिह प्रतीयते । तस्मात्कालक्रममनपेक्ष्यैव द्विगुणं प्रतिदातव्यं वचनारम्भसामर्थ्यादिति सुष्ठूक्तम् ॥ ५६ ॥

धा० १ । सङ्गतिमाह * प्रातिभाव्ये इति । * प्रतिभूदत्तस्य प्रतिक्रियाविधिमिति। पलायनं कृत्वा पुनः परावृत्तस्याधमर्णस्येति भावः । यत्त्विति पाठं सूचयन्नाह * यदिति । धनमित्यस्य व्याख्या * द्रव्यमिति । ऋणमिति पाठान्तरम् । प्रतिभूग्रहणमुक्तरीत्योपलक्षणमित्याह * तत्पुत्र इति । विशेषमाह * धनिकेनेति । धनिनामिति प्राग्वत् षष्ठी । विशेषोक्तिव्यवच्छेद्यमाह * नपुनरिति । न तु इत्यर्थः ।

२। विशेषे मानमाह * यथाहेति । ऋणिके मत्वर्थीयष्ठन् । राजेति शेषः ।

३। उत्तरार्धार्थमाह * ऋणिकैरिति । भवेदित्यस्य व्याख्या * स्यादिति । विशेषमाह * तच्चेति । तच्च द्विगुणमित्यन्वयः । कालेत्यस्य व्याख्या *सद्य एवेति । *वचनेति । प्रतिभूरितिवचनेत्यर्थः । अन्यथैतदानर्थक्यं स्पष्टमेव । तथा तस्य प्रागेवोक्तत्वादिति भावः ।

नैव तत्क्रमेण द्वैगुण्यादेः प्राप्तौ पुनरत्र तथा गद्दिशिग्यं इति पु-
नःप्राप्तं सत्यो द्वैगुण्यंशानान्याय्यं निष्फलम् । दृष्टान्ते तु गो-
षिवानयस्यानर्थकत्वाभावान्न तदनन्तरमेवनापूर्वत्वीगति वि-
शेष इति तद्व्याख्यानिति भावः ।

१३ । एतावतोपयुक्तं द्विविधोपयुक्तमिति *तत्तुर्मांशां त्विति । तथा च तत् संभवापेक्षं न तु नियतमिति भावः । अनुपत्स्येदम् । वस्तुतस्तदनुक्तमेवेति गृहन्त तदा गत्संभवत्वात् *यद्वेति । तावता कालेनेति पाठः । *संगतेनेति । तेन सह संगतो भवतीत्यर्थः । तत्रः संगतत्वमाह *पट्टेति । *पूर्वेति । प्रतिभूकर्तृकद्रव्यदानात्पूर्वम् अधमर्णस्य पलायनदशायां विद्यमानतादशायां वा जातेत्यर्थः ।

१४। अथास्य वचनस्य विषयनिर्णयपर्यवसानद्वारा शास्त्रक्रमेणैव द्विगुणदानविधिपरत्वाक्षेपाय तदुपयुक्तं किं निदाह *अथेति । उच्यतेति शेषः । *नन, न हि । नागदमाह *यथेति । *यत्किंचित्, प्रतिभूदत्तं धनिकदत्तं वा । *पञ्चकमिति । माग्वत् । तमेवाक्षेपमाह *अतश्चेति । *अस्य, प्रतिभूसंबन्धिनः । यावद्द्विगुणमित्यव्ययीभावः । प्रीतिदत्तस्यन्ते ऽयाचित तदभावस्योक्तत्वेन प्रतिभूदत्तस्यापि तादृशस्योक्तरीत्या तथात्वेन वृद्ध्यभावे प्राप्ते तदपवादत्वेनायाचितस्यापि तस्येदं प्रतिपाद्यते इत्यर्थः ।

१५। *अस्यार्थस्येति। वाक्यार्थो हि वाच्यो लक्ष्यो व्यङ्ग्यो वा भवेत् । तत्रायं नाद्यः । अप्रतीतेः । न द्वितीयः । मानाभावात् । अत एव नान्त्य इत्यर्थः । तदाह *द्विगुणमिति । उपसंहरति *तस्मादिति ॥ ५६ ॥

मि० प्रतिभूदत्तस्य सर्वत्र द्वैगुण्ये प्राप्तेऽपवादमाह।

निमित्तानन्तरं नैमित्तिकस्यावश्यं भावित्वाज्जन्मन एव निमित्तत्वाज्जन्मानन्तरमेवेति पूर्वपक्षः ।

९। सिद्धान्तस्तु वाक्यशेषश्रुतपुत्रगतपवित्रत्वादिफलकामनावान् वैश्वानरेष्टावधिकारी । तत्र फलं जीवत्येव पुत्रे ऽभीष्टम् । जीवनं च शिशोर्जातमात्रस्य स्तनपानायत्तमेव । तच्च स्तनपानं जातकर्मानन्तरमेव, न ततः प्राक् । अतः पुत्रगतपवित्रत्वादिफलावरोधेन जातकर्मानन्तरमेवेष्टिरिति ।

१०। एवं स्थिते तृतीयवर्णकेऽन्या चिन्ता, जातकर्मानन्तरमेवेष्टिराशौचापगमे इति । तत्रतूक्तरूपप्रयोजनवशाज्जन्मरूपप्रयोजनाभावात् निमित्तानन्तरं प्राप्ताऽपीयमिष्टिर्जातकर्मानन्तरमुत्कृष्टा । एवमुत्कृष्टायाः पुनराशौचानन्तरमुत्कर्षे प्रयोजनाभावात् जातकर्मानन्तरमेवेति पूर्वपक्षे, उच्यते । निमित्तानन्तर्यमिष्टेस्तावत् वाधितमेव । तदुक्तोक्तप्रयोजनवशात् । वाधिते च निमित्तानन्तर्ये शुद्धकालप्रतीक्षया आशौचापगमे पौर्णमास्यादिके काले कार्या । शुद्धकालस्याप्यङ्गत्वात् । शुचिना कर्मेत्यस्यापवादाभावादिति । तथा च शुद्धकालरूपमङ्गमबाधित्वैव जातेष्टिविधानम् ।

११। तथा, अशीतिभाग इत्यादिना प्रागुक्तो यः कालक्रमेण वृद्धिक्रमस्तमबाधित्वैव द्वैगुण्यविधानमिति सद्यो न द्वैगुण्यमिति भावः । अत्र सद्यो द्वैगुण्यदानपक्षेऽग्रे ऽनुपपत्तिमप्याह *अपि च सद्य इति । द्विगुणवृद्धिसहितेत्यर्थः । सद्यो द्वैगुण्यं नाम सद्य एव वृद्ध्या सह द्वैगुण्यं न स्वरूपतः । वृद्धिस्तु पशुस्त्रीणां सन्ततिरेव । सन्ततिस्तु पशुस्त्रीणामित्युक्तत्वात् । तथा च सद्यस्तथा-द्वैगुण्यदानपक्षे पशुस्त्रीषु सद्यः संतत्यभावान्मूलमात्रमेव देयं स्यादिति स्त्रीपशुष्वेवेति वक्ष्यमाणमनुपपन्नमित्यर्थः ।

१२। *वस्त्रेति । यत इत्यादिः । वस्त्रेत्यादिवचनारम्भसामर्थ्ये-

भागिनः। इति प्रतिभुवः॥

धनप्रयोगे विश्वासहेतू द्वौ, प्रतिभूराधिश्च।

यथाह नारदः, (ना० स्मृ० १।११७)

विश्रम्भहेतू द्वावत्र प्रतिभूराधिरेव च। इति।

तत्र प्रतिभूर्निरूपितः। इदानीमाधिर्निरूप्यते। आधिर्नाम गृहीतस्य द्रव्यस्योपरि विश्वासार्थमधमर्णो-ऽधिक्रियते। आधीयत इत्याधिः। स च द्विविधः, कृत-कालोऽकृतकालश्च। पुनश्चैकैको द्विविधः, गोप्यो-भोग्यश्च।

यथाह नारदः, (ना० स्मृ० १।१२४।१२५)

आधिः क्रियत इत्याधिः स विज्ञेयो द्विलक्षणः।
कृतकालोपनेयश्च यावद्देयोद्यतस्तथा॥
स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव च। इति।

*कृतकाले, आधानकाले एवामुष्मिन्काले दीपो-त्सवादौ मयाऽयमाधिर्मोचनीयोऽन्यथा तवैवाधिर्भवि-ष्यतीति एवं निरूपिते काले, उपनेयः आत्मसमीपं नेतव्यो मोचनीय इत्यर्थः। देयं दानम्। देयमनतिक्रम्य यावद्देयम्। उद्यतो नियतः स्थापित इत्यर्थः। यावद्देयमु-द्यतो यावद्देयोद्यतः, गृहीतधनप्रत्यर्पणावधिरनिरूपि-तकाल इत्यर्थः। गोप्यो रक्षणीयः॥ ५७॥

वा० १। *सर्वत्र, वस्त्रादावपि। अल्पाच्तरत्वात्स्त्रियाः पूर्वनिपातः। तेषु संततिरेवेत्यर्थः। प्रागुक्तरीत्यैवाह *कालानादरेणेति। इ-च्छ्या सह आधिवर्जम्। सामान्यतः सर्वतात्पर्यमाह *यस्येति। विशेषमाह—

२। *यदात्विति। *संप्रतिपन्नेइति। प्रातिज्ञाते प्राप्ते इत्यर्थः।

या० सन्ततिःस्त्रीपशुष्वेव धान्यं त्रिगुणमेव च।
वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणस्तथा॥ ५७॥

मि० हिरण्यद्वैगुण्यवत्कालानादरेणैव स्त्रीपश्वादयः प्रतिपादितवृद्ध्या दाप्याः। श्लोकस्तु व्याख्यात एव। यस्य द्रव्यस्य यावती वृद्धिः परा काष्ठोक्ता तद्द्रव्यं प्रतिभूदत्तं खादकेन तया वृद्ध्या सह कालविशेषमनपेक्ष्य सद्यो दातव्यमिति तात्पर्यार्थः। यदा तु दर्शनप्रतिभूः संप्रतिपन्ने काले अधमर्णं दर्शयितुमसमर्थः तदा तद्गवेषणाय तस्य पक्षत्रयं दातव्यम्। तत्र यदि तं दर्शयति तदा मोक्तव्योऽन्यथा प्रस्तुतं धनं दाप्यः।

नष्टस्यान्वेषणार्थं तु दाप्यं पक्षत्रयं परम्।
यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रातिभूर्भवेत्॥
काले व्यतीते प्रतिभूर्यदि तं नैव दर्शयेत्।
निबन्धं दापयेत्तं तु प्रेते चैष विधिः स्मृतः॥

इति कात्यायनवचनात्। लग्नकाविशेषानिषेधश्च तेनैवोक्तः,

न स्वामी न च वै शत्रुः स्वामिनाऽधिकृतस्तथा।
निरुद्धो दण्डितश्चैव संदिग्धश्चैव न क्वचित्॥
नैव रिक्थी न मित्रं च न चैवात्यन्तवासिनः।
राजकार्यनियुक्तश्च ये च प्रव्राजिता नराः॥
नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम्।
जीवन्वाऽपि पिता यस्य तथैवेच्छाप्रवर्तकः॥
नाविज्ञातो ग्रहीतव्यः प्रतिभूः स्वक्रियां प्रति। इति।

संदिग्धोऽभिशस्तः। अत्यन्तवासिनो नैष्ठिकब्र-

गृहत्वं भोगेन स्यादित्यत आह * कृतकालं इत्यादिना सार्धेन श्लोकेन। * कालं इति । अनेन कर्माध्यायोक्तं व्याख्येयं इति मदर्थी-गमागः सूचितः । अन्यार्थमाह * आधानं त्वादिकृत्यै-त्यन्तेन । पूर्वोक्तान्तरगतस्याधिः । अस्यार्थमाह * आर्थितः । निश्चितकालावर्योर्थमाह * योजनीय इति । अयमेव कृतकालः । फलसंस्वरूपमुक्ता अकृतकालस्याधेर्निगमनरूपं निर्दिश्य * दे-यमिति । अकृत्यग्रहणात् भाव कृत इत्याह * दानमिति । अ-न्ययीभावः पदार्थानतिवृत्तावित्याह * देयधनानतिक्रम्येति । उ-पसपदार्थमाह * निकट इति । उभयोरन्तर्भावेनान्वयेन-सूचनायाह * स्थापित इति । शुश्रूषेति तदाशयमाह * दान-दिति । नद्यातपदार्थमाह * गृहीतेति । * सन्धर्षणं, दानम् । तस्यापि तमाह * अनिरूपितकाल इति । आन्त्राग्र इत्यर्थनिरासाय तत्स्वरूपमाह * रक्षणीयइति । भोग्यस्तु प्रसिद्ध इति भावः ॥५७॥

मि० एवं चतुर्विधस्याधेर्विशेषमाह ।

या० आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते ।

काले कालकृतो नश्येत्फलभोग्यो न नश्यति ॥५८॥

मि० प्रयुक्ते धने स्वकृतया वृद्ध्या कालक्रमेण द्विगुणी-भूते यद्याधिरधमर्णेन द्रव्यदानेन न मोच्यते तदा न-श्यति अधमर्णस्वं, धनप्रयोक्तुः स्वं भवति । कालकृ-तः कृतकालः । आहिताग्न्यादिषु पाठात्कालशब्द-स्य पूर्वनिपातः । स तु काले निरूपिते प्राप्ते नश्येत्, द्वैगुण्यात् प्राक् ऊर्ध्वं वा।फलभोग्यः—फलं भोग्यं यस्या-सौ फलभोग्यः क्षेत्रारामादिः स कदाचिदपि न नश्य-ति । कृतकालस्य गोप्यस्य भोग्यस्य च तत्कालाति-

*नन, पक्षत्रयेऽप्युक्तमग्रेऽपि । अत्र मानमाह *नष्टस्येति । *परम्, आधिकम् । *काले इति । परस्मिन्नापि काले यदि स न तथा कुर्यात् तदा तस्मिन्काले व्यतीते तु सति सः तं निबन्धं तमर्थं दापयेदित्यर्थः। उक्तप्रकारमन्यत्रातिदिशति *मृते चेति । अधमर्णे इत्यर्थः ।

३। विशेषान्तरमाह *न्यूनकेति । प्रतिभूविशेषनिषेधोऽपीत्यर्थः। केषांचित् प्रतिभूत्वनिषेध इति यावत् । *तेनैव, कात्यायनेनैव। अत्र स्वामित्वादिकं स्वनिरूपितं ग्राह्यम् ।*क्वचित्, क्वापि । रिक्थी पुत्रादिः । * दातुं, धनमिति शेषः । * जीवन्निति । यस्य पिता जीवन जीवति । व्यत्ययेन शता । आस्ते इति शेषो वा। सोऽपि चेत्यर्थः। *तथैवेच्छेति। स्वेच्छाचरणशील इत्यर्थः । *स्वक्रियेति ।प्रातिभूत्वकरणमभिसमीक्ष्येत्यर्थः । प्रतिभूः स्वांक्रियामिति पाठान्तरम् । अत्र धनिकेन स्वादानक्रियामभिसमीक्ष्येत्यर्थः । अन्यथा पौनरुक्त्यं स्पष्टमेव । इति प्रातिभूविधिः ॥

४ । प्रसक्तसाक्षिनिरूपणमकृत्वा आधिनिरूपणे सङ्गतिमाह * धनेति । तद्दाने इत्यर्थः। विस्रम्भो विश्वासः। * अत्र, धनप्रयोगे । * तत्र, तयोर्मध्ये । * इदानीमिति। तत्प्रसङ्गेऽपि ततोऽस्यान्तरङ्गत्वादिति भावः। निरूपणस्योभयरूपत्वेनात्र मूलानुक्तमुभयं वक्तुं तस्यादौ सामान्यलक्षणमाह * आधिर्नामेति । *द्रव्यस्योपरीति।उत्कृष्टविश्वासेत्यर्थः। यद्वा उपरीति लोकोक्तिः। तत्प्रातिनिधित्वेनेत्यर्थः । * अधीति । स्थाप्यते इत्यर्थः । एवं रूढिमुक्त्वा योगमाह * आधीति । अर्थः स एव । अत एव नारदवाक्ये तथोक्तम् । तेनोभयप्रदर्शनम्। अत एव तत्र तथोक्तम्।

५। अथ भेदमाह * स चेति। * द्विलक्षण इति । द्विस्वरूप इत्यर्थः । * सः, द्विविधोऽपि । संदिग्धत्वात् कृतेत्यादिपदत्रयं

मनुः ( अ. ८ श्लो. १४३ )

न त्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात् ।

इति भोग्याधिं प्रस्तुत्य, उक्तवान्—

न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः इति ।

भोग्यस्याधेश्चिरकालावस्थानेऽप्याधमर्णिकस्य [illegible] निरोधेन धनिनः स्वत्वं न भवति । इदमप्युक्तम्, फलभोग्यो न नश्यतीति । गोप्याधौ तु पृथगुक्तं मनुना, ( अ. ८ श्लो. १४४ )

न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत् ।

इति । इहापि वक्ष्यते, गोप्याधिभोगे नो वृद्धिरिति । आधिः प्रणश्येद्द्विगुणे इति तु गोप्याधिं प्रस्तुत्यैतत् इति सर्वमनवद्यम् ॥ ५८ ॥

बा० १। पूर्वं चाधेश्चातुर्विध्यमनेनोक्तं, गोप्यः कृतकालोऽकृतकालश्च एवं भोग्योऽपि द्वेधेति । तदाह * एवमिति । उत्तमर्णेनेत्यर्थः । *मोच्यते इति । मोक्ष्यते इति पाठान्तरम् । तत्र मोक्ष मोक्षणे इति धातुर्बोध्यः । मोक्षते इति त्वपपाठः ।

२। आद्यार्धार्थमाह * प्रयुक्ते इति । दत्ते इत्यर्थः । ० द्विगुणीभूते, सति । * अधमर्णस्वं, तदीयस्वत्वम् । क्वचिद्धनस्वत्वपाठः । षष्ठ्यन्तमात्रपाठे स्वामित्यग्रिमस्यात्राप्यन्वयो बोध्यः । न केवलं तावदित्याह * धनेति ।

३। तृतीयपादार्थं पदार्थपूर्वमाह * कालकृत इति । अस्य पूर्वानुक्तत्वभ्रमनिरासायाह * कृतेति । ननु एवं सति तदसंगतिः अन्यथा पूर्वविरोधापत्तिः अत आह * आहितेति । पूर्वतो वैलक्षण्यायाह * सत्विति । शेषमाह * मासे इति । सतीत्यर्थः । अत एव पूर्वेणागतार्थत्वमाह * द्वैगुण्यादिति ।

क्रमे नाश उक्तः, काले कालकृतो नश्येदिति। अकृतकालस्य भोग्यस्य नाशाभाव उक्तः, फलभोग्यो न नश्यतीति। पारिशेष्यात् आधिः प्रणश्येदित्येतत् अकृतकालगोप्याधिविषयमवतिष्ठते। द्वैगुण्यातिक्रमेण निरूपितकालातिक्रमेण च विनाशे चतुर्दशदिवसप्रतीक्षणं कर्तव्यम्। बृहस्पतिवचनात्।

हिरण्ये द्विगुणीभूते पूर्णे काले कृतावधेः।
बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य च ॥

तदन्तरा धनं दत्त्वा ऋणी बन्धमवाप्नुयात्। इति।

नन्वाधिः प्रणश्येदित्यनुपपन्नम्। अधमर्णस्य स्वत्वनिवृत्तिहेतोर्दानविक्रयादेरभावात्। धनिनश्च स्वत्वहेतोः प्रतिग्रहक्रयादेरभावात्।

मनुवचनविरोधाच्च। ( अ. ८ श्लो. १४३ )

न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रय इति।

कालेन संरोधः कालसंरोधश्चिरकालमवस्थानं तस्मात्कालसंरोधाच्चिरकालावस्थानादाधेर्न निसर्गोऽस्ति नान्यत्राधीकरणमस्ति, न च विक्रयः। एवमाधीकरणविक्रयप्रतिषेधाद्धनिनः स्वत्वाभावोऽवगम्यते इति। उच्यते। आधीकरणमेव लोके सोपाधिकस्वत्वनिवृत्तिहेतुः, आधिस्वीकारश्च सोपाधिकस्वत्वापत्तिहेतुः प्रसिद्धः। तत्र धनद्वैगुण्ये निरूपितकालप्राप्तौ च द्रव्यदानस्यात्यन्तानिवृत्तेः अनेन वचनेनाधमर्णस्यात्यन्तिकी स्वत्वनिवृत्तिः उत्तमर्णस्य चात्यन्तिकं स्वत्वं भवति। न च मनुवचनविरोधः।

४। तद्वत् तुर्यपादार्थमाह * फलेति। उक्तसूत्रेणैव पूर्वनिपात-स्तस्याकृतिगणत्वादित्याह * फलमिति। तृतीयासमासस्तु वक्तु-मुचितः। * कदाचिदिति। द्वैगुण्ये काले च मासे सत्यपीत्यर्थः।

५। नन्वेवं वाक्यार्थत्रये त्रिषु विशेषलाभेऽपि तुर्ये तदलाभात्प्र-तिज्ञाहानिः, अतोऽन्यथा दुर्वचत्वाद् व्युत्क्रमेण सर्वत्र तेषु विभज्य तमाह * कृतेत्यादि। इदमुभयपरं संकोचे मानाभावादित्याह * गोप्यस्येति। अत एवाह * अकृतेति। विशेषोक्तेराह * भो-ग्येति। * अवतिष्ठते, पर्यवस्यतीत्यर्थः।

६। कृतकालगोप्यभोग्याध्योः कृतकालातिक्रमे नाशः, अकृत-कालगोप्याधेर्द्वैगुण्यातिक्रमे स इत्युक्तं, तत्र द्वैगुण्यतत्काला-तिक्रममात्रयोरेव न सः, किं तु ततोऽप्यग्रे स्वल्पोऽवकाशोऽस्तीति प्राग्वत् विशेषमाह * द्वैगुण्येति। तदेवाह * हिरण्ये इति। व-न्धकस्येति मध्यमणिन्यायेनान्वेति। प्रतीक्ष्य चेति पाठः। प्र-तीक्षयेदित्यपपाठः। हिरण्ये द्विगुणीभूते सति कृतावधेर्वन्धकस्य काले पूर्णे च सति धनी उत्तमर्णः द्विसप्ताहं प्रतीक्ष्य वन्धकस्य स्वामी भवतीत्यर्थः। द्विः सप्त द्विसप्तास्तेषामह्नां समाहारो द्वि-सप्ताहं चतुर्दश दिनानि। प्रतीक्षाफलमाह * तदन्तरेति। चतु-र्दशदिनमध्ये इत्यर्थः।

७। कृतकाले तथा प्रतिज्ञयोभयत्र नाशेऽप्यकृतकालगोप्याधौ स न संभवतीति पूर्वार्द्धोक्तमाक्षिपति * नन्विति। हेत्वन्तर-माह * मन्विति। तदेवाह * न चाधेरिति। तथा शब्दादप्रती-तेर्व्याचष्टे * कालेनेति। साधनं कृतेति समासः। वहुकालेने-त्यर्थः। संरोधः स्थितिः। तदाह * चिरेति। * न च विक्रय इति। अस्तीत्यस्यानुषङ्गः। नन्वेतावताऽपि नोक्तार्थलाभोऽत आह * एवमिति। चिरकालावस्थानेनेत्यर्थः। आधीत्यस्यान्य-

अर्थः स एव । उपकारस्य साहित्यं सम्बन्धेन कालावधिमाह *उपकारिणीति । अत्र समयवशेन वृद्धिमाह *समयवृद्धेरि-ति । अन्यथैतद्गतिः स्यादेव । लक्षणत्वेनोपलक्षितत्वात् *अव्यवहारेणेति । उक्तार्थमेवानुवदन्नाह *सा वृद्धिरिति ।

२। उत्तरार्धं विवृण्वन् सम्बन्धासाधारणधर्ममाह *नष्टा निःक्रान्तेति । एतेन प्रसिद्धार्थनिरासः । अग्रिमेण पौ-नरुक्त्यापत्तेः । तृतीयान्तं पूर्णान्वयि । छिन्नं च, भक्तं निरूपणं च, तद्वदित्यर्थः । संख्यतया आह *पूर्णतादिति । इत्यसा-धारण्यमेव विशदयति *तत्रेति । तयोर्मध्ये इत्यर्थः । *चेत्, य-दि । तदेति शेषः । एतयोरपि । अत एवाह *उपभुक्तोऽपीति । अपिना नाशसमुच्चयः । *वृद्धिरपीति । प्रथमपादोक्तत्वात् । अपिना पूर्ववत्करणस्य समुच्चयः । *वृद्धिः, वृद्धिरपि । द्वितीय-पादोक्तत्वात् । वृद्धिर्नेति पाठे चाशब्दः समुच्चये । असङ्गतं तु तावन्मात्रमेवेति बोध्यम् ।

३। द्वितीयस्याप्युभयाधिविषयत्वं कथयन् तदसाधारणधर्म-माह *विनष्टे इति । विपद्लभ्यमाह *आत्यन्तिकनाशमिति । चार्थमाह *सोऽपीति । तत्स्वरूपस्यैवाभावादाह *मूल्यादीति । *तद्दाने, धनिना तस्मिन्दत्ते स्वीयं तादृशं सर्वं स लभते । *मूल्यं, मूलम् । एवमग्रे सर्वत्र । धनीत्यस्य मध्यमणिन्यायेनान्व-यः । विशेषमाह *यदीति । *मूलनाश इति । तथा सति सुतरां वृद्धिनाश इति भावः । *विनष्टे, अदत्ते तथेति शेषः ।

४। अव्यवहितापवादत्वेन तुर्यपादं सप्रतीकं व्याचष्टे *दै-वेति । अत एवाह *विनाशादिति । तत्रापि विशेषमाह *स्वा-

---

१ आधौ विनष्टे मूल्यादिद्वारेण अदत्ते च धनिनो मूलधनस्य ना-श इत्यर्थः ।

मि० गोप्याधेस्ताम्रकटाहादेरुपभोगे न वृद्धिर्भवति, अल्पेऽप्युपभोगे महत्यपि वृद्धिर्हातव्या। समयातिक्रमात्। तथा सोपकारे उपकारिणि बलीवर्दताम्रकटाहादौ भोग्याधौ सवृद्धिके हापिते हानिं व्यवहाराक्षमत्वं गमिते, नो वृद्धिरिति संबन्धः। नष्टो विकृतिं गतः ताम्रकटाहादिश्छिद्रभेदनादिना, पूर्ववत्कृत्वा देयः। तत्र गोप्याधिर्नष्टश्चेत्पूर्ववत्कृत्वा देयः। उपभुक्तोऽपि चेद्वृद्धिरपि हातव्या। भोग्याधिर्यदि नष्टस्तदा पूर्ववत्कृत्वा देयः। वृद्धिसद्भावे वृद्धिर्हातव्या। विनष्टश्च— आत्यन्तिकं नाशं प्राप्तः सोऽपि देयो मूल्यादिद्वारेण। तद्दाने सवृद्धिकं मूलं लभते धनी। यदि न ददाति तदा मूलनाशः।

विनष्टे मूलनाशः स्याद्दैवराजकृताद्दृते।

इति नारदवचनात्। ( व्य० प० १।१२६ )

दैवराजकृताद्दृते— दैवमग्न्युदकदेशोपप्लवादि। दैवकृताद्विनाशाद्विना। तथा स्वापराधरहिताद्राजकृतात्। दैवराजकृते तु विनाशे सवृद्धिकं मूल्यं दातव्यम् अधमर्णेन, आध्यन्तरं वा।

यथाह,

स्रोतसाऽपहृते क्षेत्रे राज्ञा चैवापहारिते।
आधिरन्योऽथ कर्तव्यो देयं वा धनिने धनम्॥ इति।

तत्र स्रोतसाऽपहृते इति दैवकृतोपलक्षणम्॥ ५९॥

वा० १। किं चेति। विशेषान्तरमत्राहेत्यर्थः। नो इत्यस्य व्याख्या *नेति। ननु दोषाल्पत्वादयुक्तमेतत् अत आह *अल्पेऽपीति। समयः सङ्केतः। चार्थमाह *तथेति। अथेति तत्र पाठान्तरम्।

मा० १। धनि नेति । धनकृष्णाधिनियमे आहेत्याः । तद्धनि पानाभावादुपयोगाभावेन न्यासतः * आधीति । अत एव गोप्यस्य स्वीकरणमात्रनिर्वाहेऽपि भोग्ये तन्निर्वाहानहत्व-लक्षणमित्याह * उपभोगेति । तथा च यथार्थव्यवहारः । तत्क-सामाक्षेप्यादाह * आधीति । तेनुतस्यैवोपयोगादाह * न सार्धा-ति । मात्रपदेन विशिष्टस्य सिद्धतमत्वं सूचितम् । अत एव भा-गवधारणानुवृत्तिः । तदेवा तमनुपपन्नमितम् । उपदेशेति पाठा-न्तरम् । भोग्यस्य भोगेन सिद्धिरित्यत्र मानमाह * यथाहेति ।

२। यद्वा स्वीकरणादित्यस्य व्याख्या * उपभोगादिति । भुज पालनाभ्यवहारयोरित्युक्तेर्गोप्याधावुपभोगः परिपालनं, भोग्यस्याभ्यवहरणं फलानुपभोग इति यावत् । उपशब्दस्तु सा-मीप्यसामर्थ्यव्याप्त्याचार्यकरणदोषाख्यापनदाक्षिण्यरम्भारम्भ-पूजोद्योगकार्यादत्यमरणलाद्गानादानशनेषु वर्तते इति यथासम्भवं योज्यः । अत्र पक्षे उभयत्र मानमाह * यथाहेति । *भोग इति । उक्तमर्थकमिदम् । * अन्यथा, उक्तभोगाभावे, साक्ष्यादिमा-त्रेण नेत्यर्थः ।

३। ननु किमनेन प्रकृते साधितमत आह * अस्य चेति । आधेः स्वीकरणात्सिद्धिरित्यस्येत्यर्थः । * इतीति । इत्युक्ता-र्थसिद्धिः फलमित्यर्थः । फलत्वमेव विशदयति * येति । स्वीकारपदमुक्तार्थकम् ।

४। रक्ष्यमाणोऽपीत्यादि व्याचष्टे * सचाधिरिति । द्विविध इत्यर्थः । उक्तिसामर्थ्यादाह * प्रयत्नेनेति । अविरोधायाह *कालेति।चेदर्थमाह * यदीति। असारेत्यादिव्याख्या * अवि-कृत एवेति । विकृते प्रागुक्तत्वेनापौनरुक्त्यायेदमुक्तम् । * ततः, तदा । यद्वा तत इत्यस्यान्य इत्यत्रान्वयः । तदेति शेषः। तदेत्येव

पराभेति। *राजकृतात्, विनाशाद्धिनेत्यनुपद्यते। अनेन सूचितं तत्र विशेषमाह * दैवेति। ईदृशे स्थलेऽधमर्णस्यैव वस्तुनाशो नोत्तमर्णस्येति भावः। तदसम्भवे आह * आभ्यन्तरं वेति।

७। * स्रोतसा, नद्यादिसम्बन्धिना। * राज्ञेति। अधिकृतद्वारेति भावः। अत एव णिच्। आधिशब्दो ऽव्यवहिततदानन्तर्ये। *धनं, सवृद्धिकम्। तत्र न्यूनतां निराचष्टे * तत्रेति। तयोर्मध्ये इत्यर्थः। द्वितीयस्य कण्ठत उक्तत्वादिति भावः। *दैवेति। दैवकृतमात्रेत्यर्थः ॥ ५९ ॥

मि० अपिच ।

या० आधेः स्वीकरणात्सिद्धी रक्ष्यमाणोऽप्यसारताम् ।
यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत् ॥ ६० ॥

मि० आधेर्भोग्यस्य गोप्यस्य च स्वीकरणादुपभोगादाधिग्रहणसिद्धिः भवति, न साक्षिलेख्यमात्रेण, नाप्युद्देशमात्रेण।

यथाह नारदः, ( व्य० प० १।१३९ )

आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा ।
सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा ॥ इति।

अस्य च फलम्— ( याज्ञ० २।२३ )

आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा। इति।

या स्वीकारान्ता क्रिया सा पूर्वा बलवती, स्वीकाररहिता तु पूर्वाऽपि न बलवतीति। स चाधिः प्रयत्नेन रक्ष्यमाणोऽपि कालवशेन यद्यसारतामविकृत एव सवृद्धिकमूलद्रव्यापर्याप्ततां गतस्तत आधिरन्यः कर्त्तव्यो, धनिने धनं वा देयम्। रक्ष्यमाणोऽप्यसारतामिति वदताऽऽधिः प्रयत्नेन रक्षणीयो धनिनेति ज्ञापितम्॥६०॥

ज्ञादन्यथाकरणे, सत्यङ्कारकृतमर्पयेत् । क्रयविक्रयादिव्य- वस्थानिर्वाहाय यदङ्गुलीयकादि परहस्ते कृतं तद्व्यव- स्थातिक्रमे द्विगुणं दातव्यम् । तत्रापि येनाङ्गुलीयकाद्य- र्पितं स एव चेद्व्यवस्थामतिवर्तेत तेन तदेव हातव्य- म् । इतरश्चेद्व्यवस्थातिवर्ती तदा तदङ्गुलीयकादि द्विगुणं प्रतिदापयेदिति ॥ ६१ ॥

व्या० १। * इत्यर्थेति । इतिपूर्वार्द्धोक्तव्याकृतवाक्यगोचरार्थनि- प्रपञ्चस्य तत्रान्वयेनेत्यर्थः । * शोभनेति । सदाचरणमित्यर्थः । शुश्रूषा साधनं करोति सम्यक् । अर्थमाह * चरित्रेणेत्यादिना । विनिगमकाभावादाह * प्रमाणतयेति ।

२। एवं पदस्य शाब्दमर्थमुक्त्वा तात्पर्यार्थमाह * एतदिति । तत्रात्मसात्कृतमाह * धनिन इति । द्विर्नामाह * यदेनेति । * पारिति । तदर्थमव्ययं भिन्नं पदं वा ।

३। एवं पदार्थमुक्त्वा वाक्यार्थमाह * तद्धनमिति । चरित्र- बन्धककृतमित्यर्थः । स इत्यस्य व्याख्या * नृप इति । सहयुक्ते तृतीयेत्याह * सहेति ।

४। तदपवादत्वं स्पष्टयितुमाह * अयमाशय इति । * एवं- रूपमिति । चरित्रहेतुकमित्यर्थः ।

५। उत्तरार्धं व्याचष्टे * तथेति । तत्रादौ सत्यमितिपदार्थम- र्थान्तरस्यानुपयोगिनो निरासायाह * करणमित्यादि । * स- त्यंकार इति । समयकरणमित्यर्थः । शपथकरणमिति यावत् । सूत्रे कार इति घञन्ताणन्तयोस्तन्त्रेण निर्देश इति भावः । शा- ब्दस्य वाक्यार्थस्यास्फुटत्वादाह * अयमिति । आशय इत्य- र्थः । * तत्, सत्यंकारकृतं द्रव्यम् ।

६। संभवादाह * अन्योऽर्थ इति । चरित्रेति पद्यस्येति भा-

पाठान्तरम् । तदेति सूचितार्थमाह *रक्षणीयइति । अन्यथोक्तिवैयर्थ्यं स्पष्टमेव ॥ ६० ॥

मि० आधिः प्रणश्येत् द्विगुणे इत्यस्यापवादमाह ।

या० चरित्रबन्धककृतं स वृद्ध्या दापयेद्धनम् ।

सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥ ६१ ॥

मि० चरित्रं शोभनचरित्रं चारित्रेण बन्धकं चरित्रबन्धकं तेन यद्द्रव्यमात्मसात्कृतं पराधीनं वा कृतम्, एतदुक्तं भवति— धनिनः स्वच्छाशयत्वेन बहुमूल्यमपि द्रव्यमाधीकृत्याधमर्णेनाल्पमेव द्रव्यमात्मसात्कृतम्; यदि वाऽधमर्णस्य स्वच्छाशयत्वेनाल्पमूल्यमाधिं गृहीत्वा बहु द्रव्यमेव धनिनाऽधमर्णाधीनं कृतमिति, तद्धनं स नृपो वृद्ध्या सह दापयेत् । अयमाशयः । एवंरूपं बन्धकं द्विगुणीभूतेऽपि द्रव्ये न नश्यति किं तु द्रव्यमेव द्विगुणं दातव्यमिति । तथा, सत्यङ्कारकृतं— करणं कारः । भावे घञ् । सत्यस्य कारः सत्यङ्कारः । कारे सत्यागदस्येति मुम् । सत्यङ्कारेण कृतं सत्यङ्कारकृतम् । अयमभिसन्धिः । यदा बन्धकार्पणसमये एवेत्थं परिभाषितं द्विगुणीभूतेऽपि द्रव्ये मया द्विगुणं द्रव्यमेव दातव्यं नाधिनाश इति तदा तत् द्विगुणं दापयेदिति ।

अन्योऽर्थः । चरित्रमेव बन्धकं चरित्रबन्धकम् । चरित्रशब्देन गङ्गास्नानाग्निहोत्रादिजनितमपूर्वमुच्यते । यत्र तदेवाधीकृत्य यद्द्रव्यमात्मसात्कृतं तदा तत्र तदेव द्विगुणीभूतं दातव्यं नाधिनाश इति । आधिप्रस-

याचाद्विनौ न्यस्यापेदाह * उपस्थितेति । प्रसंगादाह * प्रयुक्तेति । न्यस्यैतदत्र व्याख्या * निधायेति । अर्थादाह * अधमर्ण इति । आधिमिन्याद्रिथेदाह * स्वीकार्यमिति ॥ ६२ ॥

मि० अथ प्रयोजकाऽसन्निधिनिमित्तमाधि धनस्य ग्रहीतारो न सन्ति, यदि वा असंनिहिते प्रयोजकेऽधिविक्रयेण धनदित्साऽधमर्णस्य, तत्र किं कर्तव्यमित्यपेक्षित आह ।

या० तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः ।

मि० तस्मिन्काले यदाधेर्मूल्यं तत्परिकल्प्य तत्रैव धनिनि तमाधिं वृद्धिरहितं स्थापयेत्, न तत ऊर्ध्वं विवर्धते । यावद्धनी धनं गृहीत्वा तमाधिं मुञ्चति, यावद्वा तन्मूल्यद्रव्यमृणी न प्रवेशयति ।

मि० यदा तु द्विगुणीभूतेऽपि धने द्विगुणं धनमेव ग्रहीतव्यं न त्वाधिनाश इति विचारितमृणग्रहणकाले एव तदा द्विगुणीभूते द्रव्ये असन्निहिते चाधमर्णे धनिना किं कर्तव्यमित्यत आह ।

या० विना धारणिकाद्वापि विक्रीणीत ससाक्षिकम् ॥ ६३ ॥

मि० धारणिकादधमर्णाद्विना अधमर्णे असन्निहिते साक्षिभिस्तदाप्तैश्च सह तमाधिं विक्रीय तद्धनं गृह्णीयाद्धनी । वाशब्दो व्यवस्थितविकल्पार्थः । यदृणग्रहणकाले द्विगुणीभूतेऽपि धने धनमेव ग्रहीतव्यं न त्वाधिनाश इति न विचारितं तदा आधिः प्रणश्येद्द्विगुणे इत्याधिनाशः । विचारिते त्वयं पक्ष इति ॥ ६३ ॥

यः । विशेषणसमासमाह *चरित्रमिति । अत्र पक्षे चरित्रशब्दे-न सदाचरणं नोच्यते किं तु तज्जन्यं फलमित्याह *चरित्रेति । अत्र समासः प्राग्वदेवेति सूचयन्वाक्यार्थमाह *यत्रेति । *तदे-व, चरित्ररूपबन्धकमेव । * तदेव, आत्मसात्कृतं द्रव्यमेव ।

७। प्रकृतासंबद्धत्वादाह *आधीति। पदार्थः प्रागुक्त एवेति वाक्यार्थमाह * क्रयेति । आदिना दानप्रतिग्रहादि । निमित्ता-भावे तथाकरणानौचित्यादाह * व्यवस्थातीति । विशेषमाह *तत्रापीति । तयोर्मध्येऽपीत्यर्थः । *व्यवस्थामिति। तामुल्लङ्घ्य वर्तते इत्यर्थः । तदेति शेषः । *इतरः, ग्रहीता ॥ ६१ ॥

मि० किंच ।

या० उपस्थितस्य मोक्तव्य आधिः स्तेनोऽन्यथा भवेत् ।
प्रयोजकेऽसति धनं कुले न्यस्याधिमाप्नुयात् ॥ ६२ ॥

मि० धनदानेनाधिमोक्षणायोपस्थितस्याधिर्मोक्त-व्यो धनिना, न वृद्धिलोभेन स्थापयितव्यः । अन्यथा अमोक्षणे स्तेनः चौरवद्दण्ड्यो भवति । असन्निहिते पुनः प्रयोक्तरि कुले तदाप्तहस्ते सवृद्धिकं धनं निधा-याधमर्णः स्वीयं बन्धकं गृह्णीयात् ॥ ६२ ॥

बा० १। *किं चेति। प्राग्वत्। योग्यतया आह * धनेति। अधमर्ण-स्येति भावः । एतत्तात्पर्यार्थमाह * न वृद्धीति । अन्यथेत्यस्य व्याख्या * अमोक्षणे इति । तावन्मात्रे इष्टापत्तेरतिदेशपरतया लभ्यं तात्पर्यार्थमाह * चौरवदिति ।

२। असतीति च्छेदेन नाशाविवक्षया द्वितीयार्धार्थमाह *अस-न्निहितेइति। *पुनः, तु । प्रयोजके इत्यस्य व्याख्या * प्रयोक्त-रीति । ऋणस्येति शेषः । धनदातर्युत्तमर्णे इत्यर्थः । यथाश्रुतार्थे-

त्यर्थः । * धनं धन, तावत् । * अर्थान्तरमिति । त्यजेदिति शेषः । *अथमिति । निक्षेपादिनिर्गमादिशीघ्रफलनानन्तरं इत्यर्थः । तथा च सिद्धान्तेऽङ्कनकालेन कर्तव्यमपि ननु पूर्वोक्तरीत्या पक्षान्तरत्वेनेदमुक्तमित्यर्थः ॥ ६३ ॥

मि० भोग्याधौ विशेषमाह ।

या० यदा तु द्विगुणीभूतमृणमाधौ तदा खलु ।
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥६४॥

मि० यदा प्रयुक्तं धनं स्वकृतया वृद्ध्या द्विगुणीभूतं तदाऽऽधौ कृते तदुत्पन्ने आध्युत्पन्ने द्रव्ये द्विगुणे धनिनः प्रविष्टे धनिनाऽऽधिर्मोक्तव्यः । यदि वा, आदावेव आधौ दत्ते, "द्विगुणीभूते द्रव्ये त्वयाऽऽधिर्मोक्तव्य" इति परिभाषया कारणान्तरेण वा भोगाभावेन यदा द्विगुणीभूतमृणं तदाऽऽधौ भोगार्थं धनिनि प्रविष्टे तदुत्पन्ने द्रव्ये द्विगुणे सत्याधिर्मोक्तव्यः । अधिकोपभोगे तदपि देयम् । सर्वथा सवृद्धिकमूलर्णापाकरणार्थाध्युपयोगविषयमिदं वचनम् । तमेनं क्षयाधिमाचक्षते लौकिकाः । यत्र तु वृद्ध्यर्थ एवाध्युपभोग इति परिभाषा तत्र द्वैगुण्यातिक्रमेऽपि यावन्मूलदानं तावदुपभुङ्क्ते एवाधिम् । एतदेव स्पष्टीकृतं—

बृहस्पतिना,

ऋणी बन्धमवाप्नुयात् ।
फलभोग्यं पूर्णकालं दत्त्वा द्रव्यं च सामकम् ॥
यदि प्रकर्षितं तत्स्यात्तदा न धनभाग्धनी ।
ऋणी च न लभेद् बन्धं परस्परमतं विना ॥ इति ।

मा० १। उत्तरावतरणमाह * अथेति। शङ्कायामयम्। शङ्कान्तरमाह * यदि वेति। * दित्सा, तद्दानेच्छा। षष्ठ्यन्तस्य पूर्वान्वयः। * तत्र, उभयत्र। वक्ष्यमाणवचने वाशब्देनार्थद्वयसूचनाच्छङ्काद्वयपत्र। फलतो व्याचष्टे * तस्मिन्निति। मोक्षणोद्यमकाले इत्यर्थः। षष्ठ्यर्थे बहुव्रीहिः, उभयत्राधिरन्यपदार्थ इति शब्दार्थः स्पष्ट एवेति सूचयन्नाह *यत्तस्येति। तत्रेत्यस्य व्याख्या सर्वं वाक्यमिति न्यायेन * तत्रेवेति। तस्याप्यर्थमाह *धनिनीति। अस्यापि तात्पर्यमाह * न तत इति।

२। स्थितेरवधिं सूचयन् अथ मयोक्तेत्याद्यशङ्कोत्तरं वाशब्दसूचितमाह * यावद्धनीति। वाशब्दसूचितं तं कथयन्नेव यदि वेत्यादिद्वितीयशङ्कोत्तरमाह * यावद्वेति। विक्रयेच्छात आह * तन्मूल्येति। * ऋणी नेति। अधमर्णस्तदन्तिकं न प्रापयतीत्यर्थः।

उ० ३। उत्तरावतरणमाह * यदा त्विति। उत्तरानुरोधेनोत्तमर्णस्यैवेदमित्याह * ग्रहीतव्यमिति। त्वयेति शेषः। *विचारितमिति। अधमर्णेनेति भावः। असन्निहिते चेति पाठः। वेति पाठे स चार्थे। धारणकादिति पाठे बाहुलकात्कर्तृल्युडन्तात्स्वार्थे कः। आधिं धारयतीति धारणकस्तस्मात्। यद्वा धारणं करोतीति णिजन्तात् ण्वुल्। धारणिकादिति पाठे आधेर्धारणं यस्यास्तीति मत्वर्थे ठन् इति केचित्। तदर्थमाह *अधमर्णादिति। मरणनिरासायाह * अधमर्णेऽसन्निहिते इति। अपीत्यस्य ससाक्षिकमित्यत्रान्वयेन तत्समुच्चितमाह * तदासैश्चेति। विक्रीणीतेत्यस्य तात्पर्यार्थमाह * विक्रीयेति।

४। यथाश्रुतविकल्पस्य गाम्बदसंभवात् वाशब्दस्याशयमाह * वाशब्द इति। तत्त्वमेवाह * यदर्णेति। * तदा, तस्मिन्काले एवे-

ति। फलभूते इत्यर्थः। धनिन इति शेषोऽवगमः। अधिकरणस्य क्त-त्वविवक्षायां षष्ठी। *वर्धिते,गते। ऋणदानेन यद्दत्तं प्रयुक्तं धनं वृद्ध्या सह द्विगुणं जातं पश्चादाधिर्दत्तो भोगार्थं यदा तदा आधेः सकाशाद्द्रव्यन्तरे धने द्विगुणे धनिनि प्राप्ते सति आधिर्मोक्त-व्यस्तेनेत्यर्थः।

२। संभवात् व्याख्यानान्तरमाह *यदि वेति। *आदावेव, ऋणग्रहणकाले एव। भोगाभावे परिभाषान्तरं हेतुमाह * द्विगु-णीभूते इति। भोक्तव्य इति पाठः। नं इत आरभ्येति भावः। ऋणग्रहणकाले एवाधिं ददधमर्णः एवं ब्रवीति—यदा द्रव्यं वृद्ध्या द्विगुणीभूतं तदा आधिर्भोक्तव्य इति, उत्तमर्णोऽपि तथेत्य-नुजानीते इत्येवं परिभाषया बाधेन पूर्वं भोगाभावेन द्वैगुण्ये जाते ततो भोगे प्रारब्धे स्वीयद्विगुणधनलाभानन्तरमाधिरूपभो-गाभावः किं तु मोचनम् इत्यर्थः। कारणान्तरेण भोगाभावसंभ-वादाह * कारणान्तरेण वेति। उत्तमर्णस्य स्वच्छाशयत्वेना-लुब्धत्वेन च धने द्विगुणे इममाधिं भोक्ष्ये नेत आरभ्येति प्रति-ज्ञायाम् अधमर्णेन तथा कुर्वित्यङ्गीकृते उत्तमर्णस्य सत्यवचनत्वरू-पकारणान्तरेण बाधेन पूर्वं भोगाभावेनेत्याद्यर्थः। स्वरूपतः प्रवे-शस्य पूर्वमेव सत्त्वादाह * भोगार्थमिति। * तदापि, अधिकमुप-भुक्तमपि। अपिना ऽऽधिसमुच्चयः। तात्पर्यार्थमाह * सर्वथे-ति। पक्षद्वयेऽपीत्यर्थः। * आध्युपयोगेति। तदपाकरणार्यो य आध्युपभोगस्तद्विषयकामित्यर्थः। उपभोगेत्येव पाठो वा। *क्षयाधिमिति। तादृशऋणनाशकाधिमित्यर्थः। तथा च पक्षद्वये-ऽपि द्वैगुण्ये सति भोगे कृते स्वीयाद्विगुणलाभे एवाधिर्मोक्तव्यो

१ आधिदानकालादारभ्य न भोक्तव्यः किंतु वृद्ध्या द्विगुणीभव-नोत्तरमेव भोक्तव्य इत्यर्थः।

अस्यार्थः। फलं भोग्यं यस्यासौ फलभोग्यः। बन्ध आधिः । स च द्विविधः, सवृद्धिमूलापाकरणार्थो वृद्धिमात्रापाकरणार्थश्च । तत्र सवृद्धिमूलापाकरणार्थं तं बन्धं, पूर्णकालं—पूर्णः कालो यस्यासौ पूर्णकालस्तम् आप्नुयादृणी। यदा सवृद्धिकं मूलं फलद्वारेण धनिनः प्रविष्टं तदा बन्धमाप्नुयादित्यर्थः । वृद्धिमात्रापाकरणार्थं तु बन्धं सामकं दत्त्वाऽऽप्नुयादृणी। समं मूलं सममेव सामकम्।

अस्यापवादमाह—

यदि प्रकर्षितं तत्स्यात्—

तद् बन्धकं प्रकर्षितमतिशयितं वृद्धेरप्यधिकफलं यदि स्यात्, तदा न धनभाग्धनी—सामकं न लभेत धनी। मूलमदत्त्वैवर्णी बन्धमाप्नुयादिति यावत्। अथ तु अप्रकर्षितं तद् बन्धकं वृद्धयेऽप्यपर्यासं तदा सामकं दत्त्वापि बन्धं न लभेताधमर्णः। वृद्धिशेषमपि दत्त्वैव लभेतेत्यर्थः । पुनरुभयत्रापवादमाह, परस्परमतं विना। उत्तमर्णाधमर्णयोः परस्परानुमत्यभावे यदि प्रकर्षितमित्याद्युक्तं, परस्परानुमतौ तूत्कृष्टमपि बन्धकं यावन्मूलदानं तावदुपभुङ्क्ते धनी, निकृष्टमपिमूलमात्रदानेनैवाधमर्णो लभेतेति ॥ ६४ ॥

इति ऋणादानप्रकरणम् ॥

बा॰ १। तुमूचितमाह *भोग्याधाविति।प्रयुक्तम्,उत्तमर्णेन केवलं ऋणत्वेन दत्तम्। *कृतया,स्वकृतया। क्वचित्तथैव पाठः।*तदा, द्विगुणीभवनकाले । *आधौ कृते, सति । तन्निर्वाहार्थमिति भावः । कृते इति शेषपूरणम् । तदुत्पन्ने इत्यस्य व्याख्या *आधी-

अथ उपनिधिप्रकरणम् ॥ ४ ॥

मि० उपनिधिं प्रस्तौति ।

या० वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते ।

द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥ ६५ ॥

मि० निक्षेप्यद्रव्यस्याधारभूतं द्रव्यान्तरं वासनं करण्डादि तत्स्थं वासनस्थं द्रव्यं रूपसङ्ख्याविशेषमनाख्याय अकथयित्वा मुद्रितमन्यस्य हस्ते रक्षणार्थं विश्रम्भाद्यदर्प्यते स्थाप्यते तद्द्रव्यमौपनिधिकमुच्यते ।

यथाह नारदः, (नोपलभ्यते)

असङ्ख्यातमविज्ञातं समुद्रं यन्निधीयते ।

तज्जानीयादुपनिधिं निक्षेपं गणितं विदुः ॥ इति ।

प्रतिदेयं तथैव तत्— यस्मिन् स्थापितं तेन यथैव पूर्वं मुद्रादिचिह्नितमर्पितं तथैव स्थापकाय प्रतिदेयं प्रत्यर्पणीयम् ॥ ६५ ॥

व्या० १। * उपनिधिमिति।तत्सम्बन्धिनमित्यर्थः।उद्देशक्रमादिति भावः । निक्षेपोपनिध्योः स्वल्प एव भेद इति सूचयन्नाह * निक्षेप्येति । आदिना सम्पुटकादिः ।वासनस्थं द्रव्यमिति पाठः । यत् द्रव्यमिति पाठे तदिति शेषः । अनाख्याने कर्माकाङ्क्षत्वादाह * रूपेति । तद्रूपविशेषमित्यर्थः।तस्याप्यर्थमाह * मुद्रितमिति । अर्पणे फलहेतू आह * रक्षणेति । अनेनोपनिधीयते इति निक्षिप्यते इति च व्युत्पत्तिः सूचिता। औपनिधिकमित्यत्र विनयादित्वात्स्वार्थे ठगिति भावः ।

२ । * असंख्यातम्, अगणितम् । * अविज्ञातम्, रूप-

न ततः प्रागिति सिद्धम्।

३। विशेषमाह * यत्र त्विति। पूर्वानुषङ्गार्थमाह। *ऋणीति। स्वरसतोऽर्थद्वयप्रतीतेराह * अस्यार्थ इति। वाक्यार्थबोधोपयुक्तमादावाह * फलमिति। मात्रपदेन मूलव्यवच्छेदः। वाक्यार्थमाह *तत्रेति। तयोर्मध्ये इत्यर्थः। अस्याप्यर्थमाह *यदेति। एवं चेदं प्रागुक्तार्थकमेव। धनिन इति प्राग्वत्। द्वितीयमाह * वृद्धीति। चार्थमाह * त्विति। सममित्यस्यार्थो * मूलमिति। स्वार्थेऽण्कावित्याह * सममेवेति।

४। *अस्यापवादमिति। बृहस्पतिरेव दत्त्वा द्रव्यं च सामकमिति स्वोक्तमपवदतीत्यर्थः। प्रतीकमाह *यदीति। व्याचष्टे * तदिति। न धनभाग्धनीत्यस्य व्याख्या * सामकं न लभेत धनीति। तत्तात्पर्यमाह * मूलमिति। ऋणी च न लभेद् बन्धमित्यंशं व्याचष्टे * अथ त्विति। अप्रकर्षितमित्यस्य व्याख्या * वृद्ध्येऽपीति। अपिना मूलसमुच्चयः। अनुषङ्गेणाह * सामकमिति। चोऽप्यर्थ इत्याह * अपीति। व्युत्क्रमे इति भावः। सर्वथा लाभाभावो न प्रतिपाद्य इत्याह * वृद्धिशेषमिति। अपिना मूलशेषसमुच्चयः।

५। * पुनरुभयत्रेति। यदि प्रेत्याद्यर्धोक्तम् ऋणी चेत्यंशं च स एवापवदतीत्यर्थः। मतमित्यत्र भावे क्त इत्याह * अनुमत्यभावेइति। * उक्तमिति। इत्याद्युभयमुक्तमित्यर्थः। *यावन्मूलेति। वृद्धिदानमत्रोभयत्र न। अत एवाग्रे * मात्रेति। *विकृष्टम्, अपकृष्टम्। विप्रकृष्टमिति पाठान्तरम्। विगतप्रकर्षकमिति तदर्थः। निकृष्टमिति पाठः सुगम एव॥ ६४॥

इति ऋणादानप्रकरणम्।

तः । अत एवाह * समुद्रमिति । निक्षेपपदार्थमाह * निक्षेपमिति । * गणितं, संख्यातम् ।

३। तुर्यपादं व्याचष्टे * प्रतीति । * अर्पितं, स्थापकेन ॥६५॥

मि० प्रतिदेयमित्यस्यापवादमाह ।

या० न दाप्योऽपहृतं तं तु राजदैवकतस्करैः ।

मि० तमुपनिधिं राज्ञा दैवेनोदकादिना तस्करैर्वाऽपहृतं नष्टं न दाप्योऽसौ यस्मिन्नुपहितम् । धनिन एव तत् द्रव्यं नष्टं, यदि जिह्मकारितं न भवति ।

यथाह नारदः, ( व्य० प० २।९ )

ग्रहीतुः सह योऽर्थेन नष्टो नष्टः स दायिनः ।

दैवराजकृते तद्वत् नचेत् तत् जिह्मकारितम् ॥

इति ।

मि० अस्यापवादमाह ।

या० भ्रेषश्चेन्मार्गितेऽदत्ते दाप्यो दण्डं च तत्समम् ॥६६॥

मि० स्वामिना मार्गिते याचिते यदि न ददाति तदा तदुत्तरकालं यद्यपि राजादिभिर्भ्रेषो नाशः संजातस्तथापि तद्द्रव्यं मूल्यकल्पनया धनिने ग्रहीता दाप्यो, राज्ञे च तत्समं दण्डम् ॥ ६६ ॥

१। या० तं तु राजदैवकतस्करैरिति पाठः।स्वार्थे कः। दैविकेति पाठे प्राग्वत् स्वार्थे ठक् । तदाह * तमिति । असावित्यस्यार्थमाह * यस्मिन्नुपहितमिति । विशेषं कथयन् तात्पर्यार्थमाह * धनिन एवेति । तदेति शेषः । * जिह्मेति । कपटप्रयोजितमपहरणमित्यर्थः। जिह्मस्य प्रयोजकत्वात् णिच् । * ग्रहीतुरिति । ग्रहीतुरर्थेन धनेन सह य उपनिध्यादिर्नष्टः स दायिनो

२। नन्वनुज्ञयापि स्वेच्छया गृहीताः प्रत्याख्यानयोग्या इत्यत आह * स्वाम्य-ननुज्ञयेति । प्रागुक्तमाह * प्रतिदिनमिति । प्रत्यहमिति ल्यप्‌हन्वोरिति सूत्रेणाह * आर्जीयमिति । सङ्ग्रहेणाह * रूपभू-केश्वति । अर्थान्तरम् । यत्र नास्ति संभवस्तत्राह * व्यवहारेति या मर्यादाऽष्टिना व्यवहारमिति । एवं च स्वकार्यनिवृत्तिकल्पना र्स-ध्यः । विशेषानुक्तवाये आह * उपभोगेति । द्वितीये आह * लाभेति । नेति पाठः । चः पादपूरणे इत्याह * चं नेति । प्राग्वत् सौदृश्यमित्यस्यार्थद्वयमाह * उपभोगे इति । * दाप्यः, दाप्योऽपि । अपरत्र सम्बन्धः ।

३। नात्र प्रागुक्ता वृद्धिरित्याह * वृद्धिमप्राप्तं नेति । मध्यन्तौ । * वृद्धिशेषम्, अवशिष्टा वृद्धिः । * क्रयं, क्रीतसम्बन्धिद्रव्यम् । * विक्रयं, विक्रीतरूपद्रव्यम् । याच्यमानमिति पाठः । अस्याः वृद्धेः सर्वत्र प्राप्तौ निषेधमाह * एतयोरिति । उक्तवृद्धिमप्राप्तं नेत्यर्थः ।

४। * उपेक्षेति । उपेक्षा च अज्ञानं च ताभ्यां नष्टमित्यर्थः । * तेनैव, कात्यायनेनैव । व्यासोऽप्येवमानुपूर्वीक एव । अव्य-वस्थां निराचष्टे * किञ्चिदिति ।

५। तत्रादौ याचितादिपदार्थानाह * विवाहाद्युत्सवेष्वित्या-दिना तथैव चेतीत्यन्तेन । आनीतामिति छेदः । तत्र हेतुमाह *स्वामिने इति । गृहस्वामिनेऽदर्शयित्वेत्यत्राकारप्रश्लेषः । षष्ठी-पक्षेऽप्येवम् । सा प्राग्वत् । * तादिति । गृहस्वामीत्यर्थः । *प्र-क्षेपो, न्यसनम् । तत्र हेतुमाह * गृहेति । इतिर्हेतौ । * समक्ष-मिति । दर्शनपूर्वकमित्यर्थः । अत एव निक्षेपं गणितं विदुरिति प्रागुक्तनारदैकवाक्यतेति बोध्यम् । द्वितीयमाह * प्रतिन्यासस्य-चेति । तत्स्वरूपमाह * परस्परेत्यादिना न्यस्तस्येत्यन्तेन ।

किञ्चिन्न्यूनमिति चतुर्थांशहीनम् ।

मि० उपनिधेर्धर्मान् याचितादिष्वतिदिशति ।

या० याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिः ॥६७॥

मि० विवाहाद्युत्सवेषु वस्त्रालङ्कारादि याचित्वाऽऽनीतं याचितम्। यत् एकस्य हस्ते निहितं द्रव्यं तेनाप्यनु पश्चादन्यहस्ते स्वामिने देहीति निहितं तत् अन्वाहितम्। न्यासो नाम गृहस्वामिनेऽदर्शयित्वा तत्परोक्षमेव गृहजनहस्ते प्रक्षेपो, गृहस्वामिने समर्पणीयमिति । समक्षं तु समर्पणं निक्षेपः । आदिशब्देन सुवर्णकारादिहस्ते कटकादिनिर्माणाय न्यस्तस्य सुवर्णादेः, प्रतिन्यासस्य च परस्परप्रयोजनापेक्षायां त्वयेदं मदीयं रक्षणीयं मयेदं त्वदीयं रक्ष्यते इति न्यस्तस्य ग्रहणम् ।

यथाह नारदः, ( व्य० प० २।१४ )

एष एव विधिर्दृष्टो याचितान्वाहितादिषु ।

शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च ॥ इति ।

एतेषु याचितादिष्वयं विधिः उपनिधेर्यः प्रतिदानादिविधिः स एव वेदितव्यः ॥ ६७ ॥

इति उपनिधिप्रकरणम् ॥

बा० १। यद्यपि सोदयोपनिधिदानरूपविशेषोऽपि वक्ष्यमाण इति "अथ भोक्तारं प्रत्याह" इत्येवोचितं तथापि पूर्वं तद्दानस्य मुख्यत्वं दण्डस्य गौणत्वमिति पश्चादुपात्तदण्डप्रसङ्गेन वक्ष्यमाणेन वैपरीत्यं तत्र तथैव पाठादिति तेनैव सङ्गतिर्न तु तेनेति सूचयन्नाह * भोक्तारमिति । उक्तदण्डप्रसङ्गादिति भावः । *दण्डं, तत्सहितम् ।

लिखितः स्मारितश्चैव यदृच्छाऽभिज्ञ एव च ।
गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः कृतः ॥ इति ।

लिखितादीनां च स्वरूपं कात्यायनेनोक्तम्,

अर्थिना स्वयमानीतो यो लेख्ये संनिवेश्यते ।
स साक्षी लिखितो नाम स्मारितः पत्रकादृते ॥ इति ।

स्मारितः पत्रकादृते इत्यस्य विवरणं तेनैव कृतम्,

यस्तु कार्यप्रसिद्ध्यर्थं दृष्ट्वा कार्यं पुनः पुनः ।
स्मार्यते ह्यर्थिना साक्षी स स्मारित इहोच्यते ॥ इति ।

यस्तु यदृच्छयाऽऽगतः साक्षी क्रियते स यदृच्छाऽभिज्ञः । अनयोः पत्रानारूढत्वेऽपि भेदः—

तेनैव दर्शितः,

प्रयोजनार्थमानीतः प्रसङ्गादागतश्च यः ।
द्वौ साक्षिणौ त्वलिखितौ पूर्वपक्षस्य साधकौ ॥ इति ।

तथा,

अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम् ।
यः श्रावितः स्थितो गूढो गूढसाक्षी स उच्यते ॥ इति ।

तथा,

साक्षिणामपि यः साक्ष्यमुपर्युपरि भाषते ।
श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञितः ॥ इति ।

षड्विधस्याप्यकृतस्य भेदो—

नारदेन दर्शितः, ( व्य० प० १।१५१।१५२ )

ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥
कार्येष्वधिकृतो यः स्यादर्थिना प्रहितश्च यः ।
कुल्याः कुलविवादेषु विज्ञेयास्तेऽपि साक्षिणः ॥ इति ।

प्राड्विवाकग्रहणं लेखकसभ्योपलक्षणार्थम् ।

६। आदिशब्देनोभयग्रहणे मानमाह * यथाहेति । *एव एवेति ।

रहोदत्ते निधौ यत्र विसंवादः प्रजायते ।
विभावकं तत्र दिव्यमुभयोरपि च स्मृतम् ॥

इति प्रागुक्तरूप एवेत्यर्थः । *दृष्टइति । दिष्ट इति पाठान्तरम् । आदिना निक्षेपग्रहणम् । बहुवचनं व्यक्त्यभिप्रायम् । * शिल्पिषु, तन्न्यासेषु ।

७। एवं पदार्थानुक्त्वा वाक्यार्थमाह * एतेष्विति । मूलोक्तेषु इत्यर्थः । अयं विधिरित्यस्य व्याख्या * उपानिधेयेइति ॥ ६७ ॥

---

अथ साक्षिप्रकरणम् ॥ ५ ॥

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्—

इत्युक्तम् । तत्र भुक्तिर्निरूपिता । साम्प्रतं साक्षिस्वरूपं निरूप्यते । साक्षी च साक्षाद्दर्शनाच्छ्रवणाच्च भवति ।

यथाह मनुः, ( अ. ८. श्लो. ७४. )

समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिद्ध्यति । इति ।

स च द्विविधः कृतोऽकृतश्चेति । साक्षित्वेन निरूपितः कृतः, अनिरूपितोऽकृतः । तत्र कृतः पञ्चविधोऽकृतश्च षड्विध इत्येकादशविधः ।

यथाह नारदः, ( व्य० प० १।१४९ )

एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः ।
कृतः पञ्चविधो ज्ञेयः षड्विधोऽकृत उच्यते ॥ इति ।

तेषां च भेदस्तेनैव दर्शितः, ( व्य० प० १।१५० )

यथाह मनुः । ( अ. ८. श्लो ६८. )

स्त्रीणां साक्ष्यं स्त्रियः कुर्युरिति ।

सजातिसवर्णासंभवे सर्वे मूर्धावसिक्तादयो ब्राह्मणादयश्च सर्वेषु मूर्धावसिक्तादिषु ब्राह्मणादिषु च यथासंभवं साक्षिणो भवन्ति ।

उक्तलक्षणानां साक्षिणामसंभवे प्रतिषेधरहितानामन्येषामपि साक्षित्वप्रतिपादनार्थम् असाक्षिणो वक्तव्याः । ते च पञ्चविधा—

नारदेन दर्शिताः, ( व्य० प० १।१५७ )

असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः ।
वचनाद्दोषतो भेदात्स्वयमुक्तिर्मृतान्तरः ॥ इति ।

के पुनर्वचनादसाक्षिण इत्यत आह, (श्लो० १५८)

श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः ।
असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः ॥ इति ।

तापसा वानप्रस्थाः । आदिशब्देन पित्रा विवदमानादीनां ग्रहणम् ।

यथाह शङ्खः,

पित्रा विवदमानगुरुकुलवासिपरिव्राजकवानप्रस्था निर्ग्रन्थाश्चासाक्षिण इति ।

दोषादसाक्षिणो दर्शिताः, ( श्लो० १५९ )

स्तेनाः साहसिकाश्चण्डाः कितवा वञ्चकास्तथा ।
असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यते ॥ इति ।

चण्डाः कोपनाः । कितवा द्यूतकृतः ।

भेदादसाक्षिणां च स्वरूपं—

तेनैव दर्शितम्,

लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः ।
नृपे पश्यति तत्कार्यं साक्षिणः समुदाहृताः ॥ इति ।
ते साक्षिणः कीदृशाः कियन्तश्च भवन्तीत्यत आह ।

या० तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥ ६८ ॥
त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्त्तक्रियापराः ।
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः ॥ ६९ ॥

मि० तपस्विनस्तपःशीलाः । दानशीला दाननिरताः । कुलीना महाकुलप्रसूताः । सत्यवादिनः सत्यवदनशीलाः । धर्मप्रधानाः नत्वर्थकामप्रधानाः । ऋजवोऽकुटिलाः । पुत्रवन्तो विद्यमानपुत्राः । धनान्विता बहुसुवर्णादिधनयुक्ताः । श्रौतस्मार्तक्रियापराः नित्यनैमित्तिकानुष्ठानरताः । एवंभूताः पुरुषाः त्र्यवराः साक्षिणो भवन्ति । त्रयः अवराः न्यूना येषां ते त्र्यवराः । त्रिभ्योऽर्वाङ् न भवन्ति, परतस्तु यथाकामं भवन्तीत्यर्थः । जातिमनतिक्रम्य यथाजाति । जातयो मूर्द्धावसिक्तादयः, अनुलोमजाः प्रातिलोमजाश्च । तत्र मूर्द्धावसिक्तानां मूर्द्धावसिक्ताः साक्षिणो भवन्ति । एवमम्बष्ठादिष्वपि द्रष्टव्यम् । वर्णमनतिक्रम्य यथावर्णम् । वर्णा ब्राह्मणादयः । तत्र ब्राह्मणानां ब्राह्मणा एवोक्तलक्षणा उक्तसंख्याकाः साक्षिणो भवन्ति । एवं क्षत्रियादिष्वपि द्रष्टव्यम् ।

तथा, स्त्रीणां साक्ष्यं स्त्रिय एव कुर्युः ।

आहितोऽनानुरूपाणि वस्तूनां धर्मसंश्रितः।
मृतेऽपि तत्र साक्षी स्यात् षट्सु चान्वाहितादिषु॥
इति ॥ ६८ ॥ ६९ ॥

बा० १। अथ साक्षिनिरूपणस्य अनन्तरोक्तलक्षणभावात्मकसङ्गतिकथनपूर्वकमुपक्रमं मूलानुक्रमणिकान्तरमाह * प्रमाणमित्यादिसमुदायेनाद्येनान्वयत्वेन । * एतत्रेति । तेषां मध्ये । इते-शनसामान्यार्थत्वेन साक्षाद्दर्शनिमूर्तानिर्द्धयनायमाह * साक्षादिति । *समक्षं दर्शनात्साक्षादिति । मध्यशीर्षकस्य श्रवणेऽपि सम्बन्धः । समक्षदर्शनादिति पाठे तत्समनिपातनं पृथक् पदम् । तथा च साक्षाद्दर्शनात्साक्षात् श्रवणाच्च साक्ष्यं सिध्यत्येवेत्यर्थः । साक्षादित्यनेन परम्परानिवृत्तिः ।

नारदोऽपि, ( व्य० प० १।१४७ )

सन्दिग्धेषु तु कार्येषु द्वयोर्विवदमानयोः ।
दृष्टश्रुतानुभूतत्वात्साक्षिभ्यो व्यक्तदर्शनम् ॥ इति ।

* निरूपितः, प्रतिपादितः । * इतीति । मिलित इति शेषः । * एकादशेति ।

२। बृहस्पतिना तु द्वादशविध उक्तः,

लिखितो लेखितो गूढः स्मारितः कुल्यदूतकौ ।
यादृच्छिकश्चोत्तरश्च कार्यमध्यगतोऽपरः ॥
नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः । इति ।

अर्थिना पत्रे निवेशितो लिखितः । प्रत्यर्थिना ऽर्थिप्रेरणया निवेशितो लेखितः । कुड्यादिव्यवधानेन श्रावितो गूढः । पुनः पुनः कार्यं स्मार्यमाणः स्मारितः । यदृच्छयैवागतः साक्षी क्रियमाणो यादृच्छिकः । श्रवणाच्छ्रावणाद्वा साक्षिणामुपरि

साक्षिणां लिखितानां च निर्दिष्टानां च वादिना ।
तेषामेकोऽन्यथावादी भेदात्सर्वे न साक्षिणः॥ इति ।
तथा स्वयमुक्तिस्वरूपं चोक्तम्, ( श्लो० १६१ )
स्वयमुक्तिरनिर्दिष्टः स्वयमेवैत्य यो वदेत् ।
सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति॥ इति ।
मृतान्तरस्यापि लक्षणमुक्तम्, ( श्लो० १६२ )
योऽर्थः श्रावयितव्यः स्यात्तस्मिन्नसति चार्थिनि ।
क तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः॥ इति ।

येनार्थिना प्रत्यर्थिना वा साक्षिणां योऽर्थः श्राव-यितव्यो भवेत् यूयमत्रार्थे साक्षिण इति तस्मिन्नर्थि-नि प्रत्यर्थिनि वा असति मृते अर्थे वाऽनिवेदिते साक्षि-त्वं कस्मिन्नर्थे कस्य वा कृते साक्ष्यं वदत्विति मृता-न्तरः साक्षी न भवति ।

यत्र तु मुमूर्षुणा सुस्थेन वा पित्रा पुत्रादयः श्रा-विताः "अस्मिन्नर्थेऽमी साक्षिण" इति, तत्र मृता-न्तरोऽपि साक्षी ।

यथाह नारदः,
मृतान्तरोऽर्थिनि प्रेते मुमूर्षुश्रावितादृते ।
तथा, ( ना० व्य० प० १।९६ )

१ अस्य श्लोकस्य स्थाने ( व्य. प. १ । श्लो. १६० )
राज्ञा परिगृहीतेषु साक्षिष्वेकार्थनिश्चये ।
वचनं यत्र भिद्येत ते स्युर्भेदादसाक्षिणः ॥
इति श्लोकः एतत्समानार्थकः नारदस्मृतौ उपलभ्यते ।
२ अस्यार्धस्य स्थाने- ( व्य. प. १ । ९४ )
अन्यत्र श्रावितात्ख्यस्मात् स्वयमासन्नमृत्युना । इत्यर्धो दृश्यते ।

४। एवम् भाषाभेदं सलक्षणमुक्त्वा क्रियाभेदमाद्यं स्वरूपम् स्फुटत्वादाह * पट्टिकस्यार्थीति। अकुशलस्यार्थीत्यर्थः । चतुर्थमाह * व्यवहारिणार्पितेति । व्यवहारिणां कार्यस्वामिकृतो यः स्यादित्यर्थः । पञ्चमं दृष्टान्तमाह । * अर्थिनेति । अर्थिना वा प्रत्यर्थिना संनिवेशित इत्यर्थः । कृत्वा इत्यस्य निपातनिर्देशमाह * कृत्वेति । * नेष्टीति । प्रागुक्ताः सर्वेऽपीत्यर्थः । तथापि सभ्यस्य पूर्वनिपात उभयथानियतस्तथापि कालागमनोत्तरकालविवक्षयाऽत्र * लेखकेति । तयोरपीत्यर्थः । अत्र हेतुं कालागमनमेवाह * लेखक इति । * समुदाहृता इत्यादीति । तत्पाठादिति शेषः । राजनि तत्कार्यं पश्यति सति ते लेखकादयः, अनुपूर्वशः "स्वार्थे शम्" क्रमेण पूर्वाभावे परः परः इतिवत् अत्र साक्षिण इत्यर्थः ।

५। एवमुपोद्घातमुक्त्वा सूत्रमवतारयति * ते साक्षिण इति । कीदृशा इति स्वरूपप्रश्नः । कियन्त इति संख्याप्रश्नः । * धर्मप्रधाना इति । पुरुषार्थानां त्रयाणां मध्ये इति भावः ।

व्यासोऽपि,

धर्मज्ञाः पुत्रिणो मौलाः कुलीनाः सत्यवादिनः ।
श्रौतस्मार्तक्रियायुक्ता विगतद्वेषमत्सराः ॥
श्रोत्रिया न पराधीनाः सूत्यग्रामवासिनः ।
युवानः साक्षिणः कार्या ऋणादिषु विजानता ॥ इति ।

श्रोत्रिया न पराधीना इत्यत्र नेति पूर्वोत्तरान्वयि। अतो न वक्ष्यमाणविरोध इति बोध्यम् । पक्षान्तरमाह * सर्वे इति। अत्र

---

१ एतच्छ्लोकव्याख्याने एव-
श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः ।
असाक्षिणस्ते वचनात् नात्र हेतुरुदाहृतः ॥
इतिवक्ष्यमाणनारदवचनविरोध इत्यर्थः ।

भाणमाण उत्तरः। अभ्यासः मादृविवाकादिः। अन्यत् स्पष्टम्। अत्र मूलमनुपदमेव स्फुटीभविष्यति। अत्र लेखितो ऽधिकः।

३। * तेषां चभेदः, तेषां भेदश्च। * तेनैव, नारदेनैव। * यदृच्छाऽभिज्ञ इति। यदृच्छया स्वेच्छया अभिज्ञः मिश्रितः साम इति यावत्। यदृच्छाऽभिज्ञ इति पाठान्तरम्। तत्र यदृच्छया तत्पूर्वकमाप्त्याऽभिज्ञायते स्मार्यते स इत्यर्थः। आतश्चेति कर्मण्यक्। अत एव—

यदृच्छास्मारितः कुल्यास्तथा चोत्तरसाक्षिणः।

इति बृहस्पतिः। पञ्चविधः कृत इतीति पाठः। * लिखितादीनां च स्वरूपमिति। तेषां स्वरूपं त्वित्यर्थः। * संनिवेश्यतइति। वर्तमानसामीप्ये इति भूते लट्। संनिवेशित इत्यर्थः। * पत्रकात्. पत्रसन्निवेशात्। पौनरुक्त्यं परिहरति * स्मारित इति। * तेनैव, कात्यायनेनैव। एवमग्रेऽपि। पुनः पुनः कार्यं दृष्ट्वा कार्यप्रसिद्ध्यर्थं यः स्मार्यते इत्यन्वयः। वचने स्मारित इति पाठे मतिबुद्धीति वर्तमाने क्तः। * इह, व्यवहारे। आगत इति शेषः। * अनयोः, स्मारितयदृच्छाभिज्ञयोः। * भेद इति। मिथ इत्यादिः। * द्वाविति। तथा च तदैक्येऽप्याकारणानाकारणाकृतो भेद इति भावः। चतुर्थमाह स एवेत्याह * तथेति। एवमग्रेऽपि। * अर्थिनेति। अर्थिना साध्यवता स्वार्थसिद्ध्यर्थं प्रत्यर्थिनो वचनं स्फुटं यथा भवति तथा, गूढः स्थितः कुड्यादिव्यवहितः प्रत्यार्थिना ऽविज्ञातः सन स्थितो, यः पुमान् श्राव्यते स गूढसाक्षीत्युच्यते इत्यर्थः। * तथा साक्षिणामपीति। साक्षिणामप्युपरि ऊर्ध्वं यः पुमान् श्रवणात् श्रावणाद्वा साक्ष्यमुपरि उत्तानमुत्कृष्टं भाषते इत्याद्यर्थः। अत एव षष्ठीसङ्गतिः, अन्यथा द्वितीयापत्तिः स्फुटैव।

दृढत्वमाह * यथाशक्त्यनतिक्रमेति ।

मनुरपि. ( अ० ८ । श्लो० ६१।६२।६३ )

यादृशा धनिभिः कार्या व्यवहारेषु साक्षिणः ।
तादृशान्संप्रवक्ष्यामि यथा वाच्यमृतं च तैः ॥
गृहिणः पुत्रिणो मौलाः क्षत्रविट्शूद्रयोनयः ।
अर्थ्युक्ताः साक्ष्यमर्हन्ति न ये केचिदनापदि ॥
आप्ताः सर्वेषु वर्णेषु कार्याः कार्येषु साक्षिणः ।
सर्वधर्मविदोऽलुब्धा विपरीतांस्तु वर्जयेत् ॥ इति ।

ऋतं सत्यम् । मौलाः मूलकुलोत्पन्ना इति कल्पतरुः ।

८। अथ मूलमवतारयितुं मानवं तद्रूपोऽनन्तरोक्तमसाक्षिस्वरूपमाह * उक्तलक्षणेत्यादिना साक्षी न भवतीत्यन्तेन । वक्तव्यत्वे हेतुमाह * प्रतिषेधेति । प्रतिषिद्धेति पाठेऽपि भावे क्तः । अपिः कृतसाक्षिसमुच्चायकः । पञ्चम्यन्तत्वे ऽसाक्षिण इति शेषः । अग्रे उभयत्र असाक्षीति शेषः । वचनादसाक्षिणां स्वरूपं नारदेनैवोक्तमित्याह * के पुनरिति । * श्रोत्रिया इति। अत्र विरोधः परिहृतः । यद्यपि तापसा इति तपस्विन इत्यनेन तुल्यार्थं तथापि तदविरोधायैवाह * वानप्रस्थाइति । अत्रादि-शब्दग्राह्यं सूचयन्नुभयत्र मानमाह * यथाह शङ्ख इति । शुल्कु-लेत्यनेनोभयोरपि ग्रहणम्। * निर्ग्रन्था इति। पाखण्डिन इत्यर्थः। * दर्शिता इति । नारदेनेति शेषः । * साहसिकाइति । अ-विचारितकारिण इत्यर्थः । * वञ्चकाः, प्रतारकाः । दोषमेवाह * तेष्विति । * तेनैव, नारदेनैव । एकेन चेत मिथः समुच्चयो-ऽन्येन अन्येषाम् । * वादिनामिति । भाषमाणानाम् । * तेषाम्, अनेकेषां मध्ये इत्यर्थः । वादिनेति पाठस्तु युक्त एव । तुर्योऽपि नारदेनैवोक्त इत्याह * तथेति । * अनिर्दिष्टः, साक्षित्वे इति

त्वरा इति संक्षयाप्रश्नोत्तरम्, अन्यत्सर्वमन्यस्य ।

६ । नित्ययोगे विनिरित्याह * तपःशीला इति । शील-पदार्थमाह * निरता इति । कुल्यात्व इति सिद्धविशिष्टतात्पर्यार्थमाह * महोति । ताच्छील्ये णिनिरित्याह * वदनशीला इति । मोक्षसङ्गहाय व्यतिरेकमाह * नत्वर्थेति । नार्थेति पाठान्तरम् । वर्तमानसत्तायां मतुबुत्पत्तेराह * विद्यमानपुत्राइति । विशिष्ट-सामर्थ्येलभ्यमाह * श्राहेति । काम्यस्याकरणे प्रत्यवायाभावा-त्तद्भावायाह *नित्येति । एवं पदार्थानुक्त्वा वाक्यार्थमाह *एवं भूता इति । शाब्दमुक्त्वा तात्पर्यार्थमाह * त्रिभ्य इति । यथा-वर्णमित्यनेनार्पानरूक्त्यायाह *मूर्द्धेति । तत्तात्पर्यार्थमाह *तत्रे-ति । तेषां मध्ये इत्यर्थः । एवमग्रेऽपि । इदमग्रे ऽतिदिशति * एवमम्बष्टादिष्वपीति । न्यूनतां निराचष्टे *तथेति।*मनुरिति।

द्विजानां द्विजसत्तमाः ।

शूद्राश्च सन्तः शूद्राणामन्त्यानामन्त्ययोनयः ॥

इति वचनशेषः । कात्यायनोऽप्येवम् ।

नारदोऽपि, ( व्य० प० १।१५५ )

श्रेणीषु श्रेणिपुरुषाः स्वेषु वर्गेषु वर्गिणः ।

बहिर्वासिषु बाह्याः स्युः स्त्रियः स्त्रीषु च साक्षिणः ॥ इति ।

वर्गिण आह कात्यायनः,

लिङ्गिनः श्रेणिपूगाश्च वणिग्जातास्तथाऽपरे ।

समूहस्थाश्च ये चान्ये वर्गास्तानब्रवीत् भृगुः ॥

दासचारणमल्लानां हस्त्यश्वरथवाजिनाम् ।

प्रत्येकैकसमूहानां नायका वर्गिणः स्मृताः ॥ इति ।

७ । सर्वे इति पक्षान्तरं व्याचष्टे * सजातीति । सजाति-सवर्णयोरसम्भवे इत्यर्थः । तयोः प्रक्रान्तत्वात् । सर्वेषां युगप-

१। अनेन मृतान्तरस्य सर्वज्ञातार्थत्वे साक्षित्वं दर्शितमतआह *यत्र स्थित्यार्थिना नान्यार्थिनार्थिभिर्नान्यत्वेन। *अर्थिभिरिति। इदं द्रव्यमियत् एतस्मा ऋणत्वेनास्मिन्काले दत्तवानस्मि इत्यादि विवक्षार्थ इत्यर्थः। अन्यथा तेषां नाम्नार्थिनिरूपणं तत्साक्षिणामपि तुल्यत्वेन स्यादिति भावः। तत्रापवादमाह *यथेति। मुमूर्षुयार्थिनं विनाऽर्थिनि श्रुते सति साक्षी मृतान्तर इति कथ्यते इत्यर्थः। मुमूर्षुणा श्रावितत्वेन मृतान्तरोऽपि साक्षी भवतीति भावः। द्वितीयेऽपि स एव मानमित्याह *तथेति। *श्रुतानुरूपेण स्यादिति। अपिमुमूर्षुरमृतावस्थकः। *धर्मसंशित इति। धर्मात्मा इत्यर्थः। तत्स्वरूप इति यावत्। धर्मज्ञानतत्परो वा। धर्मसंहित इति पाठान्तरम्। धर्मयुक्त इत्यर्थस्तदा। *तत्रेति। तस्मिन्दृष्टान्तेऽपि तत्रार्थे मृतान्तरोऽपि एतेषु षट्सु साक्षी स्यादित्यर्थः॥६८॥६९॥

मि० तानेतानसाक्षिणो दर्शयति।

या० स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः।
रङ्गावतारिपाखण्डिकूटकृद्विकलेन्द्रियाः॥ ७० ॥
पतितासार्थसंबन्धिसहायरिपुतस्कराः।
साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः॥७१॥

मि० स्त्री प्रसिद्धा। बालोऽप्राप्तव्यवहारः। वृद्धोऽशीतिकावरः। वृद्धग्रहणं वचनानिषिद्धानामन्येषामपि श्रोत्रियादीनामुपलक्षणार्थम्। कितवोऽक्षदेवी। मत्तः पानादिना। उन्मत्तो ग्रहाविष्टः। अभिशस्तोऽभियुक्तो ब्रह्महत्यादिना। रङ्गावतारी चारणः। पाखण्डिनो निर्ग्रन्थप्रभृतयः। कूटकृत् कपटलेख्यादिका-

शेषः । * सूची, सूचकः ।

अनिर्दिष्टस्तु साक्षित्वे स्वयमेवेत्य यो वदेत् ।

स्वयमुक्तः स शास्त्रेषु न च साक्षित्वमर्हति ॥

इति पाठान्तरम् । अनेन स्वयमेवोक्तिर्यस्येति योगार्थोऽपि दर्शितः । * उक्तामिति । नारदेनेवेति भावः । * योऽर्थ इति । योऽर्थः श्रावयितव्यस्तस्मिन् असति मध्यमणिन्यायेनान्वयात् अर्थिनि वादिनि प्रतिवादिनि वाऽसति तत् अङ्गीकृतं साक्षित्वं क कस्मिन्विषये साक्षी वदतु इति हेतोः सोऽसाक्षी मृतान्तर इति शाब्दोऽर्थः । तत्फलितं शेषपूरणेनाह * येनेति । अर्थिनीत्यस्य प्रागुक्तव्युत्पत्त्या साध्यवतीत्यर्थकत्वेनोभयपरत्वादाह * प्रत्यर्थिना वेति । अत एव—

कात्यायनः,

अर्थी यत्र विपन्नः स्यात्तत्र साक्षी मृतान्तरः ।

प्रत्यर्थी वा मृतो यत्र तत्राप्येवं प्रकल्पयेत् ॥ इति ।

तदाकारमाह * सूयम् इति । श्राविताद्दते तत्साध्यादिविशेषपरिज्ञानस्य तेषामसम्भवादिति भावः । तच्छब्देनात्र त्रयाणां परामर्श इत्याह * अर्थिनीत्यादि । असतीत्यस्य व्याख्या * मृते इति । अस्याग्रेऽप्यन्वयः । वासूचितं पक्षान्तरमाह * अर्थे वा ऽनिवेदिते इति । निवेदितेऽर्थे ऽसति मृते वेत्यर्थः । असाक्षित्वे हेतुं सूचयन्नाह * केति । अस्योक्तपक्षभेदेनार्थद्वयं मूलानुरोधेन व्याख्याव्युत्क्रमेणाह * कस्मिन्निति । साक्ष्यमित्यस्य तादित्यादिः, तस्य चाङ्गीकृतामित्यर्थः । इतिर्हेतौ । अनेन मृतः उक्तान्यतमः अन्तरे साक्ष्यस्य स्वीकारभापणयोर्मध्ये यस्य स मृतान्तर इति व्युत्पत्तिः सूचिता । एवमसाक्षिस्वरूपं प्रतिपादितम् ।

मि० त्र्यवराः साक्षिणो ज्ञेया इत्यस्यापवादमाह ।

या० उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित् ।

मि० ज्ञानपूर्वकं नित्यनैमित्तिकधर्मानुष्ठायी धर्मवित् । स एकोऽप्युभयानुमतश्चेत्साक्षी भवति । अपिशब्दबलाद्द्वावपि । यद्यपि श्रौतस्मार्तक्रियापरा इति त्र्यवराणामपि धर्मवित्त्वं समानं तथापि तेषामुभयानुमत्यभावेऽपि साक्षित्वं भवति, एकस्य द्वयोर्वोभयानुमत्यैव साक्षित्वं भवतीत्यर्थवत् त्र्यवरग्रहणम् ।

मि० तपस्विनो दानशीला इत्यस्यापवादमाह ।

या० सर्वः साक्षी संग्रहणे चौर्यपारुष्यसाहसे ॥ ७२ ॥

मि० संग्रहणादीनि वक्ष्यमाणलक्षणानि, तेषु सर्वे वचननिषिद्धास्तपःप्रभृतिगुणरहिताश्च साक्षिणो भवन्ति । दोषादसाक्षिणो भेदादसाक्षिणः स्वयमुक्तिश्चात्रापि साक्षिणो न भवन्ति । सत्याभावादितिहेतोरत्रापि विद्यमानत्वात् ।

मनुष्यमारणं चौर्यं परदाराभिमर्शनम् ।
पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम् ॥

इति वचनात् यद्यपि स्त्रीसंग्रहणचौर्यपारुष्याणां साहसत्वं तथापि तेषां स्वबलावष्टम्भेन जनसमक्षं क्रियमाणानां साहसत्वम्, रहसि क्रियमाणानां तु संग्रहणादिशब्दवाच्यत्वमिति तेषां साहसात्पृथगुपादानम् ॥ ७२ ॥

बा० १। श्रौतस्मार्तेत्येकवाक्यतया आह * ज्ञानेति । तथा

री । विकलेन्द्रियः श्रोत्रादिरहितः । पतितो ब्रह्महादिः । आप्तः सुहृत् । अर्थसंबन्धी विप्रतिपद्यमानार्थसंबन्धी । सहाय एककार्यः । रिपुः शत्रुः । तस्करः स्तेनः । साहसी स्वबलावष्टम्भकारी । दृष्टदोषो दृष्टवितथवचनः । निर्धूतो बन्धुभिस्त्यक्तः । आद्यशब्दादन्येषामपि स्मृत्यन्तरोक्तानां दोषादसाक्षिणां भेदादसाक्षिणां स्वयमुक्तेर्मृतान्तरस्य च ग्रहणम् । एते स्त्रीबालादयः साक्षिणो न भवन्ति ॥ ७० ॥ ७१ ॥

बा० १। एवमुपोद्घातमुक्त्वा सांप्रतं मूलमवतारयति * तानेतानिति । वक्तव्याचारदोक्तानित्यर्थः। पाषण्ड्यादिद्वन्द्वं कृत्वा पुना रङ्गावतारिणा सह, एवम् आप्तादिद्वन्द्वं कृत्वा पुनः पतितेन सहेति बोध्यम्। * अप्राप्तेति । व्याख्यातमिदम् । * अशीतिकेति । अशीतिः परिमाणमस्य सः अवरो यस्येति विग्रहः । ततोऽर्वाक् न भवति तदारभ्य भवतीत्यर्थः । वैषम्ये बीजाभावात्तदेकवाक्यतया च न्यूनतां निराचष्टे * वृद्धेति । * पानादिनेति। आदिना भक्षणग्रहणम् । * अभियुक्त इति । तत्सम्बन्धारोपमात्रं यस्येत्यर्थः। * लेख्यादीति। आदिना भोगादिग्रहणम् । व्यवहारे श्रुतेः प्राधान्यादाह * श्रोत्रादीति । योगनिरासायाह * सुहृदिति । यत्किञ्चिदर्थसम्बन्धित्वस्य सर्वत्र सत्त्वादाह * विप्रतिपद्यमानार्थसंबन्धीति। * एकेति। बहुव्रीहिः । पुत्रादिरित्यर्थः। * स्वबलावष्टम्भकारीति।तेन करोति न तु विचारेण। अविचारितकारीत्यर्थः । दोषाणां बाहुल्ये पि अत्र प्राधान्यादाह * वितथेति । * बन्धुभिरिति । ग्रामराजकुलश्रेण्यादिभिर्निस्सारित इति कल्पतरुः। नारदैकवाक्यत्वायाह * आद्येति । एवं पदार्थानुक्त्वा वाक्यार्थमाह * एते इति ॥ ७० ॥ ७१ ॥

असाक्षिणो ये निर्दिष्टा दासनैकृतिकादयः ।
कार्यगौरवमासाद्य भवन्त्येतेऽपि साक्षिणः ॥
तेषामपि न बालः स्यान्नैकस्त्री न कूटकृत् ।
न बान्धवो न चारातिर्ब्रूयुस्ते साहसेष्वपि ॥ इति ।
नैकृतिको निन्दकः ।
व्यासोऽप्याह,
साक्षिदोषाः प्रवक्तव्याः संसदि प्रतिवादिना ।
पत्रेऽभिलिख्य तान् सर्वान्वाच्याः प्रत्युत्तरं तु ते ॥
प्रतिपत्तौ न साक्षित्वमर्हन्ति तु कदाचन ।
अतोऽन्यथा भावनीयाः क्रियया प्रतिवादिना ॥
अभावयन् दमं दाप्यः प्रत्यर्थी साक्षिणां स्फुटम् ।
भाविताः साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः ॥
जितः स विनयं दाप्यः शास्त्रदृष्टेन कर्मणा ।
यदि वादी निराकाङ्क्षः साक्षिसत्ये व्यवस्थितः ॥ इति ।

पत्रे लिखितान्साक्षिदोषानभिलक्षीकृत्य उत्तरमुत्तरं तत्द्विषयं परिहारं ते साक्षिणः सभ्यैर्वाचनीया इत्यर्थः। पत्रे तान्सर्वानभिलिख्य उत्तरमुत्तरं ते दोषा वाच्या इति कल्पतरुः। अतोऽन्यथा असम्प्रतिपत्तौ भावनीयाः अङ्गीकारयितव्याः। क्रियया प्रमाणेन स्फुटं यथा स्यात्तथा अभावयन्नित्यन्वयः ।

५। ननु संग्रहणादित्रयाणामपि साहसशब्दवाच्यत्वाद्भेदेनोक्तिर्मूले ऽयुक्तेत्याशङ्कते * मनुष्येति । * उभयं, वाक्पारुष्यं दण्डपारुष्यं च । पारुष्यत्वेनैक्यादाह * चतुर्विधमिति । उक्तक्रमाविवक्षयाऽऽह * स्त्रीसंग्रहणेति । समाधत्ते * तथापीति । जनसमक्षं स्वबलावष्टम्भेन यत्करणं तेनोपाधिना क्रोडीकृतानामेषां साहसपदवाच्यत्वम् । एकान्ते यत्करणं तद्रूपो-

च निर्देशनपूर्वकतदनुष्ठानं लक्षणेति भावः । अत एवोक्तं—

पठकाः पाठकाश्चैव ये चान्ये शास्त्रचिन्तकाः ।

सर्वे व्यसनिनो मूर्खा यः क्रियावान् स पण्डितः ॥ इति ।

२। * उभयेति । अर्थिप्रत्यर्थीत्यर्थः । * द्वावपीति । तादृशौ चेमौ साक्षिणौ भवतः इत्यर्थः ।

३। ननु एवं धर्मवित्त्वं सर्वत्र तुल्यं, तथा च तत्र व्यवरपदमनर्थकं व्यावर्त्याभावात् अपिना तेषामपि सङ्ग्रहादित्याशङ्कते *यद्यपीति * इतीति । इत्युक्तेरित्यर्थः । धर्मवित्त्वप्रयुक्तवैलक्षण्याभावेऽप्युभयानुमतत्वप्रयुक्तवैलक्षण्यमित्याशयेन समाधत्ते * तथापीति । * द्वयोर्वा, द्वयोर्वातु । * अर्थवत्, सफलम् ।

उ० ४। प्रत्यासत्तेः स्त्रीबालेत्यस्यैवोपस्थितेराह * तपस्वीति । * इत्यस्येति । इत्यस्यापीत्यर्थः । क्वचित्तथैव पाठः । अपिनास्त्रीबालेत्यादिनिषिद्धसङ्ग्रहः । अत एव व्याख्यानाविरोधो नेति बोध्यम् । चौर्येत्यादिः समाहारद्वन्द्वः । * सङ्ग्रहणादीनि, चत्वारि । सर्वशब्दस्य बुद्धिस्थबहुसंख्याकावयवारब्धसमुदाये शक्त्या तस्यानुद्भूतावयवभेदत्वेन यद्यपि सर्वलोक इतिवत् मूले एकवचनं तथापि स्पष्टार्थमुद्भूतावयवपरतया व्याचष्टे * सर्वे इति । तदर्थमेव व्युत्क्रमेणाह * वचनेति । मौलस्त्रीबालेत्यादिवचनेत्यर्थः । नन्वेवमतिप्रसङ्गोऽत आह * दोषादिति । एते त्रय इत्यर्थः । * अत्रापि, स्त्रीसंग्रहणादिष्वपि । ननु पूर्वं तेषामसाक्षित्वे उक्तेपि अस्य तदपवादत्वेनात्र तेषां साक्षित्वं स्यादेव अत आह * सत्याभावादितीति । एवं च येन हेतुना तत्रासाक्षित्वं तस्य अत्रापि सत्त्वं तुल्यमिति तदनपगमेन तेषामत्रापि अतत्त्वमेवोति भावः । एवं च स्वयमुक्तिश्चेति चेनान्येषामपीदृशानां ग्रहणम् ।

तदाह नारदः, ( व्य. प. १ । १८८ । १९० )

धीजकाञ्जनादीनि तत्र निकृष्टानि वर्णितवर्ज्यानि वै-श्यम् । शूद्रम् अन्यथा शुनकस्तत्र सर्वाणि पातकानि भविष्यन्तीति ज्ञापयेत । अत्र चापवादः—

तेनैव दर्शितः, ( मनु० अ० ८ श्लो० १०२ )

गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान् ।
प्रेष्यान्वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥ इति ।

विप्रग्रहणं क्षत्रियवैश्ययोरप्युपलक्षणार्थम् । कुशीलवा गायकाः । प्रतिवादिना साक्षिदूषणे कृते प्रत्यक्षयोग्यदूषणेषु चान्यादिषु तत्रैव निर्णयः । अयोग्येषु तु तद्वचनाल्लोकतश्च निर्णयो न साक्ष्यन्तरेणानवस्था । यदि साक्षिदोषमुद्भाव्य साधयितुं न शक्नोति प्रतिवादी तदाऽसौ सारानुसारेण दण्ड्यः । अथ साधयति तदा न साक्षिणः ।

यथाह,

असाधयन् दमं दाप्यो दूषणं साक्षिणां स्फुटम् ।
भाविते साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः ॥ इति ।

उद्दिष्टेषु च सर्वेषु साक्षिषु दुष्टेष्वर्थी यदा क्रियान्तरनिरपेक्षस्तदा पराजितो भवति ।

जितः स विनयं दाप्यः शास्त्रदृष्टेन कर्मणा ।
यदि वादी निराकाङ्क्षः साक्षिसभ्येष्ववस्थितः ॥

इति स्मरणात् । साकाङ्क्षश्चेत्क्रियान्तरमवलम्बेतेत्यभिप्रायः ।

मि० कथं श्रावयेदित्याह ।

या० ये पातककृतां लोका महापातकिनां तथा ॥७३॥

पार्थक्येऽपि विषयभेदेन भिन्नत्वात्तत्तद्विषयभेदघटितरहः-प्रकरणोपाधिभेदात्सङ्ग्रहणादिशब्दवाच्यत्वमिति भावः। *तेषां, त्रयाणाम्। *साहसात्पृथगिति। साहसात्प्रागुक्तेति पाठान्तरम्। तत्र ततोऽग्रे उपादाने सामान्यविशेषभावेनान्वयसम्भवेन त्रयाणामेव ग्रहणं स्यादिति तथेति भावः॥ ७२॥

मि० साक्षिश्रावणमाह।

या० साक्षिणः श्रावयेद्वादिप्रतिवादिसमीपगान्।

मि० अर्थिप्रत्यर्थिसान्निधौ साक्षिणः समवेतान्। नासमवेताः पृष्टाः प्रब्रूयुरिति गौतमवचनात्। वक्ष्यमाणं श्रावयेत्। तत्रापि—

कात्यायनेन विशेषो दर्शितः,

सभान्तः साक्षिणः सर्वानर्थिप्रत्यर्थिसान्निधौ।
प्राड्विवाको ऽनुयुञ्जीत विधिनाऽनेन सान्त्वयन्॥
देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान्।
उदङ्मुखान्प्राङ्मुखान्वा पूर्वाह्णे वै शुचिः शुचीन्॥
आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम्।
समस्तान् विदिताचारान् विज्ञातार्थान्पृथक्पृथक्॥

इति।

तथा ब्राह्मणादिषु श्रावणे—

मनुना नियमो दर्शितः, (अ. ८ श्लो. ११२)

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः॥ इति।

ब्राह्मणम् "अन्यथा ब्रुवतः सत्यं ते नश्यतीति" शापयेत्। क्षत्रियं, वाहनायुधानि तव विफलानीति। गो-

२। तत्रापि स्थानमाह । [illegible] । *ग्रामा-न, इत्यर्थः । अत एव [illegible] पाठान्तरम् । * अनुयुञ्जी-त, पृच्छेत् । नियुञ्जीतेति पाठान्तरम् । [illegible] । [illegible] । *[illegible] पृथक्पृथक् नि-ग्रानार्थानित्यर्थः ।

३। तत्रापि विशेषमाह * ब्राह्मणादीनिति । *ब्राह्मणानित्यु, विप्र । *नियम इति । विशेषणार्थे इति भावः । शूद्रे तु न नियम इत्याह *शूद्रमपीति । अत एव तु ब्राह्मणादित्यस्य वाक्यद्वयान्वय-त्वस्य चाग्रे उभयत्रानुषङ्गः । अन्यथा शूद्र इत्यस्य सम्पूर्णीकरणे-न पद्येऽप्युभयत्र सम्बन्धो ध्वनितः ।

४। तत्रापि विशेषमाह * अत्र चेति । सत्येन शापयेदित्य-त्रार्थे चेत्यर्थः । सम्यगन्वितोऽधिकरणत्वविवक्षया सप्तमी । * तेनै-व, सत्येनैव । कारुः शिल्पी । कुशीलवादाद *विप्रग्रहणादिति । तयोरपीत्यर्थः । एतच्च साक्षिसन्त्रासार्थमेव ।

यथाह नारदः, ( व्य० प० १।२०० )

पौराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्त्तनैः ।

अनृतस्यापवादैश्च भृशमुत्त्रासयेदिमान् ॥ इति ।

सत्येन शापयेद्विप्रमित्यप्यपकृष्टब्राह्मणविषयं न ब्राह्म-णमात्रविषयम् । तस्य गौतमेन शपथस्य निषिद्धत्वादिति क-ल्पतरुः ।

५। ननु प्रतिवादिना साक्षिदोषे उक्ते तन्निर्णयाय साक्ष्य-न्तरापेक्षायामनवस्था स्यात् । तदुक्तम्—

व्यासेन,

अन्यैस्तु साक्षिभिः साक्ष्ये दूषणे पूर्वसाक्षिणाम् ।

अनवस्था भवेत् दोषस्तेषामप्यन्यसम्भवात् ॥ इति ।

अग्निदानां च ये लोका ये च स्त्रीबालघातिनाम् ।
स तान्सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत् ॥ ७४ ॥
सुकृतं यत्त्वया किञ्चिज्जन्मान्तरशतैः कृतम् ।
तत्सर्वं तस्य जानीहि यं पराजयसे मृषा ॥ ७५ ॥

मि० पातकोपपातकमहापातककारिणामग्निदानां स्त्रीबालघातिनां च ये लोकास्तान् सर्वानसाववाप्नोति यः साक्ष्यमनृतं वदेदिति । तथा जन्मान्तरशतैर्यत्सुकृतं कृतं तत्सर्वं तस्य भवति, यस्ते अनृतवदनेन पराजितो भवतीति श्रावयेदिति सम्बन्धः । एतच्च शूद्रविषयं द्रष्टव्यम् । शूद्रं सर्वैस्तु पातकैरिति शूद्रे सर्वपातकश्रावणस्य विहितत्वात् । गोरक्षकादिद्विजातिविषयं च । गोरक्षकान् वाणिजकानित्युक्तत्वात् । अन्यानेकजन्मार्जितसुकृतसंक्रमणस्य महापातकादिफलप्राप्तेश्चानृतमात्रेणानुपपत्तेः साक्षिसन्त्रासार्थमिदमुच्यते ।

यथाह नारदः, (व्य० प० १।२००)

पुराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्तनैः ।
अनृतस्यापवादैश्च भृशमुत्त्रासयेदिमान् ॥ इति ॥ ७३ ॥ ७४ ॥ ७५ ॥

या० १। श्रावणे तद्विधिसामीप्यमात्रं विवक्षितं न तु तद्गमनमित्याह * संनिधाविति । विशेषमाह *समवेतानिति । मिलितानित्यर्थः । अत्र मानमाह * नासमवेता इति । पृष्टा अपि असमवेता नेत्याद्यर्थः । कर्माकाङ्क्षायामाह * वक्ष्यमाणमिति । मूलकृतेति भावः ।

अतो विशेषमाह *प्रतिवादिनेति। *दत्ते, सति। *वान्यादिषु, सत्सु। चापल्यादिष्वित्यपपाठः। *तथैव, प्रत्यक्षेणैव। *प्रयोग्येषु, दूषणेषु सत्सु। *तद्वचनात्, साक्षिवचनात्।

तदुक्तं व्यासेनैव,

सभासदां प्रसिद्धं यल्लोकसिद्धमथाऽपि वा।

साक्षिणां दूषणं शाल्मसाध्यं दोषवर्जनात्॥ इति।

असाध्यं साधनानर्हम्। * दोषवर्जनात्, अनवस्थादिराहितत्वात्।

६। विशेषान्तरमाह * यदीति। सारो बलम्। * साक्षिण इति। ते इत्यादिः। क्वचित्तथा पाठ एव। कात्यायनमाह *यथाहेति। *असाधयन्निति। अभावयन्निति पाठान्तरम्। अर्थोऽभिन्नः। साक्षिणां दूषणं स्फुटं यथा तथाऽसाधयन्नित्याद्यन्वयः। *भाविते, साधिते सति। *साक्षिधर्मेति। साक्षित्वानर्हा इत्यर्थः।

७। विशेषान्तरमाह। *उद्दिष्टेष्विति। कथितेष्वित्यर्थः। *दुष्टेषु, सत्सु। *क्रियान्तरेति। प्रमाणान्तरेत्यर्थः। व्यासं मानमाह * जित इति। यदि वादी साक्षिसभ्यविषये निराकाङ्क्षोऽवस्थितः सम्पन्नस्तदा जितः पराजितः सन् स वादी शास्त्रोक्तविधिना विनयं दमं दाप्य इत्यर्थः। साक्षिसभ्येष्ववस्थित इत्यत्र साक्षिसत्ये व्यवस्थित इति पाठान्तरम्। अर्थस्तद्वत्। सूचितार्थमाह *साकाङ्क्ष इति।

उ० ८। वक्ष्यमाणमित्युक्तमेव वक्तुमाह * कथमिति। वाक्यमिति शेषः। *इत्याह, इत्यत आह। क्वचित्तथैव पाठः। सर्वानिति स्पष्टार्थम्। स तान् इत्येकवचनबहुवचनाभ्यामेव तदर्थलाभात्।

९। एवं सामान्येनोक्त्वा विशिष्याह *सुकृतमिति। मूले पातकशब्देन वक्ष्यमाणभिन्नानां ग्रहणमित्याह * पातकोपेति।

नः सर्वस्य, वाते दृशादित्यर्थः। सर्वत इति पाठान्तरम्। संस्था-वाचिनः परो यत्र तस्रो दृष्टशिष्टिसमासान्तः। तद्ग्रहणं सर्वतोग्रहणं श्लोकपूरणार्थमिति मिताक्षरायाः। पुस्तिकान्तरे *भगद् इति। विकृत्यार्थोऽन्वयः ॥ ७६ ॥

मि० यस्तु जानन्नपि साक्ष्यमेव नाङ्गीकरोति दौ-
रात्म्यात्तं प्रत्याह ।

या० न ददाति हि यः साक्ष्यं जानन्नपि नराधमः ।
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि॥७७॥

मि० यः पुनर्नराधमो विप्रतिपन्नमर्थं विशेषतो जानन्नपि साक्ष्यं न ददाति नाङ्गीकरोति स कूटसाक्षिणां तुल्यः पापैः दण्डेन च। कूटसाक्षिणां च दण्डं वक्ष्यति। कूटसाक्षिणश्च दण्डयित्वा पुनर्व्यवहारः प्रवर्तनीयः। कृतोऽपि कूटसाक्ष्ये विदिते निवर्तनीयः।

यथाह मनुः ( अ. ८. श्लो. ११७. )
यस्मिन् यस्मिन् विवादे तु कूटसाक्ष्यं कृतं भवेत्।
तत्तत्कार्यं निवर्तेत कृतं चाप्यकृतं भवेत्॥ इति॥७७॥

१।बा० *जानन्निति। विमतिपन्नमानमर्थमित्यादिः। *नाङ्गीकरोतीति। एवो व्युत्क्रमे। नाङ्गीकरोत्येवेत्यर्थः। ह्यर्थमाह *पुनरिति। स त्वर्थे। *नराधम इति। अस्यैवार्थो दौरात्म्यादित्यनेनोक्तः। साकाङ्क्षत्वादाह *विमतिपन्नमिति। विवादास्पदमित्यर्थः। द्वितीयार्थमाह *विशेषतइति।लक्ष्यार्थमाह*नाङ्गीति। *तुल्यइति। तुल्य-एवेत्यर्थः। एवस्यात्रान्वयात्। तत्प्रयोजकधर्मावाह * पापैरिति। ननु को दण्डस्तेषाम् अत आह *कूटेति। *च दण्डं,दण्डं च। तेन कूटसाक्ष्यपरिग्रहः। अत एव विशेषमाह * कूटेति। इदमकृतव्य-

माति वेदितव्यम् । ततोऽर्वाग्वदन्न दाप्यः । इदं च व्याध्याद्युपप्लवरहितस्य ।

यथाह मनुः, अ ( ८. श्लो. १०७. )

त्रिपक्षादब्रुवन् साक्ष्यमृणादिषु नरोऽगदः ।

तदृणं प्राप्नुयात्सर्वं दशबन्धं च सर्वशः ॥ इति ।

अगद इति राजदैवोपप्लवविरहोपलक्षणम् ॥७६॥

या॰ १। कथंचित्,कारणेन। *सः,नरः। सर्वमित्यस्य योग्यत्वादिना पूर्वार्द्धे ऽन्वय इत्याह * सर्वमिति। तदर्थमाह * सवृद्धिकमिति । योग्यत्वादेवाह *धनिने इति। यद्यपि सदशेति ऋणविशेषणं तथापि धन्ययोग्यमिति तद्वाक्यात्पृथक् व्याचष्टे * सदशेति । दशबन्धकेन सहितं तथा। दशशब्दो दशमपरः। बन्धशब्दोंऽशपरः। स्वार्थे क इत्याह *दशमांशसहितेति । उक्तहेतोरेवाह * दशमांश इति । चस्त्वर्थे । ननु अयमपि वचनाद्धनिन एवास्तां किमित्येवं व्याख्यानं वैरूप्यापादकमत आह * राज्ञेति । तन्न्यायेनेत्यर्थः । तथा च तदेकवाक्यत्वतस्तल्लाघवमूलकमेव व्याख्यानमुचितमिति भावः ।

२। अस्य कालनियममाह * एतच्चेति । मन्वनुरोधेनैवाह *प्राप्ते सतीति । एतत्तात्पर्यमाह * ततोऽर्वागिति । पक्षत्रयमध्ये इत्यर्थः । अत एव मूलवचने हिः प्रयुक्तः । स हि तत्रावदनस्य तद्धेतुत्वं प्रतिपादयति ।

३। विशेषमाह * इदं चेति । इदमपीत्यर्थः । आदिना राजदैवग्रहणम् । * त्रिपक्षादिति । त्रयः पक्षा यस्मिन्निति बहुव्रीहिः । ल्यब्लोपे इति कर्मणि पञ्चमी । ऋणादिविषये सार्द्धमासमभिव्याप्य साक्ष्यमब्रुवन् अगदो ऽपीडितशरीरो नरस्तदृणं सर्वं सवृद्धिकं प्राप्नुयात् दद्यात् । दशबन्धं च दशमं भागं च सर्व-

२। विशेषमाह * यत्र लिङ्गानि । * इति, इत्यनेन । * सु-
स्पष्टत्वात्, तदप्रतिपादनात् ।

३। ननु प्राक् भेदादसाक्षिण इत्युक्तं, इदानीं तु भेदे-
ऽपि साक्षिण इत्युच्यते द्वैधे इत्यनेनेति मिथो विरोधो ऽत आह
* यस्त्विति । *तत् सर्वेति । यत्र संख्यागुणादिभिः सर्वैः सा-
म्यं तत्र विशेषाभावाद्भेदादसाक्षित्वं, यत्र तु संख्यागुणादिभिर्वै-
षम्यं तत्र भेदेऽप्यनेन प्रकारेण साक्षित्वं भवत्येवेतिभावः॥७८॥

मि० साक्षिभिश्च कथमुक्ते जयः कथं वा पराजय
इत्यत आह ।

या० यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ॥ ७९ ॥

मि० यस्य वादिनः प्रतिज्ञां द्रव्यजातिसंख्यादि-
विशिष्टां साक्षिणः सत्यां वदन्ति, सत्यमेव जानी-
मो वयमिति, स जयी भवति । यस्य पुनर्वादिनः प्र-
तिज्ञामन्यथा वैपरीत्येन मिथ्यैतदिति वदन्ति तस्य
पराजयो ध्रुवो निश्चितः । यत्र तु प्रतिज्ञार्थस्य विस्म-
रणादिना भावाभावौ साक्षिणो न प्रतिपादयन्ति
तत्र प्रमाणान्तरेण निर्णयः कार्यः । न च राज्ञा सा-
क्षिणः पुनः पुनः प्रष्टव्याः । स्वभावोक्तमेव वचनं
ग्राह्यम् ।

यथाह—

स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम् ।
उक्ते तु साक्षिणो राज्ञा न प्रष्टव्याः पुनःपुनः॥इति॥७९॥

१। वा० साक्षिभिरिति । नन्वित्यादिः । साक्षिभिरुक्ते जयः

व्यवहारनिगमम् । अत एवाह * कृतोऽपीति । व्यवहार इत्यस्यानुषङ्गः । पूर्वं तेषु तत्त्वाज्ञानात् । अत एवाह * कृतेति । कोटेति पाठान्तरम् । तत्र समस्ताद्भावप्रत्ययः । आद्ये तदन्तेन समासः । एवमग्रेऽपि । अकृतविषये उक्त्वा कृतविषये आह * कृतं चापीति ॥ ७७ ॥

मि० साक्षिविप्रतिपत्तौ कथं निर्णय इत्यत आह ।

या० द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः ॥ ७८॥

मि० साक्षिणां द्वैधे विप्रतिपत्तौ बहूनां वचनं ग्राह्यम् । समेषु समसंख्येषु द्वैधे ये गुणिनस्तेषां वचनं प्रमाणम् । यदा पुनर्गुणिनां विप्रतिपत्तिस्तदा ये गुणवत्तमाः श्रुताध्ययनतदर्थानुष्ठानधनपुत्रादिगुणसंपन्नास्तेषां वचनं ग्राह्यम् । यत्र तु गुणिनः कतिपये इतरे च बहवस्तत्रापि गुणिनामेव वचनं ग्राह्यम् ।

उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित् ।

इति गुणातिशयस्य मुख्यत्वात् । यत्तु भेदादसाक्षिण इत्युक्तं, तत् सर्वसाम्येनागृह्यमाणविशेषविषयम् ॥ ७८ ॥

बा० १। * साक्षीति। नन्वित्यादिः। योग्यतया साकाङ्क्षत्वादाह * साक्षिणामिति । वचनं ग्राह्यमित्यस्य सर्वत्र सम्बन्धादाह * वचनमिति। उत्तरार्धोपात्तस्य पूर्वार्धेऽपि सम्बन्धादाह *ग्राह्यमिति। समत्वं संख्याकृतमेवेत्याह * समसंख्येष्विति। अनुषङ्गेणाह * द्वैधे इति। तन्निष्ठद्वैधे इत्यर्थः। त्वर्थमाह *पुनरिति। प्रकर्षमाह * श्रुतेति। शेषमाह * तेषामिति।

मि० अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः—
इत्यस्यापवादमाह ।

या० उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः ।
द्विगुणा वाऽन्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥८०॥

मि० पूर्वोक्तलक्षणैः साक्षिभिः साक्ष्ये स्वाभिमाये प्रतिज्ञानार्थवैपरीत्येनाभिहिते यद्यन्ये पूर्वेभ्यो गुणवत्तमाः द्विगुणा वा अन्यथा प्रतिज्ञातार्थानुगुण्येन साक्ष्यं ब्रूयुस्तदा पूर्वे साक्षिणः कूटा मिथ्यावादिनो भवेयुः।

नन्वेतदनुपपन्नम् । अर्थिप्रत्यर्थिसभ्यसभापतिभिः परीक्षितैः प्रमाणभूतैः साक्षिभिर्निगदिते प्रमाणान्तरान्वेषणेऽनवस्थादोषप्रसङ्गात् ।

निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत् ।
लिखितं साक्षिणो वापि पूर्वमावेदितं न चेत् ॥
यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः ।
निर्णिक्तव्यवहाराणां प्रमाणमफलं तथा ॥
इति नारदवचनाच्च । अ. १ । ६२ । ६३ ।

उच्यते । यदाऽर्थी प्रतिज्ञातार्थस्यान्तरात्मसाक्षित्वेनानाविष्कृतदोषाणामपि साक्षिणां वचनमर्थविसंवादित्वेनाप्रमाणं मन्यमानः साक्षिष्वपि दोषं कल्पयति तदा प्रमाणान्तरान्वेषणं केन वार्यते । उक्तं च, यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीन इति । यथा चक्षुरादिकरणदोषानध्यवसायेऽप्यर्थविसंवादात्तज्जनितस्य ज्ञानस्य अप्रामा-

कथमित्याद्यन्वयः । तद्वचनस्यातादृशस्यापि सम्भवात् । अत एव वक्ष्यति, यत्र त्वित्यादीति भावः । कथमित्यस्य पुनरुक्तिः स्पष्टार्था । यस्येत्यस्य व्याख्या ० वादिन इति । अस्य न साक्षिण इत्यत्रान्वय इत्याह * प्रतिज्ञामिति । सा च पक्षारूढा न चेत्तत्राह * इत्थेति । लिङर्थो न विवक्षित इत्याह * वदन्तीति । तदाकारमाह * सत्यमेवेति । एवेनासत्यवचनच्छेदः । * स इति । तदिप्रसिद्धेरिति भावः । प्राग्वदाह । *भवतीति ।

२। उत्तरार्द्धार्थमाह * यस्येति । पुनस्त्वर्थे । वैलक्षण्याय शेषपूरणमिदम् । साक्षिण इत्यस्यानुवृत्तिः । अन्यथावादिन इत्येकं पदम् । यस्य तु वादिनोऽन्यथा प्रतिज्ञाविरुद्धार्थं वदन्ति तादृशाः साक्षिणो भवन्ति तस्येत्यादिः शाब्दोऽर्थः । तत्फलितमाह * प्रतिज्ञामिति । सर्वथा यस्येत्यस्य प्रतिज्ञादावन्वयो न साक्षिण इत्यत्रेति तात्पर्यम् । अत एव द्वितीयान्ततया पदद्वयेन चोक्तिः ।

३। विशेषमाह * यत्रात्विति । * प्रतिज्ञार्थेति । तद्रूपस्यार्थस्येत्यर्थः । प्रतिज्ञातार्थस्येति पाठान्तरम् । आदिना मोहादिः । * तत्र, तादृशे स्थले । तस्येति पाठान्तरम् । * प्रमाणान्तरेणेति । प्रकृतसाक्षिभिन्नेनेत्यर्थः । अत्र हेतुमाह * न चेति । न हीत्यर्थः । राज्ञेत्युपलक्षणमन्येषामपि । अत्र हेतुमाह * स्वभावोक्तमिति । यत इत्यादिः । मनुकात्यायनावाह * यथेति । * तेषां, साक्षिणाम् । अत्र हेतुमाह *यद्दोषेति । यतो दोषवर्जितमित्यर्थः । दोषविवर्जितमिति पाठेऽपि हेतुगर्भं विशेषणम् । अत एवाह * उक्तेत्विति । स्वभावोक्ते तु सतीत्यर्थः । दोषसम्भवादिति भावः ॥ ७९ ॥

नारदेनापि—

निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत्।

इति वदता जयावधारणोत्तरकालमेव प्रमाणान्तरं निषिद्धं, न प्रागपि । तस्मादुक्तेऽपि साक्षिभिः साक्ष्ये अपरितुष्यता क्रियान्तरमङ्गीकर्तव्यमिति स्थितम्। एवं स्थिते यथाभिहितवचनेभ्यः साक्षिभ्यो गुणवत्तमाः द्विगुणा वा पूर्वनिर्दिष्टा असन्निहिताः साक्षिणः सन्ति तदा ते एव प्रमाणीकर्तव्याः।

स्वभावेनैव यद् ब्रूयुस्तद् ग्राह्यं व्यावहारिकम्।

इत्यस्य सर्वव्यवहारशेषत्वात्। (मनु० ८।७८)

निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत्।

लिखितं साक्षिणो वाऽपि पूर्वमावेदितं न चेद्॥

इति नारदवचनाच्च। पूर्वनिर्दिष्टानामसंभवे त्वनिर्दिष्टा अपि तथाविधा एव साक्षिणो ग्राह्या न दिव्यम्।

संभवे साक्षिणां प्राज्ञो वर्जयेद्दैविकीं क्रियाम्।

इति स्मरणात्। (ना० अ० २।२९)

तेषामसंभवे दिव्यं प्रमाणीकर्तव्यम्। अतः परमपरितुष्यताऽप्यर्थिना न प्रमाणान्तरमन्वेषणीयम्, मनुवचनादिति परिसमापनीयो व्यवहारः।

यत्र तु प्रत्यर्थिनःस्वप्रत्ययविसंवादित्वेन साक्षिवचनस्याप्रामाण्यं मन्यमानस्य साक्षिषु दोषारोपणेनापरितोषस्तत्र प्रत्यर्थिनः क्रियोपन्यासावसराभावात्ससाह्यावधिकदैविकराजिकव्यसनोद्भवेन साक्षिपरीक्षणं कर्तव्यम्। तत्र च दोषावधारणे साक्षिणो

णेन करणदोषकल्पना, तथेहापि। साक्षिपरीक्षाति-रेकेण तद्वाक्यपरीक्षोपदेशाच्च।

साक्षिभिर्भाषितं वाक्यं सह सभ्यैः परीक्षयेत्।

इति।

कात्यायनेनाप्युक्तम्,

यदा शुद्धा क्रिया न्यायात्तदा तद्वाक्यशोधनम्।
शुद्धाच्च वाक्याद्यः शुद्धः स शुद्धोऽर्थ इति स्थितिः॥

इति। क्रिया साक्षिलक्षणा, नार्थसंबन्धिनो नाप्ता इति न्यायाद्यदा शुद्धा तदा तद्वाक्यशोधनं साक्षिवाक्यशोधनं कर्तव्यम्। वाक्यशुद्धिश्च सत्यार्थप्रतिपादनेन। सत्येन शुद्ध्यते वाक्यमिति स्मरणात्। एवं शुद्धायाः क्रियायाः शुद्धाच्च वाक्याद् यः शुद्धोऽवगतोऽर्थः स शुद्धः तथाभूत इति स्थितिः ईदृशी मर्यादा न्यायविदाम्। करणदोषबाधकप्रत्ययाभावे सति अवितथ एवार्थ इत्यर्थः।

ननु स्वयमर्थिना प्रमाणीकृतान् साक्षिणोऽतिक्रम्य कथं क्रियान्तरं प्रमाणीक्रियते। नैष दोषः।

यतः,

क्रियां बलवतीं मुक्त्वा दुर्बलां योऽवलम्बते।
स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात्क्रियाम्॥

इति कात्यायनेन जयावधारणोत्तरकालं क्रियान्तरपरिग्रहनिषेधाद् जयावधारणात्प्राक् क्रियान्तरपरिग्रहो दर्शितः।

---

१ एतत्समानार्थकः– ( ना० अ० २।३९ )
शुद्धेषु साक्षिषु ततः पश्चात्साक्ष्यं विशोधयेत्। इत्यर्धो दृश्यते।

न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।

इति स्मरणात् । तस्मात्प्रतिवादिनः साक्षिणो गुणवत्तमा द्विगुणा वाऽन्यथा प्रष्टुरित्यनुपपन्नम् ।

अथ मतम्— द्वावपि भावप्रतिज्ञावादिनौ मदीयमिदं दायादप्राप्तं मदीयमिदं दायादप्राप्तमिति पूर्वापरकालावधिभागानाकलितमेव वदतः तत्र द्वयोः साक्षिषु सत्सु कस्य साक्षिणो ग्राह्या इत्याकाङ्क्षायां—

द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु ।
पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः ॥

इति वचनेन ( ना० व्य० प० १।१६३ )

यः पूर्वं निवेदयति तस्य साक्षिणो ग्राह्या इति स्थिते—

तस्यायमपवाद, उक्तेऽपि साक्षिभिः साक्ष्ये इति । अतश्च पूर्वोत्तरयोर्वादिनोः समसंख्येषु समगुणेषु साक्षिषु सत्सु पूर्ववादिन एव साक्षिणः प्रष्टव्याः । यदा तु उत्तरवादिनः साक्षिणो गुणवत्तमा द्विगुणा वा तदा प्रतिवादिनः साक्षिणः प्रष्टव्याः । एवं च नाभावस्य साध्यता उभयोरपि भाववादित्वात् । चतुर्विधोत्तराविलक्षणत्वाच्च प्रकृतोदाहरणे न क्रियाव्यवस्था । एकस्मिन्व्यवहारे यथैकस्यार्थिनः क्रियाद्वयं परमते तथा वादिप्रतिवादिनोः क्रियाद्वयेऽप्यविरोध इति ।

तदप्याचार्यो नानुमन्यते । उक्तेऽपि साक्षिभिः साक्ष्ये इत्यतः शब्दादर्थात्प्रकरणाद्वाऽस्यार्थस्यानवगमात् इत्यलं प्रसङ्गेन ॥ ८० ॥

बा० १ । पूर्वोक्तलक्षणैरित्यनेन साक्षिपरीक्षा उक्ता।आनिषिद्धै-

विवादास्पदीभूतमृणं दाप्याः। सारानुसारेण दण्ड-नीयाश्च। अथ दोषानवधारणं तदा प्रत्यर्थिना तावता संतोष्टव्यम्।

यथाह मनुः। ( अ० ८ श्लो० १०८ )

यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः।
रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः॥ इति।

एतच—

यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत्-

इत्यस्यापरितुष्यत्प्रत्यर्थिविषयेऽपवादो द्रष्टव्यः।

केचित्—उक्तेऽपि साक्षिभिः साक्ष्ये इत्येतद्वचनम्, अर्थिना निर्दिष्टेषु साक्षिषु अर्थ्यनुकूलमभिहितवत्सु यदि प्रत्यर्थी गुणवत्तमान् द्विगुणान्वाऽन्यान् साक्षिणः पूर्वोक्तविपरीतं संवादयति तदा पूर्वस्य वादिनः साक्षिणः कूटा इति व्याचक्षते। तदसत्। प्रत्यर्थिनः क्रियानुपपत्तेः।

तथाहि। अर्थी नाम साध्यस्यार्थस्य निर्देष्टा। तत्प्रतिपक्षः तदभाववादी प्रत्यर्थी। तत्राभावस्य भावसिद्धिसापेक्षासिद्धित्वाद्भावस्य चाभावनिरपेक्षसिद्धित्वाद्भावस्यैव साध्यत्वं युक्तम्। अभावस्य स्वरूपेण साक्ष्यादिप्रमेयत्वाभावात्। अतश्चार्थिन एव क्रिया युक्ता। अपि चोत्तरानुसारेण सर्वत्रैव क्रिया नियता स्मर्यते,

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्॥ इति।

न चैकस्मिन्व्यवहारे द्वयोः क्रिया।

पपत्त्या साक्षिष्वपि दोषः कल्प्यते, न दृष्टप्रसिद्धदोषस्तेषु । तथा च परिकल्पितदोषदृष्टत्वेन प्रमाणान्तरान्वेषणमुपपन्नमेव । अङ्गीकृते च प्रमाणान्तरे व्यवहारदर्शिभिरपि व्यवहारः प्रवर्तनीय एव । इत्थं निरूप्य भूतेनेत्युक्तमिति भावः । तथा च तथाऽपरितुष्यतोऽर्थिनोऽयं साक्ष्यन्तरान्वेषणोपदेश इति नानवस्था, नापि स्मृत्यन्तरविरोध इति बोध्यम् ।

४। ननु स्वमत्या साक्षिष्वदृष्टदोषकल्पनं कथम्। अतो दृष्टान्तमुखेनोपपादयति * उक्तं चेति । गौतमेनेति भावः । यस्य च संप्रत्ययस्य करणं चक्षुरादिकं दुष्टं काचकामलदोषयुक्तं, यत्र च इदं रजतमित्यादिज्ञानविषये नेदं रजतमित्यादिबाधकप्रत्ययः, स एव द्विविधः प्रत्ययो ज्ञानरूपोऽसमीचीन इति दृष्टान्तवाक्यार्थः । तं प्रकृते योजयति * यथेति । अनध्यवसायेऽपि काचकामलादिप्रसिद्धदोषाणामनिश्चयेऽपि, एवं सत्यपि अर्थस्य शुक्तिरजतादेर्विसंवादादन्यथात्वात् तज्जनितस्येदं रजतमिति ज्ञानस्याप्रामाण्येन चक्षुरादिगतदोषकल्पना यथा तथेहापि दार्ष्टान्तिकेऽपीत्यर्थः ।

५। न केवलं युक्तितः प्रमाणान्तरान्वेषणसाधनम् अपि तु वचनबलादपीत्याह * साक्षिपरीक्षेति । साक्षिपरीक्षोपदेशतो भेदेन तद्वाक्येत्याद्यर्थः । तमेवाह * साक्षिभिरिति ।

उपस्थितान्परीक्षेत साक्षिणो नृपतिः स्वयम् ।

इति अस्य नारदस्य पूर्वार्धम् । न केवलं साक्षिवचनमात्रेण निर्णयोऽपि तु तद्वचनपरीक्षयाऽपि । तथा च तस्यां क्रियमाणायां यदि तद्वचनमबाधितं तदा तस्य प्रामाण्यम् अन्यथा तु तेन साक्षिष्वपि दोषकल्पना स्यादेवेति तत्परीक्षाविधिबलाद्गम्यते । अन्यथा तदानर्थक्यं स्पष्टमेवेति भावः ।

स्तपस्वित्वादिगुणविशिष्टैरिति तदर्थः। स्वाभिप्रायविषये साक्ष्ये प्रतिज्ञातार्थविपरीतस्यनाभिहितेऽपीत्यन्वयः। यद्वा, अत्र साक्षी नामार्थी अभिमतार्थस्य सम्यक् ज्ञाता तस्य भावः साक्ष्यं तदेव स्वस्यार्थेनोऽभिप्रायस्तात्पर्यविषयः। एवं च साक्ष्यपदस्यैव व्याख्या स्वाभिप्राये इति यथाश्रुत एवान्वयः। यद्वा स्वाभिप्राये इत्यस्य व्याख्या * प्रतिज्ञातेति। पूर्वेभ्य इत्यस्य मध्यमणिन्यायेनान्वयः। अग्रेऽपि तथा। अर्थिनैव निर्दिष्टा इति भावः। * प्रतिज्ञातार्थानुगुण्येनेति। सत्यमेवदितीत्यर्थः। समासान्तराभ्रमायाह * पूर्वे इति।

२। क्रमस्य विवक्षितत्वादाह * अर्थीति। परीक्षात एवाह * प्रमाणेति। प्रमाणभूत इतिवत्प्रयोगः। अत एव च्विर्न। * निगदिते, साक्ष्ये उक्ते। निगदे दत्ते इति पाठे सभ्यादिजनसमक्षमुच्चैर्निःसन्दिग्धं भाषणं निगदस्तस्मिन्दत्ते कृते सतीत्यर्थः। स्मृत्यन्तराविरोधमप्याह * निर्णिक्ते इति। शोधिते इत्यर्थः। * प्रमाणं, प्रमाणान्तरम्। तदेवाह * लिखितमिति। अपिना भुक्तिसमुच्चयः। तत्र विशेषमाह * पूर्वमिति। उक्तमेवार्थं दार्ढ्याय सदृष्टान्तमाह * यथेति। * पक्वेषु, पूर्णेषु पुष्टेषु। * प्रावृषइति। वर्षणरूपगुणा इत्यर्थः। निर्णिक्तव्यवहाराणामिति बहुव्रीहिः। * प्रमाणं, प्रमाणान्तरान्वेषणम्।

३। *अन्तरात्मेति। स्वात्मेत्यर्थः। बहुव्रीहिरयम्। विसंवादित्वे हेतुरयम्। * अनाविष्कृतेति। शास्त्रप्रकटितदोषशून्यानामपीत्यर्थः। प्रसिद्धदृष्टदोषरहितानामपीति यावत्। स्त्रोपन्यस्तानामपीति भावः। * अर्थविसंवादित्वेनेति। स्वार्थविरुद्धत्वेनेत्यर्थः। अपिना वचनसमुच्चयः। प्रतिज्ञातार्थस्य सत्यत्वेन स्वान्तःकरणेनासावर्थ एवमेवेति दृढतरप्रतीत्युत्पत्तेस्तदन्यथानु-

साधकमप्यसाधन इति बोध्यम् ।

७। नन्वेवं, स्वयमेवानया न निर्णयः स्यादत आह । *स इति। सर्वैरप्यनर्थक क्रियया तस्य संशयस्थाने निश्चिते सति स दुर्बल-क्रियाऽवलम्बी पुनस्तां पूर्वतनीं क्रियां नाप्नुयादित्यर्थः। उत्तर-कालमिति निर्णयक्रियाविशेषणम् । *निर्णयात्, तत्कथनात् । अयं दर्शने हेतुः । कात्यायनः कर्त्ता ।

८। *नारदेनापीति। इति पदेना नारदेनापीत्यानर्थक्यतृती-यान्तस्य निषिद्धमित्यत्रान्वयः । एतत्कथनक्रममाह * न माग-पीति । अपिनोत्तरसमुच्चयः। * उक्तेऽपीति । मूलतात्पर्यार्थमुप-संहरति *तस्मादिति । *अपरितुष्यता, अर्थिना ।

९। विशेषमाह *एवं स्थिते इति। *असन्निहितादिति। ईदृशाः साक्षिणो ऽसंनिहिताः सम्भवन्तीत्यर्थः । * त एवेति । पूर्वनि-र्दिष्टा एवेत्यर्थः । एवेनाभिहितवचननिरासः। ननु तेषामेव पुनः कुतो न प्रश्नो ऽतो मनुमाह * स्वभावेनैवेति । साक्षिणो व्याव-हारिकं व्यवहारागतं यत् वचनं स्वभावेनैव ब्रूयुस्तत् ग्राह्यमित्यर्थः।

अस्योत्तरार्द्धम्, ( अ० ८।७८ )

अतो यदन्यत् विब्रूयुर्धर्मार्थं तदपार्थकम् । इति ।

साक्षिप्रकरणस्य व्यवहारविशेषप्रकरणापाठादाह * सर्व-व्यवहारेति । तथा चात्रापि व्यवहारः समापनीयः। तेन अर्थिना स्वीयप्रतिज्ञाया अन्यथाभावमज्ञात्वैव प्रथममेवान्येषामपि साक्षि-त्वेन निर्दिष्टत्वात्स्वभावेनैव प्रकृते तेषां वचनस्य सत्त्वादिति भावः । नारदमपि साधकत्वेनाह * निर्णिक्ते इति । पूर्वावेदि-ततो व्यवहारशुद्धौ प्रमाणान्तरमफलं, तदशुद्धौ तु प्रमाणमेवाप-रम् । इदमपि गुणवत्तमादीनां पूर्वावेदनाभावे। तच्छुद्धत्वे तु ततो व्यवहारशुद्धिप्राप्तावप्युक्तरीत्या तेषामप्रामाण्येन पूर्वमुभयावेदनेन

६। मन्वादृष्याह * कात्यायनेनेति। स्फुटमितस्तदर्थप्रतीतिः कात्यायनोक्तं व्याचष्टे * क्रियेत्यादि । क्रियेत्यस्य व्याख्या *शास्त्रीति । निर्णयविषयत्वेनैव न्याय इति तं मनूक्तमेवाह *नार्थेति ।

इत्थं च मनुः, (अ० ८ । ६३ । ६४ । ६५ । ६६ । ६७)

सर्वधर्मविदो ऽलुब्धा विपरीतांस्तु वर्जयेत् ॥
नार्थसंबन्धिनो नाप्ता न सहाया न वैरिणः ।
न दृष्टदोषाः कर्त्तव्या न व्याध्यार्त्ता न दूषिताः ॥
न साक्षी नृपतिः कार्यो न कारुककुशीलवौ ।
न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः ॥
नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत् ।
न वृद्धो न शिशुर्नैको नान्त्यो न विकलेन्द्रियः ॥
नार्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णोपपीडितः ।
न श्रमार्त्तो न कामार्त्तो न क्रुद्धो नापि तस्करः ॥ इति ।

आध्यधीनो बन्धके धृतः। *शुद्धेति । तद्दोषरहितेत्यर्थः । *वाक्यशुद्धिश्चेति । चस्त्वर्थे। उत्तरार्धार्थमाह *एवमिति। उक्तप्रकारेणेत्यर्थः । पूर्वार्द्धाविरोधाय न्यूनतानिरासाय च शुद्धाद्वाक्याच्चेत्यन्वयेन चसमुच्चयमाह * शुद्धाया इति । *च वाक्याद्विति । वाक्याच्चेत्यर्थः । * य इति । योऽर्थः शुद्धो ऽवगतो निश्चित इत्यर्थः । * स शुद्ध इति । शुद्धपदस्य व्याख्या * तथा भूत इति।सत्य इत्यर्थः।एवं तदुक्तेः शाब्दार्थमुक्त्वा प्रकृतसंगतये तात्पर्यार्थमाह * करणेति । करणदोषश्च बाधकप्रत्ययश्च तयोरभावे सति अर्थोऽवितथ एव सत्य एवेत्यर्थः । *इत्यर्थ इति । इति तात्पर्यार्थ इत्यर्थः । अत्र यदा शुद्धेति पूर्वार्द्धेन साक्षिलक्षणक्रियारूपकरणगतदोषाभाव उच्यते । शुद्धाच्चेत्युत्तरार्द्धेन तु

भिजनः प्रत्यर्थिपराजयः । यदा साक्ष्यं साक्षिवर्गतत्साभावात् यदा तु प्रत्यर्थिनो ऽर्थिनोऽपि च सन्नीभवनात्मककतया सन्धे साक्षिदोषोपन्यासेन वै शोधयन्त्यतः तस्येति पत्रुतावधेन मूल- वाक्यपर्यवसानं इति प्रत्यर्थिनो ऽर्थाऽर्थिनः पराजय इति भावः । इदं च रूपं गृहीत्वा याज्ञवल्क्यायां दृष्टं तेन वा गृहीतमित्यु- क्त्वा विपरीतं धर्मस्थानं भवितानि तद्विषयकं बोध्यम् ।

१४। उक्तेऽर्थानि मूलवाक्यस्यैकदेशिव्याख्यानं दूषयितुमनुवदति * केचिदिति । ध्यानश्ने इत्यत्रान्वयः। अस्य क्रियापदत्वादेकं कर्माह *वचनमित्यन्तेन । द्वितीयमाह * अर्थिनेत्यादीनीत्यन्तेन । * अर्था- नुकूल्यमिति । अर्थ्यर्थानुकूल्यमित्यर्थः । अर्थ्यनुकूल्यमिति पाठस्तु सुगम एव । * विपरीतमिति । अर्थ्यर्थविपरीतं स्वानुकूल्यम् इत्यर्थः । अत्र पक्षे मूले पूर्वसाक्षिण इत्यत्र षष्ठीतत्पुरुष इत्या- ह * पूर्वस्येति । तदर्थमाह * वादिन इति ।

१५। दूषयति * तदसदिति । * क्रियेति । क्रियाया एवानुप- पत्तेरित्यर्थः । सामान्योक्तां तां विविच्य दर्शयितुमादावर्थिप्रत्य- र्थिस्वरूपं प्रागुक्तमपि दार्ढ्यायाह * तथाहीति । अर्थ्यते इत्य- र्थः साध्यं तदस्यास्तीति व्युत्पत्तेराह * साध्यस्येति । प्रत्यर्थ- माह * तत्प्रतिपक्ष इति । * तदभावेति । साध्याभावेत्यर्थः । ननु भवतु तदभाववादित्वं प्रत्यर्थिनः तथापि क्रियानुपपत्तौ तस्य किमायातमत आह । * तत्राभावस्येति । तयोर्मध्ये इत्यर्थः । अयम्भावः । न भावो ऽभाव इति व्युत्पत्त्या भावाधीनत्वमभा- वस्वरूपस्य, तथा अभाव इत्युक्ते कस्येत्याकाङ्क्षायां घटस्येत्यादेः प्रयोगेण तस्य सप्रतियोगिकत्वात्प्रतियोगिभूतघटादिनिरूपणा- धीननिरूपणत्वं, प्रतियोग्यधिकरणाभ्याममभावो निरूप्यते इति । अत एव तन्त्रान्तरे उक्तं, प्रध्वंसाभावस्यापि भावस्वरूपसिद्ध्यु-

सामान्यलाभेन विशेषाणामसंभवेन नैव निर्वाह इति भावः ।

१०। *पूर्वनिर्दिष्टा इति तत्राल्पत्वनिषेधान्तरमाह *पूर्वनिर्दिष्टानामिति । * यथाविधाः, ततो गुणवत्तमा द्विगुणा वा । एवमन्यत्रापि न द्विगुणानामिति । मनुमाह *सम्भवे इति । ततोऽपि विशेषमाह * तेषामिति । साक्षिणामित्यर्थः । * असम्भवे, भवेत् । अन्यथाऽनुपपत्त्येति भावः ।

११ पूर्वपक्षे उक्तमनवस्थारूपदोषमेवं सति भावं परिहरति *अतः परमिति ।

१२। स्वमतपक्षबलादपरितुष्यता अर्थिना प्रमाणान्तरमङ्गीकार्यमित्युक्तं, नैवं प्रत्यर्थिन इति विशेषान्तरमाह *यत्र त्विति। मन्यमानस्येति प्रत्यर्थिविशेषणम् । *अवसरेति । प्रसङ्गेत्यर्थः । मिथ्या क्रिया पूर्ववादे इत्युक्तेरिति भावः । अवतारेति पाठान्तरम् । * व्यसनोद्भवेनेति । दुःखनिष्पत्त्येत्यर्थः । * कर्तव्यमिति । पूर्ववत्प्रमाणान्तरान्वेषणाभावेनागत्या प्रत्यर्थ्यपरितोषपरिपालनार्येति भावः । * तत्र च, सप्तसु दिनेषु । तावत्तेव अगतेरिति भावः । सप्ताहादिति ल्यब्लोपे पञ्चमी । सप्ताहमभिव्याप्येत्यर्थः । अर्वागित्यध्याहार इति तु मेधातिथिः । उक्तवाक्यस्येति बहुव्रीहिः । साक्षिविशेषणम् । रोगादेर्विकल्पो बोध्यः । * सः, साक्षी । रोगो ऽत्यन्तपीडाकरः । अग्निर्गेहधनदाहः । पुत्रदारादिप्रत्यासन्नमरणं ज्ञातिमरणम् । इदं च तस्य कूटसाक्षित्वे लिङ्गम् ।

१३। एवं सति प्रसक्तं मनुयाज्ञवल्क्ययोर्विरोधं परिहरति *एतच्चेति । यस्य दृश्येतेत्येतन्मनूक्तं च यस्योचुरिति मूलस्यापवाद इत्यर्थः । कस्मिन्विषये इत्याशङ्कायामाह *अपरितुष्यदिति । एवेन विषयान्तरव्यवच्छेदः । साक्षिभिः वाद्यभिमते एव साक्ष्ये उक्ते यदि प्रत्यर्थी परितुष्यति तदा मूलवाक्योक्तः अ-

र्थिजयः प्रत्यर्थिपराजयः । तदा सम्यक् साक्षिपरीक्षणाभावात् । यदा तु प्रत्यर्थिना ऽपरितोषेण तत्परीक्षणानभ्युपगमात् तन्मध्ये साक्षिदोषावधारणेन ते दोषवन्तस्तदा वक्ष्यति पञ्चमानेन मूल-वाक्यमपोह्यते इति प्रत्यर्थिनो जयोऽर्थिनः पराजय इति भावः । इदं च ऋणं गृहीत्वा याचनावस्थायां दत्तं नैव वा गृहीतमित्यु-क्त्वा विपरीतं धर्मस्थानं प्रविशति तद्विषयकं बोध्यम् ।

१४। उक्तेऽपीति मूलवाक्यस्यैकदेशिव्याख्यानं दूषयितुमनुवदति * केचिदिति। व्याचक्षते इत्यत्रान्वयः। अस्य द्विरर्थकत्वादेकं अर्थाद *वचनमित्यन्तेन। द्वितीयमाह * अर्थिनेत्यादीनीत्यन्तेन। * अर्थानुकूलमिति । अर्थ्यर्थानुकूलमित्यर्थः । अर्थ्यनुकूलमिति पाठस्तु सुगम एव । * विपरीतमिति । अर्थ्यर्थविपरीतं स्यानुकूलम् इत्यर्थः । अत्र पक्षे मूले पूर्वसाक्षिण इत्यत्र षष्ठीतत्पुरुष इत्याह * पूर्वस्येति । तदर्थमाह * वादिन इति ।

१५। दूषयति *तदसादिति। *क्रियेति । क्रियाया एवानुपपत्तेरित्यर्थः। सामान्योक्तां तां विविच्य दर्शयितुमादावर्थिप्रत्यर्थिस्वरूपं प्रागुक्तमपि दार्ढ्यायाह * तथाहीति । अर्थ्यते इत्यर्थः साध्यं तदस्यास्तीति व्युत्पत्तेराह * साध्यस्येति । प्रत्यर्थमाह * तत्प्रतिपक्ष इति । * तदभावेति । साध्याभावेत्यर्थः। ननु भवतु तदभाववादित्वं प्रत्यर्थिनः तथापि क्रियानुपपत्तौ तस्य किमायातमत आह। *तत्राभावस्येति। तयोर्मध्ये इत्यर्थः। अयम्भावः । न भावो ऽभाव इति व्युत्पत्त्या भावाधीनत्वमभावस्वरूपस्य, तथा अभाव इत्युक्ते कस्येत्याकाङ्क्षायां घटस्येत्यादेः प्रयोगेण तस्य सप्रतियोगिकत्वात्प्रतियोगिभूतघटादिनिरूपणाधीननिरूपणत्वं, प्रतियोग्यधिकरणाभ्यामभावो निरूप्यते इति । अत एव तन्त्रान्तरे उक्तं, प्रध्वंसाभावस्यापि भावस्वरूपसिद्ध्यु-

त्वरूपाश्रितत्वादिति । सर्वथा भावसिद्धिसापेक्षसिद्धित्वमभावस्य । भावस्य तेनैतद्वैपरीत्यात्तच्छरीरं तदप्रवेशात्स्वातन्त्र्येण सिद्धिर्न त्वभावापेक्षया सिद्धिरिति अभावसिद्धिनिरपेक्षसिद्धिकत्वं भावस्य । एवं च सापेक्षनिरपेक्षसिद्धिकयोरभावभावयोर्मध्ये निरपेक्षसिद्धिकत्वेन भावस्यैव साध्यत्वं युक्तमिति । ननु अभावस्य सापेक्षसिद्धिकत्वेऽपि साध्यता कुतो नास्ति इत्यत आह * अभावस्येति । भावस्य साक्षात्साक्ष्यादिरूपप्रमाणप्रमेयत्वम् अभावस्य तु न साक्षात्, अपि तु भावद्वारा । तथा च साक्षात्प्रमेयस्यैव साध्यत्वं नातिभूयस्या परम्परया प्रमेयस्येति भावः। फलितमाह *अतश्चेति । एवं च प्रत्यर्थिनस्तदनुपपत्तिस्तु सिद्धेति भावः ।

१६। वाचनिकोऽप्ययमर्थ इत्याह *अपिचेति। *सर्वत्रैव, न केवलमत्रैव । नन्वेवमपि व्यवहारभेदवदत्राप्युभयोरप्यत्र क्रिया आस्तामिति न दोषो ऽत आह *न चैकस्मिन्निति । नापीत्यर्थः । कार्त्यिमाह * न चैकस्मिन्निति । दूषणमुपसंहरति * तस्मादिति ।

१७। पूर्वोक्तस्याशयान्तरवर्णनद्वारा तस्यार्थान्तरप्रतिपादकप्रागुक्तैकदेश्युक्तिमेव दूषयितुमनुवदति *अथ मतमिति । सामान्योक्तं विशिष्याह *मदीयमिति । तत्र कालविशेषोक्तौ तत एव निर्णयस्य प्रागुक्तरीत्या सम्भवादाह * पूर्वापरेति । प्राप्तौ तद्राहित्यमेवानाकलनम् । ननु एवमपि साक्षिभिस्तत्र निर्णयः स्यादत आह * तत्रेति । अत एवाह * कस्येति । नारदमाह *द्वयोरिति । व्याख्यातमिदं प्राक् । प्रतिज्ञायां कालानुक्तेराह * यः पूर्वं निवेदयतीति।प्राप्तिपूर्वत्वाज्ञानेऽपि निवेदनपूर्वत्वज्ञानेन तत्र निर्णय इति भावः । * स्थिते इति । सिद्धान्ते इत्यर्थः ।

तस्यायमपवाद इत्युक्तं, तत्र कारणपत्वाद् इत्याशङ्कापाकुर्वन्न-कल्पयेति न्यायेन परिशेषात्कारणवादविषयं तत्तुल्यादनुगतगति-षयमाह * अतश्चेति । अस्य तदपवादत्वादित्यर्थः । समेत्या-दिना ऽपवादविषयता सूचिता । अपवादविषयमाह * यदा तू-त्तरेति । अयमेव प्रतिवादी । तथा चास्मिन्नेव विषये ऽपवादत्व-मिति भावः । एवं व्याख्याने प्रागुक्ताद्यदोषाभावमाह * एवं चेति । ईदृशविषयकत्वाङ्गीकारे चेत्यर्थः । ननु एवमपि पूर्वोत्त-रयोर्वादिनोः साक्षिणां समत्वे पूर्ववादिनः साक्षिणः प्रष्टव्या इत्याद्युक्त्या एकस्मिन्विवादे द्वयोः क्रियाप्रसङ्गाभावेन प्राष्ट्या-येति न चैकस्मिन्विवादे इति च कात्यायनविरोध इत्यग्रिमदो-षद्वयं तदवस्थमेव, अत आह * चतुर्विधोत्तरेति । चोऽन्ते योज्यः । सत्यमिथ्याकारणप्राङ्न्यायोत्तरेष्वेव क्रियाव्यवस्था वादिप्रतिवादिनोर्द्वयोः क्रियाऽभावश्च, प्रकृतोदाहरणे तु द्वयोरपि प्रतिज्ञावादित्वेन तद्विलक्षणत्वान्न क्रियाव्यवस्था द्वयोः क्रियाभावश्चेति न द्वितीयतृतीयदोषाविति भावः । तृतीयदोषं प्रतिव-न्द्या युक्त्यन्तरेणापि खण्डयन्नाह * एकस्मिन्निति । स्थलविशेषे प्रागुक्ते इत्यर्थः । * परमते, सिद्धान्तिमते । * तथेति । अत्र पक्षे इति शेषः । यथा सिद्धान्तिमते साक्षिभिः साक्ष्ये उक्ते सति यत्र प्रतिज्ञातार्थस्यान्यथात्वेन स्वान्तःकरणप्रत्ययाभावात्प्रमाणान्तराङ्गीकरणम् एवमस्मिन्मतेऽपि वादिप्रतिवादिनोः क्रियाद्वयम्, नारदवचने जाग्रत्यपि यथा स्वान्तः करणप्रत्ययविसंवादित्वेनोक्तरीत्या तत्र मते प्रमाणान्तराङ्गीकरणं तथाऽस्मन्मतेपि न चैकस्मिन्निति कात्यायनवचने जाग्रत्यपि उक्तरीत्यैकत्र विवादे तयोः क्रियाद्वयमिति भावः । इतिर्मतसमाप्तौ ।

१८। इदमपि दूषयति * तदपीति । * आचार्यः, विश्वरूपा-

नन्त्वान्तिकत्वामिति । सर्वथा भावसिद्धिसापेक्षसिद्धित्वमभावस्य । भावस्य त्वेतद्विपरीत्यात्तच्छरीरे तदप्रवेशात्स्वातन्त्र्येण सिद्धिर्न त्वभावापेक्षया सिद्धिरिति अभावसिद्धिनिरपेक्षसिद्धिकत्वं भावस्य । एवं च सापेक्षनिरपेक्षसिद्धिकयोरभावभावयोर्मध्ये निरपेक्षसिद्धिकत्वेन भावस्यैव साध्यत्वं युक्तमिति । ननु अभावस्य सापेक्षसिद्धिकत्वेऽपि साध्यता कुतो नास्ति इत्यत आह * अभावस्येति । भावस्य साक्षात्साक्ष्यादिरूपप्रमाणप्रमेयत्वम् अभावस्य तु न साक्षात्, अपि तु भावद्वारा । तथा च साक्षात्प्रमेयस्यैव साध्यत्वं नातिभूयस्या परम्परया प्रमेयस्येति भावः। फलितमाह *अतश्चेति । एवं च प्रत्यर्थिनस्तदनुपपत्तिस्तु सिद्धेति भावः ।

१६। वाचानिकोऽप्ययमर्थ इत्याह *अपिचेति। *सर्वत्रैव, न केवलमत्रैव । नन्वेवमपि व्यवहारभेदवदत्राप्युभयोरप्यत्र क्रिया आस्तामिति न दोषो ऽत आह *न चैकस्मिन्निति । नापीत्यर्थः । कात्यायनमाह * न चैकस्मिन्निति । दूषणमुपसंहरति * तस्मादिति ।

१७। पूर्वोक्तस्याशयान्तरवर्णनद्वारा तस्यार्थान्तरप्रतिपादकप्रागुक्तकदेश्युक्तिमेव दूषयितुमनुवदति *अथ मतमिति । सामान्योक्तं विशिष्याह *मदीयमिति । तत्र कालविशेषोक्तौ तत एव निर्णयस्य प्रागुक्तरीत्या सम्भवादाह * पूर्वापरेति । प्राप्तौ तद्ग्राहित्यमेवानाकलनम् । ननु एवमपि साक्षिभिस्तत्र निर्णयः स्यादत आह * तत्रेति । अत एवाह * कस्येति । नारदमाह *द्वयोरिति । व्याख्यातमिदं प्राक् । प्रतिज्ञायां कालानुक्तेराह * यः पूर्वं निवेदयतीति।प्राप्तिपूर्वत्वाज्ञानेऽपि निवेदनपूर्वत्वज्ञानेन तत्र निर्णय इति भावः । * स्थिते इति । सिद्धान्ते इत्यर्थः ।

भयं संत्रासः । मैत्री स्नेहातिशयः । कामः स्त्रीव्य-तिकराभिलाषः । क्रोधोऽमर्षः । अज्ञानमस्फुटं ज्ञानम् । बालिश्यं ज्ञानानुत्पादः । सहस्रादिषु नाम्रिकाः पणा गृह्यन्ते ।

तथा, ( मनु० अ० ८. श्लो० १२३. )

कौटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान्धार्मिको नृपः ।
प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत् ॥इति।

एतच्चाभ्यासविषयम् । कुर्वाणानिति वर्तमानकालनिर्देशात् । त्रीन्वर्णान् क्षत्रियादीन् पूर्वोक्तं दण्डयित्वा प्रवासयेत् मारयेत् । अर्थशास्त्रे प्रवासशब्दस्य मारणे प्रयोगात् । अस्य चार्थशास्त्रस्वरूपत्वात् । तत्रापि प्रवासनमोष्ठच्छेदनं जिह्वाच्छेदनं प्राणवियोजनं च कौटसाक्ष्यविषयानुसारेण द्रष्टव्यम् ।

ब्राह्मणं तु दण्डयित्वा विवासयेत् स्वराष्ट्रान्निष्कासयेत् । यद्वा । वाससो विगतो विवासाः विवाससं करोतीति णिचि कृते णाविष्ठवत्प्रातिपदिकस्येति टिलोपे रूपम् । नग्नीकुर्यादित्यर्थः । अथवा । वसत्यस्मिन्निति वासो गृहं विवासयेत् भग्नगृहं कुर्यादिति । ब्राह्मणस्यापि लोभादिकारणविशेषापरिज्ञाने अनभ्यासे च तत्र तत्रोक्तो दण्ड एव । अभ्यासे त्वर्थदण्डो विवासनं च । तत्रापि जातिद्रव्यानुबन्धाद्यपेक्षया विवासनं नग्नीकरणं गृहभङ्गो देशान्निर्वासनं चेति व्यवस्था द्रष्टव्या । लोभादिकारणविशेषापरिज्ञाने अनभ्यासे चाल्पविषये कौटसाक्ष्ये ब्राह्मणस्यापि क्षत्रियादिवदर्थदण्ड एव । महाविषये तु देशान्नि-

यं। निम्नरूपविरुद्धोक्तिविस्तृतिसंहारात्मकत्वेनास्य ग्रन्थस्य तदनुयायित्वात् । * इत्यतः शब्दादिति । अस्माद्वचनादित्यर्थः । एवं शाब्दत्वं निरस्य व्यक्तत्वं निराचष्टे * अर्थादिति । प्रयोजनादित्यर्थः । * प्रकरणं, यथा श्रोत्रियवृद्धेत्यत्र । किं च प्रकृतोदाहरणे ताभ्यां तथोक्तावपि साक्षिणां साम्येऽपि प्रागुक्तरीत्या कालादिनिश्चयद्वारा निर्णयसम्भवेन न तदर्थमस्योपयोगः । किं च नैकमुदाहरणमिति न्यायेन सामान्यशास्त्रप्रणयनानर्थक्यमिति तथैवोचितमिति दिक् । तदाह *इत्यलमिति ॥ ८० ॥

मि० कूटसाक्षिणो दर्शिताः, तेषां दण्डमाह ।

या० पृथक्पृथग्दण्डनीयाः कूटकृत् साक्षिणस्तथा ।
विवादाद् द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ॥ ८१ ॥

मि० यो धनदानादिना कूटान् साक्षिणः करोतीति स कूटकृत् साक्षिणश्च ये तथा कृताः ते विवादाद्विवादपराजये यो दण्डस्तत्र तत्रोक्तः तं दण्डं द्विगुणं पृथक्पृथक् एकैकशः दण्डनीयाः। ब्राह्मणस्तु विवास्यो राष्ट्रान्निर्वास्यो न दण्डनीयः । एतच्च लोभादिकारणविशेषापरिज्ञाने अनभ्यासे च द्रष्टव्यम् । लोभादिकारणविशेषपरिज्ञाने अभ्यासे च—

मनुनोक्तम्, ( अ० ८ श्लो० १२०।१२१ )

लोभात्सहस्रं दण्ड्यः स्यान्मोहात्पूर्वं तु साहसम् ।
भयात् द्वौ मध्यमौ दण्ड्यो मैत्र्या पूर्वं चतुर्गुणम् ॥
कामात् दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम् ।
अज्ञानाद् द्वे शते पूर्णे बालिश्याच्छतमेव तु ॥ इति ।

तत्र लोभोऽर्थलिप्सा । मोहो विपर्ययज्ञानम् ।

इति सामान्येन मनुस्मरणात् ।

तथा, ( मनु. अ. ८. श्लो. ३८१ )

न ब्राह्मणवधाद्भूयानधर्मो विद्यते भुवि ।

तस्माद्दस्य वधं राजा मनसाऽपि न चिन्तयेत्॥इति॥८१॥

वा० १। ०दर्शिता इति । अनुपदर्शितेति भावः। अन्येऽपि तं ऽन्यत्र स्पष्टाः। यद्यपि कूटकृतश्च ते साक्षिणश्चेति व्याख्यानं संभवति तथापि तथेत्यस्यानैयर्थ्याय भेदेन व्याचष्टे *च इति । आदिना सामादिपरिग्रहः । कूटान्साक्षिण इति पाठः । मिथ्याभूतानिति तदर्थः । साक्षिण इति विशेष्यस्य प्रकरणाल्लाभः । अत एवाह * साक्षिणश्चेति । तथेत्यस्य व्याख्या *कूटा इति । *ते, प्रागुक्ताः सर्वे । विवादादित्यस्य सांनिध्यात् द्विगुणमित्यत्रान्वयेन तदास्पदद्रव्यादित्यर्थे तस्यानियमेन अनियतदण्डापत्तिः, तस्य स्वल्पत्वेन न बहुदण्डापत्तिः, अतोऽन्यथा व्याचष्टे * विवादादिति । हेतौ पञ्चमी । पराजये तस्य लक्षणा । पूर्वत्रापि तस्याः सत्त्वेनात्राविशेषात् । दण्डे चान्वयः। तदाह *विवादपराजये इति। सतीति शेषः। गर्गदण्डनन्यायेन समुदाये दण्डविश्रान्तिवारणायाह *पृथगिति । इदं द्वितीये सफलम् । दण्डं दण्डनीया इति धनपेषं पिनष्टीतिवत् प्रयोगः । लक्षणा वा ।

२। तुर्यपादार्थमाह * ब्राह्मणस्त्विति। तुर्वैलक्षण्ये। निर्वासनं बहिष्कारः । अत एव विवासव्यतिरेकमाह । *न दण्ड्य इति । उक्तदण्डाविषयो नेत्यर्थः ।

३। मन्वविरोधाय संकोचेन विषयविशेषपरत्वमाद्यार्थस्या-

---

१ पृथक् पृथक् दण्डनीया इति कथनं द्वितीये साक्षिविषये सार्थकम्। तेषां बहुत्वात् । न तु श्लोके प्रथमोक्ते कूटकृति। तस्यैकत्वात् इत्यर्थः।

र्वासनमेव। अत्राप्यभ्यासे सर्वेषामेव मनूक्तं द्रष्टव्यम्। न च ब्राह्मणस्यार्थदण्डो नास्तीति मन्तव्यम्। अर्थदण्डाभावे शारीरदण्डे च निषिद्धे स्वल्पेऽप्यपराधे नग्नीकरणगृहभङ्गाङ्ककरणविप्रवासनं दण्डाभावो वा प्रसज्येत।

चतुर्णामपि वर्णानां प्रायश्चित्तमकुर्वताम्।
शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत्॥
इति स्मरणाच्च। ( मनु० ९।२३६ )
तथा, ( मनु० अ० ८ श्लो० ३७८ )
सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद् व्रजन्।
इति स्मरणात्।

यत्तु शङ्खवचनम्,

त्रयाणां वर्णानां धनापहारवधबन्धक्रिया विवासनाङ्ककरणं ब्राह्मणस्येति,

तत्र धनापहारः सर्वस्वापहारो विवक्षितो वधसाहचर्यात्।

शारीरस्त्ववरोधादिर्जीवितान्तः प्रकीर्तितः।
काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च॥इति-
वधसर्वस्वहरणयोः सहपाठात्॥ (ना० परि० ५४)
यदप्युक्तम्, ( मनु० ८।३८० उ० )
राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम्। इति,
तत् प्रकृतसाहसविषयं, न सर्वविषयम्। शारीरस्तु ब्राह्मणस्य न कदाचिद्भवति।
( अ० ८ श्लो० ३८० पू० )
न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम्।

साक्ष्याभिधानस्यापरिसमाप्तत्वाद्वर्त्तमानत्वमेव तस्यैतत्प्रकरणाप्रतिपाद्यत्वस्यैवास्य सूचनादिति । अत्र यतः कौटसाक्ष्यं तत एव पुनः पुनरभिधानं न तु पुनःपुनः प्रश्नपूर्वकमिति न पूर्वविरोध इति बोध्यम् ।

५। इदं व्याचष्टे त्रिशेषं वक्तुं *त्रीन्वर्णानिति । ब्राह्मणस्य दण्डान्तरविधानादाह * क्षत्रियादीनिति । दण्डस्यात्रानुक्तत्वादाह * पूर्वोक्तमिति ।

एतानाहुः कौटसाक्ष्ये प्रोक्तान्दण्डान्मनीषिभिः ।
धर्मस्याव्यभिचारार्थमधर्मनियमाय च ॥

इतिश्लोकमात्रव्यवहितेन लोभादित्यादिनोक्तमित्यर्थः । ननु प्रवासयेदित्यस्य कथमयमुक्तोऽर्थोऽत्त आह * अर्थेति । *प्रवासेति । उपसर्गान्तरासंस्पृष्टस्येत्यर्थः । अतः—

सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत्–(याज्ञ० २।२७०)

इतिस्तेयप्रकरणस्थमूलविरोधो नेति बोध्यम् । नन्वस्य धर्मशास्त्रत्वेन कथं तथा, अत आह *अस्य चेति। कौटसाक्ष्यमिति वचनस्येत्यर्थः । एतदन्तर्गतमपि तदस्तीति प्राक् प्रतिपादितम् ।

६। मारणमेव केवलं सर्वत्र नार्थः किं त्वन्योऽपीति तस्यानेकविधत्वमाह * तत्रापीति । अर्थशास्त्रेऽपीत्यर्थः । *कौटसाक्ष्यविषयेति । तद्भेदेनेत्यर्थः ।

७। एतच्चतुर्थपादार्थमाह *ब्राह्मणं त्विति । विवासनस्य मूलेऽप्युक्तत्वेनाभ्यासे आधिक्यस्यापेक्षितत्वेन मध्यपातिदण्डयित्वेत्यस्य मध्यमाणिन्यायेनान्वयादाह * दण्डयित्वेति ।

८। अर्थान्तरमाह *यद्वेति । एवमग्रेऽपि । बहुव्रीहेर्लाघवात्तत्पुरुषमाह । *वासस इति । *वासो गृहमिति । हलश्चेत्याधिकरणे घञ् । अग्रे प्रक्रिया पूर्ववत् । इतिः मन्वर्थसमाप्तौ ।

* * एवयोति। पादत्रयोक्तं चेत्यर्थः। तत्र आद्ये आह *लोभादिति। दण्ड्य इत्यस्याग्रे अनुषङ्गः। *पूर्वं तु साहसं, सार्द्धपणशतद्वयम्। भयात् द्वौ मध्यमौ दण्ड्य इति पाठः। साहसावित्यर्थः। पणसहस्रमिति यावत्। भयाद्द्व मध्यमो दण्ड्या इति त्वपपाठः। असम्बद्धत्वात्। * पूर्वं, पूर्वसाहसम्। *चतुर्गुणं, पणसहस्रम्। एवमग्रेऽपि। *परम्, उत्तमसाहसम्। *त्रिगुणम्, पणसहस्रत्रयम्। पूर्वापेक्षया परो मध्यमसाहसस्तस्मिन् त्रिगुणे पञ्चदश शतानि संपद्यन्ते इति कल्पतरुः। पौनरुक्त्याभावाय हेतून् व्याचष्टे *लोभ इत्यादि। मैत्र्या इति पाठ इत्याह * मैत्रीति। मैत्र्यादिति पाठान्तरम्। ष्यबन्तो ऽजन्तश्चायम्। व्यतिकरः संबन्धः। नञो ऽल्पार्थत्वेनाह *अस्फुटमिति। एतेन व्यवहारकाले एव विपरीतं ज्ञानमिति कल्पतरूक्तमपास्तम्। मोहेन पौनरुक्त्यापत्तेः। *बालिश्यं ज्ञानेति। तदुत्पत्तिप्रागभाव इत्यर्थः। बालिश्यमत्राप्राप्तमात्रयौवनत्वं न बाल्यम्। तस्य साक्ष्यनिषेधादिति मेधातिथिकल्पतर्वादयः। पूर्वाध्यायान्तोक्तावष्टम्भेनाह *सहस्रादिष्विति। तथा च पणानां सहस्रमित्याद्यन्वयः।

४। एवं लोभादिकारणविशेषपरिज्ञाने दण्डमुक्त्वा कौटसाक्ष्याभ्यासे दण्डविशेषं तदुक्तमेवाह *तथेति। शब्दतस्तद्विषयत्वाप्रतीतेस्तत् स्पष्टयति * एतच्चाभ्यासेति। यद्यपि सकृदपराधे पूर्वमुक्तत्वात् अर्थादेवेदमभ्यासविषयं दण्डाधिक्योक्त्या परिशिष्यते, तथापि शाब्दत्वमप्यस्येति सूचनायाह *कुर्वाणानितीति। वर्त्तमानार्थकलट्स्थानिकशानजादिनिर्देशादित्यर्थः। अयंभावः। अनभ्यासे एकदैव कृतत्वेन भूतार्थकक्तवत्वन्तेन कृतवत इति निर्देष्टव्ये वर्त्तमानार्थकलट्स्थानिकशानजन्तेन कुर्वाणानित्युक्त्या क्रियायाः प्रारब्धापरिसमाप्तत्वरूपवर्त्तमानत्वेन पुनः पुनः कौट-

वः । तथा च मानवे दण्डयित्वेति पूर्वान्वय्येवेति बोध्यम् । तत्रा-दौ युक्तिमाह *अर्थदण्डाभावे इति । यत इत्यादिः । *निषिद्ध इति । न शारीरो ब्राह्मणस्य दण्ड इति गौतमादिनेति भावः । मूलस्य मनुतुल्यार्थकत्वेन तन्मात्रमाह * नग्नीकरणेति । अन्य-थाङ्कनस्याप्युक्तत्वादाह *अङ्ककरणेति । समाहारद्वंद्वः । एतदन्य-तममित्यर्थः । ननु दण्डस्य महत्त्वेनापराधस्याल्पत्वेन वैषम्येणा-योग्यतया कथमेतत्प्रसक्तिरत आह *दण्डाभावो वेति । अन्यदण्ड-स्यानुक्तत्वात् । न चेदं युक्तं, दण्ड्यादण्डने राज्ञो दोषस्योक्त-त्वात् । अधर्मवृद्ध्यापत्तेश्चेति भावः ।

१५। ननु धिग्दण्डवाग्दण्डायुक्तावेवेति तौ यथासंभवं तत्र भ-विष्यतोऽत आह * चतुर्णामिति । मनूक्तिरियम् । अत्र शारीर-मिति क्षत्रियादिपरम् । धनसंयुक्तमिति साधारणम् इति भावः । धर्मादनपेतं धर्म्यम् ।

१६ । ननु—

ब्रह्महा च सुरापश्च स्तेयी च गुरुतल्पगः ।
एते सर्वे पृथक् ज्ञेया महापातकिनो नराः ॥
चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्वताम् ।

शारीरमित्यादिः तत्र पाठो दृश्यते । एवं चाब्राणपरतया ऽप्युपपत्तिरस्य । अत एव शारीरं धनसंयुक्तमित्यस्य स्वरसतस्सं गतिः । तस्य च दश स्थानानि उपस्थमुदरमित्यादिनोक्तमित्य इति नेदं साधकम् । अत एव—

यमस्मृतिरपि,

सर्वेषामेव वर्णानामन्योन्यस्यापराधिनाम् ।

शारीरं कारयेदिति । तादृशानां क्षत्रियादिवर्णानां सर्वेष्वा ब्रह्महननादिष्वित्याद्यर्थः । अधिकरणस्य संबन्धित्वेन विवक्ष

९। ननु मूलेन विवासनस्य तस्योक्तत्वेन ब्राह्मणस्य किं सर्वत्र शाक्ष्यविषयं निवासनमेव नार्थदण्ड इति चेन्न, सोऽपि हि अस्तीत्याह * ब्राह्मणस्यापीति। प्रकृतमूलविषयत्वाभावादाह * तत्र तत्रोक्त इति। * अभ्यासे त्विति। लोभादिकारणविशेषपरिज्ञाने इत्यादिः। अत्रापि एतद्विषयत्वादव्यवहितमनूक्तमाह *अर्थदण्डो विवासनंचेति। तदुक्तार्थदण्ड इत्यर्थः।

१०। अत एव विशेषं प्रागुक्तमेवाव्यवस्थया व्यवस्थितमाह *तत्रापीति। विवासनांशेऽपीत्यर्थः। अनुबन्धो गुणः। नग्नीकरणमिति पाठः।

११। एवं तत्परिज्ञाने उक्त्वा तदपरिज्ञाने आह *लोभादीति। अत्र कस्यापि प्रागुक्तस्याप्राप्तेर्विशिष्यानुक्तत्वाच्चाह * क्षत्रियादिवदिति। एतेन मूलोक्तविवासननिरासः। विषयस्याल्पत्वात्तदण्डस्य महत्त्वात्।

१२। नन्वेवं मूलतुर्यपादस्य निर्विषयतापत्तिरत आह *महाविषयेत्विति। उक्तनिमित्ते एवेति भावः। विषयभेदमात्रम् अन्यत्सर्वं प्राग्वत्। *निर्वासनमेवेति। मूलेन तस्यैवोक्तत्वात्। मनूक्ताविषयत्वात्। विशिष्य दण्डानुक्तत्वात् सामान्योक्तस्यानेन बाधाच्चेति भावः। एतेनार्थदण्डनिरासस्तथासतीति तात्पर्यम्।

१३। *अत्रापीति। लोभादिकारणविशेषापरिज्ञाने महाविषयेऽपीत्यर्थः। *सर्वेषां, ब्राह्मणादीनाम्। एतेन दण्डांशे वैलक्षण्यनिरासः। अन्याविषयत्वादाह * मनूक्तमिति। कौटसाक्ष्यमित्यनेनोक्तमित्यर्थः। यद्वा। मनूक्तत्वेन साम्यादुभयांशेऽप्यवैलक्षण्यं बोध्यम्। यद्वा एवो व्युत्क्रमे। मनूक्तमेवेत्यर्थः। अन्याविषयकत्वसूचक एवकार इति बोध्यम्।

१४। न चेति। समग्रधनमक्षतमित्याद्युक्तेर्विध्यनुपलम्भाच्चेति भा-

समुपयेऽयम्। * भृगान्, अधिकः॥ * इतीति। सामान्येन मनुस्मरणादित्यस्यानुपङ्गः। मपश्चितमिदं मास्क़ृतत एव बोध्यम्॥८१॥

मि० अपिच।

या० यः सादयं श्रावितोऽन्येभ्यो निह्नुते तत् तमोवृतः।
स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत्॥८२॥

मि० यस्तु साक्षित्वमङ्गीकृत्यान्यैः साक्षिभिः सह साक्ष्यं श्रावितः सन् निगदकाले तमोवृत्तो रागाद्याक्रान्तचित्तः तत् साक्ष्यम् अन्येभ्यः साक्षिभ्यो निह्नुते, नाहमत्र साक्षी भवामीति,

स विवादपराजये यो दण्डस्तं दण्डमष्टगुणं दाप्यः।

ब्राह्मणं पुनरष्टगुणद्रव्यदण्डदानासमर्थं विवासयेत्। विवासनं च नग्नीकरणगृहभङ्गदेशानिर्वासनलक्षणं विषयानुसारेण द्रष्टव्यम्। इतरेषां त्वष्टगुणद्रव्यदण्डासंभवे स्वजात्युचितकर्मकरणनिगडबन्धनकारागृहप्रवेशादि द्रष्टव्यम्।

एतच्च पूर्वश्लोकेऽप्यनुसर्तव्यम्। यदा सर्वे साक्ष्यं निह्नुवते तदा सर्वे समानदोषाः। यदा तु साक्ष्यमुक्त्वा पुनरन्यथा वदन्ति तदाऽनुबन्धाद्यपेक्षया दण्ड्याः।

यथाह कात्यायनः,

उक्त्वाऽन्यथा ब्रुवाणाश्च दण्ड्याः स्युर्वाक्छलान्विताः।
इति।

न चान्येनोक्ताः साक्षिणोऽन्येन रहस्यनुसर्तव्याः।

यथाह नारदः, (व्य० प० १।१६५)

न परेण समुद्दिष्टमुपेयात्साक्षिणं रहः।

या षष्ठी । एषोऽप्यर्थः। अत आह *सहस्रमिति। स्त्रीसंग्रहप्रकरणे मनूक्तिरियं च । *स्मरणादिति। स्मरणाचेत्यर्थः। आदौ तथेति पाठे ऽप्यपपाठः ।

१७। नन्वेवं शङ्खविरोधः।तत्र त्रयाणां क्षत्रादीनां धनापहारादित्रयमुक्त्वा ब्राह्मणस्य विवासनाङ्ककरणयोरेवोक्तत्वात् । तथा च स्थलविशेषे तथा सत्त्वेऽपि सामान्येनार्थदण्डस्तस्य नैव युक्तो ऽत आह * यत्तु शङ्खेति । *त्रयाणां, क्षत्रियादीनाम् । *धनापहारेति । वधश्च बन्धक्रिया च ते।धनापहारश्च ते च ता इत्यर्थः। विवासनेति समाहारे द्वंद्वः । * सर्वस्वेति । तथा च तथोक्त्या ब्राह्मणस्य सर्वस्वहरणं तात्पर्यतो निषिध्यते, नार्थदण्डमात्रमिति भावः । ननु प्रकृते वधशब्दसान्निध्येऽपि सर्वस्वहरणस्य तत्साहचर्यस्यान्यत्रादृष्टत्वात् प्रकृते तत्सहपाठमात्रेण कथं तस्य तत्परत्वमत आह * शारीरस्त्विति । मानवमेवेदम् । *जीवितान्तः, तद्ग्रहणान्तः।एवमग्रेऽपि।प्रकीर्त्तित इत्यस्योभयान्वयो मध्यमणिन्यायेन । तथा च अर्थदण्डस्तु तदादिस्तदन्तः प्रकीर्तितः । * च, किञ्चायं * तथैव, तत्सदृश एवेत्यर्थः ।

१८। मनुविरोधं परिहरति * यदप्युक्तमिति । *प्रकृतेति । स्त्रीसङ्ग्रहणाख्यप्रक्रान्तसाहसविषयकमित्यर्थः । प्रकरणादेवेति भावः ।

१९। ननु सहपाठेन तथा साधनवत् शारीरस्यापि ब्राह्मणस्य प्राप्तिः स्यादत आह * शारीरस्त्विति । * कदाचित्, कदाचिदपि । राष्ट्रादित्यस्य प्राचीनं मानवमाह * न जात्विति । सर्वपापेषु स्थितमपि ब्राह्मणं कदाचिदपि न हन्यादित्यर्थः । *सामान्येनेति । पातकसामान्येनेत्यर्थः ।

२०। अक्षतमित्यग्रिममपि मानवं हेत्वन्तरतया आह *तथेति ।

एतल्लक्षणत्रयमूलक एव तुः । सर्वथा तस्य शारीरदण्डाभावेन देशादिनिर्गमनं च अनुकल्पान्तरस्यासम्भवात् सर्वथा दण्डाकरणे राज्ञो दोषश्रवणात् प्रागुक्तविवासनमेव तस्यानुकल्प इति। एतेन प्रधानक्रियानिरूपितलक्षणत्रयमूलकतुशब्दविरोधात् अप्रगुणत्वादि चिन्त्यमिति वीरमित्रोदयोक्तमपास्तम् ।

३। पुनः स्पष्टार्थमाह * विवासनं चेति । एतत्त्रितयस्वरूपमित्यर्थः ।

४। नन्वेवं क्षत्रादेरपि तदसम्भवेऽनुकल्पो वाच्योऽन्यत्रात्र चानुक्तत्वात्, अतः प्रागुक्तरीत्या न्यूनतां निराचष्टे * इतरेषां त्विति । क्षत्रियादीनामित्यर्थः ।

५। सिंहावलोकनन्यायेन तत्रापि न्यूनतां निराचष्टे * एतच्चेति। विप्रस्य दण्डदानासमर्थस्य विवासनं क्षत्रादीनां तदसमर्थानां कर्मकरणादीति यदुक्तं तदित्यर्थः ।

६। य इत्याद्युक्तेरेकस्यैवेदम् इति भ्रमनिरासायाह * यदेति। * समानेति। प्रागुक्तरीत्या पृथक् पृथक् दण्ड्या इत्यर्थः। तथाच मूलमुपलक्षणं, ग्रहं संमार्ष्टीतिवत् उद्देश्यविशेषणमेकत्वमविवक्षितं वेति न न्यूनतेति भावः ।

७। विशेषमाह *यदात्विति । *तदाऽनुबन्धेति । जातिद्रव्यगुणाद्यपेक्षयेत्यर्थः । *उक्त्वेति । उक्तेति पाठे समस्तम् । तत्र हेतुमाह * वागिति । वाचश्छलमन्यथात्वं तदन्विता इत्यर्थः ।

८। विशेषान्तरमाह * न चेति । नापीत्यर्थः । प्रकारान्तरमपि न कार्यमित्याह * भेदयेदिति । स्वयं रहसि अगमनेऽपि अन्यद्वारा भेदोऽपि न कारणीय इत्यर्थः । अत एव चोक्तिः । मूले रह इत्यव्ययम् । एतत्फलमाह * हीयेतैवामिति ॥ ८२ ॥

भेदयेन्नैव चान्येन हीयेनैवं समाचरन्॥ इति॥८२॥

मा० १।* अपिचेति। साक्षिणामुक्तदोषान्यदोषे दण्डान्तरमाहेत्यर्थः। अत एव तुरुक्तवैलक्षण्ये। न ददातीतिप्रागुक्तमूलापौनरुक्त्यात्* अङ्गीकृत्येति । ल्यबन्तस्य निह्नुते इत्यत्रान्वयः । अन्यैरित्यादिरुत्तरेणान्वयः । * साक्ष्यमिति । यादित्यादिः । *निगदकाले, भाषणकाले। इदमर्थलब्धम् । तेषां तमःकार्यत्वादाह * रागादीति। हेतुगर्भविशेषणमिदम् । तदित्यस्यार्थं प्रक्रान्तत्वादाह * साक्ष्यमिति । प्रकृतत्वादेवान्यशब्दार्थमाह * साक्षिभ्य इति । निह्नवमेवाह * नाहमिति । विवादादित्यस्योक्तार्थकस्यानुवृत्तेराह * विवादेति । ननु यः स इति सामान्योक्त्या पादत्रयोक्तदण्डस्य सर्ववर्णविषयत्वं सकृदपराधे नाभ्यासे, तद्गमकाभावात्। तमोवृत इति हेतूक्त्या तत्रापि लोभादिकारणसामान्यपरिज्ञानविषयत्वेऽपि न तद्विशेषपरिज्ञानविषयत्वम् । गमकाभावात्। एवं साक्ष्याङ्गीकारादिपूर्वकानिह्नवदोषस्य पूर्वत आधिक्येन द्विगुणदण्डादष्टगुणदण्डोक्तावपि तद्वदस्याप्यर्थलोभादिविषयत्वं न महाविषयत्वम् । एवं सति अत्र तुर्यपादेन सामान्यप्राप्ताष्टगुणदण्डापवादेन विप्रस्य कथं विवासनाविधिः । न हि पूर्वदण्डोऽपि महाविषयक एवेति वक्तुं शक्यम् । तत्र विवासनस्यैव व्यवस्थापितत्वात् अत आह * ब्राह्मणमिति ।

२। त्वर्थमाह * पुनरिति। स्वल्पे ऽपराधे बहुदण्डस्यायोग्यत्वात् ब्राह्मणेऽर्थदण्डस्यानुपदमेव व्यवस्थापितत्वादाह * अष्टगुणेति । अयं भावः। यद्यपि सामान्येनार्थदण्ड उपदिष्टो योगिना तथापि तद्दानसमर्थं प्रत्येवायमुपदेशो नासमर्थं प्रतीत्यवश्यं वक्तव्यम्। अन्यथा मुनेर्भ्रान्तत्वापत्तिः। तथाच ब्राह्मणस्यापि तत्सामर्थ्ये तद्विषयेऽयमेव मुख्यः। एतदसम्भवेऽनुकल्पो विवासनम्।

च प्रतिषिद्धं तदितराभ्यनुज्ञानम्। यत्तु नानृतं वदेत्,

अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी।

इति च सामान्येनानृतवचनमवचनं च निषिद्धं तदतिक्रमनिमित्तमिदं प्रायश्चित्तम्। न च वक्तव्यम्, साक्षिणामनृतवचनावचनाभ्यनुज्ञानेऽपि साधारणानृतवचनावचनप्रतिषेधातिक्रमनिमित्तप्रत्यवायस्य तादवस्थ्यात् अनृतवचनावचनाभ्यनुज्ञावचनमनर्थकमिति।

यतः साक्ष्यनृतवचनावचनयोर्भूयान्प्रत्यवायः, साधारणानृतवचनावचनयोरल्पीयान्, इत्यर्थवदभ्यनुज्ञावचनम्। यद्यपि भूयसः प्रत्यवायस्य निवृत्त्या आनुषङ्गिकस्याल्पीयसः प्रत्यवायस्य निवृत्तिरन्यत्र, तथापीहाभ्यनुज्ञावचनात्प्रायश्चित्तविधानाच्च भूयसो निवृत्त्याऽल्पीयानप्यानुषङ्गिकोऽपि प्रत्यवायो न निवर्तते इति गम्यते। एतदेवान्यत्र प्रश्नेषु वर्णिवधाशङ्कायां पान्थादीनामनृतवचनावचनाभ्यनुज्ञानं वेदितव्यम्। न च तत्र प्रायश्चित्तमस्ति। प्रतिषेधान्तराभावात्। निमित्तान्तरेण कालान्तरेऽर्थतत्त्वावगमेऽपि साक्षिणामन्येषां च दण्डाभावोऽस्मादेव वचनादवगम्यते इति ॥ ८३ ॥

इति साक्षिप्रकरणम् ॥

बा० १। उपस्थितेरुक्तव्युत्क्रमेणाह * अवचनमिति। *सर्वत्र, व्यवहारे। पूर्वोक्तमूलाभ्यामिति भावः। अग्रे एकस्यैवोक्तत्वादाह * तदपवादार्थमिति। अन्यथा ऽपवादमित्येव ब्रूयात्। वर्णशब्दस्य धर्मपरत्वस्यापि सत्त्वादाह * वर्णिनामिति। अर्थान्तराश्रमायाह * शूद्रेति। अत्र प्रातिलोम्येन कथनं हीनस्यापि

मि० साक्षिणामवचनमसत्यवचनं च सर्वत्र प्रतिषिद्धं, तदपवादार्थमाह।

या० वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्।

मि० यत्र वर्णिनां शूद्रविट्क्षत्रविप्राणां सत्यवचनेन वधः संभाव्यते तत्र साक्ष्यनृतं वदेत्, सत्यं न वदेत्। अनेन च सत्यवचनप्रतिषेधेन साक्षिणः पूर्वप्रतिषिद्धमसत्यवचनमवचनं चाभ्यनुज्ञायते। यत्र शङ्काभियोगादौ सत्यवचने वर्णिनो वधोऽनृतवचने न कस्यापि वधस्तत्रानृतवचनमभ्यनुज्ञायते। यत्र तु सत्यवचनेऽर्थिप्रत्यर्थिनोरन्यतरस्य वधोऽसत्यवचने चान्यतरस्य वधस्तत्र तूष्णींभावाभ्यनुज्ञा, राजा यद्यनुमन्यते। अथ राजा कथमप्यकथने न मुञ्चति तदा भेदात् असाक्षित्वं कर्तव्यम्। तस्याप्यसंभवे सत्यमेव वदितव्यम्। असत्यवचनेन वर्णिवधदोषोऽसत्यवचनदोषश्च। सत्यवचने तु वर्णिवधदोष एव। तत्र च यथाशास्त्रं प्रायश्चित्तं कर्तव्यम्।

मि० तर्ह्यसत्यवचने तूष्णींभावे च शास्त्राभ्यनुज्ञया प्रत्यवायाभाव इत्यत आह।

या० तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥८३॥

मि० तत्पावनाय अनृतवचनावचननिमित्तप्रत्यवायपरिहाराय सारस्वतश्चरुर्द्विजैरेकैकशो निर्वाप्यः कर्तव्यः। सरस्वती देवता अस्येति सारस्वतः। अनवस्रावितान्तरूष्मपक्वौदने चरुशब्दः प्रसिद्धः।

इहायमभिसन्धिः। साक्षिणामनृतवचनमवचनं

(७) न्यायरत्नमाला—श्रीपार्थसारथिमिश्र वि० सं० (मीमांसा

(८) ब्रह्मसूत्रभाष्यम्—बादरायणप्रणीत-वेदान्तसूत्रस्य यतीन्द्र श्रीमद्विज्ञान-भिक्षुकृत व्याख्यानम्। सम्पूर्णम्। (वेदान्त.) ६

(९) स्याद्वादमञ्जरी—मल्लिषेणनिर्मिता सम्पूर्णा। (जैनदर्शनम्) २

(१०) सिद्धित्रयम्—विशिष्टाद्वैत—ब्रह्मनिरूपण-परम्—श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम्। सम्पूर्णम् (वेदान्तः) १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः। आचार्यचित्सुख-मुनिविरचितव्याख्योपेतः (वेदान्तः) ४

(१२) विभक्त्यर्थनिर्णयः न्यायानुसारिप्रथमादि-सप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः। सम्पूर्णः (न्यायः) ५

(१३) विधिरसायनम्। श्रीअप्पयदीक्षितकृतम्। सं० (मीमांसा) २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्ट-सोमेश्वरविरचिता। (मीमांसा) १६

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता। श्रीक्षेमराजविरचितवृत्तिसमेता। (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः (जैमिनीयद्वादशा-ध्यायार्थसंग्रहः) श्रीभट्टनारायणात्मज-भट्टशङ्करविरचितः। (मीमांसा) २

(१७) प्रकरणपञ्चिका (प्रभाकरमतानुसारि-मीमांसादर्शनम्) महामहो-पाध्यायश्रीशालिकनाथमिश्रविरचितं, श्रीशङ्करभट्टकृतो मीमांसा-सारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्दव्यासप्रणीत-स्तत्कृतव्याख्यासमलङ्कृतश्च। (वेदान्त) ३

(१९) कात्यायनश्रौतसूत्रम्। महामहोपाध्यायश्रीकर्का-चार्यविरचितभाष्यसहितम्। १३

(२०) ब्रह्मसूत्रभाष्यम्। श्रीभास्कराचार्यविरचितम् (वेदान्तः) १

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम्। आनन्दपूर्ण-विरचितया खण्डनफक्किकाविभजनाख्यया व्या-ख्यया (विद्यासागरी) ति प्रसिद्धया समेतम्। (वेदान्तः) १३

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता। १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्यया-ऽवतरणिकया च सहितम्। ८

॥ श्रीः ॥

-●-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाक्षिकमणिगणग्रथिताऽद्भुता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्वीत सन्ताऽऽमोदमोदितम् ॥ २ ॥

स्तबकः— १७६

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतकं सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरण धर्म-शास्त्रसाहित्यपुराणादिग्रन्था यथाक्रमं सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः ब्रह्मदेशीयैः सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्-मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तबकम् ,, ,, १ ,, ८

६ प्रापणव्ययः पृथग् नास्ति ।

७ साम्प्रतं मुद्र्यमाणा ग्रन्थाः— मुद्रिताः स्तबकाः

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता (संस्कारः) २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः (व्याकरणम्) १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत—न्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्य्यप्रणीतम् । श्रीनारायण तीर्थ विरचित भाष्टभाषा प्रकाशसहितम् । सं० (वेदान्त) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः (ज्योतिषः) १

(६) भाट्टचिन्तामणिः । महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपादः (मीमांसा) २

August 1912.

THE

# CHOWKHAMBA SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 176.

# व्यवहार- बालंभट्टी

इति प्रसिद्धया लक्ष्मीनामिकया

पायगुण्डे इत्युपनामकेन बालंभट्टेन स्वपत्न्याः लक्ष्मीदेव्याः

स्मारकत्वेन तन्नाम्ना रचितया बृहत्या टीकया सहिता

मिताक्षरा

श्रीयुतगोविन्ददासमहाशयप्रदर्शितरीत्या

पर्वतीयनित्यानन्दपन्तेन परिष्कृत्य संशोधिता।

# VYAVAHÂRA-BÂLAMBHATTI

THE EXTENSIVE COMMENTARY ON THE MITÂKSHARÂ

WITH THE ORIGINAL

BY

Bâlambhatta Páyagundo

EDITED BY

Pandit Nityanand Pant Parvatiya

Under the suporvision of Shri Govinda Das.

FASCICULUS IV.

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBA SANSKRIT BOOK-DEPOT.

BENARES.

AGENTS:- OTTO HARRASSOWITZ LEIPZIG:

PANDITA JYESHTHARAMA MUKUNDAJI BOMBAY:

PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Dasa Gupta,*

AT THE VIDYA VILASA PRESS

BENARES.

*Price Rupee one.*

Registered According to Act ... (All Rights Reserved.)

त्यवाग्यस्तर्थेऽभ्यनुज्ञानं व्यर्थमिति मिथो विरुद्धमिदम्, अत आह * इत्ययमभिसंधिरिति । अभिप्राय इत्यर्थः । अनृतवचनावचनानिषेधौ द्विविधौ, साधारणावसाधारणौ च । तत्राद्यौ नानृतं वदेदित्यनारभ्याधीतः, अब्रुवन्विब्रुवन्वेत्यादिकौ । द्वितीयौ तु-

स तान्सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत् ।

इति, अब्रुवन् हि नरः साक्ष्यमिति च । एवं सति प्रकरणात् द्वितीययोरेव शास्त्राभ्यनुज्ञावशात्तयोर्न प्रायश्चित्तम्, आद्ययोर्व्यवहितत्वात्तयोरव्यवहितत्वादित्याह * साक्षिणामिति । * तद्दिहेति । अत्र मूले पूर्वार्धेनेति भावः ।

८ । नन्वेवं प्रायश्चित्तविधानं व्यर्थमिति चेन्न । साधारणनिषेधापवादाभावात् तत्राभ्यनुज्ञानाभावात्तदतिक्रमजन्यदोषपरिहारायास्य साफल्यात्, तच्छब्देन बुद्धिस्थवाचिना तयोः परामर्शसंभवादित्याह * यत्त्विति ।

९ । नन्वेवं वर्णिनामित्यभ्यनुज्ञापरवचनमनर्थकं, सामान्यतो निषिद्धानृतवचनावचनातिक्रमजन्यदोषयोस्तथाप्यवस्थितत्वादित्याह * न च मन्तव्यमिति । * निमित्तेति । निमित्तकेत्यर्थः । पूर्वं मूले तथा क्रमस्य सत्त्वात्तदनुरोधेनात्र सर्वत्रानृतवचनस्य पूर्वनिपातः । * प्रत्यवायस्येति । जातावेकवचनम् । एवमग्रेऽपि । तत्र प्रत्येकाभिप्रायं वा । हेतुमाह * यत इति । साधारणनिषेधातिक्रमजन्यप्रत्यवाययोर्भूयस्त्वाभावप्रतिपादकतया तस्य सार्थक्यमिति भावः ।

१० । ननु ब्रह्महत्याविचारे पापं भवति, तथोद्योगे ततोधिकं, तद्धनने कृते तु महत्पापमिति पूर्वपूर्वापेक्षयोत्तरोत्तरस्य पातकस्याधिक्येऽपि हत्यानिमित्तकमहाप्रायश्चित्ते कृते आनुषङ्गिकविचारोद्योगादिजन्यानामल्पीयसामपि पापानां यथा निवृ-

वधो गर्हितः किन्तु उत्कृष्टस्येत्यन्यत्राप्येवं बोध्यम् इति ज्ञापनार्थम् । द्विरुचितमाह * सत्येति । तदानीं तस्याभावादाह * संभाव्यते इति ।

२ । अन्यसंप्रदाय तात्पर्यार्थमाह * सत्यामिति । तदेवाह *अनेन चेति । चो वाक्यालंकारे। प्रागुक्तक्रमेणाह * असत्यवचनमिति ।

३ । उभयाभ्यनुज्ञाने उक्तेऽपि कुत्र किमित्याशङ्कायां तयोर्व्यवस्थां दर्शयितुमुक्तक्रमेणचादावसत्यवचनाभ्यनुज्ञाविषयमाह * यत्र शङ्केति । एतत्स्वरूपमादावुक्तम् ।

४ ।अवचनाभ्यनुज्ञाविषयमाह * यत्र त्विति । * असत्यवचने च, तत्रापि । तत्र विशेषमाह * राजेति । यदीत्यस्य तात्पर्यमाह * अथेति । कथमपि न मुञ्चतीत्यन्वयः। साक्षिण इति शेषः ।

५। * तस्यापि, भेदस्यापि । तत्र बीजमाह * असत्यवचनेनेति । ननु तत्र दोषैक्येऽपि दुष्टत्वं तदवस्थमेव अत आह *तत्र चेति । तद्दोषनिरासार्थं चेत्यर्थः ।

उ० ६। * तर्हीति । उभयाभ्यनुज्ञायामित्यर्थः । किमिति शेषोऽग्रे नन्वित्यादिः। तच्छब्देन तयोरुक्तक्रमेण परामर्श इत्याह *अनृतेति। द्विजैरित्यनेन शूद्रनिरासः, तस्याग्निसाध्यत्वात्।तस्य तु प्रायश्चित्तं विष्णुनोक्तं, शूद्रश्चैकाहिकं गोदशकस्य ग्रासं दद्यादिति । एकेति एकदिनभक्षणपर्याप्तम् इत्यर्थः । ब्राह्मणभोजनन्यायेनाह * एकैकश इति । सरस्वद्देवताकत्वनिरासायाह *सरस्वतीति। अत्र शास्त्रे ऽपरिभाषणादाह * अनवस्राविततेति।

७। ननु साक्ष्यनृतवचनावचनयोः स्थलविशेषे शास्त्राभ्यनुज्ञाने यदि प्रत्यवायाभावस्तर्हि प्रायश्चित्तोक्तिरफला, अथ प्र-

त्तिस्तथेहापि तस्याभ्यनुज्ञावचनेन महतः प्रत्यवायस्य निवृत्ते-रनुग्रहसिद्धसाधारणानृतवचनावचननिषेधातिक्रमजन्यस्वल्पप्र-त्यवाययोरपि निवृत्तिः स्यादिति तदर्थं प्रायश्चित्तोपदेशो व्यर्थ एवेत्याशयेन शङ्कते *यद्यपीति। *प्रत्यवायस्य, तस्यापि। *त-थापीहेति। वचनद्वयकरणादिह तथा न, अन्यथाऽन्यतरवैयर्थ्यं स्पष्टमेव। अभ्यनुज्ञावचनात्तथासिद्धावेव प्रायश्चित्तवचनादेत-त्सिध्यतीत्युभयोरुल्लेखः।

११। साक्षिग्रहणमुपलक्षणमित्याह *एतदेवेति। स्वातन्त्र्ये-णानुक्तत्वात्। *अन्यत्र, साक्षिभिन्नेषु। *अनृतेति। सामा-न्यवचननिषिद्धेत्यादिः। अत एव तत्र प्रत्यवायाभावात् एवं तौल्येऽपि कश्चन विशेषमाह *न चेति। मूलोक्तं तु साक्षि-विषयकमिति भावः। प्रकृतवैषम्यमाह *प्रतिषेधेति। ननु भव-दुक्तरीत्या तदभावः तथाप्यनृतवचनादिप्रयुक्तो राजदण्डस्तु स्यादेव, अत आह *निमित्तान्तरेणेति। *अन्येषां च,पान्थादी-नाम्। *अस्मादेव, अभ्यनुज्ञावचनादेव। अपराधे सति दण्ड-शास्त्रतस्तदभ्यनुज्ञानेऽपराधाभावेन तदभावः। यदि तु दण्डः स्यात्तदा तद्धेत्वपराधकल्पना स्यादिति वचनवैयर्थ्यं तदवस्थ-मेवेति भावः॥ ८३॥

इति साक्षिप्रकरणम्॥

---

इति स्मरणात् ॥ ८४ ॥

व्या० १।व्यवहितमग्रहीतं मदर्शनन सन्त्यमुपाख्यानमाह * भुक्ती-ति। * तत्र,निर्णये इत्यर्थः। तत्र शासनमिति पाठः। तयोर्मध्ये इत्यर्थः। * तथा,जानपदं च। भुक्तमिति पाठो नारदानुरोधात्। * तत्र, तयोर्मध्ये। ० असाक्षिकं, साक्षिनिरपेक्षम्। दृष्ट-व्यवहाराविरोधाय व्यवस्थामाह ० अनयोरिति। क्रमस्य विवक्षितत्वात् स्वहस्तेतरस्य पूर्वनिपातो द्वन्द्वे,मध्यमपदलोपिसमासो वा। यथेति पाठः। लेख्यं तु यथा स्वहस्तकृतमन्यकृतं चेत्येवं द्विविधं ज्ञेयं, तथा यथाक्रमम् असाक्षिमत्साक्षिमच्चेत्येवं तदुभयं ज्ञेयमित्यर्थः।तथेति पाठे पूर्वत्र तथेतिवत् यथेत्यस्याध्याहारेणोक्त एवार्थः। ० सिद्धिरिति । तयोर्देशस्थितेस्तदाचारात्प्रामाण्यमित्यर्थः। अथ मूलमवतारयति *तत्रेति । तयोर्मध्ये इत्यर्थः। तस्य प्रामाण्यस्य बहूपायसाध्यत्वादादावुक्तिः।

२। ० यः कश्चिदिति । उक्तनारदाद्वक्ष्यमाणमूलाच्चास्य अन्यकृतपरत्वम्। काश्चिदर्थमाह * हिरण्येति। तामेवाह * इयतेति। रुच्यन्तरमाह * इयतीचेति। निष्णात इत्यस्य व्याख्या * व्यवस्थित इति । तस्मिन्नित्यस्य व्याख्या * अर्थे इति। विषयसप्तमीयं, विप्रतिपत्तावन्वयः। यथाश्रुतेऽनुपपत्तेः शेषमाह * कालान्तरे इति। * विप्रतिपत्तौ, सम्भावितायाम् इति शेषः। लेख्ये साक्षियुक्तत्वं तन्नामवैशिष्ट्येन। अत एवाग्रेऽपि यथाश्रुतासम्भवादाह * नामेति। कार्यमित्यस्य व्याख्या * कर्तव्यमिति। लेख्यं चेतिचाशब्दसूचितं लाघवाद्विशेषपक्षान्तरमाह * उक्तलक्षणा इति । ते एव चेत्यर्थः। नारदमेवाह * कर्त्रोत्त्विति। * विवादेषु, सत्सु । पक्षान्तरमाह * स्वकृतामिति। * वाऽथ, अथवा ॥ ८४ ॥

## अथ लेख्यप्रकरणम् ॥ ६ ॥

मि॰ भुक्तिसाक्षिणौ निरूपितौ। सांप्रतं लेख्यं निरूप्यते। तत्र लेख्यं द्विविधं, शासनं जानपदं चेति। तत्र शासनं निरूपितं, जानपदमभिधीयते। तच्च द्विविधम्, स्वहस्तकृतमन्यकृतं चेति। तत्र स्वहस्तकृतमसाक्षिकम्, अन्यकृतं ससाक्षिकम्। अनयोश्च देशाचारानुसारेण प्रामाण्यम्।

यथाह नारदः, (व्य॰ प॰ १।१३५)

लेख्यं तु द्विविधं ज्ञेयं स्वहस्तान्यकृतं यथा।
असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः ॥ इति।

तत्रान्यकृतमाह।

या॰ यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम्।
लेख्यं वा साक्षिमत् कार्यं तस्मिन्धनिकपूर्वकम् ॥८४॥

मि॰ धनिकाधमर्णयोर्योऽर्थो हिरण्यादिः परस्परं स्वरुच्या इयता कालेन एतावद्देयम् इयती प्रतिमासं वृद्धिरिति निष्णातो व्यवस्थितः तस्मिन्नर्थे कालान्तरे विप्रतिपत्तौ वस्तुतत्त्वनिर्णयार्थं लेख्यं साक्षिमत् उक्तलक्षणसाक्षियुक्तं धनिकपूर्वकं धनिकः पूर्वो यस्मिंस्तत् धनिकपूर्वकं धनिकनामलेखनपूर्वकमिति यावत् कार्यं कर्तव्यम्। उक्तलक्षणाः साक्षिणो वा कर्तव्याः।

कर्त्रा तु यत्कृतं कार्यं सिद्ध्यर्थं तस्य साक्षिणः।
प्रवर्तन्ते विवादेषु स्वकृतं वाऽथ लेख्यकम् ॥

मि० किञ्च ।

या० समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् ।
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम् ॥ ८६ ॥

मि० धनिकाधमर्णयोर्योऽर्थः स्वरुच्या व्यवस्थितस्त स्मिन्नर्थे समाप्ते लिखिते ऋणी अधमर्णो नाम आत्मीयं स्वहस्तेनास्मिँल्लेख्ये यदुपरि लेखितं तत् ममामुकपुत्रस्य मतमभिप्रेतमिति निवेशयेत्पत्रे लिखेत् ॥ ८६ ॥

या० १। प्राग्वदाह * किञ्चेति । अर्थोऽत्र प्रागुक्त एवेत्याह * धनिकेति । यथाश्रुतासङ्गतेराह * लिखिते इति । अत्रेत्यस्य व्याख्या * अस्मिन्निति । प्रकृतत्वादाह * लेखितमिति । अमुकपुत्रस्येत्यार्षम् । एवमग्रेऽपि । * इतीति । एवं प्रकारेण नाम निवेशयेदित्यर्थः । यथाश्रुतासङ्गतेराह * लिखेदिति ॥ ८६ ॥

मि० तथा ।

या० साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम् ।
अत्राहममुकः साक्षी लिखेयुरिति ते समाः ॥८७॥

मि० तस्मिँल्लेख्ये ये साक्षिणो लिखितास्तेऽप्यात्मीयपितृनामलेखनपूर्वकमस्मिन्नर्थेऽहममुको देवदत्तः साक्षीति स्वहस्तेनैकैकशो लिखेयुः । ते च समाः संख्यातो गुणतश्च कर्तव्याः । यद्यधमर्णः साक्षी वा लिपिज्ञो न भवति तदाऽधमर्णोऽन्येन साक्षी च साक्ष्यन्तरेण सर्वसाक्षिसन्निधौ स्वमतं लेखयेत् ।

यथाह नारदः,

अपिच ।

या० समामासतदर्धाहर्नामजातिस्वगोत्रकैः ।
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥ ८५ ॥

मि० समाः संवत्सरः । मासश्चैत्रादिः । तदर्धः पक्षः, शुक्लः कृष्णो वा । अहस्तिथिः प्रतिपदादिः । नाम धनिकाधमर्णयोः । जातिर्ब्राह्मणत्वादिः । स्वगोत्रं वासिष्ठादिगोत्रम् । एतैः समादिभिश्चिह्नितम् । तथा सब्रह्मचारिकं बह्वृचादिशाखाप्रयुक्तं गुणनाम बह्वृचः कठ इति । आत्मीयपितृनाम धनिकर्णिकपितृनाम । आदिशब्दात् द्रव्यजातिसंख्याचारादेर्ग्रहणम् । एतैश्च चिह्नितं, लेख्यं कार्यमिति गतेन संबन्धः ॥८५॥

वा० १। नैतावन्मात्रेण तस्य पूर्त्तिरित्याह *अपि चेति। अत्र समादीनां व्याप्यव्यापकभावः । अत एव क्रमस्य प्रतिपाद्यत्वात्तस्य प्रागुक्तिः। एवं क्रमो नामादावपि बोध्यः । समाशब्दः स्त्रीलिङ्गो बहुवचनान्त इत्याह *समा इति । तदर्द्धः पक्ष इति पाठः । अक्लीबत्वादेकदेशिसमासाभावात्पष्ठीतत्पुरुषः। अविनिगमकत्वादाह *कृष्णोवेति । अहःशब्दोऽत्राहोरात्रपर इत्याह *तिथिरिति।प्राग्वदाह *धनिकेति । स्वार्थे क इत्याह *वासिष्ठादीति । अयं द्वन्द्वः, तदाह *एतैरिति । अग्रे सत्त्वादत्रापि अध्याहरति *चिह्नितमिति ।अन्यदप्याह *तथेति । सब्रह्मेत्यस्य तत्साधारणमित्यर्थः । तदाह * बह्वृचेति । बह्वृचादेर्या शाखा तदध्ययनप्रयुक्तमित्यर्थः । अत एवाह *गुणेति । प्राग्वदाह *धनिकेति । एतैश्चिह्नितमिति पाठः । वाक्यपूर्त्तये आह * लेख्यमिति ॥ ८५ ॥

न्तरम् । * अन्न, सर्वाभः । नतूपरि ॥ ८८ ॥

मि० साम्प्रतं स्वकृतं लेख्यमाह ।

या० विनाऽपि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ।
तत्प्रमाणं स्मृतं लेख्यं बलोपधिकृतादृते ॥ ८९ ॥

मि० यल्लेख्यं स्वहस्तेन लिखितमधमर्णेन, तत् साक्षिभिर्विनाऽपि प्रमाणं स्मृतं मन्वादिभिः । बलोपधिकृतादृते–बलेन बलात्कारेण, उपधिना छललोभक्रोधभयमदादिलक्षणेन यत्कृतं तस्माद्विना ।

नारदोऽप्याह, ( व्य० प० १।१३७ )
मत्ताभियुक्तस्त्रीबालबलात्कारकृतं च यत् ।
तदप्रमाणं लिखितं भयोपधिकृतं तथा ॥ इति ।

तच्चैतत्स्वहस्तकृतं परहस्तकृतं च यल्लेख्यं देशाचारानुसारेण सबन्धकव्यवहारेऽबन्धकव्यवहारे च युक्तम् अर्थक्रमापरिलोपेन लिप्यक्षरापरिलोपेन च लेख्यमित्येतावत्, न पुनः साधुशब्दैरेव । प्रातिस्विकदेशभाषयाऽपि लेखनीयम् ।

यथाह नारदः, ( व्य० प० १।१३६ )
देशाचाराविरुद्धं यद्व्यक्ताधिविधिलक्षणम् ।
तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरम् ॥ इति ।

विधानं विधिः आधेर्विधिराधिविधिराधीकरणं तस्य लक्षणं गोप्याधिभोग्याधिकालकृतमित्यादि, तद् व्यक्तं विस्पष्टं यस्मिंस्तद् व्यक्ताधिविधिलक्षणम् । अर्थानां क्रमः, क्रमश्चाक्षराणि च क्रमाक्षराणि अविलु-

अलिपिज्ञ ऋणी यः स्यात्स्वमतं तु स लेखयेत्।
साक्षी वा साक्षिणाऽन्येन सर्वसाक्षिसमीपतः॥
इति ॥ ८७ ॥

वा० १। प्राग्वदाह * तथेति। साक्षिमति पत्रे प्रतिपादितमर्थमाह * तस्मिन्निति। चार्थमाह * तेऽपीति। स्वार्थे कः। लिखने नामपूर्वत्वाभावादाह * लेखनेति। अत्रार्थमाह * अस्मिन्निति। समुदायनिरासायाह * अमुक इति। अमुक इत्युक्तिस्वारस्यादाह *एकैकश इति।

२। वैषम्यस्य प्रागुक्तत्वादत्र विषये विशेषमाह *ते चेति। विनिगमनाविरहादाह *संख्यात इति। एतेन असमा इत्यकारप्रश्लेष इत्यपास्तम्।

३। उभयत्र स्वहस्तेनेत्यंशे विशेषमाह * यद्यधमर्ण इति। * साक्षीवा साक्षिणेति। अलिपिज्ञ इति भावः। स्वमतमित्यादेरनुषङ्गः। * समीपतः, समीपे ॥ ८७ ॥

मि० अपि च।

या० उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना।
लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत् ॥८८॥

मि० ततो लेखको धनिकाधमर्णिकाभ्यामुभाभ्यां प्रार्थितेन मयाऽमुकेन देवदत्तेन विष्णुमित्रसूनुना एतत् लेख्यं लिखितमित्यन्ते लिखेत् ॥ ८८ ॥

वा० १। प्राग्वदाह *अपि चेति। *ततः, साक्षिलिखनान-

१ एतत्समानार्थकः अर्थः- ( व्य० प० १।१६७ )
आत्मनैव लिखेज्जानन् न चेदन्येन लेखयेत्।
इति नारदस्मृतौ उपलभ्यते।

यमित्याह ।

या० ऋणं लेख्यकृतं देयं पुरुषैस्त्रिभिरेव तु ।

मि० यथा साक्ष्यादिकृतमृणं त्रिभिरेव देयं तथा लेख्यकृतमप्याहर्तृतत्पुत्रतत्पुत्रैस्त्रिभिरेव देयं, न चतुर्थादिभिरिति नियम्यते ।

ननु पुत्रपौत्रैर्ऋणं देयमित्यविशेषेण ऋणमात्रं त्रिभिरेव देयमिति नियतमेव । बाढम् । अस्यैवोत्सर्गस्य पत्रारूढर्णविषये स्मृत्यन्तरप्रभवामपवादशङ्कामपनेतुमिदं वचनमारब्धम् ।

तथा हि । पत्रलक्षणमभिधाय—

कात्यायनेनाभिहितम्,

एवं कालमतिक्रान्तं पितॄणां दाप्यते ऋणम् ।इति।

इत्थं पत्रारूढमृणमतिक्रान्तं कालमपि पितॄणां संबन्धि दाप्यते । अत्र पितॄणामिति बहुवचननिर्देशात्कालमतिक्रान्तमिति वचनाच्च चतुर्थादिर्दाप्यते इति प्रतीयते।

तथा हारीतेनापि,

लेख्यं यस्य भवेद्धस्ते लाभं तस्य विनिर्दिशेत् ।इति।

अत्रापि यस्य हस्ते लेख्यमस्ति तस्य ऋणलाभ इति सामान्येन चतुर्थादिभ्योऽप्यृणलाभोऽस्तीति प्रतीयते । अतश्चैतदाशङ्कानिवृत्त्यर्थमेतद्वचनमिति युक्तम् । वचनद्वयं च योगीश्वरवचनानुसारेण योजनीयम् ।

मि० अस्यापवादमाह ।

या० आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते ॥९०॥

मि० सबन्धकेऽपि पत्रारूढे ऋणे त्रिभिरेव देयमिति

सानि क्रमाक्षराणि यस्मिंस्तद् अविलुप्तक्रमाक्षरम्। तदेवंभूतं लेख्यं प्रमाणम्। राजशासनवत् न साधुश-ब्दानियमोऽत्रेत्यभिप्रायः॥ ८९॥

षा० १। *विनापीति। तुरुष्कवैलक्षण्ये। यत् लेख्यं स्वहस्त-लिखितं तत्तु लेख्यं साक्षिभिर्विनाऽपि प्रमाणं स्मृतं मन्वादिभिरि-त्यन्वयः। लेख्यमित्यस्य पुनरुक्तिः स्पष्टार्था। अग्रे तत्र सर्वमि-ति पाठस्तु युक्त एव। तदाह * यदिति। मुख्यमुपाधिशब्दार्थ-माह * छलेति। न्यूनतानिरासायेदमुपलक्षणम् इत्याह * लो भेति। एतत्सूचनार्थमेव नारदमाह *नारद इति। * मत्तेति। अत्र स्त्र्यादेर्द्वंद्वं कृत्वा पुनः सः। * मत्तः, पानादिना। * अ-भियुक्तः, आक्षिप्तः। चः त्वर्थे। प्रागुक्तमेव सविशेषमुपपादयन्ना-ह * तच्चैतदिति। तदेतच्चेत्यर्थः। इदमेव प्रत्यासत्त्या व्युत्क्रमे-णाह * स्वहस्तेति। * अबन्धकव्यवहारे च युक्तमिति। तत्र च यथाक्रमं नियतं सम्बन्ध्यम् इत्यर्थः। अग्रेऽन्वयः। इत्येतावदि-ति व्याचष्टे *नपुनरिति। साधुशब्दैरेवेति। किन्त्विति शेषः। * प्रातिस्विकेति। प्रतिनियतेति पाठान्तरम्। आपिना तेषामपि समुच्चयः। व्यक्तार्थीति विशेषमेव व्याकर्त्तुं कर्मप्रत्ययेऽर्थास-क्तेराह * विधानमिति। भावे किरिति भावः। गोप्याधीति समाहारद्वन्द्वः। आदिनाऽकालकृतादिपरिग्रहः। सबन्धकव्यव-हारविषयमिदम्। स्पष्टं बन्धकप्रकारलक्षणं यत्र तत् तथेति तु क-ल्पतरुः। क्रमस्य साकाङ्क्षत्वादाह * अर्थानामिति। अविलुप्ते-ति व्याचष्टे * क्रमश्चेति। एवं पदार्थमुक्त्वा वाक्यार्थमाह * त-देवमिति। नारदतात्पर्यार्थं प्रागुक्तमेवाह * राजेति। व्यतिरे-के दृष्टान्तः॥ ८९॥

मि० लेख्यप्रसङ्गेन लेख्यारूढमप्यृणं त्रिभिरेव दे-

प्रतीयते। तथा पौत्रे मृते तत्पुत्रस्य नैनादानृत्वमासानापि अतिक्रान्तामित्युक्तेस्तेषां दातृत्वमाप्तिर्भवतीति भावः।

८। * तथा, तद्वत्। अभिहितमित्यस्यानुषङ्गः। प्राग्वदाह *अत्रापीति। प्रतीयते इत्यत्रान्वयः। सामान्येनैवात्र प्राग्वत्ता चधारणमित्याह * चतुर्थादिभ्योऽपीति। आक्षेपसमाधिभ्यां तमुपसंहरति * अतश्चेति। नन्वेवं हारीतकात्यायनयोः का गतिरत आह * वचनद्वयंचेति। चस्त्वर्थे। आद्ये पितॄणामिति बहुत्वमविवक्षितम्। उद्देश्यगतत्वात्। कालातिक्रमस्यापि तावत्पर्यन्तस्यैव सम्भवेन ग्रहणं नत्वग्रिमस्य। द्वितीयमपि तावत्परमेवेति भावः।

उ० ६। नन्वेतदभावे कथं पूर्वमाप्तिरत आह *सबन्धके इति। अपिना द्वितीयसमुच्चयः। अस्य नियमेऽन्वयः। अयौगपद्याह * क्रमेणेति। ऋणापाकरणेति। चतुर्थादेरित्यादिः। नन्वेतावताऽपि स्फुटं न तत्त्वप्रतीतिः, अतः अपवादत्वमुपपादयां *यावदिति। अस्यार्थमाह * चतुर्थेनेति। दिक्प्रदर्शनमिदम् तत्पदार्थमाह * ऋणमिति। सर्वमिति न्यायेनाह * तावदेवेति।

६। प्राग्वत्प्राप्तपौनरुक्त्यं निराचष्टे * नन्वित्यादिना। * स्यादिति। अत इदमप्यावश्यकं तस्य तत्प्राप्त्यर्थमिति भावः॥ ९० ॥

मि० प्रासङ्गिकं परिसमाप्य प्रकृतमेवानुसरति।

या० देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा।
भिन्ने दग्धेऽथवा छिन्ने लेख्यमन्यत्तु कारयेत् ॥९१॥

मि० व्यवहाराक्षमे पत्रे पत्रान्तरं कुर्यादिति विधीयते। व्यवहाराक्षमत्वं चात्यन्तव्यवहितदेशान्तर

नियमात् ऋणापाकरणानधिकारेण आध्याहरणेऽप्य-नधिकारप्रसक्ताविदमुच्यते । यावत् चतुर्थेन पञ्चमेन वा ऋणं न दीयते तावदेवाधिर्भुज्यते इति वदता सुप्रयत्नऋणापाकरणे चतुर्थादेरप्यधिकारो दर्शितः । नन्वेतदप्युक्तमेव, फलभोग्यो न नश्यति इति । स-त्यम् । तदपि एतस्मिन् अपवादवचनेऽसति पुरुषत्र-यविषयमेव स्यादिति सर्वमनवद्यम् ॥ १० ॥

बा० १।सङ्गतिमाह *लेख्येति। प्रागुक्तं दृष्टान्तयति *यथेति। एवंच तत्सजातीय एवायमर्थो नत्वपूर्व इति भावः । अतएवा-ह * आहर्त्रिति । एवव्यवच्छेद्यमाह * न चतुर्थादिभिरिति । एवोक्तिं सफलयति * नियम्यतइति ।

२। अतएवाह* नन्विति। *अविशेषेणेति । साक्षिलेख्य-साधारण्येनेत्यर्थः । * नियतं, नियमितम् । क्वचित्तथैव पाठः । * अस्यैव, पुत्रपौत्रैरित्युक्तस्यैव सामान्यस्य । *प्रभवां, जन्या-म् । * इदम्, ऋणंलेख्यकृतमिति ।

३।तदेव स्मृत्यन्तरं प्रकरणशुद्धिपूर्वकमाह *तथाहीत्यादि-ना । तद्व्याचष्टे * इत्थमिति । एवमित्यस्य व्याख्येयम्। एतदर्थ-मेव तदुक्तं प्राक् । अतिक्रान्तं कालमपीति पाठः।कालम् अति-क्रान्तमपीत्यर्थः । क्वचित्समस्तपाठः । अव्यवहितान्वयनिरासा-याह * सम्बन्धीति । * दाप्यते, राज्ञेति शेषः । दापयेदिति पाठान्तरमुभयत्र ।

४। इतो यथा तदाशङ्का तामाह * अत्रेति । तदुक्तावित्य-र्थः । प्रतीयते इत्यत्रान्वयः । पत्रारूढऋणविषये पुत्रपौत्रैरेव दे-यमिति नास्यार्थः । किं तु बहुवचनात् अवरतः ऋणे त्रितयस-म्बन्धित्वे सति देयत्वप्रतीत्या ऽर्थात्प्रपौत्रादिभिरेव देयमिति

यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरक्रियम् ।
सावधारणकं चैव जयपत्रकमिष्यते ॥
प्राड्विवाकादिहस्ताङ्कं मुद्रितं राजमुद्रया ।
सिद्धेऽर्थे वादिने दद्याज्जयिने जयपत्रकम् ॥इति ।

तथा, सभासदोऽपि मतं मेऽमुकपुत्रस्येति स्वहस्तं दद्युः ।

सभासदश्च ये तत्र स्मृतिशास्त्रविदः स्थिताः ।
यथा लेख्यविधौ तद्वत्स्वहस्तं दद्युरेव ते ॥

इति स्मरणात् ।

सभासदां च परस्परानुमतिव्यतिरेकेण न व्यवहारो निःशल्यो भवति ।

यथाह नारदः, ( अ. ३ । १७ )

यत्र सभ्यो जनः सर्वः साध्वेतदिति मन्यते ।
स निःशल्यो विवादः स्यात्सशल्यस्त्वन्यथा भवेत् ॥

इति ।

एतच्च चतुष्पाद्व्यवहारे एव ।

साधयेत्साध्यमर्थं यत् चतुष्पादान्वितं च यत् ।
राजमुद्राङ्कितं चैव जयपत्रकमिष्यते ॥

इति स्मरणात् ।

यत्र तु हीनता, यथा, ( ना. अ. २ । ३३ )

अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः ।
आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः ॥इति,

तत्र न जयपत्रकमस्ति, अपि तु हीनपत्रकमेव । तच्च कालान्तरे दण्डप्राप्त्यर्थम् । जयपत्रं तु प्राङ्न्यायविधिसिद्ध्यर्थमिति विशेषः ॥ ९१ ॥

स्थे पत्रे, दुर्लेख्ये–दुष्टानि संदिह्यमानानि अवाचकानि वा लेख्यानि लिप्यक्षराणि पदानि वा यस्मिंस्तत् दुर्लेख्यं तस्मिन्दुर्लेख्ये, नष्टे कालवशेन, उन्मृष्टे मषीदौर्बल्यादिना मृदितालिप्यक्षरे, हृते तस्करादिभिः, भिन्ने विदलिते, दग्धे प्रज्वालिते, छिन्ने द्विधाभूते सति भवति। एतच्चार्थिप्रत्यर्थिनोः परस्परानुमतौ सत्याम्। विमत्यां तु व्यवहारप्राप्तौ देशान्तरस्थपत्रानयनाय अध्वापेक्षया कालो दातव्यः। दुर्गदेशावस्थिते नष्टे वा पत्रे साक्षिभिरेव व्यवहारनिर्णयः कार्यः।

यथाह नारदः, (व्य. प. १। १४२)

लेख्ये देशान्तरन्यस्ते शीर्णे दुर्लिखिते हृते।
सतस्तत्कालकरणमसतो द्रष्टृदर्शनम्॥ इति।

सतो विद्यमानस्य पत्रस्य देशान्तरस्थस्यानयनाय कालकरणं कालावधिर्दातव्यः। असतः पुनरविद्यमानस्य पूर्वं ये द्रष्टारः साक्षिणस्तैर्दर्शनं व्यवहारपरिसमापनं कार्यम्। यदा तु साक्षिणो न सन्ति तदा दिव्येन निर्णयः कार्यः।

अलेख्यसाक्षिके दैवीं व्यवहारे विनिर्दिशेत्।
इति स्मरणात्।

एतच्च जानपदं व्यवस्थापत्रम्। राजकीयमपि व्यवस्थापत्रमीदृशमेव भवति। इयांस्तु विशेषः,

राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा।
राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत्॥ इति।

तथाऽन्यदपि राजकीयं जयपत्रकं वृद्धवसिष्ठेनोक्तम्,

न्तरम् । अयं प्रकारोऽन्यत्रापीत्याह * नष्टे वेति । वा चार्थे । तेनान्येषामपि समुच्चयः । उत्तरार्द्धं व्याचष्टे * मत इति । तेषां मध्ये इत्यादिः । तत्पदार्थमाह * आनयनार्येति । समासस्तु संबन्धसामान्यषष्ठ्या कार्यस्तत्र । * पुनः, तु । अन्यनिरासायाह * पूर्वमिति । तत्कर्मकं दर्शनमिति नार्थ इत्याह * तैरिति । तस्यार्थमाह * व्यवहारपरिसमापनमिति ।

३। विशेषान्तरमाह * यद्वान्तिति । कात्यायनमाह * अलेख्येति । लेख्यसाक्ष्युभयरहिते व्यवहारे इत्यर्थः । * दैवीं, क्रियाम् ।

४। विशेषान्तरं वक्तुमुक्तमेवाह * एतच्चेति । जानपदमिति लौकिकमित्यस्यैव नामान्तरम् ।

लौकिकं राजकार्यं च लेख्यं कुर्याद् द्विलक्षणम् ।

इति वसिष्ठोक्तेः,

राजकीयं जानपदं लिखितं द्विविधं स्मृतम् ।

इति संग्रहोक्तेश्च । अत्रोभयत्र राजकार्यं राजकीयमित्याभ्यां प्रत्येकं त्रयाणां ग्रहणमिति न न्यूनता । अतएवाह *राजकीयमपीति । कात्यायनमाह * राज्ञ इति ।

५। तथेति समुच्चये ।

राजकीये तथा राजा स्वहस्तेन लिखेत्स्वयम् ।
मतं मेऽमुकपुत्रस्य ह्यमुकस्य महीपतेः ॥

इति व्यासः ।

अर्थेष्विति विषयसप्तमी । साक्षिमदिति साधारणोक्तिः । * यथोपन्यस्तेति । येन प्रकारेणोपन्यस्तो यः साध्यार्थः प्रतिज्ञातार्थस्तेन संयुक्तम्। अनेनाद्यपादप्रदर्शनम्। उत्तरं च क्रिया च ताभ्यां सहितं, क्रिया पत्रादिरूपा । अनेन द्वितीयतृतीयपा-

पा०१। संगतिमाह ॥मासङ्गिकमिति। नष्टोनमृष्टे इति समाहारद्वंद्वः । नन्वत्र देशान्तरस्थादि उद्दिश्य पत्रान्तरकरणविधिः मतीयते।तत्र किं तेषां मत्येकं निमित्तत्वमुत समुदायस्य । तत्र न तावदाद्यः । तथाशब्दासंगतेः । सकृच्छ्रुतस्य विधेयस्य सर्वैरन्वयासंभवाच्च । नचावृत्त्या तथा । मधानानुरोधेन गुणावृत्तावपि वैपरीत्यस्य सकलतन्त्रविरुद्धत्वात् । वाक्यभेदापत्तेश्च । न द्वितीयः । अथवेत्यस्यासंगतेः । स्मृत्यन्तरविरोधेनापसिद्धान्ताच्च । अतआह ॥ व्यवहाराक्षमेइति । ॥ पत्रे, पूर्वपत्रे सति । अन्यथानुपपत्त्या सकलसाधारणानुगतधर्माक्षेपेणास्योद्देश्यत्वं, न तस्येति न कोऽपि उक्तदोष इति भावः । णिजर्थाविवक्षयाऽऽह ॥कुर्यादितीति। पादत्रयार्थस्यैवं सति अन्वयं कथयन्व्यवहाराक्षमत्वमेव विशदयति ॥ व्यवहाराक्षमत्वंचेति । एतेन तदेव कथमिति शङ्का निरस्ता ।॥अक्षमत्वं च, अक्षमत्वं तु।अस्य भवतीत्यन्वयः। क्रमेण निमित्तानि व्याचष्टे ॥अत्यन्तेति। निकटे आनयनस्य सुकरत्वाल्लक्ष्यार्थोऽयम् । पत्रे इत्यस्याग्रे सर्वत्रान्वयः । दुष्टानीत्यस्यार्थद्वयं, लेख्यानीत्यस्यापि।तयोः यथासंख्यमन्वयः। नष्टादेरौपाधिकभेदमाह ॥ कालेत्यादि । आदिना जलपातादिना । ॥ विदलिते, संचूर्णिते । ॥ दग्धे प्रज्वलिते ।दग्धेऽग्निनेति पाठान्तरम्। सर्वपाठोऽपि क्वचित्स्पष्टार्थः।एतेषामपि विकल्पो वोध्यः । अतएव अथवेत्यस्य संगतिः । तथेतितु सादृश्ये, न तु समुच्चये ।

२। नारदविरोधं मूलस्य परिहरन् विशेषमाह ॥ एतच्चेति। पत्रान्तरकरणं चेत्यर्थः। तत्र तस्यावश्यकत्वादाह ॥ व्यवहारभाषाविति । तादृशे स्थले आह ॥ देशान्तरेति । ॥ दुर्गदेशावस्थितेइति । दुःखेनापि गन्तुमशक्यदेशेत्यर्थः । दुर्देशेति पाठा-

द्धिः स्वहस्तलिखितादिभिः स्यात् । स्वहस्तेन लिखितं यल्लेख्यान्तरं तेन शुद्धिः । यदि सदृशान्यक्षराणि भवन्ति तदा शुद्धिः स्यादित्यर्थः । आदिशब्दात्साक्षिलेखकहस्तलिखितान्तरसंवादाच्छुद्धिरिति । युक्त्या प्राप्तिर्युक्तिप्राप्तिः । देशकाले पुरुषाणां द्रव्येण सह संबन्धः प्राप्तिः । अस्मिन्देशेऽस्मिन्कालेऽस्य पुरुषस्येदं द्रव्यं घटते इति युक्तिः । क्रिया तत्साक्ष्युपन्यासः । चिह्नमसाधारणं श्रीकारादि । संबन्धः अर्थिप्रत्यर्थिनोः पूर्वमपि परस्परविश्वासेन दानग्रहणादिसंबन्धः । आगमोऽस्यैतावतोऽर्थस्य संभावितः प्राप्त्युपायः । एते एव हेतवः । एभिर्हेतुभिः सन्दिग्धलेख्यशुद्धिः स्यादित्यर्थः । यदा तु लेख्यसन्देहे निर्णयो न जायते तदा साक्षिभिर्निर्णयः कार्यः ।

यथाह कात्यायनः,

दूषिते पत्रके वादी तदारूढांस्तु निर्दिशेत् । इति।

साक्षिसंभवविषयमिदं वचनम् । साक्ष्यसंभवविषयं तु—

हारीतवचनम्,

न मयैतत्कृतं पत्रं कूटमेतेन कारितम् ।
अधरीकृत्य तत्पत्रमथ दिव्येन निर्णयः॥इति॥९२॥

वा० १ । संशयकोटिद्वयमाह * शुद्धमिति । कृत्रिममकृत्रिमं वेत्यर्थः ।

तथाच नारदः, ( व्य. प. १ । १४३ । १४४ )

यस्मिन्स्यात्संशयो लेख्ये भूताभूतकृते क्वचित् ।
तत् स्वहस्तक्रियाचिह्नयुक्तिप्राप्तिभिरुद्धरेत् ॥

दप्रदर्शनम् । अवधारणं निर्णयस्तेन सहितम्। स्वार्थे कः। अनेन तुर्यपादप्रदर्शनम् । * हस्ताङ्कं, तदक्षराङ्कम् । एवमग्रेऽपि। *वादिनेति।

पूर्वोत्तरक्रियावादनिर्णयान्ते यदा नृपः ।
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते ॥

इति बृहस्पत्युक्तेरिदमुपलक्षणम् ।

६ । अत्रादिग्राह्यं सूचयन्नेवाह * तथेति । कात्यायनमाह * सभासदश्चेति। * तत्र, व्यवहारे । * यथेति । क्रियमाणे राजकीयव्यवस्थापत्रे यथा तद्वज्जयपत्रेऽपीत्यर्थः। एतेन तस्यावश्यकता सूचिता ।

७ । व्यवहारस्य निःशल्यत्वोपायं प्रतिपादयन्नत्र हेतुभूतं विशेषान्तरमाह * सभासदांचेति । चेनान्येषामपि तत्रत्यानां समुच्चयः । * यत्र, निर्णयविवादे ।

८। विशेषान्तरमाह * एतदिति । जयपत्रम् इत्यर्थः । कात्यायनमाह * साधयेदिति । साध्यार्थसाधकं तदन्वितं च यद् व्यवहारस्वरूपं यत् यतोऽवस्तदेव तदाङ्कितं तदिष्यते इत्यर्थः। चेनान्यसमुच्चयः । यद्यपीदं सभासदां चेत्यतः प्रागुचितं तथापि सभासदां प्रसङ्गात्तद्विषयकं तद् आदावुक्तम् । एवव्यवच्छेद्यमाह *यत्रत्विति । तस्योपयोगमाह *तच्चेति । हीनपत्रं चेत्यर्थः । *विशेषः, हीनपत्रतः ॥ ९१ ॥

मि० लेख्यसन्देहे निर्णयनिमित्तान्याह ।

या० सन्दिग्धलेख्यशुद्धिः स्यात्स्वहस्तलिखितादिभिः ।
युक्तिप्राप्तिक्रियाचिह्नसंबन्धागमहेतुभिः ॥ ९२ ॥

मि० शुद्धमशुद्धं वेति सन्दिग्धस्य लेख्यस्य शु-

४। अस्य वक्ष्यमाणविरोधं परिहरति * साक्षिसंभवविषयमिति। *इदं, करणीयम्। तदेवाह * न प्रत्यर्थीति। *एतेन, अन्येन केनचित्। अतएवाह * कारितमिति। * तत्पत्रमिति। तत्पत्रं प्रमाणत्वेनानाश्रित्य अथ अनन्तरं दिव्येन निर्णयः कार्य इत्यर्थः। अथ दिव्येनेति पाठः। अर्थे इति पाठे तद्विषये इत्यर्थः॥ ९२॥

मि० एवं शोधिते पत्रे ऋणे च दातव्ये प्राप्ते यदा कृत्स्नमेव दातुमृणमसमर्थस्तदा किं कर्तव्यमित्यत आह।

या० लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वा दत्त्वर्णिको धनम्।
धनी वोपगतं दद्यात्स्वहस्तपरिचिह्नितम्॥ ९३॥

मि० यदाऽधमर्णिकः सकलमृणं दातुमसमर्थस्तदा शक्त्यनुसारेण दत्त्वा पूर्वकृतस्य लेख्यस्य पृष्ठेऽभिलिखेत्, एतावन्मया दत्तमिति। अधमर्णो वा उपगतं प्राप्तं धनं तस्यैव लेख्यस्य पृष्ठे दद्यादभिलिखेत्, एतावन्मया लब्धमिति। कथं, स्वहस्तपरिचिह्नितम्। स्वहस्तलिखिताक्षरचिह्नितम्। यद्वा उपगतं प्रवेशपत्रं स्वहस्तलिखितचिह्नितमधमर्णायोत्तमर्णो दद्यात्॥ ९३॥

बा० १। अवतरणमाह* एवमिति। *दातुमिति। युगपदिति शेषः। एवमग्रेऽपि। आर्थिकमाह * शक्त्यनुसारेणेति। उत्तरार्धार्थमाह *उत्तमर्णो वेति। स्वहस्तशब्दो लाक्षणिक इत्याह * लिखितेति। तथाच क्रियाविशेषणमिदमिति भावः।

२। अत्र पक्षे तत्पृष्ठभागे तल्लिखने ऐच्छिकविकल्पो लब्धः। स च न युक्तः। तस्याष्टदोषदुष्टत्वात्। प्रकारान्तरेणोत्तरार्द्धस्य

लेख्यं यत्रान्यनामाङ्कं हेत्वन्तरकृतं भवेत् ।
विप्रत्यये परीक्षेत संबन्धागमहेतुभिः ॥ इति ॥

* विप्रत्यये, विप्रतिपत्तौ । लिखितमिति कर्मणि भूते निष्ठा । तेनेदानींतनव्यावृत्तिः । तदाह * स्वहस्तेनेति । तत्त्वस्याप्यपि सत्त्वादाह * लेख्यान्तरमिति । पत्रान्तरमित्यर्थः । ननु द्वयोर्भेदेन तेनास्य कथं शुद्धिः, अत आह * यदीति । * साक्षीति । साक्षिलेखकयोर्ये स्वहस्ताभ्यां लिखितान्तरे एतदपेक्षया भिन्ने लिखिते तत्संवादात् एतल्लेख्यीयाक्षरस्य तदक्षरसादृश्यादेतत्पत्रस्य शुद्धिरित्यर्थः । तथाचेदमन्यकृतविषयम् । श्रौतं तु स्वकृतविषयमिति भावः । इतिः पूर्वार्धार्थसमाप्तौ ।

२ । देशकाले इति समाहारद्वंद्वात्सप्तमी । कालपुरुषाणामिति पाठे समस्तत्रयाणां तेन सम्बन्ध इति यावत् । तदेवाह * अस्मिन्निति । युक्तिपदार्थमाह * घटतेइति । योग्यं भवतीत्यर्थः । सम्भवतीति यावत् । कल्पतरुरप्येवम् । युक्तिरर्थापत्तिः, प्राप्तिर्द्वयोरेकत्रावस्थानमित्यन्ये । * तत्साक्षीति । प्राप्तिसाक्ष्युपन्यास इत्यर्थः । अतएव वक्ष्यमाणविरोधो न । कल्पतरुरप्येवम् । संव्यवहारः क्रियेत्यन्ये । श्रीकारादीति आदिना स्वस्तिकमुद्रादिपरिग्रहः । * पूर्वमिति । विवादात्प्रागित्यर्थः । * दानेति । धनस्येत्यादिः । आदिनाऽऽध्यादिपरिग्रहः * । * अर्थस्य, धनस्य । आगमः क्रयादिरित्यन्ये । आगमान्तद्वन्द्वस्य हेतुशब्देन कर्मधारय इत्याह * एते एवेति । उत्तरार्धस्य क्रियान्तराध्याहारेणान्वयभ्रमनिरासायाह * एभिरिति । सोऽप्येवं, हेतुरनुमानमित्यन्ये ।

३ । विशेषमाह * यदात्विति । * तदारूढांस्त्विति । पत्रारूढान्साक्षिणस्त्वित्यर्थः । पत्रके इत्यत्र स्वार्थे कन् ।

१ संदिग्धलेख्यशुद्धिः स्यादितिमूलवचनोपात्तम् इत्यर्थः ।

यात् ॥ ९४ ॥

इति लेख्यप्रकरणम् ॥

पा० १। सान्निध्यात् व्युत्क्रमेणाह * क्रमेणेति । द्वितीयपादं व्याचष्टे० यद्वात्रिति । वा चार्थे । तेनान्येषामपि संग्रहः । पौन-स्तु विकल्पे एव । * अधमर्णत्वेनेति । स्वाधमर्णत्वेत्यर्थः । * अन्यत्, पूर्वकृतात् भिन्नम् । णिजर्थमाह * उत्तमर्णम् इति । उत्तमर्णेनेति पाठान्तरम् । हृक्रोरिति वा कर्मत्वम् । तात्पर्यार्थमाह * पूर्वोक्तेति । प्रागुक्तरीत्येत्यर्थः ।

उ० ३। एवं लेख्यस्थले उक्त्वा साक्षिपात्रप्रमाणककर्णग्रहणविषये आह * ससाक्षिकं इति । साक्षिणां सर्वदा सांनिध्यासंभावादिदं यौगपद्यनियमकमित्याह * कृत्स्ने इति । चस्य व्युत्क्रमान्वयादाह * यथेति । यत्रित्यर्थः । क्वचित्तथैव पाठः । पूर्वेति बहुव्रीहिः । तत्साक्षिसमक्षमित्यर्थः । क्वचिदेवमेव पाठः । वा एवार्थे व्युत्क्रमे चेत्याह * एवेति ॥ ९४ ॥

इति लेख्यप्रकरणम् ।

साफल्ये तथोक्तेरयुक्तत्वात्। लक्षणाद्यापत्तेश्च। अत आह * य द्वोपगतमिति । भावक्तान्तादर्शआद्यजित्याह *प्रवेशपत्रमिति । परः उत्कर्ष इतरव्यावर्तकत्वरूपो यस्यास्तीति परि, लिखनं स्वहस्तस्य परि, तेन चिह्नितमिति पत्रविशेषणं, तादृशं लेख्यान्तरं कृत्वेति भावः । तदाह * स्वहस्तालिखितेति । भावे क्तः । * उत्तमर्ण इति । प्राप्तात्यधन इति भावः । तथाचात्र न लक्षणा क्कापि ।

३ । लेख्यासन्निधिविषयं चेदम् ।

तदाह विष्णुः, असमग्रदाने लेख्यासन्निधाने चोत्तमर्णः स्वहस्तलिखितं दद्यादिति ।

नाऽव्यवहितमात्रविषयमिदं, किन्तु साधारणमिति ॥ ९३ ॥

मि० ऋणे तु कृत्स्ने दत्ते लेख्यं किंकर्तव्यमित्यत आह ।

या० दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै वाऽन्यत्तु कारयेत् ।

मि० क्रमेण सकृदेव वा कृत्स्नमृणं दत्त्वा पूर्वकृतं लेख्यं पाटयेत् । यदा तु दुर्गदेशावस्थितं लेख्यं नष्टं वा तदा शुद्ध्यै अधमर्णत्वनिवृत्त्यर्थमन्यल्लेख्यं कारयेदुत्तमर्णम् अधमर्णः । पूर्वोक्तक्रमेणोत्तमर्णो विशुद्धिपत्रमधमर्णाय दद्यादित्यर्थः ।

मि० ससाक्षिके ऋणे कृत्स्ने दातव्ये किं कर्तव्यमित्यत आह ।

या० साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकम् ॥ ९४॥

यच्च ससाक्षिकमृणं तत् पूर्वसाक्षिसमक्षमेव द-

किंतु सावष्टम्भाभियोगेऽपि प्राप्त्यर्थः । अन्यथा शङ्काभियोगे एव स्यात् ।

अवष्टम्भाभियुक्तानां घटादीनि विनिर्दिशेत् ।
तण्डुलाश्चैव कोशश्च शङ्कास्वेव न संशयः ॥

इति स्मरणात् ।

महाभियोगेषु शङ्कितेषु सावष्टम्भेषु चाविशेषेण प्राप्तावपवादमाह ।

या० शीर्षकस्थेऽभियोक्तरि ॥ ९५ ॥

मि० एतानि तुलादीन्यभियोक्तरि शीर्षकस्थेऽभियुक्तस्य भवन्ति । शीर्षकं शिरः, व्यवहारस्य चतुर्थः पादो जयपराजयलक्षणः। तेन च दण्डो लक्ष्यते । तत्र तिष्ठतीति शीर्षकस्थः । तत्प्रयुक्तदण्डभागित्यर्थः॥९५॥

या० १। सङ्गतिमाह * लिखितेति। अभ्यर्हितत्वात्प्रवृत्तिक्रमस्य विवक्षितत्वाद्वास्य पूर्वनिपातः। अर्थत्वस्य कथयतीत्यत्रान्वयः। प्रतिबन्धकशिष्यजिज्ञासानिवृत्तौ सत्यामवश्यवक्तव्यत्वरूपावसरसङ्गतिमाप्तमित्यर्थः । दिव्यमिति जातावेकवचनं, तुलाधारणेत्यादिना । *दिव्यमातृकां, दिव्योपोद्घातम् । तत्राद्यश्लोकमवतारयति * तत्रेति । दिव्यमातृकायां कथनीयायामित्यर्थः । * तावत्, आदौ । नाम्ना वस्तुसंकीर्तनमुद्देशः । कर्मत्वस्य विवक्षितत्वात्तुलाशब्दस्य पूर्वनिपातः । त्रयाणामितरेतरद्वन्द्वः । समासान्तविधेरनित्यत्वान्न सः । विशुद्धिपदार्थमाह *संदिग्धस्येत्यादिचतुर्थ्यन्तेन। नित्यसापेक्षत्वादाह *सन्देहनिवृत्तयेइति । योग्यतयाऽऽकाङ्क्षाशान्तये आह * दातव्यानीति ।

२। एतान्येव दिव्यानीत्याशयेनावतरणमाह * नन्विति ।

अथ दिव्यप्रकरणम् ॥ ७ ॥

मि० लिखितसाक्षिभुक्तिलक्षणं त्रिविधं मानुषप्रमाणमुक्तम् । अथावसरप्राप्तं दिव्यं प्रमाणमभिधास्यन् तुलाग्न्याप इत्यादिभिराद्यैः पञ्चभिः श्लोकैर्दिव्यमातृकां कथयति । तत्र तावद्दिव्यान्युपदिशति ।

या० तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ।

मि० तुलादीनि कोशान्तानि पञ्च दिव्यानीह धर्मशास्त्रे विशुद्धये संदिग्धस्यार्थस्य संदेहनिवृत्तये दातव्यानीति ।

ननु अन्यत्रान्यान्यपि तण्डुलादीनि दिव्यानि सन्ति ।

घटोऽग्निरुदकं चैव विषं कोशस्तथैव च ।
तण्डुलाश्चैव दिव्यानि सप्तमस्तप्तमाषकः ॥
इति पितामहस्मरणात् । अतः—

कथमेतावन्त्येवेत्यत आह ।

या० महाभियोगेष्वेतानि

मि० एतानि महाभियोगेष्वेव नान्यत्रेति नियम्यते, न पुनरिमान्येव दिव्यानीति । महत्त्वावधिं च वक्ष्यति । नन्वल्पाभियोगेऽपि कोशोऽस्त्येव । कोशमल्पेऽपि दापयेदिति स्मरणात् । सत्यम् । कोशस्य तुलादिषु पाठो न महाभियोगेष्वेवेति नियमार्थः,

निश्चयः स इति कल्पतरुः । * अन्यथा, मूले कोशस्यानुपादाने । कोश इति शेषः । मूलानुक्तत्वात्स्मृत्यन्तरमाह *अवष्टभ्येति । सावष्टम्भेति पाठान्तरम् । पितामहोक्तिरियम् । * महान्ति, चत्वारि । *शङ्कास्वेवेति । शङ्कास्वेतानि योजयेदिति पाठान्तरम् ।

४। तथाच महाभियोगो महाभिशापः । स च द्विविधः, शङ्कितःसावष्टम्भश्च। स्वोपरि दण्डमङ्गीकृत्य स्थापितः सावष्टम्भः । एवमल्पाभियोगेऽपि बोध्यम् । अत एवाह *महाभियोगेष्विति । तद्भेदमाह *शङ्कितेष्विति।उभयविधमहाभियोगेष्वविशेषेण प्रोक्तवृतीयपादे विशेषानादरेणैतेषां तुलादिचतुर्णां प्राप्तावित्यर्थः । अनुवृत्त्या आह*एतानीति । चत्वारीत्यर्थः । अर्थादाह *अभियुक्तस्येति । शब्दार्थमाह *शिर इति । प्रकृते व्यवहारपुरुषस्य तदाह * व्यवहारस्येति । स्पष्टार्थं पुनस्तत्स्वरूपमाह *जयेति । प्रकृते तु पराजय एव विवक्षितः । अतएव तत्संबन्धाल्लक्ष्यार्थमाह *तेनचेति । तिष्ठतिरत्र अहानौ । समयं तिष्ठ सुग्रीवेतिवत् । अङ्गीकृततद्दण्डनं न जहातीत्यर्थः । अतएवाह * तदिति । पराजयेत्यर्थः । *इत्यर्थइति । तस्मिन्सतीत्यादिः । अभिशापदातरि शीर्षकस्थे पराजयहेतुकदण्डभाजि सत्येव एतानि भवन्ति। यद्यनेनेदं न कृतं स्यात्तदा मह्यं दण्डो देय इति वादी शीर्षकस्थस्तादृशे तस्मिन्सतीत्यर्थः । तथाच सावष्टम्भेष्वेव तेषु एतेन शङ्कितेष्विति विशेषोक्त्या तदपवादत्वमित्यर्थः ॥ ९८ ॥

मि० ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्—इति भावप्रतिज्ञावादिन एव क्रियेति व्यवस्था दर्शिता । तदपवादार्थमाह ।

या० रुच्या वाऽन्यतरः कुर्यादितरो वर्तयेच्छिरः ।

---

१ अस्य विशेषोक्त्या इत्यत्रान्वयः ।

धट इति। धटः स्यात्तु तुलाकाष्ठमिति कोशः। *पितामहेति।
बृहस्पतिरपि,
धटोऽग्निरुदकञ्चैव विषं कोशश्च पञ्चमः।
षष्ठं च तण्डुलाः प्रोक्ताः सप्तमं तप्तमाषकः॥
अष्टमं फाल इत्युक्तं नवमं धर्मजं स्मृतम्।
दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयंभुवा॥ इति।
अतएव शङ्कायां बहुवचनसङ्गतिः। * एतावन्ति, पञ्च।
यद्यपि त्रेधा नियमः सम्भवति, अपराधविशेषे दिव्यस्वरूपे उभयत्रापि, तद्यथा महाभियोगरूपापराधेष्वेव दिव्यानीत्याद्यः, इयन्त्येव दिव्यस्वरूपाणीति द्वितीयः, मिलितस्तृतीयः, तथाप्याद्य एव नियमः स्वीक्रियते, न द्वितीयतृतीयौ, पितामहोक्तिविरोधादित्याह * एतानीति। तुलेत्यत्र निर्दिष्टानि दिव्यानि महाभियोगेष्वेवेति नियम इत्यर्थः। नपुनरित्यनेनार्थात्तृतीयस्यापि निरासः। पुनःशब्देन तन्निरास इतित्वयुक्तम्। उदक्षरत्वात्। * नपुनरिति। नात्वित्यर्थः। अनेन शङ्का समाहिता। नियम्यते इत्यस्यानुषङ्गः। ननु महत्त्वस्य सावधिकत्वेनानियमापत्तिरत आह * महत्त्वेति। नासहस्रादित्यादिनेति भावः। तथाच नानियम इति बोध्यम्।

३। स्मृत्यन्तरविरोधापत्त्या प्रोक्तनियमो न घटते इत्याशङ्क्य परिहरति * नन्वल्पेत्यादि। पितामहमाह * कोशमल्पेऽपीति। *सत्यमिति। उक्तवचनाविरोधाय विधिनिमयोर्वैधेज्यायस्त्वेन तथैव स्वीक्रियते, न तु तस्य नियमशरीरे प्रवेशः। तथाच तस्य तैः सह पाठो न तदर्थोऽपितु यथा तुलादीनि सावष्टम्भाभियोगेषु एवमयमपीत्येवमर्थ इति भावः। *सावष्टम्भेति। अवष्टम्भेन सहितः सावष्टम्भः। स्वोपरि दण्डाङ्गीकारश्चावष्टम्भः।

इति स्मरणात् । अन्ये पुनः शपथा अल्पार्थविषयाः ।

सत्यवाहनशस्त्राणि गोबीजकनकानि च ।
देवतापितृपादांश्च दत्तानि सुकृतानि च ॥
स्पृशेच्छिरांसि पुत्राणां दाराणां सुहृदां तथा ।
अभियोगेषु सर्वेषु कोशपानमथापि वा ॥
इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणे ।

इति नारदादिस्मरणात् । यद्यपि मानुषप्रमाणानिर्णेयस्य निर्णायकं यत् तद्दिव्यमिति लोकप्रसिद्ध्या शपथानामपि दिव्यत्वं तथापि कालान्तरनिर्णयनिमित्तत्वेन समनन्तरनिर्णयनिमित्तेभ्यो घटादिभ्यो दिव्येभ्यो भेदेन व्यपदेशो ब्राह्मणपरिव्राजकवत् । कोशस्य तु शपथत्वेऽपि घटादिषु पाठो महाभियोगविषयत्वेनावष्टम्भाभियोगविषयत्वेन च घटादिसाम्यात्, न तु समनन्तरनिर्णयनिमित्तत्वेन । तण्डुलानां तप्तमाषस्य च समनन्तरनिर्णयनिमित्तत्वेऽप्यल्पविषयत्वेन शङ्काविषयत्वेन च घटादिवैलक्षण्यात्तेष्वपाठ इति सन्तोष्टव्यम् ।

एतानि च दिव्यानि शपथाश्च यथासंभवमृणादिषु विवादेषु प्रयोक्तव्यानि ।

यत्तु पितामहवचनम्,

स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत् ।

इति, तदपि लिखितसामन्तादिसद्भावे दिव्यानि परिवर्जयेदिति व्याख्येयम् । ननु विवादान्तरेष्वपि प्रमाणान्तरसंभवे दिव्यानामनवकाश एव । सत्यम् ।

मि० कृत्वा ऽभियोक्त्रभियुक्तयोः परस्परसंप्रतिपत्त्याऽन्यतरोऽभियुक्तोऽभियोक्ता वा दिव्यं कुर्यात्। इतरोऽभियुक्तः शिरः शारीरमर्थदण्डं वा वर्तयेदङ्गीकुर्यात्। अयमभिसन्धिः। न मानुषप्रमाणवद्दिव्यं प्रमाणं भावैकगोचरम्, अपितु भावाभावावविशेषेण गोचरयति। अतश्च मिथ्योत्तरे प्रत्यवस्कन्दने प्राङ्न्याये वाऽर्थिप्रत्यर्थिनोरन्यतरस्येच्छया दिव्यं भवतीति।

मि० अल्पाभियोगे महाभियोगे शङ्कावष्टम्भयोरप्यविशेषेण कोशो भवतीत्युक्तम्। तुलादीनि विषान्तानि तु महाभियोगेष्वेव सावष्टम्भेष्वेवेति च नियमो दर्शितः। तत्रावष्टम्भाभियोगेष्वेवेत्यस्यापवादमाह।

या० विनापि शीर्षकात्कुर्यान्नृपद्रोहेऽथ पातके ॥९६॥

मि० राजद्रोहाभिशङ्कायां ब्रह्महत्यादिपातकाभिशङ्कायां च शिरःस्थायिना विनाऽपि तुलादीनि कुर्यात्, महाचौर्याभिशङ्कायां च।

यथाह,

राजभिः शङ्कितानां च निर्दिष्टानां च दस्युभिः।
आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना॥ इति।

तण्डुलाः पुनरल्पचौर्यशङ्कायामेव।

चौर्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः।

इति पितामहवचनात्। तप्तमाषस्तु महाचौर्याभिशङ्कायामेव।

चौर्यशङ्काभियुक्तानां तप्तमाषो विधीयते।

त्वाभियोगादभियुक्तस्य दिव्यमित्युक्तं, कर्तव्यमनेन तु अभियुक्ते शिरोवर्तीनि तदिच्छया अभियोक्तुरपि दिव्यमुच्यते इत्युक्तमपि-ति तथैव कुतो नोक्तम्, अत आह * अल्पाभियोगेष्विति। अ-भियोग इत्यर्थः। * भावेनेति। भावमात्रेत्यर्थः। इतिः तत्स-माप्ता। अयं भावः। अयं च विकल्पोऽभियोक्त्रिच्छयापेन। तदनिच्छायां त्वभियोक्तुरस्यैव दिव्यम्।

न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत्।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः॥

इति दिव्यतत्त्वे कात्यायनोक्तेरिति।

उ० ३। उत्तरपक्षमवतारयितुमुक्तसर्ववचनसिद्धमर्थमनुवदति * अल्पाभियोगेइति। यथाक्रमं कोशमल्पेऽपीत्यनेन, महाभियोगे ष्वेतानीत्यनेन, शङ्कास्वेव न संशय इत्यनेन, तुलाग्न्याप इत्यत्र तुलादिसहपाठेन च चतुर्षु स इत्युक्तमित्यर्थः। यथासंख्याभावाय व्यासमसाभ्यामुक्तिः। एतत्सूचक एव अपिः। *नियम इति। जातावेकवचनम्। चो व्युत्क्रमे, दर्शितश्चेत्यर्थः। तत्राद्यो महाभियोगेष्वेतानीत्यनेन, शीर्षकस्थे इत्यनेन द्वितीयो दर्शित इति बोध्यम्। शङ्कास्वेवेत्येवकारस्तु तण्डुलान्ययाशयक इत्यपि बोध्यम्। * तत्र, तयोर्मध्ये।

४। मूले अथशब्दः समुच्चये पातकपदं महापातकपरमित्याह * ब्रह्महत्यादीति। शीर्षकादित्यस्य व्याख्या * शिरःस्थायिनेति। तथाच राजद्रोहमहापातकयोः शङ्कायामपि तुलादीनि कार्याणीति तदपवादत्वमिति भावः। अथसमुच्चयमेवाह* महाचौर्याभिशङ्कायामिति। तन्मध्ये तत्रचेत्यर्थः। पितामहनारदावाह * यथाहेति। साजात्यादेकवचनम्। * राजभिरिति। अत्र राजभिरिति शङ्कामुपक्रम्यात्मशुद्धिपराणां च दिव्यमित्य-

ऋणादिषु विवादेषु उक्तलक्षणसाक्ष्युपन्यासे अर्थिना कृतेऽपि प्रत्यर्थी यदि दण्डाभ्युपगमावष्टम्भेन दिव्यमवलम्बते तदा दिव्यमपि भवति। साक्षिणामाशयदोषसंभवात्, दिव्यस्य च निर्दोषत्वेन वस्तुतत्त्वविषयत्वात्, तल्लक्षणत्वाच्च धर्मस्य।

यथाह नारदः,

तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिणि।
दैवसाध्ये पौरुषेयीं न लेख्यं वा प्रयोजयेत्॥इति।

स्थावरेषु विवादेषु प्रत्यर्थिना दण्डावष्टम्भेन दिव्यावलम्बने कृतेऽपि सामन्तादिदृष्टप्रमाणसद्भावे न दिव्यं ग्राह्यमिति विकल्पनिराकरणार्थं स्थावरेषु विवादेष्वित्यादिपितामहवचनं, नात्यन्तिकदिव्यनिराकरणार्थम्। लिखितसामन्ताद्यभावे स्थावरविवादेष्वनिर्णयप्रसङ्गात्॥ ९६॥

बा० १। यद्यप्यव्यवहितसङ्गतिस्तत्र विकल्पमाहेत्येवं सम्भवति तथापि विशेषप्रतिपादनाय व्यवहितसङ्गतिमाह * तत इति। वस्तुतस्तदपवादत्वाभावादाह * तदपवादार्थमिति। तदर्थमुक्तापेक्षया विकल्पमाहेत्यर्थः। रुचिरत्र न प्रसिद्धेत्याह * अभियोक्त्रभियुक्तयोरिति। अन्यतरः इत्यत्र अल्पाचूतरामितिवत्स्वार्थे तरप्। उक्तादन्य इत्यर्थः। तदाह *अभियोक्ता वा दिव्यं कुर्यादिति। मौलविकल्प एवायम्। अतएवाह *इतरोऽभियुक्तइति। दण्डविकल्पमाह * अर्थदण्डं वेति। एतेन तरपो यथाश्रुतत्वेन तस्याभियोक्ताऽभियुक्तो वेति व्याख्यानम् अग्रेचैवमेवेति क्वचिदुपलभ्यमानमयुक्तं वेदितव्यम्।

२। ननु दिव्यतत्त्वे शीर्षकस्थे इत्यनेनाभियोक्तुः शिरोवर्त्ति-

निमित्तस्याप्यल्पत्वकल्पनादिति भावः ।

६। पापवदाह * नक्तमिति । * चौर्यशङ्कितेति पितामहोक्तिः । यद्यप्यत्र चौर्यशङ्कितविशेषेणोक्तं तथापि तत्प्रमाणस्य तीक्ष्णत्वेन महादिव्यत्वादभिशस्तिकृतमपापानुसारेण निमित्तस्य चौर्यशङ्काया महत्त्वं युक्तमिति भावः । इदं च तृतीये व्यक्तीभविष्यति ।

७। * अन्ये, उक्तेभ्यः । * पुनः, तु । * वाहनम्, अश्वादि । * बीजं, धान्यम् । देवता च पिता च तयोश्चरणान् । * दत्तानि, भूम्यादीनि । * सुकृतानि, सदाचरणानि । स्पृशेदित्यस्य सर्वत्रान्वयः । * सर्वेषु, सकलयोग्येषु । स्वल्पेष्वपीति यावत् । * कोशपानम्, कोशस्य जलविशेषस्य भक्षणम् ।

८। ननु तुलादीनां दिव्यत्वमुक्तं मूलादौ, सत्यादीनां तु शपथत्वमुक्तं नारदेन, तदयुक्तं, तेषामपि दिव्यलक्षणाक्रान्तत्वादित्याशङ्क्ते * यद्यपीति । दिव्यलक्षणमाह * मानुषेति । * अनिर्णयस्य, अर्थस्य । लोकेत्यनेन शास्त्रोक्तत्वव्यवच्छेदः । उक्तलक्षणं दिव्यं द्विविधं, तत्कालनिर्णायकं कालान्तरनिर्णायकं च । तत्राद्यं तुलादि, द्वितीयं सत्यादि । तत्राद्यस्य अनामान्तरत्वेऽपि द्वितीयस्य नामान्तरं शपथ इति । एवं सति भेदेनोक्तिर्विशेषधर्मनिमित्तिकेत्याशयेन समाधत्ते * तथापीति । निर्णयनिमित्तेत्यादिः षष्ठीतत्पुरुषः । गोबलीवर्दन्यायस्यासत्त्वादाह * ब्राह्मणेति । ब्राह्मणानामन्त्रयस्वेत्युक्त्यैव तत्त्वस्य तत्राविशिष्टत्वात्तदामन्त्रणेऽपि प्राप्ते पुनः परिव्राजकमामन्त्रयस्वेति कथनं तत्प्राधान्यप्रतिपादनार्थं यथा तथा तुलादीनां सत्यादीनां च दिव्यत्वे तुल्येऽपि ततस्तेषां भेदेन कथनं कालान्तरनिर्णयनिमित्तत्वद्योतनार्थम् इत्यर्थः । यथा तस्य तत् फलान्तरानुरोधेनैवमत्रापीति यावत् । यद्वा ब्राह्मणानामन्त्रय

नेन निरवष्टम्भाभियोगे च दिव्यदानस्योपसंहारात्तन्मध्यपाति-निर्दिष्टानामितरस्यापि शङ्काविषयत्वं बोध्यम्।

दिव्यतत्त्वे कालिकापुराणे,

परदाराभिशापे च चौर्यागम्यागमेषु च।
महापातकशस्ते च स्याद्दिव्यं नृपसाहसे॥
विमतिपत्तौ विवादे अवर्णस्थापने कृते।
तत्रैव दापयेद्दिव्यं शिरःपूर्वं महीपतिः॥
परदाराभिमर्शे च बहवो यत्र वादिनः।
शिरोहीनं भवेद्दिव्यमात्मनः शुद्धिकारणात्॥ इति।

*अगम्याः, परदारभिन्नाः साधारणवेश्याद्याः। *शस्ते, अभिशस्ते। साहसं बलादन्यायः। विमतिपत्तौ परदाराभिशापादिविषयायाम्। विवादे ऋणादानादिविषये। अवर्णो निन्दा। परेति विशेषणमविवक्षितम्। अभिशापस्यानुवाद्यत्वात्। एवं बहव इत्याद्यपि। परदाराभिमर्शेचेति चौर्यादीनामप्युपलक्षणम्। तेन वाद्यभावेऽपि सर्वाभिशापे दिव्यं भवति। अत एव शुद्धिकारणादिति हेतूक्तिः, विनापीति मौलसामान्योक्तिश्च सङ्गच्छते।

विष्णुरपि,

राजद्रोहे साहसेषु विनापि शीर्षकार्पणमिति।

नारदोपि, ( व्य० प० १।२७० )

आशिरांसि च दिव्यानि राजा भृत्येषु दापयेत्।
अभियोगाभियुक्तानामन्येषां तु यथाक्रमम्॥ इति।

८। शङ्कास्वेवेत्येवकारं सफलयन्विरोधपरिहाराय विशेषमाह *तण्डुलाः पुनरिति। तण्डुलास्त्वित्यर्थः। *चौर्येत्विति। यद्यप्यत्र चौर्ये इत्येवोक्तं तथापि तण्डुलरूपाल्पदिव्यानुरोधेन

सं परिहर्तुं शङ्कते *नन्विति । *विवादान्तरेष्वपीति । स्थावर-विषयान्येष्वपीत्यर्थः । *प्रमाणेनेति । दिव्यान्यमानुषप्रमाणेनेत्यर्थः । ऋणादिष्विति विषयसप्तमी । *दण्डाद्युपगमेनेति । दण्डाङ्गीकारानिश्चयेनेत्यर्थः । अपिना तस्यापि समुच्चयः । ननु सम्भवतीत्यागविरोधोऽत आह *साक्षिणामिति । आत्मनोऽन्तःकरणम् । हेत्वन्तरमाह *दिव्यस्यचेति । सोऽन्ते योज्यः । हेत्वन्तरमाह *तल्लक्षणत्वादिति । धर्मस्य वस्तुतत्त्वविषयकत्वाच्चेत्यर्थः ।

१३। अत्र हेतौ मानमाह *यथाहेति । *तत्र, दिव्ये । *सत्ये, तद्रूपे । *साक्षिणि व्यवहारस्तु, तन्मात्रं तु । *दैवसाध्ये, तदेकसाध्ये । *पौरुषेयीं, क्रियां साक्षिरूपाम् । नेत्युभयान्वयि । अयं च दोषसम्भावनामात्रेण साक्ष्यादिनिषेधो, न वास्तव इति बोध्यम् ।

१४। एवमन्यत्रोक्ता स्थावरेषु कथयन् स्थावरपदसार्थक्यं तत्राह *स्थावरेष्विति । *सामन्तादिदृष्टेति । तद्रूपदृष्टेत्यर्थः । नेत्युत्तरान्वयि । *विकल्पेति । स्थावरेषु मानुषदिव्यप्रमाणयोर्न विकल्प इति विकल्पनिराकरणार्थः स्थावरशब्द इति भावः । *आत्यन्तिकेति । सर्वथेत्यर्थः । निषेधे हेतुमाह *लिखितेति ॥ ९६ ॥

मि० किंच ।

या० सचैलस्नातमाहूय सूर्योदयउपोषितम् ।
कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधौ ॥ ९७ ॥

मि० पूर्वेद्युरुपोषितमुदिते सूर्ये सचैलस्नातं दिव्यग्राहिणमाहूय नृपस्य सभ्यानां च ब्राह्मणानां सन्निधौ

परित्राजकं चेत्युक्ते प्रोक्तरीत्या सिद्धे पुनस्तदुक्त्या यथा तस्य तदन्यपरत्वं तथाऽत्रापीत्यर्थः।

९। ननु यदि कालान्तरनिर्णयनिमित्तानि शपथास्तर्हि कोशस्य सद्योनिर्णयनिमित्तेषु तुलादिषु पाठोऽनुपपन्नः, तस्य तदन्तर्गतत्वात्, अतः प्रागुक्तमनुसृत्यैवाह * कोशस्यत्विति। *विषयत्वेन चेति साम्ये हेतुः। * निमित्तत्वेनेति। घटादिसाम्यादित्यनुषज्यते।

१०। ननु एवमपि तण्डुलतप्तमाषयोः सद्योनिर्णयनिमित्तत्वेन मूले तुलादिषु पाठः स्मृत्यन्तरवदुचितोऽत आह * तण्डुलानामिति। * अल्पेति। अल्पाभियोगेत्यर्थः। नन्वैकरूप्यमेव सर्वत्रोचितं न तु क्वचित् किञ्चित्कृतं वैलक्षण्यं क्वचित् किञ्चित् कृतं साम्यमिति वैरूप्यम्, अत आह * सन्तोष्टव्यमिति। सिद्धस्य गतिश्चिन्तनीयेति भावः। कोशस्याल्पशङ्कोभयविषयत्वेऽपि तन्मात्राविषयकत्वाद्युक्तस्तेषु पाठ इति तात्पर्यम्।

११। विशेषं वक्तुं प्रतिजानीते * एतानि चेति। चो वाक्यालङ्कारे। *ऋणादिष्विति। ऋणादानादिरूपाष्टादशविवादेष्वित्यर्थः। नन्विदमयुक्तं, पितामहविरोधादित्याशङ्क्य प्रागुक्तरीत्यैव परिहरति *यस्त्वित्यादि। स्थावरेष्विति विषयसप्तमी। सामन्तास्तत्राग्रे स्फुटीभविष्यन्ति। *व्याख्येयमिति। स्थावरविवादेषु नात्यन्तिकदिव्यनिषेधार्थमिदम् । दृष्टप्रमाणाभावेऽनिर्णयप्रसङ्गात्। किन्त्वार्थिनो दृष्टप्रमाणसत्त्वे प्रत्यर्थिनि दण्डावष्टम्भेन दिव्यमवलम्बत्यपि दृष्टेन अदृष्टेन वा निर्णय इति प्रागुक्तरीत्या प्राप्तविकल्पनिरासेन दिव्यनिषेधार्थं, विवादान्तरे तु विकल्प एवेति भावः।

१२। इदमेव ध्वनयन्स्थावरपदानर्थक्यमुक्तयुक्तेस्तुल्यत्वात्प्रा-

शरद्ग्रीष्मे तु सलिलं हेमन्ते शिशिरे विषम् ॥
चैत्रो मार्गशिरश्चैव वैशाखश्च तथैव च ।
एते साधारणा मासा दिव्यानामविरोधिनः ॥
कोशस्तु सर्वदा देयस्तुला स्यात्सार्वकालिकी॥इति।

कोशग्रहणं सर्वशपथानामुपलक्षणम् । तण्डुलानां पुनर्विशेषानभिधानात्सार्वकालिकत्वम् ।

प्रतिषेधमुख्योऽपि, ( ना. व्य. प. १ । २५९ )

न शीते तोयशुद्धिः स्यान्नोष्णकालेऽग्निशोधनम् ।
न प्रावृषि विषं दद्यात्प्रवाते न तुलां तथा ॥
नापराह्णे न सन्ध्यायां न मध्याह्ने कदाचन । ३२० इति।

न शीते तोयशुद्धिः स्यादित्यत्र शीतशब्देन हेमन्तशिशिरवर्षाणां ग्रहणम्, नोष्णकालेऽग्निशोधनमित्यत्रोष्णकालशब्देन च ग्रीष्मशरदोः। विधानलब्धस्यापि पुनर्निषेध आदरार्थः । प्रयोजनं तु वक्ष्यते ॥९७॥

पा० १। * किञ्चेति। दिव्यस्य कालाद्युच्यते इत्यर्थः । * सचैलस्नाततमिति बहुव्रीहिः । सचैलं स्नाततमिति पाठान्तरम् । भूतप्रत्ययादिसूचितमाह * पूर्वेद्युरिति । अर्धबिम्बनिरासायाह *उदिते इति । सूर्योदये इति बहुव्रीहिरिति भावः । ब्राह्मणपदार्थमेवाह * सभ्यानां चेति । नृपस्योक्तत्वेनार्थादाह *माडिति । अत्रोपोषित इति सामान्येनोक्तावपि पितामहोक्तं विशेषमाह * त्रिरात्रोपोषितायेति । * शुचये, कृतस्नानाय। * आर्द्रवाससे, सचैलस्नानाय । त्रिरात्रोपोषिताय अथवा एकरात्रोपोषिताय नित्यमवश्यं दिव्यानि देयानि स्युरित्यर्थः। नित्यमित्यनेन अदाने प्रत्यवायः सूचितः। त्रिरात्रोपोषितायैवत्येकेति पाठान्तरम्।

एकरात्रोपोषिताय त्रिरात्रोपोषिताय वा ।

सर्वाणि दिव्यानि कारयेत्प्राड्विवाकः।
त्रिरात्रोपोषिताय स्युरेकरात्रोषिताय वा।
नित्यं दिव्यानि देयानि शुचये चार्द्रवाससे॥

इत्युपवासविकल्पः पितामहेनोक्तो बलवदबलवन्महाकार्याल्पकार्यविषयत्वेन व्यवस्थितो द्रष्टव्यः। उपवासनियमश्च कारयितुः प्राड्विवाकस्यापि।

दिव्येषु सर्वकार्याणि प्राड्विवाकः समाचरेत्।
अध्वरेषु यथाऽध्वर्युः सोपवासो नृपाज्ञया॥

इति पितामहवचनात्। अत्र च यद्यपि सूर्योदये इत्यविशेषेणोक्तं तथापि शिष्टसमाचाराद्भानुवारे दिव्यानि देयानि। तत्रापि—

पूर्वाह्णेऽग्निपरीक्षा स्यात्पूर्वाह्णे च धटो भवेत्।
मध्याह्ने तु जलं देयं धर्मतत्त्वमभीप्सता॥
दिवसस्य तु पूर्वाह्णे कोशशुद्धिर्विधीयते।
रात्रौ तु पश्चिमे यामे विषं देयं सुशीतले॥

इति पितामहोक्तो विशेषो द्रष्टव्यः। अनुक्तवेलाविशेषाणां तण्डुलतप्तमाषप्रभृतीनां पूर्वाह्णे एव प्रदानम्।

पूर्वाह्णे सर्वदिव्यानां प्रदानं परिकीर्तितम्।

इति सामान्येन नारदस्मरणात्॥ (व्य. प. १।२६८)

अहनि त्रिधा विभक्ते पूर्वो भागः पूर्वाह्णो मध्यो मध्याह्नः उत्तरोऽपराह्णः। तथाऽपरोऽपि कालविशेषो विधिप्रतिषेधमुखेन दर्शितः।

विधिमुखस्तावत्—

अग्नेः शिशिरहेमन्तौ वर्षाश्चैव प्रकीर्तिताः।

त्यागेम् । ऋतुनक्षत्राणामानुपूर्व्येणेन्युक्तेः । एवं ग्रम्भ्रीष्मे इत्य-
पि बोध्यम् । अतएवाग्रे तथैव मगोगदयम् । अन्त्ये समाहार-
द्वन्द्वः । वर्षास्वेवेति कल्पनरूनोऽपपाठः । तस्य शीतत्वात् । प्र-
कीर्तित इति पाठे काल इत्यस्य विशेषणत्वं बोध्यम् ।

यो यस्य विहितः कालो विधिर्यस्य च यो यथा ।
तं प्रवक्ष्यामि तत्त्वेन वादिनश्च यथाबलम् ॥
इति इतः प्रागुक्तेः । अतएव—
अग्निः शिशिरहेमन्तवर्षासु परिकीर्तितः ।
इति मगूखधृतपाठोऽप्ययुक्तः । * कोशस्त्विति ।

अस्य स्थाने—

धटः सर्वर्तुकः प्रोक्तो वाते वाति विवर्जयेत्— इति पाठः
कल्पतर्वादौ । इदं नारदीयमिति केचित् ।

६ । न्यूनतां निराचष्टे * कोशेति । चतुर्णां दिव्यानां प्रत्येक-
मुक्तत्वात्तन्मध्यपाठसत्त्वादिति भावः । तत्रापाठात् भेदेनाह
* तण्डुलेति । अतएव पुनस्त्वर्थः । * विशेषेनि । अन्यादेरिवेति
भावः । शङ्काविषयतया सहपाठाच्चेत्यपि बोध्यम् । तत्समापादेस्तु
चैत्रादिरेव काल इति बोध्यम् ।

७ । द्वितीयमाह * प्रतिषेधेति । * नशीते इति ।
विचार्य धर्मनिपुणैर्धर्मशास्त्रविशारदैः ।
धर्मं सर्वर्तुकं प्रोक्तं पण्डितैर्धटधारणम् ॥ ( २६० )
वर्षासु समये वह्निर्हेमन्ते शिशिरे तथा ।
ग्रीष्मे सलिलमित्युक्तं विषं काले तु शीतले ॥ ( २५४ )
इति इतः प्राक् नारदोक्तिः । * प्रवाते, प्रकृष्टे वाते स-

१ न शीते इत्यनन्तरं विचार्यधर्मनिपुणैरिति श्लोक उपलभ्यते । वर्षासुसमये इति तु श्लोकचतुष्टयव्यवहितं पूर्वमुपलभ्यते । तत्रापि- वर्षासु वह्निरित्युक्तः शिशिरेतु धटः स्मृतः—इति पूर्वार्धे पाठः ।

इति मयूखादिधृतपाठस्तु मुनिशैलीविरुद्धत्वादुपेक्ष्यः। ननु दन्त्वादीति न युक्तं, कार्यतारतम्येऽपि तथापत्तेः। अत आह * गतेति।

२। विशेषमाह * उपवासनियमश्चेति। चेनार्द्रवासस्त्वादिसमुच्चयः।
तदाह नारदः,

प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः।
श्रुतवृत्तोपसम्पन्नः शान्तचित्तो विमत्सरः॥
सत्यसन्धः शुचिर्दक्षः सर्वप्राणिहिते रतः।
उपोषितश्चार्द्रवासाः कृतदन्तानुधावनः॥

सर्वासां देवतानां च पूजां कृत्वा यथाविधि। इति।

* शिष्टेति। वस्तुतस्तु सूर्यस्य तद्वारस्योदयो यत्रेति, सूर्ये तद्वारे उदयेऽर्थाद्रवेरिति वाऽर्थ इति स्मार्त्तमेवेदमिति बोध्यम्।

३। * तत्रापि, भानुवारेऽपि। विशेष इत्यत्रान्वयः। दिवसस्येत्यस्य सर्वत्र सम्बन्धः। स्पष्टार्थं विषान्यदिव्यमात्रे दिवसस्य प्राधान्यसूचनार्थमिदं विशेषणम्। सुशीतले इति हेतुगर्भं यामविशेषणम्। तु शीतले इति पाठान्तरम्। सुशीतलमिति पाठस्त्वयुक्तः।

४। विशेषमाह * अनुक्तेति। एतेन न्यूनता निरस्ता। कालस्योक्तत्वादाह * वेलेति। प्रभृतिशब्देन कालादिग्रहणम्।
* पूर्वाह्ने इति।

अहोरात्रोपिते स्नाते त्वार्द्रवाससि मानवे-(ना.व्य.प.१।२६८)

इति अस्य पूर्वार्द्धम्। पूर्वाह्णादीनामनेकत्वादाह * अहनीति।

५। पितामहोक्तमेव विशेषान्तरमाह * तथेति। मासादिरित्यर्थः। * मुखेन, तदुभयद्वारा। * विधीति। तत्रेत्यादिः। बहुव्रीहिः। एवमग्रेऽपि। शिशिरहेमन्तावि-

अग्निर्जलं वा, शूद्रस्य यवाः सप्त विषस्य वा॥९८॥

मि० स्त्री स्त्रीमात्रं जातिवयोऽवस्थाविशेषानादरेण। बाल आषोडशाब्दाज्जातिविशेषानादरेण। वृद्धोऽशीतिकापरः। अन्धो नेत्रविकलः। पङ्गुः पादविकलः। ब्राह्मणो जातिमात्रम्। रोगी व्याधितः। एतेषां शोधनार्थं तुलैवेति नियम्यते। अग्निः फालस्तसमाषश्च क्षत्रियस्य। जलमेव वैश्यस्य। वाशब्दोऽवधारणे। विषस्य यवा उक्तपरिमाणाः सप्तैव शूद्रस्य शोधनार्थं भवन्ति। ब्राह्मणस्य तुलाविधानात्, शूद्रस्य यवाः सप्त विषस्य वेति विषविधानात्, अग्निर्जलं वेति क्षत्रियवैश्यविषयं युक्तम्। एतदेव स्पष्टीकृतम्—

पितामहेन,

ब्राह्मणस्य घटो देयः क्षत्रियस्य हुताशनः।
वैश्यस्य सलिलं प्रोक्तं विषं शूद्रस्य दापयेत्॥ इति।

यत्तु स्त्र्यादीनां दिव्याभावस्मरणम्, (ना. व्य. प. १। २५६)

सव्रतानां भृशार्तानां व्याधितानां तपस्विनाम्।
स्त्रीणां च न भवेद्दिव्यं यदि धर्मस्त्वपेक्षितः॥ इति,

तद् रुच्या वाऽन्यतरः कुर्यादिति विकल्पनिवृत्त्यर्थम्। एतदुक्तं भवति। अवष्टम्भाभियोगेषु स्त्र्यादीनामभियोक्तृत्वेऽभियोज्यानामेव दिव्यम्, तेषामभियोज्यत्वेऽप्यभियोक्तॄणामेव दिव्यम्। परस्पराभियोगे तु विकल्प एव। तत्रापि तुलैवेत्यनेन वचनेन नियम्यते। तथा, महापातकादिशङ्काभियोगे स्त्र्यादीनां तुलैवेति। एतच्च वचनं सर्वदिव्यसाधार-

ति। न मध्याह्न इति निषेधो जलान्यपरः। अतः प्रागुक्तपितामहविरोधो न।

८। विध्येकवाक्यतायै विरोधनिरासाय चाह * नशीते इत्यादि। * हेमन्तेति। मार्गशीर्षान्येत्यादिः। * उष्णकालशब्देन च, उष्णकालशब्देनापि। * ग्रीष्मशरदोः, ग्रहणमित्यनुपज्यते। एवं प्रावृट्शब्दो ग्रीष्मशरदोरप्युपलक्षणमिति बोध्यम्।

अव्यवस्थितमर्यादं विषं प्रावृषि जायते। इति पितामहः।

९। ननु ग्रीष्मादिकालविधेरेवान्यकालानिवृत्तौ सत्यां पुनर्निषेधोऽफलोऽतआह * विधानलब्धस्यापीति। निषेधविषयकालस्येत्यर्थः। यथाश्रुतेऽनुपपत्तिः स्पष्टैव।

१०। ज्योतिःशास्त्रे विशेष उक्तः,

सिंहस्थे मकरस्थे च जीवे चास्तमिते तथा।
मलमासे न कर्त्तव्या परीक्षा जयकाङ्क्षिणा॥
रविशुद्धौ गुरोश्चैव न शुक्रेऽस्तं गते पुनः।
सिंहस्थे च रवौ नैव परीक्षा शस्यते बुधैः॥
नाष्टम्यां न चतुर्दश्यां प्रायश्चित्तपरीक्षणम्।
न परीक्षाधिवासश्च शनिभौमदिने भवेत्॥
नो शुक्रास्तेऽष्टमार्के गुरुसहितरवौ जन्ममासेऽष्टमेन्दौ।
विष्टौ मासे मलाख्ये कुजशनिदिवसे जन्मतारासु चाथ॥
नाडीनक्षत्रहीने गुरुरविरजनीनाथताराविशुद्धौ।
प्रातः कार्या परीक्षा द्वितनुचरग्रहांशोदये शस्तलग्ने॥

इति। * वक्ष्यतइति। अनुपदमेव कालान्तरे त्वित्यादिना॥९७॥

मि० अधिकारिव्यवस्थामाह।

या० तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम्।

इति वचनाद् दुर्बलानामपि । सर्वथा विभिन्नति-षेधात् ऋतुकालानानीयमानेन ज्ञातिवर्गावस्थाभिनानि दिव्यानि देयानि ॥ ९८ ॥

भा० १ । * अर्हति । वर्णादीन्यर्थः । तयोःकिम्वात्स्वदाह *स्त्रीपात्रमिति । मात्रार्थ मानव्यं निगदयति * ज्ञातीति । एवम-प्रेऽपि । आपन्नान्नादिर्नातिः । वर्णादिर्नयः । सन्क्रान्ता प्रताबन्धाः बाल्यादयः । * नेदेति । लोकप्रसिद्धानुरोधेनेदम् । यथातु भाष्यं तथा अपूर्णत्यादिः । पराभियोगेषु सावष्टम्भेषु मागुक्तनावरोन्धः सर्वेषां मांक्षराद * तुल्यवनीति ।

२ । तृतीयपादार्थ व्याचष्टे * अग्निरिति । पूर्ववदानिपनेन एवासम्बन्धात्स्मृत्यन्तरानुरोधाचेदमुपलक्षणमित्याह * कान्-इति । तत्रावशिष्टार्थमाह * जलमिति । ननु जलंवेत्यस्य जल-मेवेति कथमर्थो ऽत आह * वाशब्द इति ।

वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये । इति कोशात् ।

एतस्याग्रेऽप्यन्वयो बोध्यः । अतएव सर्वेवेत्युक्तिरग्रे ।

३। अवशिष्टं व्याचष्टे * विषस्येति । * उक्तेति । पूर्वाध्या-यान्ते इति भावः । नन्वग्निजलविषाणां श्रौतानां श्रौतशूद्रे एव विकल्पोऽस्तु किमित्यश्रौतक्षत्रवैश्यविषयतास्वीकारोऽतआह *ब्राह्मणस्येति । *युक्तमिति । परिशेषादिति, अन्यथा न्यूनता-पत्तेरेकस्य वाशब्दस्याधिक्यात्स्मृत्यन्तरानुरोधाच्चेति भावः । एतेन विषस्य चेति काचित्कः पाठः मत्युक्तः । एतदेवाह * एतदे-वेति । * दापयेत्, नृप इति शेषः । नारदोऽप्येवम् । गोरक्षका-दिद्विजानामप्येवं बोध्यम् । तेषां तत्समत्वस्योक्तत्वात् ।

४ । विरोधं परिहरति * यत्त्विति । नारदमाह * सव्रताना-मिति । * मृचेति । अतिशयितव्याधिग्रस्तानामित्यर्थः । कृशार्ता-

णेषु मार्गशिरचैत्रवैशाखेषु स्त्र्यादीनां सर्वदिव्यसमवधाने नियामकतयाऽर्थवत्। न च सर्वकालं स्त्रीणां तुलैवेति।

स्त्रीणां च न विषं प्रोक्तं न चापि सलिलं स्मृतम्।
घटकोशादिभिस्तासामतस्तत्त्वं विचारयेत्॥

इति विषसलिलव्यतिरिक्तघटकोशाग्न्यादिभिः शुद्धिविधानात्। एवं बालादिष्वपि योजनीयम्। तथा, ब्राह्मणादीनामपि न सार्वकालिकस्तुलादिनियमः।

सर्वेषामेव वर्णानां कोशशुद्धिर्विधीयते।
सर्वाण्येतानि सर्वेषां ब्राह्मणस्य विषं विना॥

इति पितामहवचनात्। तस्मात्साधारणे काले बहुदिव्यसमवधाने तुलादिनियमार्थमेवेदं वचनम्। कालान्तरे तु तत्तत्कालविहितं सर्वेषाम्। तथाहि। वर्षास्वग्निरेव सर्वेषाम्। हेमन्तशिशिरयोस्तु क्षत्रियादित्रयाणामग्निविषयोर्विकल्पः। ब्राह्मणस्य त्वग्निरेव न कदाचिद्विषम्। ब्राह्मणस्य विषं विनेति प्रतिषेधात्। ग्रीष्मशरदोस्तु सलिलमेव। येषां तु व्याधिविशेषेणाग्न्यादिनिषेधः—

कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम्।
पित्तश्लेष्मवतां नित्यं विषं तु परिवर्जयेत्॥ इति,

तेषामग्न्यादिकालेऽपि साधारणं तुलाद्येव दिव्यं भवति।

तथा—

तोयमग्निर्विषं चैव दातव्यं बलिनां नृणाम्।

अत्र पूर्वपक्षम् । * अतः, यतो निषेधस्ततः अत इत्यर्थः । अनन्तरलक्षणमिति पाठे आनन्तर्यं वस्तुलक्षणमित्यर्थः । आदिशब्दार्थ-माह * अग्न्यादिभिरिति । आदिना वत्सनाभादि ।

७। वर्णविशेषे नियमाह * नृपेति । उक्तं सर्वमुपसंहर-ति स्पष्टार्थं * तस्मादिति । गोशाद्विमासत्रये इत्यर्थः । * शूद्र-व्येति । पात्रादित्वान् स्त्रीत्वं न । * इदं वचनमपीति । स्त्रीबाले-त्यादिसूत्रस्यापवादकमित्यर्थः ।

८। एतच्चवचनेन दर्शयन प्रयोजनं तु वक्ष्यते इति प्रागुक्तं प्रयोजनं दर्शयति * कालान्तरे त्वित्यादि । * सन्दिग्धमेवेति । सर्वेषामपीति भावः ।

९। अयं च कालविशेषेऽग्न्यादिनियमः कुष्ठाद्यनुपतापविषये इति विशेषान्तरमाह * येषां त्विति । अपिना साधारणकाल-समुच्चयः । वर्णाश्रयेणाह *तुलाधेयेति ।

१०। किञ्च स बलिष्ठविषयक इत्याह *तथेति । * दुर्बला-नामपीति । अग्न्यादीत्यादेरनुषङ्गः । उक्तं प्रयोजनमुपसंहरति * सर्वथापीति । विधिप्रतिषेधाद्दतुकालानातिक्रमेणेति पाठः॥९८॥

मि० महाभियोगेष्वेनानीत्युक्तं, तत्राभियोगस्य यदपेक्षं महत्त्वं तदिदानीमाह ।

या० नासहस्राद्धरेत्फालं न विषं न तुलां तथा ।

मि० पणसहस्रादर्वाक् फालं विषं तुलां वा न का-रयेत् । मध्यवर्ति जलमपि ।

यथोक्तम्,

तुलादीनि विषान्तानि गुरुष्वर्थेषु दापयेत् । इति ।

अत्र कोशस्याग्रहणम् । कोशमल्पेऽपि दापयेदि-

नामिति पाठस्तु कल्पतरौ स्थितो न युक्तः। पौनरुक्त्यापत्तेः। * अवेक्षिन इति। अवेक्ष्यते इति द्वितीयः पाठः। अवेक्ष्यतेइति तृतीयः पाठः। * इति विकल्पेति। इतिपक्षप्राप्तदिव्येत्यर्थः।

५। ननु कथमनेन तन्निवृत्तिरत आह * एतदिति। स्त्र्यादीनामिति पूर्वान्वय्यपि। अन्यैः सहेति शेपस्तत्र। वैपरीत्ये ऽप्याह * एतेषामिति। स्त्र्यादीनामित्यर्थः। ननु स्त्र्यादीनामन्यैः सह तदभियोगे पक्षद्वयेऽपि तदन्येषामेव दिव्यमित्यस्तु अन्यतरविकल्पः, तथापि तेषां मिथोऽभियोगे कथम्, अत आह * परस्परेति। * विकल्प इति। ऐच्छिकविकल्प इत्यर्थः। ननु दिव्यकर्तृविकल्पवद्दिव्यविकल्पोऽप्यस्त्विति चेन्न। तस्य न्यायतः प्राप्तत्वेऽपि तुलास्त्रीति वाक्येन नियामकेन बाधात्। * तत्रापीति। दिव्यानां मध्येऽपीत्यर्थः। * अनेन, तुलास्त्रीति मूलवचनेन। नायं नियमः सावष्टम्भाभियोगे एव, किंत्वन्यत्रापीत्याह * तथेति। अयं समुच्चये, न सादृश्ये। तच्छङ्काभियोगे सर्वथा सावष्टम्भाभियोगसाम्याभावात्। तुलानियमसाम्यभावाशयको वा तथाशब्दः। नियम्यते इत्यस्यानुपङ्गः।

६। नन्वेवं तुलानियमस्य स्त्रीणां सार्वकालिकत्वापत्तिः, तस्याप्यनेन बाधात्, अत आह * एतच्चेति। स्त्रीबालेत्यादिमूलवाक्यं चेत्यर्थः। अर्थवदित्यत्रान्वयः। मासक्रमस्य विवक्षितत्वादाह * मार्गेति। अयमकारान्तः शब्दः। * अर्थवत्, सफलं सम्भावितम्। अन्यथा सार्थक्यं निराचष्टे * नचेति। नत्वित्यर्थः। * तुलैवेतीति। नियामकतयेत्यादेरनुपङ्गः। नारदमाह * स्त्रीणान्त्विति।

क्लीबान्नरान्सत्त्वहीनान् परितश्चार्दितान्तरान्।
बालवृद्धातुरांस्त्रीश्च परीक्षेत घटे सदा॥ इति–

ग्निकरणासहस्रं गोक्तव्यम् ।

मि० ननु नृपद्रोहे महापातके चैतानि दिव्यान्युक्तानि, तत्कथं नासहस्राद्धरेत्फालमित्यत आह ।

मा० नृपार्थेष्वभिशापे च वहेयुः शुचयः सदा ॥९९॥

मि० नृपद्रोहेषु महापातकाभियोगे च सदा द्रव्यसंख्यामनपेक्ष्यैवैतानि दिव्यानि कृतोपवासादिना शुचयः सन्तः । तथा देशविशेषोऽपि—

नारदेनोक्तः, ( व्य० प० १।२६५ )

सभाराजकुलद्वारदेवायतनचत्वरे ।

निर्देशो निश्चलः शस्यो धूपमाल्यानुलेपनैः ॥ इति ।

निर्देशो घटः । व्यवस्था च—

कात्यायनेनोक्ता,

इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम् ।

नृपद्रोहे प्रवृत्तानां राजद्वारे प्रयोजयेत् ॥

प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे ।

अतोऽन्येषु च कार्येषु सभामध्ये विदुर्बुधाः ॥

अस्पृश्याधमदासानां म्लेच्छानां पापकारिणाम् ।

प्रातिलोम्यप्रसूतानां निश्चयो न तु राजनि ॥

तत्प्रसिद्धानि दिव्यानि संशये तेषु निर्दिशेत् ।

इति ॥ ९९ ॥

इति दिव्यमातृका ॥

पा० १। व्यवहितसङ्गतिमाह * महेति । * तत्र, महाभियोगेषु । पञ्चम्युपपत्तये आह * अर्वागिति । * फालमिति । सादृश्यादग्निमित्यर्थः । तस्य मूलकृता नैवोक्तत्वात् ।

न्यन्याभियोगेऽपि तस्य स्मरणात्। एतानि चत्वारि दिव्यानि पणसहस्रादूर्ध्वमेव भवन्ति, नार्वागित्यर्थः। नन्वर्वागप्यवन्यादीनि पितामहेन दर्शितानि,

सहस्रे तु धटं दद्यात्सहस्रार्द्धे तथाऽऽयसम्।
अर्धस्यार्द्धे तु सलिलं तस्यार्द्धे तु विषं स्मृतम्॥ इति।

सत्यम्। तत्रेत्थं व्यवस्था। यद्द्रव्यापहारे पातित्यं भवति तद्विषयं पितामहवचनम्, इतरद्रव्यविषयं योगीश्वरवचनमिति। एतच्च वचनद्वयं स्तेयसाहसविषयम्। अपह्नवे तु विशेषो दर्शितः—

कात्यायनेन,

दत्तस्यापह्नवो यत्र प्रमाणं तत्र कल्पयेत्।
स्तेयसाहसयोर्दिव्यं स्वल्पेऽप्यर्थे प्रदापयेत्॥
सर्वद्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत्।
हेमप्रमाणयुक्तं तु तदा दिव्यं प्रयोजयेत्॥
ज्ञात्वा संख्यां सुवर्णानां शतनाशे विषं स्मृतम्।
अशीतेस्तु विनाशे वै दद्यादेव हुताशनम्॥
षष्ट्या नाशे जलं देयं चत्वारिंशति वै धटम्।
विंशद्दशविनाशे तु कोशपानं विधीयते॥
पञ्चाधिकस्य वा नाशे ततोऽर्द्धार्द्धस्य तण्डुलाः।
ततोऽर्द्धार्द्धविनाशे हि स्पृशेत्पुत्रादिमस्तकान्॥
ततोऽर्द्धार्द्धविनाशे तु लौकिक्यश्च क्रियाः स्मृताः।
एवं विचारयन् राजा धर्मार्थाभ्यां न हीयते॥ इति।

ज्ञात्वा संख्यां सुवर्णानामित्यत्र सुवर्णशब्दः षोडश माषाः सुवर्ण इत्युक्तपरिमाणवचनः। नाशशब्दश्चात्रापह्नववचनः। नासहस्राद्धरेत्फालमित्यत्र तु ता-

थाच स गिलतो मृते नोक्त एव ।

५। तद्वेतत् स्वगतमाह *अपहृतेष्विति। * प्रमाणम्, अप-हृतद्रव्यानुसारेण दिव्यानि। * स्तेयेति। अत्र ब्राह्मणवसिष्ठ-न्यायेन स्तेयादन्यस्माद्रहितं शास्त्रान्तरम्। स्तेयोऽपलापे इत्य-पिना महतः समुच्चयः। तत्प्रकारमेवाह * सर्वेति। * मुक्तं, त-त्सम्बद्धं नासंबद्धं, तत्तुल्यमिति यावत्। * ज्ञात्वा संख्यामिति पूर्वान्वयि। * संख्या, प्रमाणम्। सुवर्णानामित्यस्य पञ्चमभि-न्यायेनान्वयः। * नान्याविंशतीति। तत्संख्याकेषु सुवर्णेषु अप-हृतेष्वित्यर्थः। * विंशति। विंशतिः प्रमाणमस्येति विंशं तत्र दश च तेषां विनाशे इत्यर्थः। विंशद्दशेति पाठान्तरम्। विंशति दशेति तृतीयः पाठः। पञ्चार्धिकस्येति पाठः। पञ्चैवार्थे, स्वार्थे ठक्, तस्येत्यर्थः। पूर्वान्वयीदं, वाशब्दस्वारस्यात्। तदर्धेत्यत्र त-च्छब्देन दश परामृश्यन्ते। तत इत्यनेन पञ्च। अग्रे तत इत्यनेन पूर्वतदर्धम्। * लौकिक्यः, लोकभवा अन्ये शपथादयः। * वि-चारयन्, तत्पूर्वकं कुर्वन्नित्यर्थः। कल्पतरौ तु पाठान्तरम्।

प्रयोजयेदित्यग्रे—

शते विषं तु पादोने हुतभुक् तत्र दृश्यते ।
आपस्त्रिभागहीने तु शतार्द्धे तु तुला स्मृता ॥
कोशपानं तदर्धे वा दशपञ्चकसप्तसु ।
तदर्धे तण्डुला देयास्तदर्धे तप्तमापकः ॥ इति ।

* शते, सुवर्णस्येति शेषः ।

वृद्धकात्यायनः,

ज्ञात्वा संख्यां सुवर्णस्य शतनाशे विषं स्मृतम् ।
अशीतेस्तु विनाशे तु दद्याच्चैव हुताशनम् ॥
षष्ट्या नाशे जलं देयं स्याच्चत्वारिंशतो धटम् ।

तथैव वाच्ये एवमुक्तिस्तु तस्यापि प्रसङ्गतोऽभिमतत्वसूचनाय। प्रकृतेनैवष्टमिद्वात्रधिकं स्पष्टार्थमिति सूचयितुमाह * नेति। हरेद्रिव्यस्यान्तर्भावितण्यर्थतया लक्ष्यार्थमाह * कारयेदिति। न्यूनतानिरासाय आह *मध्येति। अग्नेस्तु फालत्वेनैव ग्रहणसम्भवस्योक्तत्वादाह *जलमिति। तुलाग्न्याप इत्यत्र तुलाविषयोर्मध्ये स्थितत्वात्तस्यापि तत्त्वमित्यर्थः। नेत्यादेरनुषङ्गः। *यथोक्तमिति। पितामहेनैवेति भावः। *अत्र, नासहस्रादित्यत्र। तदेकवाक्यतापत्तेः। *अग्रहणमिति। न ग्रहणमित्यर्थः। *अल्पेऽपीति। तथाचैतेषां गुरुष्वेवेत्यादिनियमात्तस्य च साधारण्यादेलक्षण्येनाग्रहणमिति भावः।

२। तमेव नियमं फलितमाह * एतानि चत्वारीति। तुलाग्निजलविषाणीत्यर्थः। संज्ञायाः प्रागुक्तत्वादाह *पणेति। सहस्रादिति अभिव्याप्तौ आङो योगे पञ्चमी। तमभिव्याप्येत्यर्थः। तत्राग्रिमानिरासाय अर्वागिति शेषो व्याख्याने उक्तः। तथाच व्युत्क्रमः सूचितः। तदाह * सहस्रादूर्ध्वमेवेति। * नार्वागिति। तदूर्ध्वतो नार्वागित्यर्थः।

३। अत एव सहस्रेऽपि नेत्याशयेनाह * नन्विति। अर्वागपीति। ऊर्ध्वत एवार्वागपीत्यर्थः। आयसं फालम्। * तत्र, विरोधे सति। * यद्द्रव्येति। सुवर्णेत्यर्थः।

४। तथासति फलितं विशेषमाह *एतच्चेति। नासहस्रादिति मौलम्, सहस्रेत्विति पैतामहं चेत्यर्थः। *स्तेयेति। स्तेयसाहसोभयविषयमित्यर्थः। ननु कल्पतरुणा नासहस्रादिति वाक्यं पणसहस्रादूर्ध्वमेवापह्नवे फालादिक्रियेत्येवमपह्नवविषयतया व्याख्यातमिति तथैव कुतो नोक्तमिति चेन्न। उपस्थितपूर्वोक्तसङ्गतिसम्भवेऽनुपस्थितपरतया व्याख्यानस्यानौचित्यात्। त-

तथाच दिव्यप्रकरणेऽस्मत्कृतो ग्रन्थः शक्तिनिषिद्धविषयत्वे इत्यन्तेनोक्तः । *प्रसंगेन हारयेत्, शक्तिनिषिद्धिना कारयेत् । माता-पित्रित्यादिना पूर्वं पित्रादिहिंसनादिमहापापं न कृतमिति निश्चये कालान्तरे चापीत्यन्तरेऽपि शक्तिनिषिद्धोऽपि दिव्यमुक्तम् । शुद्धीवान्तेति पाठान्तरम् । प्रमत्तानां तु इत्यत्र प्रमदानां चेति पाठान्तरम् । नेच्छन्ति इत्यत्र नरत्नीति, तत्र शोध्यः स्वकर्मैर इत्यत्र स्वकर्मैरः इति न पाठान्तरम् । *स्वर्गः, ग्रामः ।

पृ० ७। नृपार्थेऽभिशस्तस्य नृपोऽर्थो निमित्तं येषां द्रोहाणां तेष्वित्यर्थः । तदाह * नृपद्रोहेष्विति । अभिशापे चेत्यस्य चास्त्येव तत्रेत्यर्थः । तदाह * सदेति । सदेति व्याचष्टे *द्रव्येति । सकृत्त्वादाह * एतानीति । शुचित्वं तत्र निमित्तमित्याह * उपवासादिनेति । आदिना स्नानादिपरिग्रहः ।

८। विशेषमाह * तथेति । सभा च राजगृहद्वारं च देवायतनं च चत्वरश्चेति समाहारद्वन्द्वः । व्यस्तपाठे तत्र द्वन्द्वद्वयम् । *कुलं, गृहम् । चत्वरश्चतुष्पथः । साकाङ्क्षत्वात्मकृतमाह *धट-इति । व्यवस्थाचेति चस्त्वर्थे । उक्तदेशानामिति भावः । इन्द्र-स्थानमिन्द्रप्रतिमा यत्र तत्रेत्यर्थ इति केचित् । इन्द्रध्वजयूपस्थानमिति कल्पतरुः । इन्द्रध्वजपूजास्थानमित्यन्ये । इन्द्रस्य परमेश्वरस्य स्थानं तत्रेति वयम् । अभिशस्तानामित्यस्यैव व्याख्या *महापातकिनामिति । चस्त्वर्थो तथापाठ एववा । दिव्यमित्यस्यानुषङ्गः । विषयसप्तमी च । देशव्यवस्थामुक्त्वा दिव्यव्यवस्थामाह *अस्पृश्येति । अस्पृश्याश्चाण्डालादयः । अधमाः शूद्रादयः । *न तु, न हि । * तत्प्रसिद्धानि, घटसर्पादीनि ।

नारदः, ( व्य० प० १।२५५ )

नार्तानां तोयशुद्धिः स्यान्न विषं पित्तरोगिणाम् ।

त्रिंशद्धानविनाशे वा कोशपानं बृहस्पतिः ॥
पञ्चार्द्धिकस्य वा नाशे तदर्धस्य च तण्डुलाः ।
*पञ्चार्द्धिकस्य, पञ्चार्धं सार्धद्वयम् इति ।

६। महत्त्वसम्पत्तये आह * ज्ञात्वेति । तत्पदस्यारस्यात् । नन्वत्र नाशपदोक्त्या कथमस्यापह्नवविषयत्वमित्यत आह * नाशेति । मिथोऽनयोर्विरोधं परिहरति * नासहस्रादिति । सामान्योक्त्या सामान्यपरिभाषासञ्चारात् ।

अन्योऽपि विशेषः कात्यायनेनोक्तः,
देशकालाविरोधे तु यथायुक्तं प्रकल्पयेत् ।
अन्येन हारयेद्दिव्यं विधिरेष विपर्यये ॥ इति ।

*हारयेत्, कारयेत् । *विपर्यये, दिव्यकारिणोऽभियुक्तस्यासामर्थ्ये ।

कालदिव्यविरोधे तु यथायुक्तं विरोधयेत् ।
अन्येन हारयेद्दिव्यं विधिरेष विवर्जयेत् ॥

इति तु कल्पतरौ पाठः । अतएव महापातक्यादीनामन्यद्वारा—

दिव्यमाह स एव,
मातापितृद्विजगुरुबालस्त्रीराजघातिनाम् ।
महापातकयुक्तानां नास्तिकानां विशेषतः ॥
लिङ्गिनां प्रसवानां तु मन्त्रयोगक्रियाविदाम् ।
वर्णसङ्करजातीनां पापाभ्यासप्रवर्तिनाम् ॥
एतेष्वेवाभियोगेषु निन्द्येष्वेव प्रयत्नतः ।
दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः ॥
एतैरेव नियुक्तानां साधूनां दिव्यमर्हति ।
नेच्छन्ति साधवो यत्र तत्र शोध्यः स्वकैर्नरः ॥ इति ।

स्वर्गः ॥ ९९ ॥

इति दिव्योपोद्घातः ।

मि० एवं सर्वदिव्योपयोगिनीं दिव्यमातृकामभिधायेदानीं धटादिदिव्यानां प्रयोगमाह ।

या० तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः ।
प्रतिमानसमीभूतो रेखां कृत्वाऽवतारितः ॥ १०० ॥
त्वं तुले सत्यधामाऽसि पुरा देवैर्विनिर्मिता ।
तत्सत्यं वद कल्याणि संशयान्मां विमोचय ॥ १०१ ॥
यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय ।
शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत ॥ १०२ ॥

मि० तुलाया धारणं तोलनं ये विदन्ति सुवर्णकारप्रभृतयः तैः प्रतिमानेन मृदादिना समीभूतः समीकृतस्तुलामाश्रितोऽधिरूढोऽभियुक्तोऽभियोक्ता वा दिव्यकारी रेखां कृत्वा येन सन्निवेशेन प्रतिमानसमीकरणदशायां शिक्यतलेऽवस्थितस्तस्मिन् पाण्डुलेखेनाङ्कयित्वाऽवतारितस्तुलामभिमन्त्रयेत प्रार्थयेत अनेन मन्त्रेण । हे तुले त्वं सत्यस्य स्थानमसि । पुरा आदिसृष्टौ देवैर्हिरण्यगर्भप्रभृतिभिर्विनिर्मितोत्पादिता । तत्तस्मात्सत्यं संदिग्धस्यार्थस्य स्वरूपं वद दर्शय । कल्याणि शोभने अस्मात्संशयान्मां विमोचय । हे मातः यद्यहं पापकृत् असत्यवाद्यस्मि ततो मां त्वमधो नय । अथ शुद्धः सत्यवाद्यस्मि ततो मामूर्ध्वं गमयेति । प्राड्विवाकस्य तुलाभिमन्त्रणमन्त्राः स्मृत्यन्तरोक्ताः ।

श्वित्र्यन्धकुनखादीनां नाग्निकर्म विधीयते ॥
न मज्जनीयाः स्त्रीबाला धर्मशास्त्रविचक्षणैः।
रोगिणो ये च वृद्धाः स्युः पुमांसो ये च दुर्बलाः ॥(३१३)
निरुत्साहान् व्याधिक्लिष्टान्नार्तांस्तोये निमज्जयेत्।
सद्यो म्रियन्ते मज्जन्तः स्वल्पप्राणा हि ते स्मृताः॥(३१४)
साहसेनागतानेतान्नैव तोये निमज्जयेत्।
नचापि हारयेदग्निं न विषेण विशोधयेत् ॥ (३१५)
विष्णुः,
न श्लेष्मिकव्याधितानां भीरूणां श्वासकासिनाम्।
न लोहशिल्पिनामग्निः सलिलं नाम्बुसेविनाम् ॥
मन्त्रयोगविदां चैव विषं दद्यात्तु न क्वचित्।
तण्डुलैर्न नियुञ्जीत व्रतिनं मुखरोगिणम् ॥
व्रती पयोव्रतादिमान्।
पितामहः,
मद्यपस्त्रीव्यसनिनां कितवानां तथैवच।
कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः ॥
नारदः, ( व्य० प० १।३३२ )
महापराधे निर्धर्मे कृतघ्ने क्लीवकुत्सिते।
नास्तिके दृष्टदोषे च कोशदानं विवर्जयेत् ॥
नारदबृहस्पतिकात्यायनाः,
यथोक्तविधिना देयं दिव्यं दिव्यविशारदैः।
अयथोक्तं प्रदत्तं चेत् न दत्तं साध्यसाधने ॥
अदेशकालदत्तानि बहिर्वादिकृतानि च।
व्यभिचारं सदाऽर्थेषु कुर्वन्तीह न संशयः ॥

वादिनमभियोक्ता बहिर्वादी। * मातृकेति। परिभाषे-

स्नातैः परीक्षकैर्भिन्नमन्त्रकलशमयो घटः ।
उदकं च प्रदातव्यं घटस्योपरि पण्डितैः ॥
यश्छिद्र स्रवते तोयं स भिन्नः स्मृतो घटः ।
नोत्पादयित्वा नवं पूर्वं पश्चात्तमवनाम्य तु ॥
घटं तु कारयेच्छिन्नं पताकाध्वजशोभितम् ।
ततः आवाहयेद्देवान् विधिनाऽनेन मन्त्रवित् ॥
वादित्रतूर्यघोषैश्च गन्धमाल्यानुलेपनैः ।
प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत् ॥
एह्येहि भगवन्धर्म अस्मिन् दिव्ये समाविश ।
सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः ॥
आवाह्य तु घटे धर्मं पश्चादङ्गानि विन्यसेत् ।
इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा ॥
वरुणं पश्चिमे भागे कुबेरं चोत्तरे तथा ।
अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् ॥
इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः ।
कुबेरस्तु सुवर्णाभो वह्निश्चापि सुवर्णभः ॥
तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते ।
ईशानस्तु भवेद्रक्त एवं ध्यायेत्क्रमादिमान् ॥
इन्द्रस्य दक्षिणे भागे वसूनाराधयेद्बुधः ।
धरो ध्रुवस्तथा सोम आपश्चैवानिलोऽनलः ॥
प्रत्यूषश्च प्रभातश्च वसवोऽष्टौ प्रकीर्तिताः ।
देवेशेशानयोर्मध्ये आदित्यानां तथाऽर्चनम् ॥
धाताऽर्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्रो विवस्वान्पूषा च पर्जन्यो दशमः स्मृतः ॥
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ।

अयं तु दिव्यकारिणः। जयपराजयलक्षणं तु मन्त्रलिङ्गादेवावगम्यत इति न पृथगुक्तम्। घटनिर्माणं पुनः आरोहणाद्यर्थसिद्धमेव पितामहनारदादिभिः स्पष्टीकृतम्।

तद्यथा,

छित्त्वा तु यज्ञियं वृक्षं यूपवन्मन्त्रपूर्वकम्।
प्रणम्य लोकपालेभ्यस्तुला कार्या मनीषिभिः॥
मन्त्रः सौम्यो वानस्पत्यश्छेदने जप्य एव च।
चतुरस्रा तुला कार्या दृढा ऋज्वी तथैव च॥
कटकानि च देयानि त्रिषु स्थानेषु चार्थवत्।
चतुर्हस्ता तुला कार्या पादौ चोपरि तत्समौ॥
अन्तरं तु तयोर्हस्तौ भवेदध्यर्धमेव वा।
हस्तद्वयं निखेयं तु पादयोरुभयोरपि॥
तोरणे च तथा कार्ये पार्श्वयोरुभयोरपि।
घटाद्दृच्चतरे स्यातां नित्यं दशभिरङ्गुलैः॥
अवलम्बौ च कर्तव्यौ तोरणाभ्यामधोमुखौ।
मृन्मयौ सूत्रसंबद्धौ घटमस्तकचुम्बिनौ॥
प्राङ्मुखो निश्चलः कार्यः शुचौ देशे घटस्तथा।
शिक्यद्वयं समासज्य पार्श्वयोरुभयोरपि॥
प्राङ्मुखान्कल्पयेद्दर्भान् शिक्ययोरुभयोरपि।
पश्चिमे तोलयेत्कर्तृनन्यस्मिन्मृत्तिकां शुभाम्॥
पिटकं पूरयेत्तस्मिन्निष्टकाग्रावपांसुभिः।

अत्र च मृत्तिकेष्टकाग्रावपांसूनां विकल्पः।

परीक्षका नियोक्तव्यास्तुलामानविशारदाः।
वणिजो हेमकाराश्च कांस्यकारास्तथैव च॥

दत्त्वा इन्द्रादीनां गन्धादीनि पूर्ववद्दद्यात् । गन्धपुष्पाणि च घटपूजायां रक्तानि कार्याणि ।

यथाह नारदः,

रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः ।
अर्चयेत्तु घटं पूर्वं ततः शिष्टांस्तु पूजयेत् ॥ इति ।

इन्द्रादीनां तु विशेषानभिधानाच्छ्यामं रक्तैरन्यैर्वा पूजनमिति पूजाक्रमः ।

एतच्च सर्वं प्राड्विवाकः कुर्यात् ।

यथोक्तम्,

प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः ।
श्रुतवृत्तोपसंपन्नः शान्तचित्तो विमत्सरः ॥
सत्यसन्धः शुचिर्दक्षः सर्वप्राणिहिते रतः ।
उपोषितः शुक्लवासाः कृतदन्तानुधावनः ॥
सर्वासां देवतानां च पूजां कुर्याद्यथाविधि ।

तथा,

ऋत्विग्भिश्चतुर्भिश्चतसृषु दिक्षु लौकिकाग्नौ होमः कार्यः ।

यथा,

चतुर्दिक्षु तथा होमः कर्तव्यो वेदपारगैः ।
आज्येन हविषा चैव समिद्भिर्होमसाधनैः ॥
सावित्र्या प्रणवेनाथ स्वाहान्तेनैव होमयेत् ।

प्रणवादिकां गायत्रीमुच्चार्य पुनः स्वाहाकारान्तं प्रणवमुच्चार्य समिदाज्यचरून्प्रत्येकमष्टोत्तरशतं जुहुयादित्यर्थः । एवं हवनान्तां देवपूजां विधायानन्तरमाभियुक्तमर्थं वक्ष्यमाणमन्त्रसहितं पत्रे लिखित्वा

इत्येते द्वादशादित्या नामभिः परिकीर्तिताः ॥
अग्नेः पश्चिमभागे तु रुद्राणामयनं विदुः।
वीरभद्रश्च शम्भुश्च गिरिशश्च महायशाः ॥
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः।
भुवनाधीश्वरश्चैव कपाली च विशांपतिः ॥
स्थाणुर्भवश्च भगवान् रुद्रास्त्वेकादश स्मृताः।
प्रेतेशरक्षोमध्ये तु मातृस्थानं प्रकल्पयेत् ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा।
वाराही चैव माहेन्द्री चामुण्डा गणसंयुता ॥
निर्ऋतेरुत्तरे भागे गणेशायतनं विदुः।
वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते ॥
गगनः स्पर्शनो वायुरनिलो मारुतस्तथा।
प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः ॥
धटस्योत्तरभागे तु दुर्गामावाहयेद् बुधः।
एतासां देवतानां तु स्वनाम्ना पूजनं विदुः ॥
धूपावसानं धर्माय दत्त्वा चार्घ्यादिकं क्रमात्।
अर्घ्यादि पश्चादङ्गानां धूपान्तमुपकल्पयेत् ॥
गन्धादिकां निवेद्यान्तां परिचर्यां प्रकल्पयेत्। इति।

अत्र च तुलां पताकाध्वजालङ्कृतां विधाय तस्याम् एह्येहीति मन्त्रेण धर्ममावाह्य धर्मायार्घ्यं कल्पयामि नम इत्यादिना प्रयोगेणार्घ्यपाद्याचमनीयमधुपर्काचमनीयस्नानवस्त्रयज्ञोपवीताचमनीयमुकुटकटकादिना धूपान्तं दत्त्वा इन्द्रादीनां दुर्गान्तानां प्रणवाद्यैः स्वनामभिश्चतुर्थ्यन्तैर्नमोऽन्तैरर्घ्यादिधूपान्तं पदार्थानुसमयेन दत्त्वा धर्माय गन्धपुष्पधूपदीपनैवेद्यानि

एवं तुले इत्यादिना पूर्वोक्तेन मन्त्रेण तुलामामन्त्रयेत्। अनन्तरं प्राड्विवाकः शिरोगतपत्रकं शोध्यं यथास्थानं यथापूर्वं निवेश्य च घटमारोपयति।

पुनरारोपयेच्चास्मिन् शिरोन्यस्तपत्रकम्।

इति स्मरणात्। आरोपितं च विनाडीपञ्चकं यावत्तथैवावस्थापयेत्। तत्कालपरीक्षां च ज्योतिःशास्त्राभिज्ञः कुर्यात्।

ज्योतिर्विद्ब्राह्मणश्रेष्ठः कुर्यात्कालपरीक्षणम्।
विनाड्यः पञ्च विज्ञेयाः परीक्षाकालकोविदैः॥

इति स्मरणात्। दशगुर्वक्षरोच्चारणकालः प्राणः। षट्प्राणा विनाडी।

उक्तं च,

दशगुर्वक्षरः प्राणः, षट् प्राणाः स्याद्विनाडिका, तासाम्।
षष्ट्या घटी, घटीनां षष्ट्याऽहः, स्यात्त्रिंशद्भिर्दिनैर्मासः॥

इति।

तस्मिंश्च काले शुद्ध्यशुद्धिपरीक्षणार्थं शुचयः पुरुषा राज्ञा नियोक्तव्याः। ते च शुद्ध्यशुद्धी कथयन्ति।

यथोक्तं पितामहेन,

साक्षिणां ब्राह्मणाः श्रेष्ठा यथादृष्टार्थवादिनः।
ज्ञानिनः शुचयोऽलुब्धा नियोक्तव्या नृपेण तु॥
शंसन्ति साक्षिणः श्रेष्ठाः शुद्ध्यशुद्धी नृपे तदा। इति।

शुद्ध्यशुद्धिनिर्णयकारणं चोक्तम्,

तुलितो यदि वर्द्धेत स शुद्धः स्यान्न संशयः।
समो वा हीयमानो वा न स शुद्धो भवेन्नरः॥

इति॥ ( ना० व्य० प० १।२८३ )

तत्पत्रं शोध्यशिरोगतं कुर्यात्।

यथाह,

यं चार्थमभियुक्तः स्याल्लिखित्वा तं तु पत्रके।
मन्त्रेणानेन सहितं तत्कार्यं तु शिरोगतम्॥

मन्त्रश्च,

आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मश्च जानाति नरस्य वृत्तम्॥ इति।

एतच्च धर्मावाहनादि शिरसिपत्रारोपणान्तमनुष्ठानकाण्डं सर्वदिव्यसाधारणम्।

यथोक्तम्,

इमं मन्त्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत्।
आवाहनं च देवानां तथैव परिकल्पयेत्॥ इति।

अनन्तरं प्राड्विवाको घटमामन्त्रयेत्।

घटमामन्त्रयेच्चैव विधिनाऽनेन शास्त्रवित्।

इति स्मरणात्। मन्त्राश्च दर्शिताः,

त्वं घट ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम्।
धकाराद्धर्ममूर्तिस्त्वं टकारात्कुटिलं नरम्॥
धृतो भावयसे यस्माद्धटस्तेनाभिधीयसे।
त्वं वेत्सि सर्वजन्तूनां पापानि सुकृतानि च॥
त्वमेव देव जानीषे न विदुर्यानि मानवाः।
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति॥
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि। इति।

शोध्यस्तु,

तत्रैव लोकपालादीन् सर्वान् दिक्षु निवेशयेत् ।
नियतस्तं पूजयेत्तान् गन्धमाल्यानुलेपनैः ॥
कपाटबीजसंयुक्तां परिचारकरक्षिताम् ।
स्तूपानीयामिसंयुक्तामग्न्यां कारयेन्नृपः ॥
इति स्मरणात् । बीजानि यवव्रीह्यादीनाम् ।
इति धर्मविधिः ॥ १०० ॥ १०१ ॥ १०२ ॥

व्या० १। सन्निपात्य *एतमिति । * पातुकां, तत्परिभाषाम्। *सर्वेषामिति । सर्वसाधारणमित्यर्थः । यद्वा ज्ञानविकल्पनम्। सर्वेषामित्यर्थः । अर्पणेत्यादिः । ईदृशोऽवतारितः साक्षिवाक्यात्तरम् इति अनेन मन्त्रेण तुलामभिमन्त्रयेदित्यन्वय इत्याह *तुलाया इत्यादिना । तृतीयान्तस्य व्यवहितेनान्वय इत्याह * तैः प्रतिमानेनेति । अन्तर्भावितण्यर्थत्वेनाह * सर्पोकृत इति । इद-मुक्तरीत्योपलक्षणमित्याह * अभियोक्ता चेति । तात्पर्यमाह *हिंस्येति। *रेखामिति । लेखामिति पाठान्तरम्। किञ्चिच्छिद्रवि-शेषमित्यर्थः । तमेवाह *येनेति ।पाण्डूनि । अपकल्मषेनेत्यर्थः । खडीति भाषाप्रसिद्धः। अभिमन्त्रयेदित्यस्य व्याख्या *प्रार्थयेते-ति। इतीत्यस्यार्थमाह *अनेनमन्त्रेणेति। त्वमित्यादिमामित्यन्तेने-त्यर्थः । तदर्थमाह *हे इत्यादि । धामार्थः *स्थानमिति । तदि-त्यस्य व्याख्या *तस्मादिति । सत्यमित्यस्यार्थः *सन्दिग्धेति। भाषणासंभवादाह * दर्शयेति । प्रकृतत्वादाह * अस्मादिति । अस्मीत्युक्तेरध्याहारेण तस्य तदर्थान्वयत्वेन वाऽऽह * अहमि-ति । प्राग्वदाह *असत्येति । एवमग्रेऽपि । निपातानामनेकार्थ-त्वात् चेदर्थमाह * अथेति । मामस्मीत्युक्तिस्वारस्यादस्याप्रवृ-त्तेराह * माडिति । धर्माधिकारिण इत्यर्थः । इदमनुपदमेव स्फुटीभविष्यति । न्यूनतां निराचष्टे * जयेति । तयोः स्वरूपे

यत्तु पितामहवचनम्,

अल्पदोषः समो ज्ञेयो बहुदोषस्तु हीयते । इति,

तत्र यद्यपि अभियुक्तस्यार्थस्याल्पत्वं बहुत्वं च न दिव्येनावधारयितुं शक्यते तथापि सकृदमतिपूर्वत्वेनाल्पत्वम् असकृन्मतिपूर्वत्वेन च महत्त्वमिति दण्डप्रायश्चित्ताल्पत्वमहत्त्वमवधार्यते । यदा चानुपलक्ष्यमाणदृष्टकारण एव कक्ष्यादीनां छेदो भङ्गो वा भवति तदाऽप्यशुद्धिरेव ।

कक्ष्यच्छेदे तुलाभङ्गे घटकर्कटयोस्तथा ।
रज्जुच्छेदेऽक्षभङ्गे च तथैवाशुद्धिमादिशेत् ॥

इति स्मरणात् । कक्ष्यं शिक्यतलम् । कर्कटौ तुलान्तयोः शिक्याधाराचीपट्टकावायसकीलकौ कर्कटशृङ्गसन्निभौ । अक्षः पादस्तभयोरुपरि निविष्टस्तुलाधारपट्टः । यदा तु दृश्यमानकारणक एषां भङ्गस्तदा पुनरारोपयेत् ।

शिक्यादिच्छेदभङ्गेषु पुनरारोपयेन्नरम् ।

इति स्मरणात् । ततश्च ऋत्विक्पुरोहिताचार्यान्दक्षिणाभिश्च तोषयेत् ।

एवं कारयिता राजा भुक्त्वा भोगान्मनोरमान् ।
महतीं कीर्तिमाप्नोति ब्रह्मभूयाय कल्पते ॥

यदा तूक्तलक्षणं घटं तथैव स्थापयितुमिच्छति तदा वायसाद्युपघातनिरासार्थं कपाटादिसहितां शालां कुर्यात् ।

विशालामुन्नतां शुभ्रां घटशालां तु कारयेत् ।
यत्रस्थो नोपहन्येत श्वभिश्चाण्डालवायसैः ॥

इत्यर्थः । जातावेकवचनम् । लिङ्गमूर्ध्वगमनादिकम् ।

२। एतदर्थमथाह *धटेत्यादिना। पुनस्त्वर्थे । आरोहणादीति आदिना अवतारणम् । नारदादीति आदिना व्यासादिपरिग्रहः। तत्रादौ पितामहमाह *छित्त्वात्वित्यादिना । *यज्ञियं, खादिरादिकम् ।* मन्त्रेति । ओषधे त्रायस्वैनमित्यादिमन्त्रपूर्वकम् इत्यर्थः । छेदनक्रियाविशेषणमिदम्। यूपवदित्यस्य तुला कार्येत्यत्रान्वयः । यूपवदित्यातिदेशासिद्धमन्त्रवदित्युक्तमेवानुवदति * मन्त्र इति । वानस्पत्यच्छेदने इति समस्तम् । तच्छेदनकाले सोमदेवताकः सोमो धेनुं सोमो अर्वन्तमित्यादिमन्त्रो जप्य एवेत्यर्थः । व्यस्तपाठे वानस्पत्यो मन्त्रो वनस्पते शतवलेशो वि रोहेति । अनयोर्जपमन्त्रत्वेनादृष्टार्थत्वात्समुच्चयः । चो भिन्नक्रमः । छेदने तुलाकाष्ठच्छेदने स स च जप्य एवेत्यर्थ इत्यन्ये । तुलास्वरूपमाह * चतुरस्रेति । * त्रिपु, पार्श्वद्वये मध्ये च । तत्फलमाह * अर्थवदिति । क्रियाविशेषणमेतत् । यथा तुलायाः सामर्थ्यं भवेत्तथा देयानीत्यर्थः। यत्नत इति पाठान्तरम्। तत्प्रमाणमाह *चतुर्हस्तेति । भूमेः *उपरि, ऊर्ध्वम् । *तत्समौ, तुलासमौ । चतुर्हस्तौ पादौ कार्यावित्यर्थः । पादौ कार्यौ तथाविधाविति पाठान्तरम् । तयोः पादयोरन्तरं व्यवधानं तु हस्तौ हस्तद्वयपरिमितं भवेदित्यर्थः । १वेरन्यत्रानियमान्नानुपपत्तिः। पक्षा-

१ ननु आरोप्यविशेष्यार्थकपदसमानवचनकत्वमाख्यातस्य,

“ गृह्णाति वाचकः संख्यां प्रकृतेर्विकृतेर्नहि”

इत्यनुशासनात् । अत एव एको वृक्षः पञ्च नौका भवति इत्यादौ एकवचनं सङ्गच्छते । ततश्च-

“प्रान्तरं तु तयोर्हस्तौ भवेदध्यर्द्धमेववा”

इत्यत्रैकवचनोपपत्तावपि, षष्ठो भागो दश माषा दश यवाश्च भवन्तीति त्वंविषेत्युत्तरश्लोकव्याख्याने बहुवचनं नोपपद्येत। यदि पुनः “स्वर्ण-

त्क्रमेणेति भावः ।

३। अस्यार्थमाह *अग्नेरिति। तुल्याव्यवहितत्वविशिष्टे इत्यर्थः। पूजाक्रम इत्यत्रान्वयः । कांस्यानुगमस्याभावादाह * पद्मेति । तद्दिन्येत्यर्थः । गन्धादौ विशेषमाह * गन्धेति । * त्रिष्टान, शेषभूतान्। अष्टाङ्गानीति यावत् । * अर्घ्यगन्धौ, गन्धपुष्पैः।

४। * यथोक्तामिति।नारदेनेति भावः। *ततः, तस्याः पूजाद्यलंकारविधानानन्तरम्।* श्रुतं, वेदशास्त्रं। *वृत्तम् आचरणम्। *सत्यसंधः, सत्यसंकल्पः। *शुद्धवासाः, आर्द्रवासा इति पाठान्तरम् ।

५। अन्यदप्याह * तथेति। * यथार्हेति। पितामह इति शेषः। *मलीनि। चतुर्दिक्षु इति पाठान्तरम्। तथेति समुच्चये। कथं कार्य इत्याकाङ्क्षायां तत्र द्रव्याण्याह * आज्येनेति। उभयत्र इतरनिरासाय सामान्यनपुंसकत्वेन समिद्विशेषणतयैव सार्थक्यं ध्वनयन्नाह * होमेति । एतत्त्रितयरूपहोमसाधनैरित्यर्थः फलितः। उत्तरार्द्धेऽन्वयोऽस्य । मन्त्रमाह * सावित्र्येति। अथशब्द आनन्तर्ये। एवेन तदभावव्यवच्छेदः। प्रणवेनेत्यस्य मध्यमणिन्यायेनान्वयः। आदियुक्तत्वं तृतीयार्थः। तदाह * प्रणवादीति।अथशब्दार्थः, * पुनरिति। पश्चादित्यर्थः। * स्वाहाकारेणेति। उच्चैस्तरां वा वषट्कार इत्यनेन सामान्यापेक्षज्ञापकेनाय साधुः। प्रसिद्धत्वाद्धविःशब्दार्थमाह * चरुनेति। चर्वाज्यसमिध इत्युचितम्।

६। अत्राज्यहविःसामिधां संप्रतिपन्नदेवताकत्वात् मिलितानामेव होमः सान्नाय्ययोरिवेति कश्चित्। तन्न। आज्ये स्रुवेणावद्यतीति स्रुवस्य, चरौ सकृदुपस्तृणाति मध्यात्पूर्वार्द्धाच्च द्विर्हविषोऽवद्यति अभिघारयति हविः अवत्तं चैषोऽवदानधर्म इत्याश्वलाय-

नाभ्यर्हितत्वात्पूर्वनिपातः। समुच्चये फलाभावात्तुल्यार्थत्वाच्चाह * अत्रचेति । मृत्तिकेत्येव सत्यमिति श्रुतेः उक्तक्रमादाह * मृत्तिकेष्टकेति।परीक्षाप्रकारमाह *परीक्षका इति। *पश्चादिति। तस्मादिति पाठान्तरम्। * पताकेति। पताकासहितध्वजशोभितामित्यर्थः। अल्पत्वमहत्त्वकृतोऽनयोर्भेदः। एवमग्रेऽपि। परित इति भावः। * मन्त्रवित्, धर्मविदिति पाठान्तरम्। तृतीयाद्व्यमुपलक्षणे। * अनुलेपनं, स्नानचूर्णम्। अनेन विधिनेत्युक्तविधिमेवाह * एह्येहीति। अनेन धर्मदेवतास्वरूपमपि कथितम्। * अस्मिन्, तुलाख्ये । वसवश्चादित्याश्च मरुतश्च गणाश्चेति द्वन्द्वः। *अङ्गानि, लोकपालादीनि। तत्प्रकारमेवाह *इन्द्रमित्यादिना। एतेषां ध्येयरूपाण्याह*इन्द्र इत्यादि।*भागे इति। पार्श्वे वसूनावाहयेदिति पाठान्तरम्।तेषां संख्यामाह * धर इति। देवेश इन्द्रः। * तथाऽर्चनम्। तथाऽयनमिति पाठान्तरम्। प्राग्वदाह *धातेति। वरुणांऽश इति पाठः। अन्योऽपपाठः। अजघन्येत्यादि क्रमादुभयविशेषणम्। गणपदार्थानाह * अग्नेरित्यादि। *अयनं, स्थानम्। तानाह * वीरेति। अत्र महायशा इति गिरिशविशेषणम्। विशांपतिरिति कपालिविशेषणम्। द्वौ विशौ वैश्यमनुजाविति कोशः। भगवानिति भवविशेषणम्। भग इति पाठान्तरम्। क्रमस्य विवक्षितत्वात्प्रेतेशस्य पूर्वनिपातः। मातृस्थानमिति समस्तपाठः। ता आह * ब्राह्मीत्यादि। गणसंयुतेति विशेषणं चामुण्डायाः। तथाच सप्त बोध्याः। गणेश एक एव। * मरुतां, वायूनाम्। तानाह * गगन इति। प्राणेशजीवावित्यार्षम्। चसमुच्चेयमाह * धटस्योत्तरेति। पूजाक्रममाह *भूषेति। अर्घप्रभृत्यलंकारान्तं क्रमेण धर्माय प्रधानदेवतायै दत्त्वा पश्चादिन्द्रादीनां तथैव कुर्यादित्यर्थः। निवेद्यो नैवेद्यः। सर्वथो-

ति * शक्तिरिति । * न हिनस्तीति । तथा नियमाभावात् । *मर- स्थापयति । इदं च शिरःस्थापितपत्रेणानुगतमिति भावः । एवं चैतत्परं तत्, न तत्परमिति न विरोध इति भावः । विशेषमाह * यद्यानीति । चत्वार्ये । अनुपलक्ष्यमाणमिति पाठ्यादि: । छेदादिनिमित्तम् । तदेवाह * कक्ष्येति । अक्षभङ्गादिना भेदा- नाह * कक्ष्यमिति । घटस्य कर्कटमिति समासः । अन्यथा दोषा- पत्तेरित्याह * कर्कटाविति । * तुलान्तयोः, शंखलौ ।

१२। तत्स्वरूपमाह * यद्यास्मिन्निति । तदेवाह * शिक्यादीनि । अतएव शिक्यमिति व्याख्यातं व्यक्त्यभिप्रायं बहुवचनम् । अन्यथाऽनयोर्मिथोविरोधः स्यादेवेति भावः ।

व्यासोऽपि,

कक्ष्यच्छेदे तुलाभङ्गे घटकर्कटयोस्तथा ।
रज्जुच्छेदेऽक्षभङ्गे च दद्यान्छुद्धि पुनर्नृपः ॥ इति ।

कात्यायनोऽपि,

शिक्यच्छेदे तुलाभङ्गे तथावापि गुणस्य वा ।
शुद्धेश्च संशये चैव परीक्षेत पुनर्नरम् ॥

अनेन कारणान्तरमप्युक्तम् । आवृत्तिस्तोलनमात्रस्य न साङ्गप्रयोगस्येति प्राच्याः । एवं तु वैगुण्यपापपरिहारात्साङ्गः प्रयोग आवर्तनीय इति मदनः । अत्राद्यमेव मूलसंमतम् । शेषं पितामहोक्तमेव पूरयितुं चूर्णिकामाह * ततश्चेति । दिव्यकारीत्यर्थः । उपसंहरति * एवमिति । * ब्रह्मभूयाय, ब्रह्मत्वाय ।

१३। * इच्छति, राजा । पितामहमाह * विशालामिति । विस्तृता- मित्यर्थः । * उच्छ्रिताम्, उन्नताम् । * यन्त्रस्थः, घटः । * तत्रैव, शालायामेव । * एतान्, लोकपालादीन् । कपाटवीजेति शाक- पार्थिवादिः । कपाटेत्यत्रार्शआद्यच्, ततः कर्मधारयो वा ।

नादिमन्त्रात् स्रुचः, सामित्सु असामर्थ्याद्धस्तस्यैव तत्त्वाङ्गिसा-
धनकत्वात्तन्त्रताऽनुपपत्तेः । साम्नाय्यहोमयोस्तु जुह्वा एव
साधनत्वात्तन्त्रता युक्ता । तदेतत् ध्वनयन्नाह * प्रत्येकमिति ।

७ । अन्यदाह * एवमिति । * शोध्येति । दिव्यकारिणः
शिरसि बध्नीयादित्यर्थः । * यथाहेति । पितामह इति शेषः ।
* यत्रार्थमिति । यदर्थकर्मकाभियोगाविपर्यीकृतो दिव्यकारी
स्यात् इत्यर्थः । पितामहोक्तमेव मन्त्रमाह * मन्त्रश्चेति । * आ-
दित्येति । अभ्यर्हितत्वात्पूर्वनिपातः ।

८। यथोक्तमिति । पितामहेनेति भावः । आदित्येत्यग्रिम-
मिदं पद्यम् । चेनाग्रिमसर्वसमुच्चयः ।

९ । पितामहमेवाह * धटमिति । * दर्शिताः, तेनैव ।
*धृतः, शुचौ देशेऽवस्थापितः । त्वं यस्मात् कुटिलं नरं भावयसे
प्रतिपादयसि तेनेत्याद्यन्वयः । तमेवाह * पुनरिति ।

१०। विशेषमाह *आरोपितं चेति । *तत्कालेति । विनाडीपञ्च-
केत्यर्थः। तमेवाह *ज्योतिरिति । ज्योतिःशास्त्रविदो ये ब्राह्मणास्तेषु
श्रेष्ठ इत्यर्थः । पदत्रयमित्यन्ये । * परीक्षाकालेति । कालस्य
परीक्षा परीक्षाकालः । राजदन्तादिः । तत्र कोविदैरित्यर्थः । प-
रीक्ष्याः कालेति पाठान्तरम् । तैः परीक्ष्याः सत्या एव विज्ञेया ना
न्यथेत्यर्थस्तत्र । * दशेति । तथाचात्र विनाडीशब्देन पलमुच्यते ।
*अह्नः खाग्निभिर्दिनैरिति । अहोरात्रैस्त्रिंशता दिनैरिति पाठा-
न्तरम् । *तस्मिन्निति । पलपञ्चकरूपे इत्यर्थः । अलुब्धा इति
पाठान्तरम् ।

११ । *चोक्तमिति । नारदेनेति शेषः । * स शुद्ध इति ।
विशुद्ध इति पाठान्तरम् । अत्र वृद्धिरूर्ध्वं गतिः । हानिरधो-
गतिः । अतो न पूर्वविरोधः । अतएवान्याविरोधं परिहर-

तांश्च हस्तस्थानक्षतांश्चाश्वत्थपत्राणामुपरि विन्यसेत्।

ततः पिप्पलपत्राणि शमीपत्राण्यथाक्षतान्।
दूर्वाग्राः सप्त पत्राणि हस्तयोश्चाक्षतान्न्यसेत्॥
इति स्मरणात्। (ना.स्म.प. १।२८७)
तथा कुसुमानि च विन्यसेत्।
सप्त पिप्पलपत्राणि अक्षतान्सुमनोदधि।
हस्तयोर्निक्षिपेत्तत्र सूत्रेणावेष्टनं तथा॥
इति पितामहवचनात्। सुमनसः पुष्पाणि।
यदपि स्मरणम्,
अर्चयन्तं तु पाणिभ्यामर्कपत्रैस्तु सप्तभिः।
अन्तर्हितं हरन् शुद्धस्त्वदग्धः सप्तमे पदे॥ इति,

तदप्यश्वत्थपत्राभावे अर्कपत्रविषयं वेदितव्यम्। अश्वत्थपत्राणां पितामहप्रशंसावचनेन मुख्यत्वावगमात्।

पिप्पलाज्जायते वह्निः पिप्पलो वृक्षराट् स्मृतः।
अतस्तस्य तु पत्राणि हस्तयोर्विन्यसेद्बुधः॥ इति॥१०३॥

या० १। सङ्गतिमाह *इदानीं क्रमेति। उद्देशक्रमेत्यर्थः। अत्र प्रागुक्तं सर्वं सामान्यमपेक्षितमित्याह *दिव्येति। पत्रारोपणान्ते च विधौ सतीति पाठः। विधिः प्रकारः। पत्रारोपणान्तविध्यन्ते सति अयमिति पाठान्तरम्। लक्षयित्वेत्यस्य व्याख्या *तिलकालकेति। लक्ष दर्शनाङ्कनयोरिति धात्वर्थानुसारादाह *अङ्केति। अङ्कयित्वेति तत्र पाठान्तरम्। हंसपदानीति पाठः। तदाकाराणि चिह्नानीत्यर्थः। तत इत्यस्य व्याख्या * अनन्तरमिति। पूर्वं द्विवचनस्यैव सत्त्वादाह * हस्तयोरिति। तत्र विशेषमाह * अञ्जलीति। नारदमेवाह * पत्रैरिति। तावदिति क्रिया-

परमतान्यर्गमाह * अशून्यामिति । * व्रीह्यादीनाम् । व्रीह्यादीनीति पाठान्तरम् ॥ १०० ॥ १०१ ॥ १०२ ॥

इति धटविधिः ।

मि० इदानीं क्रमप्राप्तमग्निदिव्यमाह ।

या० करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत् ।
सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत् ॥ १०३ ॥

मि० दिव्यमातृकोक्तसाधारणधर्मेषु सत्सु तुलाविधानोक्तधर्मावाहनादिशिरःपत्रारोपणान्ते च विधौ सति अयमग्निविधौ विशेषः । विमृदितव्रीहेः-विमृदिता विघर्षिता व्रीहयः कराभ्यां येनासौ विमृदितव्रीहिस्तस्य करौ लक्षयित्वा तिलकालकव्रणकिणादिस्थानेष्वलक्तकरसादिनाऽङ्कयित्वा ।

यथाह नारदः, ( ना.व्य.प. १ । ३०१ )

हस्तक्षतेषु सर्वेषु कुर्याद्धंसपदानि तु । इति ।

अनन्तरं सप्ताश्वत्थस्य पर्णानि हस्तयोरञ्जलीकृतयोर्न्यसेत् ।

पत्रैरञ्जलिमापूर्य आश्वत्थैः सप्तभिः समैः ।

इति स्मरणात् ।

तानि च हस्तसहितानि सूत्रेण तावद्वेष्टयेत् यावन्त्यश्वत्थपत्राणि, सप्तकृत्वो वेष्टयेदित्यर्थः । सूत्राणि च सप्त शुक्लानि भवन्ति ।

वेष्टयीत सितैर्हस्तौ सप्तभिः सूत्रतन्तुभिः ।

इति नारदवचनात् ।

तथा सप्त शमीपत्राणि सप्तैव दूर्वापर्णानि अक्ष-

पापेभ्य इति ल्यब्लोपे पञ्चमी । पुण्यपापान्यवेक्ष्य सत्यं ब्रूहि इतीतरान्वयः । अयःपिण्डे त्रिभिस्तापैः संतप्ते सन्दंशेन पुरत आनीते कर्ता पश्चिममण्डले प्राङ्मुखस्तिष्ठन् अनेन मन्त्रेण अग्निम् अभिमन्त्रयेत् ।

यथाह नारदः, ( व्य० प० १ । २८९ )

अग्निवर्णमयःपिण्डं सकृत्सिक्तं सुरक्षितम् ।
तापे तृतीये संताप्य दद्यात्सत्यपुरस्कृतम् ॥ इति ।

अस्यार्थः । लोहशुद्ध्यर्थं सुतप्तं लोहपिण्डमुदके निक्षिप्य पुनः संताप्योदके निक्षिप्य तृतीये तापे संताप्य सन्दंशेन गृहीत्वा पुरत आनीते सत्यपुरस्कृतं सत्यशब्दयुक्तं त्वमग्ने सर्वभूतानामित्यादिमन्त्रं कर्ता ब्रूयादिति ।

प्राड्विवाकस्तु मण्डलभूभागाद्दक्षिणप्रदेशे लौकिकमग्निमुपसमाधाय अग्नये पावकाय स्वाहेति आज्येनाष्टोत्तरशतवारं जुहुयात् ।

शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतम् ।

इति स्मरणात् ।

हुत्वा च तस्मिन्नग्नावयःपिण्डं प्रक्षिप्य तस्मिंस्ताप्यमाने धर्मावाहनादिहवनान्तं पूर्वोक्तविधिं विधाय तृतीये तापे वर्तमाने अयःपिण्डस्थमाग्निमेभिर्मन्त्रैरभिमन्त्रयेत् ।

त्वमग्ने वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे ।
त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम् ॥
जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम् ।
पापं पुनासि वै यस्मात्तस्मात्पावक उच्यसे ॥

विशेषणमित्याह * तावदिति। तात्पर्यार्थमाह * सप्तकृत्वइति। तावतां सूत्राणां समाहारः तावत्सूत्रं, पात्रादिः। तेन तावत्सूत्र्या सकृद्वेष्टयेदित्यर्थ इति मदनः। वेष्टनसंख्यामुक्त्वा तत्रैव च स्पष्टार्थं सूत्रस्य संख्यां वर्णं चाह * सूत्राणि चेति। वेष्टननिष्ठसंख्यारोपेण सप्त सूत्राणि चेत्यर्थः।

२। विशेषमाह * तथेति। नारदमेवाह * सप्तेति। अथशब्दः समुच्चये। सप्तेत्यस्योभयत्रान्वयः। अक्षतानां स्पष्टं द्वैविध्यमुक्तमनेन। अत एव * दधि, दध्यक्षतान्। तथाच पूर्वैकवाक्यता। आवेष्टितमित्यत्र भावे क्तः। आवेष्टनमिति पाठान्तरम्। सुमनइति जातावेकवचनमित्याह * पुष्पाणीति।

३। पितामहविरोधं मूलस्य निराचष्टे * यदपीति। अतुल्यार्थत्वेन विकल्पो नेति सूचयन्नाह * अश्वत्थेति। *पितामहप्रशंसेति। पितामहकर्तृकतत्प्रशंसावचनेनेत्यर्थः। तदेवाह * पिप्पलादिति ॥ १०३ ॥

मि० कर्तुरग्न्यभिमन्त्रणमाह।

या० त्वमग्ने सर्वभूतानामन्तश्चरसि पावक।

साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम ॥ १०४ ॥

मि० हेअग्ने त्वं सर्वभूतानां जरायुजाण्डजस्वेदजोद्भिज्जानाम् अन्तः शरीराभ्यन्तरे चरसि उपयुक्तान्नपानादीनां पाचकत्वेन वर्त्तसे। हेपावक शुद्धिहेतो कवे क्रान्तदर्शिन् साक्षिवत्पुण्यपापेभ्यः सत्यं ब्रूहि। पुण्य-

---

१ अक्षतानां स्पष्टं द्वैविध्यस्यात्र प्रतिपादितत्वादेव उत्तरत्र पितामहवचने दधिपदं दधिसंसृष्टाक्षतार्थपरम्। अतएव पितामहवचनस्य पूर्वोक्तेन नारदवचनेनैकवाक्यता इत्यर्थः।

ग्रन्थानामित्याह * कृत्वेति । ० शिरसीति । पूर्वोक्तपत्रं कृत्वे-त्यर्थः । सतिनमस्तु भवतु । अतः पितृव्यादिति विशेषणेन कुल्यादि-निरासः । साक्षिवाक्‌ प्रस्ताव कर्ता, सत्यानृतात्‌ तारयेत्याह * त्वमेव वेत्था इत्यादि । ० तत्पूर्तं ग्रथोनि । तदपि होमेन देवतोपासनादि तृतीयेति भावः । पादेषु पृष्ठेषु तथापि सर्वेषु । ० स्नाशुचिवत्‌ . अन्यत्रा-पिवत्‌ । * देवेति । तार्ता विशेषः । तत्स्थाने तत्पाठो वा ॥१०४॥

मि० अपि च ।

या० तस्येत्युक्तवतो लोहं पञ्चाशत्पलिकं समम् ।
अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि ॥ १०५ ॥

मि० तस्य कर्तुः इत्युक्तवतः त्वमग्ने सर्वभूतानामि-त्याद्यभिमन्त्रणं कृतवतो लोहं लोहविकारं पिण्डं पञ्चा-शत्पलिकं पञ्चाशत्पलसम्मितम् । समम् आस्त्ररहितम्, सर्वतश्च समं वृत्तं श्लक्ष्णं च । तथाऽष्टाङ्गुलायामम् ।

अस्त्रिहीनं समं कृत्वा अष्टाङ्गुलमयोमयम् ।
पिण्डं तु तापयेदग्नौ पञ्चाशत्पलिकं समम् ॥

इति पितामहस्मरणात् । अग्निवर्णमग्निसदृशम् । उभयोर्हस्तयोरश्वत्थपत्रदधिदूर्वान्तरितयोर्न्यसेत् निक्षिपेत्प्राड्विवाकः ॥ १०५ ॥

चा० १। मूलकृदन्यदप्याहेत्याह * अपि चेति । सममित्यस्य व्याख्या * आस्त्ररहितमिति । कोणरहितमित्यर्थः । अर्थान्तरमाह * सर्वतश्च सममिति । तदर्थद्वयमाह * वृत्तं श्लक्ष्णं चेति ।

२। विशेष माह * तथेति । पैतामहे सममित्यस्य द्विरुक्तिः अस्त्रि-हीनमित्यस्य चोक्तिरिति प्रागुक्तार्थलाभः । अत्राग्निहीनमिति

१ तस्मिंस्ताप्यमाने इत्यत्र तृतीये तापे वर्तमाने इत्यत्रचेत्यर्थः ।

पापेषु दर्शयात्मानमर्चिष्मान् भव पावक।
अथवा शुद्धभावेषु शीतो भव हुताशन॥
त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत्।
त्वमेव देव जानीषे न विदुर्यानि मानवाः॥
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि॥इति॥९०४॥

या० १। *कर्त्तुरिति। माङ्गिवाक्यस्य तु अग्रे वक्तव्यमिति भावः। ममेत्युक्तिरत्र वीजम्। सर्वपदोक्तेराह *जरायुजेत्यादि। चरसीत्यस्य लक्ष्यार्थमाह *उपयुक्तेति। भुक्तादीत्यर्थः। साभिप्रायं विशेषणद्वयमित्याह * पावकेत्यादि। * साक्षिवत्, साक्षिणो यथा कथयन्ति। अनेनास्याग्रे एवान्वयो न पूर्वत्रापीति सूचितम्। यथाश्रुते पञ्चम्यनुपपत्तेराह * पुण्येति। साक्ष्यनुरोधेन तथोक्तावपि प्रकृते तदर्थासम्भवादाह * दर्शयेत्यर्थ इति। ममेतितु शेषत्वविवक्षायां षष्ठी।

२। विशेषमाह * अयःपिण्डे इति। * तापैः, क्रियारूपैः। *अनेन, प्रागुक्तेन। तापत्रयफलमाह *लोहेति। तृतीये इति करणस्याधिकरणत्वविवक्षया सप्तमी। सत्यपुरस्कृतत्वमाविवक्षितमित्याह * सत्यशब्दयुक्तामिति। मन्त्रो विशेष्य इत्याह *त्वमिति। अत्र सुराञ्जितत्वम् अतिशयिततापकृतमेव। अतएव तस्य सस्फुलिङ्गत्वम्। सुरक्षितमिति पाठान्तरम्।

जात्यैव लोहकारो यः कुशलश्चाग्निकर्मणि।
दृष्टप्रयोगश्चान्यत्र तेनायोऽग्नौ प्रतापयेत्॥

इति अग्निवर्णामित्यतः पूर्वपद्यम्।

३। विशेषान्तरमाह *प्राडिति। मण्डलेति। यावति भूप्रदेशे मण्डलानि तत इत्यर्थः। नारदमेवाह *शान्त्यर्थमिति। तापत्रयमध्य-

चत्वारिंशत्समधिकं भूमेरङ्गुलमानतः । इति ।

अयमर्थः। अवस्थानमण्डलात्षोडशाङ्गुलात् मण्डलान्तरमन्यन्मण्डलम् द्वितीयाद्येकैकं द्वात्रिंशदङ्गुलं सान्तरालम्। तदेवमवस्थानमण्डलं षोडशाङ्गुलम्, गन्तव्यानि च सप्त मण्डलानि सान्तरालानि द्वात्रिंशदङ्गुलानि। एवमष्टाभिर्मण्डलैश्चत्वारिंशदधिकं शतद्वयं भूमेः अङ्गुलमानतोऽङ्गुलमानामिति। सार्वविभक्तिकस्तसिः। अस्मिंस्तु पक्षेऽवस्थानमण्डलं षोडशाङ्गुलं विहाय द्वात्रिंशदङ्गुलप्रमाणानां सप्तानां सान्तरालमण्डलभूभागानामेकैकं भूभागं द्विधा विभज्यान्तरालभूभागान् षोडशाङ्गुलप्रमाणान् विहाय मण्डलभूभागेषु षोडशाङ्गुलप्रमाणेषु गन्तृपदप्रमाणानि सप्त मण्डलानि कार्याणि।

यथा तेनैवोक्तम्,

मण्डलस्य प्रमाणं तु कुर्यात्तत्पदसंमितम् । इति ।

यत्तु पितामहेनोक्तम्,

कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमं तथा ।
आग्नेयं मण्डलं चाद्यं द्वितीयं वारुणं स्मृतम् ॥
तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम् ।
पञ्चमं त्विन्द्रदैवत्यं षष्ठं कौबेरमुच्यते ॥
सप्तमं सोमदैवत्यं सावित्रं त्वष्टमं तथा ।
नवमं सर्वदैवत्यमिति दिव्यविदो विदुः ॥
द्वात्रिंशदङ्गुलं प्राहुर्मण्डलान्मण्डलान्तरम् ।
अष्टाभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् ॥
षट्पञ्चाशत्समधिकं भूमेस्तु परिकल्पना ।

पाटं धृत्वाऽग्निकोपरहितामिति व्याख्यातवान्कल्पतरुः। अग्निवर्णत्वस्य प्रकारान्तरेणापि संभवादाह * अग्निसदृशमिति। दाहकतया नचुल्यमित्यर्थः। न्यासस्यासंभवादाह * निक्षिपेदिति। प्राड्विवाक एवात्र कर्त्तेत्याह * प्राडिति॥ १०५॥

मि॰ ततः किं कुर्यादित्यत आह।

या॰ स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत्।

मि॰ स पुरुषस्तं तप्तं लोहपिण्डम् अञ्जलिना गृहीत्वा सप्त मण्डलानि शनैर्व्रजेत्। एवकारेण मण्डलेष्वेव पदन्यासं मण्डलानतिक्रमणं च दर्शयति।

यथाह पितामहः,

न मण्डलमतिक्रामेन्नाप्यर्वाक् स्थापयेत्पदम्। इति।

मि॰ सप्तैव मण्डलानि शनैर्व्रजेदित्युक्तं, तत्रैकैकं मण्डलं किंप्रमाणं मण्डलयोरन्तरं च कियत्प्रमाणकमित्यत आह।

या॰ षोडशाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरम्॥१०६॥

मि॰ षोडश अङ्गुलानि यस्य तत् षोडशाङ्गुलकम्। षोडशाङ्गुलप्रमाणं मण्डलं बोद्धव्यम्। मण्डलयोरन्तरं मध्यं च तावदेव षोडशाङ्गुलकमेव। सप्त मण्डलानि व्रजेदिति वदता प्रथममवस्थानमण्डलमेकमुक्तम्। अतश्चाष्ट मण्डलानि षोडशाङ्गुलानि, मण्डलान्तराणि तु सप्त तावत्प्रमाणानि। एतदेव—

नारदेन परिसंख्यायोक्तम्,

द्वात्रिंशदङ्गुलं प्राहुर्मण्डलात् मण्डलान्तरम्।
अष्टाभिर्मण्डलैरेवमङ्गुलानां शतद्वयम्॥

कर्तुः पदसमं कार्यं मण्डलं तु प्रमाणतः ॥
मण्डले मण्डले देयाः कुशाः शास्त्रप्रचोदिताः ।
इति, तत्र नवमं सर्वदैवत्यमपरिमिताङ्गुलप्रमाणं मण्डलं विहायाष्टाभिर्मण्डलैरष्टाभिश्चान्तरालैः प्रत्येकं षोडशाङ्गुलप्रमाणैरङ्गुलानां षट्पञ्चाशदधिकं शतद्वयं सम्पद्यते । तत्रापि गन्तव्यानि सप्तैव मण्डलानि । यतः प्रथमे तिष्ठति नवमे क्षिपतीति न विरुध्यते ।

अङ्गुलप्रमाणं च—
तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलः ॥
हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम् ।
तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम् ॥
इति बोद्धव्यम् ॥ १०६ ॥

घा० १। * तत इति । तत्र तान्निक्षेपानन्तरमित्यर्थः । कर्त्तेति शेषः । एवाधिक्यं परिहरति * एवकारेणेति ।

उ० २। संगतिमाह * सप्तैवेति । * किंप्रमाणं, कियत्प्रमाणम् । तस्योभयप्रतियोगिकत्वादाह * मण्डलयोरिति । प्रमाणार्थकाङ्गुलशब्दोऽदन्तो नित्यक्लीबः । सर्वामिति न्यायेनाह * तावदेवेति ।

३। न्यूनतां विरोधं च परिहरति * सप्तेति । * उक्तम्, उक्तप्रायम् । फलितमाह * अतश्चेति । * मण्डलान्तराणीति । मण्डलानामन्तराणीत्यर्थः । तुरुक्तवैलक्षण्ये । तदेवाह * सप्तेति । तेषामेव सप्तत्वादिति भावः । * परिसंख्यायेति । उभयसंख्यामेकीकृत्येत्यर्थः । मण्डलान्तरम्, अन्यत् मण्डलम् । उक्तरीत्या मण्डलस्य द्वात्रिंशदङ्गुलत्वस्य बाधितत्वादाह * अयमर्थ इति । उक्तहेतोरेवाह * सान्तरालमिति । पर्यवसितमाह * तदेवामि-

भाग शान्तिहोमं निर्वर्त्य उपोषितस्य स्नातस्यार्द्रवाससः पश्चिमे मण्डले तिष्ठतो व्रीहिमर्दनादिकं करसंस्कारं विधाय प्रतिज्ञापत्रं समन्त्रकं कर्तुः शिरसि बद्ध्वा प्राड्विवाकस्तूर्नामे तापेऽग्निमभिमन्त्र्य तप्तमयःपिण्डं सन्दंशेन गृहीत्वा कर्त्रभिमन्त्रितं तस्याञ्जलौ निदध्यात्। सोऽपि मण्डलानि सप्त गत्वा नवमे मण्डले प्रक्षिप्यादग्धः शुद्धो भवतीति। इत्यग्निविधिः॥ १०७॥

व्या० १। *सप्तेति। नीत्यादिः। सप्त मण्डलानीति भिन्नं पदे। मुख्यस्य तस्याभावादाह * अग्निं तप्तमयःपिण्डमिति। तात्पर्यार्थमाह * व्रीहीनिति। शाब्दस्तु प्रागुक्त एव। प्रकृतत्वादाह * अदग्धहस्तश्चेदिति। विनापि प्रत्ययमिति मूले तस्य साधुत्वम्।

२। विशेषमाह * यस्त्विति। * प्रस्खलन्निति। अभितस्तः संत्रासात् प्रस्खलन् सन् यदि हस्ताभ्यामन्यत्रेत्याद्यन्वयः। मूले हस्तादिति जातावेकवचनम्। तस्येति शेषत्वविवक्षया षष्ठी। अयःपिण्डमिति शेषः। राजेति भावः।

उ० ३। मूलोक्तमन्यदप्याह *किं चेति। *गच्छत इति। हस्ताभ्यामिति शेषः। नायमपूर्वो विधिरित्याह * अर्थप्राप्तमिति। स्पष्टार्थमाह * तत्र चेति। अग्निविधिविषये इत्यर्थः। अधिदेवताः अग्न्यादयः। * विधाय, कारयित्वा। * गृहीत्वेति। तत्पुरतः समानीतमिति शेषः। * सोपि, कर्त्ताऽपि। एवं प्रागपि॥ १०७॥ इत्यग्निविधिः॥

मि० संप्रत्युदकविधिमाह।

या० सत्येन माऽभिरक्ष त्वं वरुणेत्याभिशाप्य कम्।

एवंच चत्वारिंशदिति नारदीयम् अष्टमनवममण्डलान्तरालं भूभागं विहाय बोध्यम् । तस्य गमनानर्हत्वात् । एवं—

चतुर्विंशतिराख्याता भूमेस्तुपरिकल्पना ।

इति कल्पतरूक्तपाठेऽपि आद्यप्रवस्थानमण्डलं विहायाङ्गुलपरिमाणं योज्यम् । * अङ्गुलप्रमाणं चेति । बोद्धव्यमित्यत्रान्वयः ॥ १०६ ॥

मि० सप्त मण्डलानि गत्वा किं कर्तव्यमित्यत आह ।

या० मुक्त्वाऽग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात् ।

मि० अष्टमे मण्डले स्थित्वा नवमे मण्डले अग्निं तप्तमयःपिण्डं त्यक्त्वा कराभ्यां व्रीहीन्मर्दयित्वा अदग्धहस्तश्चेच्छुद्धिमाप्नुयात् । दग्धहस्तश्चेदशुद्ध इत्यर्थसिद्धम् । यस्तु सन्त्रासात्प्रस्खलन् हस्ताभ्यामन्यत्र दह्यते तथाप्यशुद्धो न भवति ।

यथाह कात्यायनः,

प्रस्खलन्नाभिशस्तश्चेत्स्थानादन्यत्र दह्यते ।

अदग्धं तं विदुर्देवास्तस्य भूयोऽपि दापयेत् ॥ इति ।

मि० किंच

या० अन्तरा पतिते पिण्डे संदेहे वा पुनर्हरेत् ॥ १०७ ॥

मि० यदा गच्छतोऽन्तराऽष्टममण्डलादर्वागेव पिण्डः पतति दग्धादग्धत्वे वा संशयस्तदा पुनर्हरेदित्यर्थप्राप्तमुक्तम् । तत्र चायमनुष्ठानक्रमः । पूर्वेद्युर्भूतशुद्धिं विधाय परेद्युर्मण्डलानि यथाशास्त्रं निर्माय मण्डलाधिदेवताश्च मन्त्रैस्तत्र तत्र संपूज्याग्निमुपसमा-

तृणशैवालरहिते जलौकामत्स्यवर्जिते ॥
देवखातेषु यत्तोयं तस्मिन् कुर्याद्विशोधनम् ।
आहार्यं वर्जयेन्नित्यं शीघ्रगासु नदीषु च ॥
आविलनक्रमीने नित्यमूर्मिपङ्कविवर्जिते । इति ।

आहार्यं तडागादिभ्य आहृतं ताम्रकटाहादिस्थं जलम् । नाभिप्रमाणोदकस्थस्य याज्ञिकवृक्षोद्भवां धर्मस्थूणामवष्टभ्य प्राङ्मुखस्तिष्ठेत् ।

उदके प्राङ्मुखस्तिष्ठेद्धर्मस्थूणां प्रगृह्य च ।
इति स्मरणात् ॥ १०८ ॥

बा० १। सङ्क्षिपाह * संमतीति। पाशिग्रहस्य मंत्र्यादेश इत्याह *पाशिनि । अत एव कर्तृकरणं मन्त्रः । इतीत्यस्य व्याख्या *अनेन मन्त्रेणेति, कमित्यस्य च *उदकमिति। धातूनामनेकार्थत्वादाह * अभिमन्त्र्येति । * पुरुषस्येति । यस्यकस्यचित् बलीयस इत्यर्थः । अतएव— ( व्य० प० १।३०८ उ० )

ब्राह्मणः क्षत्रियो वैश्यो रागद्वेषविवर्जितः ।
नाभिमात्रे जले स्थाप्यः पुरुषः स्थाणुवत् बली ।।इति नारदः।

तद्ग्रहणोत्तरं प्रवेशस्यासंभवादाह * निमज्जेदिति ।

२। क्रममाह प्राग्वत् *एतच्चेति। कार्यमिति शेषः। एवमग्रेऽपि। *प्रकुर्वीतेति । दद्यादित्यर्थः।अतएव वरुणायेति चतुर्थी। उक्तहेतोरेवोक्तम् * आदाविति।समाहित इति । प्राड्विवाक इत्यर्थः । प्राग्वदेवाह * तथेति । अत एव—

स्थापयेत्प्रथमं तोये स्तम्भवत् पुरुषं नृपः ।
आगतं प्राङ्मुखं कृत्वा तोयमध्ये तु कारिणम् ॥
ततस्त्वावाहयेद्देवान् सलिलं चानुमन्त्रयेत्। इति पितामहः।
देवान् धर्मादीन् । धर्मावाहनादिशिरःपत्रारोपणान्तं कुर्या-

नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत् ॥१०८॥

मि० हे वरुण सत्येन मामभिरक्ष त्वम् इति अनेन मन्त्रेण कमुदकमभिशाप्याभिमन्त्र्य नाभिदघ्नोदकस्थस्य नाभिप्रमाणोदकास्थितस्य पुरुषस्योरू गृहीत्वा शोध्यो जलं प्रविशेत् जले निमज्जेत् । एतच्च वरुणपूजायां सत्याम् ।

गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः ।
वरुणाय प्रकुर्वीत पूजामादौ समाहितः ॥

इति नारदस्मरणात् ।

तथा साधारणधर्मेषु धर्मावाहनादिसकलदेवतापूजाहोमसमन्त्रकप्रतिज्ञापत्रशिरोनिवेशनान्तेषु सत्सु च ।

तथा,

तोय त्वं प्राणिनां प्राणः सृष्टेराद्यं तु निर्मितम् ।
शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा ॥
अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे ।

इति प्राड्विवाकेनोदकाभिमन्त्रणे कृते शोध्यः सत्येन माभिरक्ष त्वं वरुणेत्युदकं प्रार्थयते । उदकस्थानानि च—

नारदेनोक्तानि, (व्य० प० १।३०५)

नदीषु तनुवेगासु सागरेषु वहेषु च ।
ह्रदेषु देवखातेषु तडागेषु सरःसु च ॥ इति ।

तथा पितामहेनापि,

स्थिरतोये निमज्जेत्तु न ग्राहिणि न चाल्पके ।

शरग्राही च तस्मिन्क्षणे द्रुततरं तोरणमूलं प्राप्या-न्तर्जलगतं यदि न पश्यति तदा शुद्धो भवतीति। एतदेव स्पष्टीकृतम्—

पितामहेन,

गन्तुश्चापि च कर्तुश्च समं गमनमज्जनम्।
गच्छेत्तोरणमूलात्तु लक्ष्यस्थानं जवी नरः॥
तस्मिन्गते द्वितीयोऽपि वेगादादाय सायकम्।
गच्छेत्तोरणमूलं तु यतः स पुरुषो गतः॥
आगतस्तु शरग्राही न पश्यति यदा जले।
अन्तर्जलगतं सम्यक्तदा शुद्धिं विनिर्दिशेत्॥ इति।

जविनोश्च पुरुषयोर्निर्धारणं कृतम्—

नारदेन,

पञ्चाशतो धावकानां यौ स्यातामधिकौ जवे।
तौ च तत्र नियोक्तव्यौ शरानयनकारणात्॥ इति।

तोरणं च निमज्जनसमीपस्थाने समे शोध्यकर्ण-प्रमाणोच्छ्रितं कार्यम्।

गत्वा तु तज्जलस्थानतटे तोरणमुच्छ्रितम्।
कुर्वीत कर्णमात्रं तु भूमिभागे समे शुचौ॥

इति नारदस्मरणात्।

शरत्रयं वैणवं च धनुर्मङ्गलद्रव्यैः श्वेतपुष्पादि-भिः प्रथमं सम्पूजयेत्।

शरान् सम्पूजयेत्पूर्वं वैणवं च धनुस्तथा।
मङ्गलैर्धूपपुष्पैश्च ततः कर्म समाचरेत्॥

इति पितामहवचनात्।

धनुषः प्रमाणं लक्ष्यस्थानं च—

दित्यर्थः । अन्यदप्याह *तथेति । *इति, अनेन मन्त्रेण । उदकस्थानानि चेति चस्त्वर्थे । *वह्ेषु, प्रस्रवणेषु । चेति पाठः । वेति पाठेऽग्रिमचोऽपि तत्रैव ।

३। *तथा, तद्वत् । * पितामहेनापि, उक्तानीत्यस्यानुषङ्गः । ग्राहो मकरः । अल्पक इति कुत्सायां कन् । जलौकेति मध्यमपदलोपी समासः । * नित्यं, सर्वथा । * आहृतम्, आनीतम् ।

४। विशेषमाह *नाभीति । *धर्मस्थूणां, धर्मायःप्रतिमाम् । सूर्मी स्थूणा ऽयः प्रतिमेत्यमरः । अवष्टम्भश्च धारणात्मकः संयोगविशेषः । नारदमाह * उदके इति । नाभिदघ्ने इत्यर्थः । तथाच साऽपि कृत्वा तत्रादौ स्थाप्येति भावः ॥ १०८ ॥

मि० ततः किं कर्तव्यमित्यत आह ।

या० समकालमिषुं मुक्तमानीयान्यो जवी नरः ।
गते तस्मिन्निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयात् ॥१०९॥

मि० निमज्जनसमकालं गते तस्मिन् जविन्येकस्मिन्पुरुषे अन्यो जवी शरपातस्थानस्थितः पूर्वमुक्तमिषुमानीय जले निमग्नाङ्गं यदि पश्यति तदा स शुद्धो भवति ।

एतदुक्तं भवति । त्रिषु शरेषु मुक्तेष्वेको वेगवान् मध्यमशरपातस्थानं गत्वा तमादाय तत्रैव तिष्ठति । अन्यस्तु पुरुषो वेगवान् शरमोक्षस्थाने तोरणमूले तिष्ठति । एवं स्थितयोस्तयोस्तृतीयस्यां करतालिकायां शोध्यो निमज्जति । तत्समकालमेव तोरणमूलस्थितोऽपि द्रुततरं मध्यमशरपातस्थानं गच्छति ।

इति वचनात् । वाते च प्रवाति निम्नादिदेशे च शरमोक्षो न कार्यः ।

इषुं न प्रक्षिपेद्विद्वान्मारुते चातिवायति ।
विषमे भूप्रदेशे च वृक्षस्थाणुसमाकुले ॥
तृणगुल्मलतावल्लीपङ्कपाषाणसंयुते ।

इति पितामहवचनात् । निमग्नाङ्गं पश्येच्चेच्छुद्धि-माप्नुयादिति वदता उन्मज्जिताङ्गस्याशुद्धिर्दर्शिता । स्थानान्तरगमने चाशुद्धिः—

पितामहेनोक्ता,

अन्यथा न विशुद्धः स्यादेकाङ्गस्यापि दर्शनात् ।
स्थानाद्वाऽन्यत्र गमनाद्यस्मिन्पूर्वं निवेशितः ॥ इति ।
एकाङ्गस्यापि दर्शनादिति च कर्णाद्यभिप्रायेण ।

शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिका ।
अप्सु प्रवेशने यस्य शुद्धं तमपि निर्दिशेत् ॥

इति विशेषाभिधानात् ।

अयमत्र प्रयोगक्रमः । उक्तलक्षणजलाशयसन्निधावुक्तलक्षणं तोरणं विधाय उक्तप्रमाणे देशे लक्ष्यं निधाय तोरणसन्निधौ सशरं धनुः सम्पूज्य जलाशये वरुणमावाह्य पूजयित्वा तत्तीरे धर्मादींश्च देवान् हवनान्तमिष्ट्वा शोध्यस्य शिरसि प्रतिज्ञापत्रमाबध्य प्राड्विवाको जलमभिमन्त्रयते, तोय त्वं प्राणिनां प्राण इत्यादिना मन्त्रेण । अथ शोध्यः सत्येनेत्यादिना मन्त्रेण जलमभिमन्त्र्य गृहीतस्थूणस्य नाभिमात्रोदकावस्थितस्य बलीयसः पुरुषस्य समीपमुपसर्पति । अथ शरेषु त्रिषु मुक्तेषु मध्यमशरपातस्थाने

नारदेनोक्तम्, ( व्य० प० १ )

क्रूरं धनुः सप्तशतं मध्यमं षट्शतं स्मृतम् ।
मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिः ॥ (३०७)
मध्यमेन तु चापेन प्रक्षिपेच्च शरत्रयम् । (३०६)
हस्तानां तु शते सार्द्धे लक्ष्यं कृत्वा विचक्षणः ।
न्यूनाधिके तु दोषः स्यात्क्षिपतः सायकांस्तथा ॥ इति ।

अङ्गुलानां सप्ताधिकं शतं सप्तशतं क्रूरं धनुः । एवं षट्शतं पञ्चशतं च । एवं चैकादशाङ्गुलाधिकं हस्तचतुष्टयं क्रूरस्य धनुषः प्रमाणम्, मध्यमस्य दशाङ्गुलाधिकम्, मन्दस्य नवाङ्गुलाधिकामित्युक्तं भवति । शराश्चानायसाग्रा वैणवाः कार्याः ।

शरांश्चानायसाग्रांस्तु प्रकुर्वीत विशुद्धये ।
वेणुकाण्डमयांश्चैव क्षेप्ता तु सुदृढं क्षिपेत् ॥

इति स्मरणात् । क्षेप्ता तु क्षत्रियस्तद्वृत्तिर्वा ब्राह्मणः सोपवासो नियोक्तव्यः ।

यदाह,

क्षेप्ता च क्षत्रियः प्रोक्तस्तद्वृत्तिर्ब्राह्मणोऽपि वा ।
अक्रूरहृदयः शान्तः सोपवासस्ततः क्षिपेत् ॥ इति ।

त्रिषु मुक्तेषु मध्यमः शरो ग्राह्यः ।

तेषां च प्रेषितानां च शराणां शास्त्रचोदनात् ।
मध्यमस्तु शरो ग्राह्यः पुरुषेण बलीयसा ॥

इति वचनात् । तत्रापि पतनस्थानादानेतव्यो न सर्पणस्थानात् ।

शरस्य पतनं ग्राह्यं सर्पणं तु विवर्जयेत् ।
सर्पन् सर्पन् शरो यायाद् दूराद् दूरतरं यतः ॥

मध्यमशरं गृहीत्वा जविन्येकस्मिन्पुरुषे स्थिते अन्यस्मिंश्च तोरणमूले स्थिते प्राड्विवाकेन तालत्रये दत्ते युगपद् गमनमज्जनम् अथ शरानयनमिति । इत्युदकविधिः ॥ १०९ ॥

व्या० १। समकालमिति गमनक्रियाविशेषणम् । तच्च साकाङ्क्षमिति प्रकृतत्वादाह *निमज्जनेति । * गते इति । मध्यमशरपातस्थानं प्रतीति भावः । तस्मिन्नित्यस्य व्याख्या *जविन्येकस्मिन्पुरुषे इति । नर इति लब्धमिदम् । अत एवाह * अन्य इति । तदर्थमाह *शरेति । भूतानिष्ठालब्धमाह *पूर्वमिति । *आनीयेति । यतः स गतस्तत्रानीयेत्यर्थः । * जलनिमग्नाङ्गमिति । सप्तम्यर्थे बहुव्रीहिः । जले निमग्नाङ्गमिति पाठेऽपि अर्शआद्यच् । तत्र तथा तद्विशिष्टं जलं पश्यतीत्येवार्थः । यद्वा निमज्जनं कर्णाद्यभिप्रायं दर्शनं मस्तकाभिप्रायमित्यनुपदं स्फुटीभविष्यति ।

२। स्पष्टतया सर्वाप्रतीतेराह *एतदिति । *त्रिष्विति । अतएव—

अप्सु प्रवेश्य पुरुषं प्रक्षिपेत्सायकत्रयम् ।

इति बृहस्पतिः । * एकः, पुरुषः । पञ्चम्यर्थबहुव्रीहिणा लब्धं स्थानं विशिनष्टि * तोरणेति । तोरणोऽस्त्री बहिर्द्वारमित्यमरः । * स्थितयोरिति । तयोस्सतोरिति भावः । * तृतीयस्यामिति । तोरणमूलस्थितप्राड्विवाकसंबन्धितृतीयकरतालिकासमकालमित्यर्थः । *तत्समकालमिति ।

कात्यायनोऽपि,

क्षिप्तेषु मज्जनं कार्यं गमनं समकालिकम् । इति ।

क्षिप्तेषु शरेषु सत्सु मज्जनं गमनं च तृतीयकरतालिकासमकालिकं कार्यमित्यर्थः । * प्राप्ते, सति । * प्राप्य, लब्ध्वा ।

एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम् ।
यस्य वेगैर्विना जीर्येच्छुद्धिं तस्य विनिर्दिशेत् ॥१११॥

मि० त्वं विषेत्यादिमन्त्रेण विषमभिमन्त्र्य कर्ता विषं हिमशैलजं शृङ्गसम्भवं भक्षयेत् । तत्र भक्षितं यस्य विषं वेगैर्विना जीर्यति स शुद्धो भवति । विषवेगो नाम धातोर्धात्वन्तरप्राप्तिः ।

धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः ।

इति वचनात् । धातवश्च—

त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि सप्त । एवं च सप्तैव विषवेगा भवन्ति । तेषां च लक्षणानि पृथगेव विषतन्त्रे कथितानि ।

वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ
तस्योर्ध्वस्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ ।
यो वेगः पञ्चमोऽसौ नयति विवशतां कण्ठभङ्गं च हिक्कां
षष्ठो निश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य ॥
इति ।

अत्र च महादेवस्य पूजा कर्तव्या ।

यथाह नारदः,

दद्याद्विषं सोपवासो देवब्राह्मणसन्निधौ ।
धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम् ॥ इति ।

प्राड्विवाकः कृतोपवासो महादेवं पूजयित्वा तस्य पुरतो विषं व्यवस्थाप्य धर्मादिपूजां हवनान्तां विधाय प्रतिज्ञापत्रं शोध्यस्य शिरसि निधाय विषमभिमन्त्रयते ।

त्पर्यार्थमाह *एवंनेति । *अनायसाग्रा इति । अयोविकाररूपाग्रभागरहिता इत्यर्थः । कात्यायनमाह * शरांश्चेति । सुदृढमितिसूचितं विशेषमाह * क्षेप्तेति । पितामहमाह * यथाहेति । *ततः क्षिपेदिति ।तथा शुचिरिति पाठान्तरम् । विशेषमुक्तमेवाह *त्रिष्विति । एवमग्रेऽपि । अग्रे सर्वा पितामहोक्तिरेव । *क्षेपितानां, प्रक्षिप्तानाम् । *तेषामिति । उक्तलक्षणानाम् । *तत्रापि, मध्यमशरविषयेऽपि । सर्पन्निति शत्रन्तम् । वीप्सायां द्वित्वम् । अतिवायतीत्यार्षम् । अतिव्ययतीति पाठो वा । स्थाणुर्वृक्षविशेषः । स्थाणुर्वा ना ध्रुवः शङ्कुरित्यमरः । उत्तरसङ्गतये आह *निमग्नाङ्गमिति । *वदता, मूलकृता । चोऽप्यर्थे । *अन्यथेति ।

आगतस्तु शरग्राही न पश्यति तथा जले ।
अन्तर्जलगतं सम्यक् तदा शुद्धं विनिर्दिशेत् ॥ इत्यादिः ।

४। अन्यथेत्यस्यैवार्थमाह * एकाङ्गेति । स्थानपदार्थमाह *यस्मिन्निति । मिथोऽविरोधायाह *एकाङ्गेति । चस्त्वर्थे । अपिरुक्तसमुच्चये । *विशेषाभिधानादिति । तेनैवेति भावः । *सन्निधौ, पश्चिमतीरदेशे । *तत्तीरे, अक्षतपुञ्जादौ । *अथ, तदभिमन्त्रणानन्तरम् । *गृहीतस्थूणस्येति । प्राङ्मुखस्येति शेषः । *प्राडिति । तोरणमूलस्थितेनेत्यादिः । *दत्ते इति । तृतीयतालिकासमकालमिति भावः ॥ १०९ ॥

मि० इदानीं विषविधिमाह ।

या० त्वं विष ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितम् ।
त्रायस्वास्मादभीशापात्सत्येन भव मेऽमृतम् ॥ ११०॥

मासैर्नीत श्रुतेः। यमन्त्रस्य च सर्वदिव्यसाधारण-
त्वात्तत्रापि समन्त्रता। विषं च घृतप्लुतं देयम्।

नारदवचनात्। ( व्य० प० १।३२३ )

विषस्य पलषड्भागाद्भागो विंशतिमस्तु यः।
तमष्टभागहीनं तु शोध्ये दद्याद् घृतप्लुतम्॥ इति।

पलं चात्र चतुःसुवर्णिकम्।

तस्य षष्ठो भागो दश माषाः दश यवाश्च भव-
न्ति। त्रियवं त्वेककृष्णलम् पञ्चकृष्णलको माषः
इत्येको माषः पञ्चदश यवा भवन्ति। एवं दशा-
नां माषाणां यवाः सार्द्धं शतं भवन्ति। पूर्वे च दश
यवा इति षष्ट्यधिकं शतं यवाः पलस्य षष्ठो भागः।
तस्माद्विंशतितमो भागोऽष्टौ यवाः। तस्याष्टमभा-
गहीनः एकयवहीनः, तं विंशतितमं भागं सप्तयवं घृ-
तप्लुतं दद्यात्। घृतं च विषात् त्रिंशद्गुणं ग्राह्यम्।

पूर्वाह्णे शीतले देशे विषं देयं तु देहिनाम्।
घृतेन योजितं श्लक्ष्णं पिष्टं त्रिंशद्गुणान्वितम्॥

इति कात्यायनवचनात्। त्रिंशद्गुणेन घृतेनान्वि-
तं विषम्। शोध्यश्च कुहकादिभ्यो रक्षणीयः।

त्रिरात्रं पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितम्।
कुहकादिभयाद्राजा रक्षयेद्दिव्यकारिणम्॥
ओषधीमन्त्रयोगांश्च मणीनथ विषापहान्।
कर्त्तुः शरीरसंस्थांस्तु गूढोत्पन्नान्परीक्षयेत्॥

इति पितामहस्मरणात्। तथा विषमपि रक्ष-
णीयम्। ( व्य० प० १।३२२ )

शार्ङ्गं हैमवतं शस्तं गन्धवर्णरसान्वितम्।

त्वं विष ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम्।
पापानां दर्शयात्मानं शुद्धानाममृतं भव॥
मृत्युमूर्ते विषं त्वं हि ब्रह्मणा परिनिर्मितम्।
त्रायस्वैनं नरं पापात्सत्येनास्यामृतं भव॥ इति।
एवमभिमन्त्र्य दक्षिणाभिमुखाय स्थिताय दद्यात्।
नारदवचनात्।
द्विजानां सन्निधावेव दक्षिणाभिमुखे स्थिते।
उदङ्मुखः प्राङ्मुखो वा विषं दद्यात्समाहितः॥
इति।

विषं च वत्सनाभादि ग्राह्यम्।
शृङ्गिणो वत्सनाभस्य हिमजस्य विषस्य वा।
इति पितामहवचनात्। वर्ज्यानि च तेनैवोक्तानि,
चारितानि च जीर्णानि कृत्रिमाणि तथैव च।
भूमिजानि च सर्वाणि विषाणि परिवर्जयेत्॥ इति।
नारदेनापि, (व्य० प० १।३२१)
भृष्टं च चारितं चैवं धूपितं मिश्रितं तथा।
कालकूटमलावुं च विषं यत्नेन वर्जयेत्॥ इति।
कालश्च नारदेनोक्तः, (व्य० प० १।३१९)
तोलयित्वेप्सितं काले देयं तद्धि हिमागमे।
नापराह्णे न मध्याह्ने न सन्ध्यायां तु धर्मवित्॥ इति।
कालान्तरे तूक्तप्रमाणादल्पं देयम्।
वर्षे चतुर्यवा मात्रा ग्रीष्मे पञ्चयवा स्मृता।
हेमन्ते सा सप्तयवा शरद्यल्पा ततोऽपि हि॥
इति स्मरणात्। अल्पेति षड्यवेत्यर्थः। हेमन्तग्रहणेन शिशिरस्यापि ग्रहणम्। हेमन्तशिशिरयोः स-

अकृत्रिममसंमूढममन्त्रोपहतं च यत् ॥

इति नारदस्मरणात् । तथा, विषे पीते यावत्करतालिकाशतपञ्चकं तावत्प्रतीक्षणीयोऽनन्तरं चिकित्सनीयः ।

यथाह नारदः,

पञ्चतालशतं कालं निर्विकारो यदा भवेत् ।
तदा भवति संशुद्धस्ततः कुर्याच्चिकित्सितम् ॥ इति ।

पितामहेन तु दिनान्तोऽवधिरुक्तोऽल्पमात्राविषयः ।

भक्षिते तु यदा स्वस्थो मूर्च्छाछर्दिविवर्जितः ।
निर्विकारो दिनस्यान्ते शुद्धं तमपि निर्दिशेत् ॥ इति ।

अत्र च प्राड्विवाकः सोपवासो महादेवं संपूज्य तत्पुरतो विषं स्थापयित्वा धर्मादीनिष्ट्वा शोध्यस्य शिरसि प्रतिज्ञापत्रं निधाय विषमभिमन्त्र्य दक्षिणाभिमुखाय स्थिताय विषं प्रयच्छति । स च शोध्यो विषमभिमन्त्र्य भक्षयतीति क्रमः । इति विषविधानम् ॥ ११० ॥ १११ ॥

बा० १। सङ्गतिमाह *इदानीमिति । व्यवस्थितमिति पाठः। विषशब्दस्य क्लीबत्वात् । एवमग्रेऽपि । विषमित्यस्य मध्यमणिन्यायेनान्वयेन एवमुक्त्वेत्यस्यार्थमाह *विषमभीति । प्रकृतत्वादाह *विषं वेगैरिति । लिङ्गार्थाविवक्षया आह *जीर्यतीत्यादि । वेगैरितिबहुवचनसूचितमाह *विषवेग इति । पितामहमाह *धातोरिति । *च लक्षणानीति । लक्षणानित्वित्यर्थः। तदेवाह *वेग इति। तस्योर्ध्व इति पूर्वान्वयि । तस्येति शेषत्वविवक्षया षष्ठी । *तत्पराविति । यथाक्रममिति भावः । *नय-

स्थितमिति । निशिन्यनमिति पाठान्तरम् । अनर्गोन्तरम् । विरोधं परिहरति ० पितामहेनेति । अपराह्ने ० अरित्नेनिति । विष इति भावः । स्वस्य इत्यर्थेन तथाऽन्त्य ० गृहीति । सर्वसंप्रदायात् ०निर्णिक्तात् इति ।

९। कंतन विशेषं स्वगतस्यानुक्तमपि किंचित् सङ्कलनाया ॥अत्र चेति । क्रमेऽन्वयः । ॥निषाप, आवश्य ॥११०॥१११॥

इति विषविधिः ॥

मि० अथ कोशविधिमाह ।

या० देवानुग्रान्समभ्यर्च्य तत्स्नानोदकमाहरेत ।
संश्राव्य पाययेत्तस्माज्जलं तु प्रसृतित्रयम् ॥ ११२ ॥

मि० उग्रान्देवान् दुर्गादित्यादीन् समभ्यर्च्य गन्धपुष्पादिभिः पूजयित्वा संस्नाप्य तत्स्नानोदकमाहरेत्। आहृत्य च "तोय त्वं प्राणिनां प्राण" इत्यादिना तत्तोयं प्राड्विवाकः संश्राव्य शोध्येन च तत्तोयं पात्रान्तरे कृत्वा सत्येन माऽभिरक्ष त्वं वरुणेत्यनेनाभिमन्त्रितं पाययेत्प्रसृतित्रयम् । एतच्च साधारणधर्मेषु धर्मावाहनादिसकलदेवतापूजाहोमसमन्त्रकप्रतिज्ञापत्रशिरोनिवेशनान्तेषु सत्सु च । अत्र च स्नाप्यदेवतानियमः कार्यनियमोऽधिकारिनियमश्च पितामहादिभिरुक्तः ।

भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम् ।
समभावे तु देवानामादित्यस्य तु पाययेत ॥
दुर्गायाः पाययेच्चौरान् ये च शस्त्रोपजीविनः ।
भास्करस्य तु यत्तोयं ब्राह्मणं तन्न पाययेत् ॥
दुर्गायाः स्नापयेच्छूलमादित्यस्य तु मण्डलम् ।

नीत्यर्थः। *ईरितं, सप्तयवात्मकम्।

४। *हिमेति। हेमन्तशिशिरयोरित्यर्थः। नारदमेवाह *वर्षे इति। इदमार्षम्।

वर्षासु षड्यवा मात्रा ग्रीष्मे पञ्चयवा स्मृता।
हेमन्ते सा सप्तयवा शरद्यल्पाततोऽपिहि॥

इति कल्पतरौ पाठः। मात्राशब्दः परिच्छिन्नपरिमाणके वर्त्तते। सा मात्रा अल्पा त्रियवेति कश्चित्। न्यूनतां निराचष्टे *हेमन्तेत्यादि।

५। नारदमेवाह *विषस्येति। शोध्ये इति तस्य तत्त्वविवक्षया। तदर्थमाह *पलं चेत्यादिना। पक्षान्तरनिरासायाह *अत्रेति। षडादिशब्दाः षष्ठादिपरा इत्याह * षष्ठ इत्यादि। चैरन्यत्रानियमान्न दोषः। अतएवात्र मिथो विरोधो न। तस्मादिति संबन्धिनस्तत्त्वविवक्षया पञ्चमी तत्रेति भावः। शोध्ये इति प्राग्वत्। तमित्यस्य व्याख्या * विंशतीति।

६। विशेषं तत्राह *घृतंचेति। देहिनामित्यपि तस्य तत्त्वविवक्षया। *श्लक्ष्णं पिष्टमिति। तद् यथा स्यात्तथा पिष्टमित्यर्थः। सम्यक् पिष्टमिति पाठान्तरम्। घृतपरिमाणमाह *त्रिंशदिति। यथाश्रुतासंगतेः तदर्थमाह * त्रिंशदिति। त्रिंशद्ग्रहणेन त्विति कल्पतरौ पाठः।

७। विशेषान्तरमाह * शोध्यश्चेत्यादिना। * कुहकेति। तन्त्रादिभ्य इत्यर्थः। कुहकादीत्युक्तमेव विशदयति * ओषधीरिति। *गूढोत्पन्नानिति। गुप्ततया संजातानित्यर्थः। विषमिति पाठे तथाशब्दः समुच्चये। अपीति पाठे तद्वदित्यर्थे।

८। विशेषमाह *तथेति। पञ्च तालशतानि यस्मिन्निति बहुव्रीहिः। कालविशेषणम्। कालाध्वनोरिति द्वितीया। *चिकि-

जलमितिपाठेऽग्निपतिनिषेधम् । तस्मात्पान्यथाह *गंमाद्येति । *इत्यादिना, मन्त्रेण । गंधाद्येतस्य पापेद्धिनश्चान्वयः । प्रा-
गदाह *पतशंति । पितामहादिभिरिति आदिना नारदादयः ।
ते चान्यत्र स्पष्टाः ।

२ । विशेषमाह * भवतेत्यादिना । * सदभावे तु
देवानां, देवताविषयकभक्तिभावे । * ये चेति । नांवे-
त्यर्थः । * तद्वेति । ब्राह्मण्यादेरनन्तरूक्तत्वात् । *विमर्शे,
विधाने । * आस्तिक इति । सन्येन द्विकरणे निष्ठानश्रा-
धानित्यर्थः । * पत्ययेति । द्वन्द्वगर्भोऽत्र द्वन्द्वः । * ये चेति ।
तेषां चेत्यर्थः । *शीलेति समाहारद्वन्द्वः । * नास्तिकेति । पूर्व
तद्दृष्टनिरुक्त इति न पौनरुक्त्यम् ।
विशेषमाह * तथेति । *अथोदिति । न एवेति शेषः ॥ ११२ ॥

मि० ननु तुलादिषु विषान्तेषु समनन्तरमेव शुद्ध्य-
शुद्धिभावना कोशे तु कथमित्यत आह ।

या० अर्वाक् चतुर्दशादह्नो यस्य नो राजदैविकम् ।
व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥ ११३ ॥

मि० चतुर्दशादहः पूर्वं यस्य राजिकं राजनिमित्तं दै-
विकं दैवप्रभवं व्यसनं दुःखं घोरं महत् नो नैव जायते,
अल्पस्य देहिनामपरिहार्यत्वात्, स शुद्धो वेदितव्यः ।
ऊर्ध्वं पुनरवधेर्न दोषः ।

यथाह नारदः, ( व्य० प० १।३३१ )

ऊर्ध्वं यस्य द्विसप्ताहाद्वैकृतं तु महद्भवेत् ।
नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात् ॥

इति। अर्थसिद्धमेवोक्तम् इदम्। अर्वाक् चतुर्दशादह

अन्येषामपि देवानां स्नापयेदायुधानि तु ॥
इति देवतानियमः ।
विस्रम्भे सर्वशङ्कासु सन्धिकार्ये तथैव च ।
एषु कोशः प्रदातव्यो नित्यं चित्तविशुद्धये ॥
इति कार्यनियमः । ( ना० व्य० प० १।३२८ )
पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च ।
सशूकस्याव्यसनिनः कोशपानं विधीयते ॥
सशूक आस्तिकः ।
मद्यपस्त्रीव्यसनिनां कितवानां तथैव च ।
कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः ॥
महापराधे निर्धर्मे कृतघ्ने क्लीबकुत्सिते ।
नास्तिकव्रात्यदासेषु कोशपानं विवर्जयेत् ॥ इति ।
महापराधो महापातकम् । निर्धर्मो वर्णाश्रमधर्मरहितः पाखण्डी । कुत्सितः प्रतिलोमजः । दासाः कैवर्ताः । इत्यधिकारिनियमः ।

तथा, गोमयस्य मण्डलं कृत्वा तत्र शोध्यमादित्याभिमुखं स्थापयित्वा पाययेदिति नारदवचनादवगन्तव्यम् ।

यथाह,
तमाहूयाभिशस्तं तु मण्डलाभ्यन्तरे स्थितम् ।
आदित्याभिमुखं कृत्वा पाययेत्प्रसृतित्रयम्॥इति॥११२॥

बा० १। *कोशेति। कोशोऽर्थदिव्ययोरित्यनेकार्थः। कोशः कोष इवाण्डजे। कुड्मले चषके दिव्येऽर्थचये योनिशम्बयोः।जातीकोशे ऽसिपिधाने इति हैमश्च । तत्रापि प्रकृतेऽपां वाचकत्वात् तत्र रूढिः।*संश्राव्य, अभिमन्त्र्य।*तस्मात् आहृतात् जलात् ।

णि स्थाप्यम् । सर्वदिव्यसाधारणं च धर्मावाहनादि पूर्व-
वदिहापि कर्तव्यम् । इति तण्डुलविधिः ।

तप्तमाषविधिः पितामहेनोक्तः । यथाह ।

सौवर्णं राजतं वापि ताम्रं वा षोडशाङ्गुलम् ।
चतुरङ्गुलखातं तु मृन्मयं वाऽथ मण्डलम् ॥

वर्तुलमित्यर्थः ।

पूरयेद् घृततैलाभ्यां विंशत्या तु पलैस्तु तत् ।
सुवर्णमाषकं तस्मिन् सुतप्ते निक्षिपेत्ततः ॥
अङ्गुष्ठाङ्गुलियोगेन उद्धरेत्तप्तमाषकम् ।
कराग्रं यो न धुनुयाद्विस्फोटो वा न जायते ॥
शुद्धो भवति धर्मेण निर्विकारकराङ्गुलिः ।

उद्धरेदिति वचनात्पात्रादुत्क्षेपणमात्रं न बहिः
प्रक्षेपणमादरणीयम् । अपरकल्पः ।

सौवर्णे राजते ताम्रे आयसे मृन्मयेऽपि वा ।
गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः ॥
सौवर्णीं राजतीं ताम्रीमायसीं वा सुशोधिताम् ।
सलिलेन सकृद्धौतां प्रक्षिपेत्ताम्रमुद्रिकाम् ॥
भ्रमद्वीचितरङ्गाढ्ये ह्यनखस्पर्शगोचरे ।
परीक्षेतार्द्रपर्णेन चुरुकारं सुघोषकम् ॥
ततश्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत् ।
परं पवित्रममृतं घृत त्वं यज्ञकर्मसु ॥
दह पावक पापं त्वं हिमशीतं शुचौ भव ।
उपोषितं ततः स्नातमार्द्रवाससमागतम् ॥
ग्राहयेन्मुद्रिकां तां तु घृतमध्यगतां तथा ।
प्रदेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः ॥

इत्येतन्महाभियोगविषयम् । महाभियोगेष्वेतानीति प्रस्तुत्याभिधानात् । अवध्यन्तराणि पितामहेनोक्तानि अल्पविषयाणि । कोशमल्पेऽपि दापयेदिति स्मरणात् । तानि च—

त्रिरात्रात्सप्तरात्राद्वा द्वादशाहाद्द्विसप्तकात् ।
वैकृतं यस्य दृश्येत पापकृत्स उदाहृतः ॥ इति ।

महाभियोगद्रव्यादर्वाचीनं द्रव्यं त्रिधा विभज्य त्रिरात्राद्यपि पक्षत्रयं व्यवस्थापनीयम् । इति कोशविधिः ॥ ११३ ॥

मि० तुलादीनि कोशान्तानि पञ्च महादिव्यानि यथोद्देशं योगीश्वरेण व्याख्यातानि । स्मृत्यन्तरे त्वल्पाभियोगविषयाण्यन्यानि दिव्यानि कथितानि ।

यथाह पितामहः,
तण्डुलानां प्रवक्ष्यामि विधिं भक्षणचोदितम् ।
चौरे तु तण्डुला देया नान्यस्येति विनिश्चयः ॥
तण्डुलान्कारयेच्छुक्लान् शालेर्नान्यस्य कस्यचित् ।
मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥
स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत् ।
प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम् ॥
तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत्ततः ।
पिप्पलस्य तु नान्यस्य अभावे भूर्जे एव तु ॥
लोहितं यस्य दृश्येत हनुस्तालु च शीर्यते ।
गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत् ॥ इति ।

शिरोरोपितपत्रकं तण्डुलान् भक्षयित्वा निष्ठीवयेत्प्राड्विवाकः । भक्षयित्वेति च ण्यन्ताण्णि-

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र वि० सं० ( मीमांसा २

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीत-वेदान्तसूत्रस्य यतीन्द्र श्रीमद्विज्ञान-भिक्षुकृत व्याख्यानम्। सम्पूर्णम्। ( वेदान्तः ) ६

(९) स्याद्वादमञ्जरी-मल्लिषेणाविनिर्मिता सम्पूर्णा। ( जैनदर्शनम् ) २

(१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपण-परम्-श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम्। सम्पूर्णम् ( वेदान्तः ) १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टा-रकाचार्यसंगृहीतः। आचार्यचित्सुख-मुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४

(१२) विभक्त्यर्थनिर्णयःन्यायानुसारिप्रथमादि-सर्वविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः। सम्पूर्णः ( न्यायः ) ५

(१३) विधिरसायनम्। श्रीअप्पयदीक्षितकृतम्। सं० ( मीमांसा ) २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्ट-सोमेश्वरविरचिता। ( मीमांसा ) १६

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता। श्रीक्षेमराजविरचितवृत्तिसमेता। ( वेदान्तः ) २

(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशा-ऽध्यायार्थसंग्रहः ) श्रीभट्टनारायणात्मज-भट्टशङ्करविरचितः। ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि-मीमांसादर्शनम् ) महामहो-पाध्यायश्रीशालिकनाथमिश्रविरचितं, श्रीशङ्करभट्टकृतो मीमांसा-सारसंग्रहश्च सम्पूर्णः ( मीमांसा ) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्दव्यासप्रणीत-स्तत्कृतव्याख्यासमलङ्कृतश्च। ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम्। महामहोपाध्यायश्रीकर्का-चार्यविरचितभाष्यसहितम्। १३

(२०) ब्रह्मसूत्रभाष्यम्। श्रीभास्कराचार्यविरचितम् ( वेदान्तः ) १

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम्। आनन्दपूर्ण-विरचितया खण्डनफक्किकाविभजनाख्यया व्या-ख्यया ( विद्यासागरी ) ति प्रसिद्धया समेतम्। ( वेदान्तः ) १३

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता। १

(२३) श्रीलक्ष्मीसहस्रम्-बालबोधिनीव्याख्यया-स्वतर्पणकया च सहितम्। ८

॥ श्रीः ॥

-•-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
गुणलाऽऽकृष्टजनताऽनवद्यार्थसंस्कृता ॥ १ ॥
काशिका-संस्कृतग्रन्थमाला सम्फुल्लदर्शना ॥
मल्लिकाकलिकाकुलं कुर्यादमन्दाऽऽमोदमोदितम् ॥ २ ॥

स्तबकः— १७७

१ अस्यां काशिका-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतकं सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तबके एक एव ग्रन्थो मुद्यते।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरण धर्मशास्त्रसाहित्यपुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्यन्ते।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्–मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तबकम् " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति।

७ साम्प्रतं मुद्यमाणा ग्रन्थाः– मुद्रिताः स्तबकाः

| | | |
|---|---|---|
| (१) संस्काररत्नमाला। गोपीनाथभट्टकृता | ( संस्कारः ) | २ |
| (२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः | ( व्याकरणम् ) | १० |
| (३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम्। सम्पूर्णम्। | | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम्। विशिष्टाद्वैतदर्शनप्रकरणम्। श्रीमल्लोकाचार्य्यप्रणीतम्। श्रीनारायण तीर्थ विरचित भाष्टभाषा प्रकाशसहितम्। सं० | (वेदान्त) | २ |
| (५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः सम्पूर्णः | ( ज्योतिषः) | १ |
| (६) भाट्टचिन्तामणिः। महामहोपाध्याय-श्रीगागाभट्ट विरचितः। तर्कपादः | ( मीमांसा ) | २ |

September 1912.

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

822 Af 3 58

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 177.

17456

# व्यवहार- बालंभट्टी

इति प्रसिद्धया लक्ष्मीनामिकया

पायगुण्डे इत्युपनामकेन बालंभट्टेन स्वपत्न्याः लक्ष्मीदेव्याः

स्मारकत्वेन तन्नाम्ना रचितया बृहत्या टीकया सहिता

मिताक्षरा

श्रीयुतगोविन्ददासमहाशयप्रदर्शितरीत्या

पर्वतीयनित्यानन्दपन्तेन परिष्कृत्य संशोधिता ।

# VYAVAHÂRA-BÂLAMBHATTI

THE EXTENSIVE COMMENTARY ON THE MITÂKSHARÂ

WITH THE ORIGINAL

BY

Bâlambhatta Páyagunde

EDITED BY

Pandit Nityanand Pant Parvatiya

Under the supervision of Shri Govinda Das.

FASCICULUS V.

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT BOOK-DEPOT.

BENARES.

AGENTS:- OTTO HARRASSOWITZ LEIPZIG:

PANDITA JYESHTHARAMA MUKUNDAJI BOMBAY:

PROBSTHAIN & CO., BOOKSELLERS, LONDON

*Printed by Jai Krishna Dasa Gupta,*

AT THE VIDYÂ VILÂSA PRESS

BENARES.

*Price Rupee one.*

Registered According to Act XXV of 1867. ( ALL RIGHTS RESERVED. )

धर्माधर्मात्मकं तु प्रतिज्ञापत्रकं लिखेत् । ततो
यदि पापाभियुक्तोऽहं धर्मस्त्यायातु मे करे ।
अशुक्लोन्मम करे पापमायातु धर्मतः ॥ इति-
अभिशस्तोऽभिमन्त्रयेत् ।
अभियुक्तस्तयोरेकं प्रगृह्णीयादविस्मितः ।
धर्मे गृहीते शुद्धः स्यादधर्मे तु स हीयते ॥
एवं समासतः प्रोक्तं धर्माधर्मपरीक्षणम् । इति ।

इति धर्माधर्मदिव्यविधिः ॥

अन्ये च शपथा द्रव्याल्पत्वमहत्त्वविषया जाति-
विशेषविषयाश्च मन्वादिभिरुक्ताः ।
यथा,
निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम् ।
त्रिकादर्वाक्तु पुण्यं स्यात्कोशपानमतः परम् ॥
( मनु. अ. ८. श्लो. ११३ )
सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥
इत्यादयः । अत्र च शुद्धिविभावना—
मनुनोक्ता, ( अ. ८. श्लो. ११५ उ० )
न चार्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः । इति ।
आर्तिरपि यस्य नो राजदैविकं व्यसनं जायते घोरमित्युक्तैव । कालनियमश्च त्रिरात्रप्रभृतिः कार्यलाघवगौरवपर्यालोचनया द्रष्टव्यः । एवं दिव्यैर्जयपराजयावधारणे दण्डविशेषोऽपि दर्शितः—
कात्यायनेन,
शतार्द्धं दापयेच्छुद्धमशुद्धो दण्डभाग्भवेत् । इति ।

यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाऽशुचिः।
इति।

अत्रापि धर्मावाहनाद्यनुसन्धातव्यम्। घृतानुमन्त्रणं प्राड्विवाकस्य। त्वमग्ने सर्वभूतानामिति शोध्यस्याग्न्यभिमन्त्रणमन्त्रः। प्रदेशिनीं परीक्षेयुरिति वचनात् प्रदेशिन्यैव मुद्रिकोद्धरणम्॥

इति तप्तमाषविधिः॥

धर्माधर्माख्यदिव्यविधिश्च पितामहेनोक्तः।

तथाच—

अधुना संप्रवक्ष्यामि धर्माधर्मपरीक्षणम्।
हन्तॄणां याचमानानां प्रायश्चित्तार्थिनां नृणाम्॥

हन्तॄणामिति साहसाभियोगेषु। याचमानानामिति अर्थाभियोगेषु। प्रायश्चित्तार्थिनामिति पातकाभियोगेषु।

राजतं कारयेद्धर्ममधर्मं सीसकायसम्।
इति। प्रतिमाविधानं सीसकं वा आयसं वेति।

पक्षान्तरमाह,

लिखेद् भूर्जे पटे वापि धर्माधर्मौ सितासितौ।
अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत्॥
सितपुष्पस्तु धर्मः स्यादधर्मोऽसितपुष्पधृक्।
एवंविधायोपलिख्य पिण्डयोस्तौ निधापयेत्॥
गोमयेन मृदा वापि पिण्डौ कार्यौ समं ततः।
मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ॥
उपलिप्ते शुचौ देशे देवब्राह्मणसन्निधौ।
आवाहयेत्ततो देवान् लोकपालांश्च पूर्ववत्॥

क्षणशोधिनमिति पाठान्तरम्, भक्षणवर्जने इति च। कृत्वेत्यस्य संमिश्रानित्यत्रान्वयः। स्नानोदकआदित्यस्यैव, प्रत्यासत्तेः। * ततः, भक्षणकारणानन्तरम्। * शीर्यते, विशीर्णं भवति। हनुजालं च सीदतीति कल्पतरौ पाठः। हनुजालम् उत्तराधरदक्षिणं हनुजालसमूह इति तदर्थः। कर्त्रनुपादानादर्थमाह * शिरोरोपितेति। *तं, शोध्यम्। असम्बद्धत्वनिरासायाह * भक्षयित्वेति। चौरादिकत्वादिति भावः। इति तण्डुलविधिः॥

४। * तथाहि, तदेवोच्यते। विस्तारमाह *षोडशेति। निम्नतामाह *चतुरिति। बहुव्रीहिः। अथेत्यस्याग्रेऽन्वयः। अनेन कारयित्वेति तत्र शेषः सूचितः। मण्डलमित्यस्यार्थमाह *वर्त्तुलमिति। घृततैलयोरेकार्थत्वाद्विकल्पः। *धुनुयात्, कम्पयेत्। सर्वसंग्रहाय तत् उपसंहरति * निर्विकारेति। बहुव्रीहिः। यावद्वचनं वाचनिकमिति न्यायेनाह * उद्धरेदिति। तत्सत्त्वेऽप्याह * आदरणीयमिति। स्थलविशेषे इति भावः।

५। तदुक्तमेव प्रकारान्तरमन्यग्रन्थानुक्तमाह * अपरेति। *उपादायेति। स्थापयित्वेत्यर्थः। *सुशोधितामिति। भस्मादिनिरासायेति भावः। सुशोभितामिति पाठान्तरम्। *धौतां, प्रक्षालिताम्। *भ्रमद्वाचीति। भ्रमन्ती वाक् शब्दो यस्मिन्नित्यर्थः। तरङ्गैर्वीचिभिः पूर्णे। न नखस्पर्शस्यापि विषये। * चुरुकारामिति। तैलादिपक्वतापरीक्षा चुर इति शब्देन भवतीत्यनुकरणमिदं ध्वनेः। तत्रापि सुघोषकं महाशब्दयुक्तम्। क्रियाविशेषणमिदं द्वयम्। * अनेन, वक्ष्यमाणेन। प्राड्विवाक इति शेषः। सुतप्तत्वात् पवित्रत्वाच्चाह * पावकेति। * प्रदेशिनी, तर्जनी। *यस्य, कर्त्तुः। तस्यामिति शेषः। घृतानुमन्त्रणमिति। परमित्याद्युक्तामित्यर्थः। अत एवाह *त्वमग्ने इति। प्राग्वदाह *अग्न्यभी-

तं दण्डमाह,

विषे तोये हुताशे च तुलाकोशे च तण्डुले।
तप्तमाषकदिव्ये च क्रमाद्दण्डं प्रकल्पयेत्॥
सहस्रं षट्शतं चैव तथा पञ्चशतानि च।
चतुस्त्रिद्व्येकमेवं च हीनं हीनेषु कल्पयेत्॥ इति।

निह्नवे भावितो दद्यादित्युक्तदण्डेनायं दिव्यनिबन्धनो दण्डः समुच्चीयते॥

इति दिव्यप्रकरणम्॥

बा० १। मूलमवतारयति *नन्विति। अर्वागित्यस्यार्थः *पूर्वमिति। राजद्वैविक्रमित्यत्र द्वन्द्वात्तस्य निमित्तमिति ठञित्याह *राजिकमित्यादि। महदित्यस्य फलमाह * अल्पस्येति। आर्थिकमाह * ऊर्ध्वमिति। अनेन नारदीये ऽपि ऊर्ध्वमित्यत्रावधेरिति शेषो द्विसप्ताहादित्यत्र प्रभृतीति सूचितम्, अतो न विरोध इति बोध्यम्।*वैकृतं, विकृतमेव वैकृतं विकार इत्यर्थः। *कृतेति। कृतावधीत्यर्थः। इतिर्नारदसमाप्तौ। ननु नेदमवश्यवाच्यम् अत आह * अर्थेति। मौलावध्युपादानसिद्धमेव नारदेनोक्तमित्यर्थः।

२। विरोधं परिहरति * अर्वागिति। *प्रस्तुत्य, प्रक्रम्य। *अवध्यन्तराणि, तानि तु। पितामहमेवाह *त्रिरात्रादिति। क्वचित् तानि चेति अस्यादिः। नन्वेवमनयोर्व्यवस्थायामपि तदुक्तपक्षाणामवान्तरव्यवस्था कथम्, अत आह *महेति। *अर्वाचीनं, व्युत्क्रमेण सहस्रान्न्यूनम्॥ ११२॥

३। न्यूनतां निराचष्टे *तुलादीनीति। यथोद्देशमिति। उद्देशानतिक्रमेणेत्यर्थः। नाम्ना वस्तुसंकीर्त्तनमुद्देशः। *भक्षणचोदितमिति। भक्षणे चोदितं शास्त्रविहितं विधिं प्रकारमित्यर्थः। ल-

८। कात्यायनेनोक्तः,

आयसं द्वादशपलं घटितं फालमुच्यते ।
अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तृतम् ॥
अग्निवर्णं तु तच्चौरो जिह्वया संलिहेत्सकृत् ।
न दग्धश्चेच्छुद्धिमियादन्यथा तु स हीयते ॥ इति ।
मन्वादिभिरिति आदिना नारदादिपरिग्रहः ।
तथाच नारदः, ( व्य० प० १।२४३।२४४ )
शपथा अपि देवानामृषीणां च महात्मनाम् ।
वसिष्ठः शपथं शेपे यातुधानेन शङ्कितः ॥
महर्षयस्त्वथेन्द्रेण पुष्करार्थेन शङ्किताः ।
शेपुः शपथमव्यग्राः परस्परविशुद्धये ॥ इति ।
महर्षिभिश्च देवैश्च कार्यार्थं शपथाः कृताः ।
वसिष्ठश्चापि शपथं शेपे वै यवने नृपे ॥

इति मनुरपि।(८।११०) *सत्यवचनं, सत्यमिति कथनम्। * पुण्यमिति। पुण्यमिति पाठान्तरम्। आद्यविषयमुक्त्वा द्वितीयमाह * सत्येनेति। * अत्र च, शपथविषये। आर्तिः पीडा सा च नान्येत्याह *आर्तिरपीति। पूर्वोक्तैवेति भावः। एवं कालनियमोऽपि प्रागुक्त एवेत्याह * कालेति।

कात्यायनः,

आचतुर्दशकादह्नो यस्य नो राजदैविकम् ।
व्यसनं जायते घोरं स ज्ञेयः शपथे शुचिः ॥
अत्राङ् मर्यादायाम् ।
मनुः, ( ८।१११।११२ )
न वृथा शपथं कुर्यात्स्वल्पेऽप्यर्थे नरो बुधः ।

ति। प्रागुक्तमाह *प्रदेशिनीमिति। इति तप्तमाषकविधिः।

६। चोऽप्यर्थे। *तथाचेति। स आहेति शेषः। वचने न्यूनतां परिहरति * हन्तॄणामित्यादि। इतिर्वचनसमाप्तौ। इतराभ्रमायाह * प्रतिमेति। एकार्थत्वादाह * सीसकं वेति। अशीआयजन्तामिति भावः। कनन्तं वा। आहेति शेष एवेति भावः।

७। *अभ्युक्ष्य, प्रोक्ष्य। सितपुष्प इति बहुव्रीहिः। *पुष्प धृत् इति। धृञः क्विबन्तस्य रूपम्। धृगिति पाठे धृष्णोतेस्तदन्तस्य रूपम्। भृदिति पाठे भृञस्तस्य। एवंविधायेत्यस्य व्याख्या *उपलिख्येति। एवंविधावुपलिख्येति पाठान्तरं सुगमम्। एवंविधायोपलिप्येति पाठे तु एवं संलिख्य चन्दनेनोपलिप्येत्यर्थः। समं यथा स्यात् तथा कार्यौ इत्यर्थः। तत इत्यग्रिमान्वयि। * अनुपहते, अभग्नादौ। अनुपलक्षितावित्यनेन पिधानं तस्य सूचितम्। मध्ये चूर्णिकामाह * तत इति। * तयोश्चैकमिति। ततश्चैकमिति द्वितीयः पाठः। अविलम्बित इति। *अविलम्बितमिति पाठे क्रियाविशेषणम्। * समासतः, संक्षेपतः।

बृहस्पतिरपि,

पत्रद्वये लेखनीयौ धर्माधर्मौ सितासितौ।
जीवदानादिकैर्मन्त्रैर्गायत्राद्यैश्च सामभिः॥
आमन्त्र्य पूजयेत् गन्धैः कुसुमैश्च सितासितैः।
अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः॥
समौ कृत्वा नवे कुम्भे स्थाप्यौ चानुपलक्षितौ।
ततः कुम्भात्पिण्डमेकं प्रगृह्णीताविलम्बितः॥
धर्मे गृहीते शुद्धः स्यात्संपूज्यश्च परीक्षकैः। इति।

जीवदानादिकैः ताःप्रजामिथुनीत्यादिभिरिति कल्पतरुः। प्राणप्रतिष्ठापूर्वमित्यन्ये। इति धर्माधर्मविधिः॥

वृथा हि शपथं कुर्वन्प्रेत्य चेह च नश्यति ॥
कामिनीषु विवाहेषु गवां भक्ष्ये तथेन्धने ।
ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम् ॥
यमः,
कृत्वा मृषा तु शपथं कीटस्य वधसंयुतम् ।
अनृतेन तु युज्येत वधेन च तथा नरः ॥
तस्मान्न मिथ्याशपथं नरः कुर्याद्बुधेप्सितम् । इति ।

सर्वदिव्यशेषमाह * एवमिति । *शुद्धं, पुरुषम् । *तम्, अशुद्धसंबन्धिनम् । *आहेति । कात्यायन एवेति भावः । तुलेति समाहारद्वन्द्वः । कल्पनामेवाह * सहस्रमिति । पड्शतमिति बहुव्रीहिः । दण्डो विशेष्यः । चतुरिति समाहारद्वन्द्वः । क्रमविवक्षया न दोषः । अग्रेऽपि आतिदिशन्नाह * एवंचहीनमिति । उक्तप्रकारेण कल्पनायाश्चाग्रेऽपि उत्तरोत्तरन्यूनमित्यर्थः ।

९। विरोधं परिहरति * निह्नवे इति । मूलमिदं सर्वसाधारणम् । अतएव न विकल्पः । अतएवाह * अयं दिव्येति । कात्यायनोक्तो दिव्यमात्रविषय इत्यर्थः। एवञ्च तुलाग्निसलिलविषकोशतण्डुलतप्तमाषधर्माधर्मशपथदण्डरूपैरवान्तरप्रकरणैर्विशिष्टमिदं महादिव्यप्रकरणं संपन्नमिति बोध्यम्।तदाह*इतिदिव्येति॥

इति दिव्यप्रकरणं संपूर्णम् ॥



कैश्च विभागः कर्तव्य इति । तत्र कस्मिन्काले कथं कैश्चेति तत्र तत्र श्लोकव्याख्याने एव वक्ष्यते ।

कस्य विभाग इत्येतावदिह चिन्त्यते । किं विभागात्स्वत्वमुत स्वस्य सतो विभाग इति । तत्र स्वत्वमेव तावन्निरूप्यते, किं शास्त्रैकसमधिगम्यं स्वत्वमुत प्रमाणान्तरसमधिगम्यमिति । तत्र शास्त्रैकसमधिगम्यमिति तावद्युक्तम् ।

गौतमवचनात्,

स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु, ब्राह्मणस्याधिकं लब्धं, क्षत्रियस्य विजितं, निर्विष्टं वैश्यशूद्रयोरिति । प्रमाणान्तरगम्ये स्वत्वे नेदं वचनमर्थवत्स्यात् । तथा स्तेनातिदेशे—

( मनुः अ० ८ श्लो. ३४० )

योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम् ।<br>
याजनाध्यापनाद्वाऽपि यथा स्तेनस्तथैव सः ॥

इति अदत्तादायिनः सकाशात् याजनादिद्वारेणापि द्रव्यमर्जयतां दण्डविधानमनुपपन्नं स्यात्स्वत्वस्य लौकिकत्वे । अपि च । लौकिकं चेत्स्वत्वं मम स्वमनेनापहृतमिति न ब्रूयात् । अपहर्तुरेव स्वत्वात् । अथ अन्यस्वं तेनापहृतमिति नापहर्तुः स्वम्, एवं तर्हि सुवर्णरजतादिस्वरूपवदस्य वा स्वमस्य वा स्वमिति संशयो न स्यात् । तस्माच्छास्त्रैकसमधिगम्यं स्वत्वमिति ॥

अत्रोच्यते । लौकिकमेव स्वत्वं लौकिकार्थक्रियासाधनत्वात् व्रीह्यादिवत् । आहवनीयादीनां हि शा-

# अथ दायविभागप्रकरणम् ॥ ८ ॥

## दायविभागोपोद्धातः ॥

मि० प्रमाणं मानुषं दैवमिति भेदेन वर्णितम् ।
अधुना वर्ण्यते दायविभागो योगमूर्तिना ॥

तत्र दायशब्देन यद्धनं स्वामिसंबन्धादेव निमित्तादन्यस्य स्वं भवति तदुच्यते । स च द्विविधः,

अप्रतिबन्धः सप्रतिबन्धश्च । तत्र पुत्राणां पौत्राणां च पुत्रत्वेन पौत्रत्वेन च पितृधनं पितामहधनं च स्वं भवतीत्यप्रतिबन्धो दायः । पितृव्यभ्रात्रादीनां तु पुत्राभावे स्वाम्यभावे च स्वं भवतीति पुत्रसद्भावः स्वामिसद्भावश्च प्रतिबन्धः तदभावे पितृव्यत्वेन भ्रातृत्वेन च स्वं भवतीति सप्रतिबन्धो दायः । एवं तत्पुत्रादिष्वप्यूहनीयः ।

विभागो नाम द्रव्यसमुदायविषयाणामनेकस्वाम्यानां तदेकदेशेषु व्यवस्थापनम् । एतदेवाभिप्रेत्योक्तं—

नारदेन, ( व्य० प० १३।१ )
विभागोऽर्थस्य पैत्रस्य तनयैर्यत्र कल्प्यते ।
दायभाग इति प्रोक्तं व्यवहारपदं बुधैः ॥ इति ।

पैत्रस्येति स्वत्वनिमित्तसंबन्धोपलक्षणम् । तनयैरित्यपि प्रत्यासन्नोपलक्षणम् ।

इदमिह निरूपणीयम् । कस्मिन्काले कस्य कथं

यति पुरुषस्यैव नियमातिक्रमदोष इति नियमातिक्रमार्जितस्यापि स्वत्वमविकृतम् । अन्यथा क्रतुसिद्ध्यभावात् । न चैतावता चौर्यादिप्राप्तस्यापि स्वत्वं स्यादिति मन्तव्यम् । लोके तत्र स्वत्वप्रसिद्ध्यभावात् व्यवहारविसंवादात् ।

एवं प्रतिग्रहाद्युपायकं स्वत्वे लौकिके स्थिते ब्राह्मणस्य प्रतिग्रहादय उपायाः, क्षत्रियस्य विजितादयो, वैश्यस्य कृष्यादयः, शूद्रस्य शुश्रूषादय इत्यदृष्टार्था नियमाः। रिक्थादयस्तु सर्वसाधारणाः, स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेष्वित्युक्ताः । तत्राप्रतिबन्धो दायो रिक्थम् । क्रयः प्रसिद्धः । संविभागः सप्रतिबन्धो दायः । परिग्रहोऽनन्यपूर्वस्य जलतृणकाष्ठादेः स्वीकारः । अधिगमो निध्यादेः प्राप्तिः । एतेषु निमित्तेषु सत्सु स्वामी भवति, ज्ञातेषु ज्ञायते स्वामी। ब्राह्मणस्याधिकं लब्धमिति । ब्राह्मणस्य प्रतिग्रहादिना यल्लब्धं तदधिकमसाधारणम् । क्षत्रियस्य विजितमित्यत्राधिकमित्यनुवर्तते । क्षत्रियस्य विजयदण्डादिलब्धमसाधारणम् । निर्विष्टं वैश्यशूद्रयोरित्यत्राप्यधिकमित्यनुवर्तते । वैश्यस्य कृषिगोरक्षादिलब्धं निर्विष्टं तद् असाधारणम्, शूद्रस्य द्विजशुश्रूषादिना भृतिरूपेण यल्लब्धं तद् असाधारणम् ।

एवमनुलोमजानां प्रतिलोमजानां च लोकप्रसिद्धेषु स्वत्वहेतुषु यद्यदसाधारणमुक्तं, सूतानामश्वसारथ्यमित्यादि, तत्तत्सर्वं निर्विष्टशब्देनोच्यते । सर्वस्यापि भृतिरूपत्वात् । निर्वेशो भृतिभोगयोरिति

स्त्रगम्यानां न लौकिकक्रियासाधनत्वमस्ति । नन्वाहवनीयादीनामपि पाकादिसाधनत्वमस्त्येव । नैतत् । न हि तत्राहवनीयादिरूपेण पाकादिसाधनत्वम्, किं तर्हि प्रत्यक्षादिपरिदृश्यमानाग्न्यादिरूपेण । इह तु सुवर्णादिरूपेण न क्रयादिसाधनत्वम् अपि तु स्वत्वेनैव । न हि यस्य यत्स्वं न भवति तत्तस्य क्रयाद्यर्थक्रियां साधयति । अपि च । प्रत्यन्तवासिनामप्यदृष्टशास्त्रव्यवहाराणां स्वत्वव्यवहारो दृश्यते । क्रयविक्रयादिदर्शनात् । किंच । नियतोपायकं स्वत्वं लोकसिद्धमेवेति न्यायविदो मन्यन्ते ।

तथाहि । लिप्सासूत्रे तृतीये वर्णके द्रव्यार्जननियमानां क्रत्वर्थत्वे स्वत्वमेव न स्यात् स्वत्वस्यालौकिकत्वादिति पूर्वपक्षासम्भवमाशङ्क्य द्रव्यार्जनस्य प्रतिग्रहादिना स्वत्वसाधनत्वं लोकसिद्धमिति पूर्वपक्षः समर्थितो गुरुणा "ननु द्रव्यार्जनस्य क्रत्वर्थत्वे स्वत्वमेव न भवतीति याग एव न संवर्तेत, प्रलपितमिदं केनापि अर्जनं स्वत्वं नापादयतीति विप्रतिषिद्धम्" इति वदता । तथा सिद्धान्तेऽपि स्वत्वस्य लौकिकत्वमङ्गीकृत्यैव विचारप्रयोजनमुक्तम्, अतो नियमातिक्रमः पुरुषस्य न क्रतोरिति । अस्य चार्थ एवं विवृतः । यदा द्रव्यार्जननियमानां क्रत्वर्थत्वं तदा नियमार्जितेनैव द्रव्येण क्रतुसिद्धिरिति नियमातिक्रमार्जितेन द्रव्येण न क्रतुसिद्धिरिति न पुरुषस्य नियमातिक्रमदोषः पूर्वपक्षे । राद्धान्ते तु अर्जननियमस्य पुरुषार्थत्वात्तदतिक्रमेणार्जितेनापि द्रव्येण क्रतुसिद्धिर्भ-

स्वत्वं स्यात्तदोत्पन्नस्य पुत्रस्यापि तत्स्वं साधारणमिति द्रव्यसाध्येष्वाधानादिषु पितुरनधिकारः स्यात्। तथा, विभागात्प्राक् पितृप्रसादलब्धस्य विभागप्रतिषेधो नोपपद्यते। सर्वानुमत्या दत्तत्वाद्विभागप्राप्त्यभावात्।

यथाह, ( ना० व्य० प० १३।६ )

शौर्यभार्याधने चोभे यच्च विद्याधनं भवेत्।
त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः॥ इति।

तथा,

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत्।
सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते॥

इति प्रीतिदानवचनं नोपपद्यते जन्मनैव स्वत्वे। न च स्थावरादृते यद्दत्तमिति संबन्धो युक्तो, व्यवहितयोजनाप्रसङ्गात्। यदपि,

मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः।
स्थावरस्य तु सर्वस्य न पिता न पितामहः॥

तथा,

पितृप्रसादाद् भुज्यन्ते वस्त्राण्याभरणानि च।
स्थावरं तु न भुज्येत प्रसादे सति पैतृके॥

इति स्थावरस्य प्रसाददानप्रतिषेधवचनं, तत् पितामहोपात्तस्थावरविषयम्। अतीते पितामहे तद्धनं पितापुत्रयोः साधारणमपि मणिमुक्तादि पितुरेव, स्थावरं तु साधारणमित्यस्मादेव वचनादवगम्यते। तस्मान्न जन्मना स्वत्वं किन्तु स्वामिनाशाद्विभागाद्वा स्वत्वम्। अत एव पितुरूर्ध्वं विभा-

त्रिकाण्डीस्मरणात् । तत्तादसाधारणं वेदितव्यम् ।

यदपि पत्नी दुहितरश्चेत्यादिस्मरणं, तत्रापि स्वामिसम्बन्धितया बहुषु दायविभागितया प्राप्तेषु लोकप्रसिद्धेऽपि स्वत्वे व्यामोहनिवृत्त्यर्थं क्रमस्मरणमिति सर्वमनवद्यम् ।

यदपि मम स्वमनेनापहृतमिति न ब्रूयात्स्वत्वस्य लौकिकत्वे इति । तदप्यसत् । स्वत्वहेतुभूतक्रयादिसन्देहात्स्वत्वसन्देहोपपत्तेः ।

विचारप्रयोजनं तु— ( मनु० ११।१९३ )

यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् ।
तस्योत्सर्गेण शुद्ध्यन्ति जप्येन तपसैव च ॥ इति ।

शास्त्रैकसमधिगम्ये स्वत्वे गर्हितेनासत्प्रतिग्रहवाणिज्यादिना लब्धस्य स्वत्वमेव नास्तीति तत्पुत्राणां तदविभाज्यमेव । यदा तु लौकिकं स्वत्वं तदाऽसत्प्रतिग्रहादिलब्धस्यापि स्वत्वात् तत्पुत्राणां तद्विभाज्यमेव । तस्योत्सर्गेण शुध्यन्तीति प्रायश्चित्तमर्जयितुरेव । तत्पुत्रादीनां तु दायत्वेन स्वमिति न तेषां दोषसंबन्धः ।

( अ० १० श्लो० ११५ )

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥

इति मनुस्मरणात् ।

इदानीमिदं संदिह्यते, विभागात्स्वमुत स्वस्य सतो विभाग इति । तत्र विभागात्स्वमिति तावदुक्तम् । जातपुत्रस्याधानविधानात् । यदि जन्मनैव

क्षादिषु च स्थावरव्यतिरिक्तद्रव्यविनियोगे स्वातन्त्र्यमिति स्थितम् । स्थावरे तु स्वार्जिते पित्रादिप्राप्ते च पुत्रादिपारतन्त्र्यमेव ।

स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम् ।
असंभूय सुतान्सर्वान्न दानं न च विक्रयः ॥
ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः ।
वृत्तिं च तेऽभिकाङ्क्षन्ति न दानं न च विक्रयः ॥
इत्यादिस्मरणात् ।

अस्यापवादः,

एकोऽपि स्थावरे कुर्याद्दानाधमनविक्रयम् ।
आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः ॥ इति ।

अस्यार्थः । अप्राप्तव्यवहारेषु पुत्रेषु पौत्रेषु वा अनुज्ञानादावसमर्थेषु भ्रातृषु वा तथाविधेष्वविभक्तेष्वपि सकलकुटुम्बव्यापिन्यामापदि तत्पोषणे चावश्यं कर्तव्येषु पितृश्राद्धादिषु च स्थावरस्य दानाधमनविक्रयमेकोपि समर्थः कुर्यादिति ।

यत्तु वचनम्,

विभक्ता वाऽविभक्ता वा सपिण्डाः स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये ॥ इति,

तदपि अविभक्तेषु द्रव्यस्य मध्यकत्वादेकस्यानीश्वरत्वात् सर्वाभ्यनुज्ञाऽवश्यं कार्या, विभक्तेषूत्तरकालं विभक्ताविभक्तसंशयव्युदासेन व्यवहारसौकर्याय सर्वाभ्यनुज्ञा न पुनरेकस्यानीश्वरत्वेन, अतो विभक्तानुमतिव्यतिरेकेणापि व्यवहारः सिद्ध्यत्येवेति व्याख्येयम् ।

गात्प्राग्द्रव्यस्वत्वस्य प्रक्षीणत्वादन्येन गृह्यमाणं न निवार्येत इति चोद्यस्यानवकाशः । तथैकपुत्रस्यापि पितृप्रायणादेव पुत्रस्य स्वमिति न विभागमपेक्षते इति।

अत्रोच्यते । लोकप्रसिद्धमेव स्वत्वमित्युक्तम्। लोके च पुत्रादीनां जन्मनैव स्वत्वं प्रसिद्धतरं नापह्नवमर्हति। विभागशब्दश्च बहुस्वामिकधनविषयो लोकप्रसिद्धो नान्यदीयविषयो न प्रक्षीणविषयः। तथा, उत्पत्त्यैवार्थस्वामित्वं लभेतेत्याचार्या इति गौतमवचनात्। मणिमुक्ताप्रवालानामित्यादि वचनं च जन्मना स्वत्वपक्षे एवोपपद्यते। न च पितामहोपात्तस्थावरविषयमिति युक्तम्। न पिता न पितामह इति वचनात्। पितामहस्य हि स्वार्जितमपि पुत्रे पौत्रे च सति अदेयमिति वचनं जन्मना स्वत्वं गमयति। यथा परमते मणिमुक्तावस्त्राभरणादीनां पैतामहानामपि पितुरेव स्वत्वं वचनात्, एवमस्मन्मतेऽपि पित्राऽर्जितानामप्येतेषां पितुर्दानाधिकारो वचनादित्यविशेषः।

यत्तु भर्त्रा प्रीतेनेत्यादिविष्णुवचनं स्थावरस्य प्रीतिदानज्ञापनं, तत्स्वोपार्जितस्यापि पुत्राद्यभ्यनुज्ञयैवेति व्याख्येयम्। पूर्वोक्तैर्मणिमुक्तादिवचनैः स्थावरव्यतिरिक्तस्यैव प्रीतिदानयोग्यत्वनिश्चयात्। यदप्यर्थसाध्येषु वैदिकेषु कर्मस्वनधिकार इति, तत्र तद्विधानबलादेवाधिकारो गम्यते। तस्मात्पैतृके पैतामहे च द्रव्ये जन्मनैव स्वत्वम्। तथापि पितुरावश्यकेषु धर्मकृत्येषु वाचनिकेषु प्रसाददानकुटुम्बभरणापद्विमो-

२। दायशब्दार्थं तावदाह * तत्रेति । निरूपणीये दाय-विभागे इत्यर्थः । एतेन स्वोक्तस्वत्वनिरूपणानन्तरमात्र-व्यवच्छेदः । सम्बन्धश्च जन्यजनकभावादिर्धनस्वामिना सहान्य-स्य पुत्रादेर्बोध्यः । एतेन पूर्वद्रव्यस्वामिसम्बन्धाधीनं तत्स्वा-म्युपरमे यत्र द्रव्ये स्वत्वं तत्र निरूढो दायशब्द इति भाष्योक्त-मपास्तम् । विभागेनेत्यादिवक्ष्यमाणमूल्यादिविरोधापत्तेः । तत्र जन्मना स्वत्वाङ्गीकारात् । स च, दायश्च । अप्रतिबन्ध इत्या-दिर्विकल्पोक्तिः । तत्राद्यस्वरूपमाह * तत्रेति । तयोर्मध्ये इत्यर्थः । भूम्या पित्रेत्यादिना वक्ष्यमाणसिद्धान्तमभिसन्धायाह * पौत्राणां चेति । यथाक्रममन्वयः । तेषां स्वामिसत्त्वेऽपि जननमात्रेणा-न्योपायं विनापि स्वाम्यस्य सत्त्वात् दायस्य अप्रतिबन्धत्वमिति भावः । द्वितीयस्वरूपमाह * पितृव्यभ्रात्रादीनामिति । पितृव्य-श्च भ्राता च तत्प्रभृतीनामित्यर्थः । अभ्यर्हितत्वात्तस्य पूर्वनि-पातः । पितृव्यत्वादिकं च धनस्वामिनिरूपितमेव । अत्र वस्तु-कथने तात्पर्यं न तु क्रमे । पितृभ्रात्रादीनामिति पाठान्तरम् । तत्र क्रम एव । पितरौ च भ्रातरश्च आदिर्येषां तेषामिति तद-र्थः । विशेषान्तरमाह * स्वाम्यभावेचेति । * तदभावे, उभयो-स्तत्तद्रूपेणाभावे । * तत्पुत्रादिष्वपीति । पितृव्यादिपुत्रादिष्व-पीत्यर्थः । तत्रापि विद्यमानेषु धनस्वामिसम्बन्धिषु यस्य तेना-व्यवहितः सम्बन्धस्तस्याद्यो यस्य व्यवहितस्तस्य द्वितीय इति भावः ।

३। एवं दायशब्दार्थमुक्त्वा विभागशब्दार्थमाह * विभागो नामेति । अविभक्तद्रव्यसमुदायनिरूपितानामनेकेषां पुत्रादिनि-ष्ठस्वाम्यानां तदेकदेशेषु समुदितद्रव्यैकदेशेषु तद्विषयतया तन्नि-रूपिततया व्यवस्थापनं विशेषेण प्रत्येकमवस्थापनं यत् तत् वि-

यदपि,

स्वग्रामज्ञातिसामन्तदायादानुमतेन च ।
हिरण्योदकदानेन षड्भिर्गच्छति मेदिनी ॥ इति,

तत्रापि ग्रामानुमतिः—

प्रतिग्रहः प्रकाशः स्यात्स्थावरस्य विशेषतः ।

इति स्मरणात् व्यवहारप्रकाशनार्थमेवापेक्ष्यते न पुनर्ग्रामानुमत्या विना व्यवहारासिद्धिः । सामन्तानुमतिस्तु सीमाविप्रतिपत्तिनिरासाय । ज्ञातिदायादानुमतेस्तु प्रयोजनमुक्तमेव । हिरण्योदकदानेनेति ।

स्थावरे विक्रयो नास्ति कुर्यादाधिमनुज्ञया ।

इति स्थावरस्य विक्रयप्रतिषेधात्,

भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति ।
उभौ तौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ ॥

इति दानप्रशंसादर्शनाच्च, विक्रयेऽपि कर्तव्ये सहिरण्यमुदकं दत्त्वा दानरूपेण स्थावरविक्रयं कुर्यादित्यर्थः ।

पैतृके पैतामहे च धने जन्मनैव स्वत्वेऽपि विशेषं भूर्या पितामहोपात्तेत्यत्र वक्ष्यामः ।

या० १। निबन्धकारः पद्यबन्धेन सङ्गतिमाह * प्रमाणमिति । * इति भेदेनेति । इति एवंप्रकारेण द्विविधं प्रमाणमवान्तरभेदेन वर्णितमित्यर्थः । * योगेति । योगीश्वरेण याज्ञवल्क्येनेत्यर्थः । निरूपणीयव्यवहारपदानां मध्ये केषां चिन्निरूपणानन्तरं मध्ये प्रसक्तप्रमाणनिरूपणं कृत्वा ऽवसरसङ्गत्या प्राप्तावशिष्टव्यवहारपदनिरूपणप्रसङ्गे तावत् सर्वोपयोगित्वेन दायविभागो निरूप्यते इत्यर्थः ।

भागशब्दवाच्यमित्यर्थः।

४। उक्तार्थं समूलयति *एतदेवेति। * पैत्रस्येति। तस्येदमित्यण्। पित्र्यस्येति कल्पतरुधृतपाठस्तु न युक्तः। यतो देवताधिकारपठितत्वात्। *यत्र, व्यवहारे। तद्विवादपदं बुधैरिति पाठान्तरम्। तत्र तादिति विधेयविशेषणम्।

५। तत्र न्यूनतां परिहरन् तस्य स्वोक्तार्थपरत्वमाह *पैत्रस्येतीति। स्वत्वे निमित्तभूतो यः संबन्धः स्वामिसम्बन्धः प्रागुक्तस्तदुपलक्षणार्थमित्यर्थः। तेन पैतामहादेरपि ग्रहणम्। अत एवाह *तनयैरिति। *प्रत्यासन्नेति। अव्यवहितसम्बन्धीत्यर्थः। एतेनैकदेशगतस्यैव भूहिरण्यादावुत्पन्नस्यैव स्वत्वस्य विनिगमनाप्रमाणाभावेन वैशेषिकव्यवहारानर्हतया अवस्थितस्य गुटिकापातादिना स्वत्वव्यञ्जनं विभाग इति प्राच्योक्तमपास्तम्। निमित्तभूतसम्बन्धस्य साधारणत्वेन नियतैकदेशग्रहणे विनिगमकाभावेन च तथा दुर्वचत्वात्। अन्यथा तदाऽपि यथेच्छव्यवहारापत्तेर्मिथोविरोधाच्च।

६। एवं सङ्गतिमुक्त्वा विचारं कर्त्तुमादौ विभागप्रकरणार्थं निष्कृष्याह *इदमिति। *इह, विभागप्रकरणे। अत्र कस्येति द्रव्यनिर्देशः। कथमिति इतिकर्त्तव्यतायाः। कैश्चेति कर्तॄणाम्। *तत्र, चतुर्णां मध्ये। *इह, आदौ। तस्य मूलानारूढत्वात्सकलदायप्रकरणोपयोगित्वाच्चेति भावः। तत्रापि द्विविधो विचारः। तत्राद्यविचारस्य विभज्यमानं द्रव्यं विषयः। तत्र सन्देहः—

---

१ विनिगमना इदममुकस्य नान्यस्येत्यवधारणरूपा तत्प्रमाणाभावेन वैशेषिकव्यवहारः परस्परनैरपेक्ष्येण दानविक्रयादिलक्षणः तदनर्हतया अवस्थितस्य सतोऽप्यसत्कल्पस्य गुटिकापातादिना व्यञ्जनम् इदममुकस्येत्यवधारणं विभाग इत्यर्थः।

म्यम् । अलौकिकाहवनीयादिस्वरूपहीनलौकिकाग्नेस्तत्स्वरूपेण पाकसाधनत्वाङ्गीकारात् । न चालौकिकाहवनीयादिस्वरूपेणैव तदस्तु । तथाहि सति अलौकिकाहवनीयादिस्वरूपहीनलौकिकाग्नेः पाकसाधनत्वं न स्यात् । न च सामान्यस्वरूपेण सार्वत्रिकं तदस्तु । तथासति तस्यापि लौकिकत्वापत्त्या शास्त्रानर्थक्यापत्तेः। अतएव साधनत्वं फलोपहितत्वं निविष्टम्। तस्मान्न व्याप्तौ व्यभिचार इति भावः । नन्वेवं प्रकृतेऽपि सुवर्णादेः सुवर्णादिस्वरूपेणैव लौकिकक्रयविक्रयाद्यर्थक्रियासाधनत्वमास्तां न स्वत्वरूपेणेति कथं तस्य लौकिकत्वसिद्धिरत आह * इदन्त्विति । * स्वत्वेनैव, तद्रूपेण । तदेव ध्वनयन् उक्तमुपपादयति * नहीति ।

१२। लोकविशेषव्यवहारोऽपि स्वत्वस्यालौकिकत्वेऽनुपपद्यमानस्तस्य तत्त्वे प्रमाणमित्याह * अपिचेति । प्रत्यन्तो म्लेच्छदेशः स्यात् । सर्वथा शास्त्रज्ञानाभावसूचकमिदम् । तदाह *अदृष्टेति । अज्ञातेत्यर्थः । म्लेच्छादीनामिति यावत् । ननु तद्व्यवहारस्य तस्य तत्कल्पकत्वमुक्तम्, तत्र कल्पकसत्त्वे एव न मानमिति कथमर्थापत्त्या तत्सिद्धिः, अत आह * क्रयेति ।

१३। स्वत्वस्य तत्त्वं न्यायवित्संमतमपीत्याह * किंचेति । *नियतोपायकमिति । प्रतिग्रहार्जनादीत्यर्थः । * न्यायविदः, तेऽपि । कथमित्याशङ्कायामुक्तमुपपादयति* तथाहीत्यादिना । *लिप्सेति । तत्पदघटितसूत्रे इत्यर्थः ।

चतुर्थाध्याये प्रथमपादे द्वितीयाधिकरणसूत्रम्,

यस्मिन्प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणा विभक्तत्वात् ।

इति । तत्र प्रथमवर्णके क्रत्वर्थपुरुषार्थयोर्लक्षणविचारः, द्वितीये वर्णके गोदोहनादिकं क्रत्वर्थमुत पुरुषार्थमित्यादीविचारः।

कि्के सुवर्णरजतादिस्वरूपे दृष्टे सुवर्णादिकं भवति न वेति न संशयः तद्वत्स्वत्वेऽपि तदभावः स्यात् । लोकतः तत्कोटिनिश्चय-सत्त्वात् । जायते च संशयः । तस्मादपहर्तुः स्वं न भवतीति व-क्तुमशक्यमिति भावः ।

९। यद्वा । अथेति पूर्वपक्षवादी प्रष्टव्योऽपहर्त्तुः स्वं न भव-तीति प्रमितिरुत्पद्यते नवेति । तत्राद्ये आह *एवन्तर्हीति । यथेदं सुवर्णमिदं रजतमित्युत्पन्नायां प्रमितौ सुवर्णादिस्वरूपे संशयो न भवति तथा प्रकृतेऽपीति भावः । नापि द्वितीयः । प्रमित्यनुदयादेवापहर्तुः स्वं न भवतीति वक्तुं शक्यत्वादिति । पूर्वपक्षमुपसंहरति[1] *तस्मादिति ।

१०। सिद्धान्तमाह *अत्रोच्यतइति । स्वत्वस्य लौकिकत्व-मनुमानेन तावत्साधयति * लौकिकमेवेति । स्वत्वं पक्षः, लौ-किकत्वं साध्यं, लौकिकार्थेति हेतुः । तत्रान्वयव्याप्तौ दृष्टान्तमा-ह *व्रीह्यादिवदिति । तथाच स्वत्वं लौकिकं, लौकिकार्थक्रिया-साधनत्वात्, यद्यल्लौकिकार्थक्रियासाधनं तत्तल्लौकिकं यथा व्री-ह्यादिस्वरूपं, तथाचेदं, तस्माल्लौकिकमिति बोध्यम् । यद्यल्लौकि-कं न भवति तत्तल्लौकिकार्थक्रियासाधनमपि न भवति यथाऽऽह-वनीयादिरिति व्यतिरेकव्याप्तिमप्याह * आहवनीयादीनामि-ति । * हि, यतः ।

११। संभवे व्यतिरेकापरिशुद्धमनुमानं न प्रमाणमित्याक्षेपं सूचयन् व्याप्तौ व्यभिचारमाह * नन्वाहवनीयादीनामपीति । अलौकिकस्यापि तस्य लौकिकपाकादिसाधनत्वादुक्तव्यतिरेक-व्याप्तौ व्यभिचारादनुमानं दुष्टमिति भावः।समाधत्ते *नैतदिति। आहवनीयादौ स्वरूपद्वयसत्त्वेऽपि पाकसाधनत्वं न शास्त्रसमधिग-

१ प्रकरणप्रतिपाद्यस्यान्ते प्रतिपादनमुपसंहारः ।

अतएव याजनादिद्वारेण द्रव्यमर्जयन्नापीति शङ्कानन्तरं उक्तम् । तत्र प्रतिग्रहो नाम स्वीकारविशेषः । अर्जनं च द्रव्यप्राप्तिरूपम् । अतएव याजनादिना त्रियोगेनेति प्राक् स्मृत्युक्तम् ।

ईश्वरं चाप्युपासीत योगक्षेमार्थसिद्धये । (याज्ञ० १।१००)

इति वाक्यम् अर्जनोपायबोधकं,

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।

याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥

इति मानवं च (१०।७६) संगच्छते । प्रतिग्रहादिनियमाः स्वत्वं साधयन्त एव क्रतूपयुक्तधनद्वारा क्रत्वर्था भविष्यन्ति, यथाऽवघातो वितुषीभावं कुर्वन्नेव क्रतूपयुक्तव्रीह्यादिद्वारा क्रत्वर्थस्तद्वत् । तत्र स्वत्वं जन्मना पुत्रत्वादिकवत् अर्जनेनार्जकार्ज्ययोः तादृशस्वत्ववद् स्वस्वामिभावसंबन्धरूपं लौकिकमेव मन्यन्ते वृद्धाः ।

यतः,

संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः ।

श्रुतायामश्रुतायां वा क्रियायामभिधीयते ॥

इति हर्युक्तेः क्रियामूलकः कर्तृकर्मणोः सम्बन्धो लोकसिद्धो न मानान्तरापेक्षः । नचैवमर्जनक्रियापाये तज्जन्यस्य तस्याप्यपायः । संबन्धिनोराश्रययोः सत्त्वात् । नहि पितुः क्रियापाये पितृत्वमपैति । तथाच लौकिकत्वात्स्वत्वस्य स्वेन च क्रतुसिद्धेर्न तदभाव इति सिद्धं तेषां तत्त्वमिति भावः ।

१७। ननु तथाऽर्जनस्य स्वत्वसाधनत्वेऽपि तन्नियमानां क्रत्वर्थत्वादर्जनस्यापि क्रत्वर्थत्वेनान्यार्थत्वात् स्वमेव नेति क्रत्वभा-

---

१ अर्जकार्ज्ययोः स्वस्वामिभावसम्बन्धरूपस्य लौकिकस्य स्वत्वस्य अर्जनक्रियाजन्यत्वाङ्गीकारे ।

२ स्वत्वत्यागात्मकक्रत्वभावः ।

तृतीये वर्णके त्वयं विचारः। अनारभ्य पठ्यन्ते द्रव्यार्जननियमाः—ब्राह्मणः प्रतिग्रहादिना धनमर्जयेत्, राजन्यो जयादिना, वैश्यः कृष्यादिनेति। तत्र सन्देहः, किमेते क्रत्वर्था उत पुरुषार्था इति।

१४। तत्र पूर्वपक्षः। तेषां तत्त्वेऽपि क्रत्वर्थत्वानङ्गीकारेऽधिकारिणः अभावाद्विध्यानर्थक्यापत्तेः कर्तृप्रयुक्तद्रव्यद्वारा क्रत्वर्थत्वमेव युक्तमिति। अयं भावः। यथा क्रतुविधिना आक्षिप्ते द्रव्यार्जने सोमं क्रीणातीत्यादिर्द्रव्यार्जननियमः क्रत्वर्थस्तथैव प्रतिग्रहादिनियमोऽपि। अन्यथा तन्नियमस्य द्रव्यप्राप्तिस्वरूपे तत्कार्य्ये क्षुत्प्रतीघातादौ चानुपयोगाद्वैयर्थ्यं स्यात्। न च तत्र प्रकरणं क्रत्वर्थताबोधकमस्ति नात्रेति वैषम्यमिति वाच्यम्। अदृष्टोपायापेक्षक्रतुसामर्थ्येनादृष्टप्रयोजनापेक्षनियमसामर्थ्येनवाऽङ्गत्वसिद्धेः। नचैवं सर्वस्य द्रव्यस्य क्रत्वर्थत्वाज्जीवनं न स्यादिति वाच्यम्। अनियमोपार्जितेन तत्सिद्धेः। यद्वा जीवनं विना क्रत्वसिद्धेः क्रतुविधिभिरेव स्वार्थसिद्ध्यर्थं नियमोपार्जितस्य जीवनार्थत्वमभ्युपगतमिति। द्रव्यप्राप्तिरूपद्रव्यार्जनमत्रोदाहरणमिति तन्त्ररत्नकृदुक्तं तु वार्तिकविरुद्धं युक्तिविरुद्धं च। विधेयस्यैव मीमांसायां विचारादिति बोध्यम्।

१५। एवमाक्षिपति, * द्रव्येत्यादिना आशङ्क्येत्यन्तेन। द्रव्यार्जननियमानां क्रत्वर्थत्वे स्वत्वस्यालौकिकत्वेन लौकिकहेत्वजन्यत्वेन वैदिकहेत्वन्तराभावेन नियतप्रतिग्रहादिहेतूनां च क्रत्वर्थत्वेनान्यार्थत्वेनाकारणककार्योत्पत्त्यभावेन च स्वत्वानुत्पत्त्या स्वस्याभावात् अस्वेन च क्रत्वसिद्धेः क्रत्वर्था नियमा इति पूर्वपक्षासम्भव इत्यर्थः।

१६। तमुज्जीवयति, *द्रव्यार्जनस्येति। वैपरीत्येनान्वयः।

१९। यद्यपीदं न्यायेन तत्र स्थापितं तथापि यज्ञोपवीतादिवदुभयार्थता बोध्या । अतएव—

न्यायोपार्जितवित्तेन कर्तव्यं तु सदा द्विजैः ।

इति चतुर्विंशतिमतमुपपद्यते । अतएव जीविकानियमातिक्रमानवसरादिरिति बोध्यम् । अतएव द्रव्यस्य सर्वकार्यार्थत्वेन पुरुषार्थत्वात्तदार्जननियमस्यापि तदर्थत्वमिति सिद्धान्तसूत्रं सङ्गच्छते इति तत्त्वम् ।

२०। *विचारेति । अधिकरणविचारप्रयोजनमित्यर्थः । सिद्धान्तप्रयोजनस्वरूपमेवाह * अतो नियमातिक्रम इति । तत्प्रयुक्तदोष इत्यर्थः । अतएव विशदयति *अस्यचेति । प्रयोजनपरग्रन्थस्य मूलोक्तस्येत्यर्थः । * विवृतः, गुरुणेति शेषः । यद्देत्यादिना नियमातिक्रमदोष इतीत्यन्तेन ग्रन्थेनेति भावः । पूर्वपक्षे पुरुषस्य न ततो दोषः किंतु ततो न क्रतुसिद्धिः क्रतुवैगुण्यं ततः, सिद्धान्ते तु तेषां पुरुषार्थत्वात् व्यतिक्रमे पुरुषस्य दोषो न क्रतुवैगुण्यमिति तात्पर्यम् । एतव्द्यवच्छेद्यमेवाह *नियमातिक्रमार्जितेनेति । पूर्वपक्षे इति पूर्वान्वयि । भवतीति पाठः ।

२१। वस्तुतस्तु पूर्वपक्षे द्रव्यार्जनस्य कर्माङ्गत्वात्तत्तत्कर्मकाले एवादौ तदुपयुक्तद्रव्यार्जनम् । स्वतन्त्रकालत्वे मानाभावात् । तत्काले द्रव्यालाभेन कर्मलोपेऽपि न प्रत्यवायः । अर्थिन एवाधिकारात् । सिद्धान्तेतु पूर्वार्जितेन यष्टव्यमिति । एतेन पूर्वपक्षे प्रतिग्रहाद्यर्जितमेव क्रतौ ग्राह्यम्, सिद्धान्ते यथाकथंचित्सिद्धमिति राणकोक्तमपास्तम् । तन्नियमवाक्यतस्तदकरणे पुरुषस्यानिष्टभवनलाभेन प्रत्यवायवत् क्रतुफलाभावस्यापि कृतकष्टं प्रति कष्टजन्येष्टाभावस्याप्यनिष्टत्वेन दोषात् । अतएवापशूद्राधिकरणे शूद्रेण नाध्येयमिति निषेधातिक्रमे शूद्रस्य क्रतुफलासिद्धिः

नस्नदत्वस्य एवेति पूर्वपक्षासिद्धिरेवेत्याह * ननुचेत्यादिवर्त्ततेत्यन्तेन । उपहसन् परिहरति * प्रलपितमिति । अर्जनं स्वत्वं नापादयतीति वदता केनापि प्रलपितमिदं, यतो मिथो विप्रतिषिद्धमित्यर्थः । यद्वा केनापि प्रलपितमिदम् । तत्र हेतुमाह * अर्जनमिति । यत इत्यादिः । इति वदतेत्यस्य गुरुणेत्यत्रान्वयः । अर्जनं नामार्जकधर्मः प्रागुक्तरूपस्तत्प्रयुक्तः स्वस्वामिभावः संबन्धः । स च द्विनिष्ठः पितापुत्रत्ववत् । तथाचार्ज्यं विनाऽर्जनस्यानिष्पत्तेर्मे माता वन्ध्येतिवत् अर्जनं स्वत्वं नापादयतीति वचनं मिथो विरुद्धमित्यर्थः ।

१८। ननु पूर्वपक्ष्युक्तत्वादेव नायं तात्सिद्धान्तोऽत आह *सिद्धान्तेऽपीति । इत्थं हि सः । धनार्जनप्रवृत्ते ह्यधिकारिणि अर्थलभ्ये सति तन्नियमानां क्रतुनिवेशकल्पना न युक्ता । धनकामाधिकारे च रागात्प्रवृत्तो न नियतं प्रवर्त्तते । अनियमप्रवृत्तेर्न तद्विध्यानर्थक्यम् । किंचार्जनमात्रस्य क्रत्वर्थत्वे कृत्स्नमेवार्जितं क्रत्वर्थमिति जीवनोपायाभावात्सर्वक्रतुलोपः स्यात् । किञ्च लिङ्गस्य क्रत्वर्थत्वपुरुषार्थत्वबोधकत्वे साधारण्यान्न तेन क्रतुमात्रार्थत्वम् । अतो न क्रतोः क्रतुत्वेन द्रव्यार्जनाक्षेपकता किं तु पुरुषार्थत्वेन । अन्यथा "त्रयाणां द्रव्यसंपन्नः कर्मणो द्रव्यसिद्धित्वात्" इति षाष्ठाधिकरणोक्तेन क्रतूनां द्रव्यार्जनाक्षेपकत्वेन विरोधः स्यात् । द्वादशरात्रीर्दीक्षितो भृतिं चिन्वीतेति भृतिचयनादिकं तु पुरुषार्थार्जितद्रव्यबाधेन क्रत्वर्थतया विधीयते इति वैषम्यम् । तथाचोपायान्तरेण द्रव्यार्जने प्रत्यवायः कल्प्यते । न च हिरण्यं धार्यम् इतिवत् द्रव्यार्जनमेव फलार्थमस्त्विति वाच्यम् । दृष्टार्थत्वे सम्भवति अदृष्टार्थत्वस्यान्याय्यत्वात् । तस्मात्पुरुषार्था नियमा इति ।

नाभावात् किंतु तया स्वेच्छया यद्दत्तं तत्तदीयमेव। अतएव वक्ष्यति पितृभ्यां यस्येति । भार्याधनमविभाज्यमिति प्रागुक्तं तु तत्पद-स्वारस्यात् पतिकर्तृकविभागविषयकमिति न विरोधः। तमभिप्रेत्य विशेषमाह *तत्रचेति। दुहितृविषयेऽपीत्यर्थः। ननु दुहितृणा-मित्यस्योक्ततुल्यार्थत्वेन सामान्येन तेनैव सिद्धेःप्रत्तानामित्यादि व्यर्थमिति कथमस्य विशेषबोधकत्वमत आह *अस्यार्थः प्रत्तेति। प्रत्ता विवाहिता। अप्रत्ताऽनूढा। प्रतिष्ठिता सधना। अप्रतिष्ठिता निर्धना। तथाच तत्रापि विशेषबोधकत्वान्न वैयर्थ्यमिति भावः। एवार्थचशब्दस्योभयत्रान्वयइ इत्याह * एवेति।

च० १५। शङ्कते *दुहित्रिति *क इति।सामान्यवचनं त्वन्यविषय-कमिति नात्र प्रवृत्तिरिति मन्यते।पदार्थमुक्त्वा वाक्यार्थमाह *दु-हितृणामिति। सूचितमेवाह * एतच्चेति। *सिद्धमिति। अर्था-त्सिद्धमित्यर्थः। तद्द्वयमपि तस्यैव विषय इति भावः॥११७॥

मि० अविभाज्यमाह।

या० पितृद्रव्याविरोधेन यदन्यत्स्वयमर्जितम्।
मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत्॥ ११८॥
क्रमादभ्यागतं द्रव्यं हृतमप्युद्धरेत्तु यः।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च॥ ११९॥

मि० मातापित्रोर्द्रव्याविनाशेन यत्स्वयमर्जितं—मैत्रं मित्रसकाशाद्यल्लब्धम्, औद्वाहिकं विवाहलब्धं, दा-यादानां भ्रातृणां तन्न भवति।

क्रमात् पितृक्रमादायातं यत् किञ्चित् द्रव्यम् अन्यै-र्हृतम् असामर्थ्यादिना पित्रादिभिरनुद्धृतं यः पुत्राणां

भः। किन्तु पितृत्यागानुवादोऽयम्। लोकसिद्धस्यैवा-
नुवादकत्वेनैव प्रामाण्यान्निरवकाशं वचनानि।

अथवा,

समवर्तनन्तु यन्न्यस्तं सर्वं तत्र समांशिनः।

इति प्रातस्त्यागमपवाद इति मन्तुमर्हतु भवान्। अतश्च यत्किञ्चित्पितरि प्रेते इत्यस्मिन्वचने ज्येष्ठा-दिपदाविवक्षया प्रासङ्गिकं व्याख्यानमात्रम्। अतो मे-धातिथिभिः पितुः प्रागूर्ध्वं वा ऽविभाज्यत्वेनोक्तस्य यत्किञ्चित्पितरि प्रेते इत्यपवाद इति व्याख्येयम्।
[illegible]स्याविभाज्यमुक्तम्—

मनुना, (अ. [illegible] श्लो. २१९)

वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः।
योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते॥ इति।

धृतानामेव वस्त्राणामविभाज्यत्वम्। येन धृतं तत्तस्यैव। पितृधृतानि तु पितुरूर्ध्वं विभजतां श्राद्धभोक्त्रे दातव्यानि।

यथाह बृहस्पतिः,

वस्त्रालङ्कारशय्यादि पितुर्यद्वाहनादिकम्।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे समर्पयेत्॥ इति।

अभिनवानि तु वस्त्राणि विभाज्यान्येव। पत्रं वाहनमश्वशिबिकादि, तदपि येनारूढं तत्तस्यैव। पित्र्यं तु वस्त्रवदेव। अश्वादीनां बहुत्वे तु तद्विक्रयोपजीविनां विभाज्यत्वमेव। वैषम्येणाविभाज्यत्वे ज्येष्ठस्य। (अ. ९ श्लो. ११९)

अजाविकं सैकशफं न जातु विषमं भजेत्।

नारदवचनविरोधश्च। (व्य० प० १३।१०)

कुटुम्बं बिभृयाद् भ्रातुर्यो विद्यामधिगच्छतः।
भागं विद्याधनात्तस्मात्स लभेताश्रुतोऽपि सन्॥इति।

तथा, विद्याधनस्याविभाज्यस्य लक्षणमुक्तं—
कात्यायनेन,

परभक्तोपयोगेन विद्या प्राप्ताऽन्यतस्तु या।
तया लब्धं धनं यत्तु विद्याप्राप्तं तदुच्यते॥ इति।

तथा, पितृद्रव्याविरोधेनेत्यस्य भिन्नवाक्यत्वे प्रतिग्रहलब्धस्याविभाज्यत्वमाचारविरुद्धमापद्येत। एतदेव स्पष्टीकृतम्—

मनुना, (अ. ९ श्लो. २०८)

अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जयेत्।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च॥ इति।

श्रमेण सेवायुद्धादिना।

ननु पितृद्रव्याविरोधेन यन्मैत्रादिलब्धं द्रव्यं तत् अविभाज्यमिति न वक्तव्यम्। विभागप्राप्त्यभावात्। यद्येन लब्धं तत्तस्यैव नान्यस्येति प्रसिद्धतरम्। प्राप्तिपूर्वकश्च प्रतिषेधः।

अत्र काश्चिदित्थं प्राप्तिमाह।

यत्किञ्चित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति।
भागो यवीयसां तत्र यदि विद्यानुपालिनः॥

इति ज्येष्ठो वा कनिष्ठो वा मध्यमो वा पितरि प्रेते अप्रेते वा यवीयसां वर्षीयसां चेति व्याख्यानेन पितरि सत्यसति च मैत्रादीनां विभाज्यत्वं प्राप्तं प्रतिषिध्यते इति। तदसत्। न ह्यत्र प्राप्तस्य प्रतिषे-

नत्मभृतय इत्यन्ये। प्रचारो गृहारामादिषु प्रवेशनिर्गममार्गः। सोऽप्यविभाज्यः। यत्तूशनसा क्षेत्रस्याविभाज्यत्वमुक्तम्,

अविभाज्यं सगोत्राणामासहस्रकुलादपि।
याज्यं क्षेत्रं च पत्रं च कृतान्नमुदकं स्त्रियः॥
इति, तद् ब्राह्मणोत्पन्नक्षत्रियादिपुत्रविषयम्।
न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै।
यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेत्॥

इति स्मरणात्। याज्यं याजनकर्मलब्धम्। पितृप्रसादलब्धस्याविभाज्यत्वं वक्ष्यते। नियमातिक्रमार्जितस्याविभाज्यत्वमनन्तरमेव निरासि। पितृद्रव्याविरोधेन यदर्जितं तद्विभजनीयमिति स्थितम्। तत्रार्जकस्य भागद्वयम्। वासिष्ठवचनात्। येन चैषां स्वयमुपार्जितं स्यात्स द्व्यंशमेव लभेतेति॥ ११८॥ ११९॥

या० १। *अविभाज्यमिति। विभागदार्ढ्यायैव। अत एव प्रकरणसङ्गतिरिति भावः। अत्र वाऽपिशब्दौ विकल्पे। चैवेति चेति च पाठान्तरम्। पित्रित्यत्रैकशेषः उक्तयुक्तेरित्याह *मातेति। अत्र विरोधो नाश एवेत्याह *द्रव्याविनाशेनेति। *यदिति। किंचिदिति शेषः। मूले तथैव पाठात्। अन्यादिति मूले पाठे अत्रापि अन्यादिति शेषः। पितृद्रव्याभिन्नमिति तदर्थः। तद्भेदानाह *मैत्रमित्यादिना। लिङ्गार्थाविवक्षयाऽऽह *भवतीति। एवमग्रेऽपि।

२। क्रमादिति द्वितीयपद्यप्रतीकम्। अथ व्याचष्टे *पित्रिति। नन्वेवं पूर्वैरेवोद्धारः कुतो न कृतोऽत आह *असामर्थ्येति। अभ्यनुज्ञाया अभावे देयमेवेत्याह *इतरेति। तात्पर्यार्थमाह

अजाविकं सैकशफं ज्येष्ठस्यैव विधीयते ॥

इति मनुस्मरणात्। अलङ्कारोऽपि यो येन धृतः स तस्यैव। अधृतः साधारणो विभाज्य एव।

( मनु० अ० ९ श्लो० २०० )

पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत्।
न तं भजेरन्दायादा भजमानाः पतन्ति ते ॥

इति। अलङ्कारो धृतो भवेदिति विशेषेणोपादानादधृतानां विभाज्यत्वं गम्यते। कृतान्नं तण्डुलमोदकादि तदप्यविभाज्यं यथासम्भवं भोक्तव्यम्। उदकं तूदकाधारः कूपादिः। तच्च विषमं मूल्यद्वारेण न विभाज्यं, पर्यायेणोपभोक्तव्यम्। स्त्रियश्च दास्यो विषमा न मूल्यद्वारेण विभाज्याः पर्यायेण कर्म कारयितव्याः। अवरुद्धास्तु पित्रा स्वैरिण्याद्याः समा अपि पुत्रैर्न विभाज्याः। स्त्रीषु च संयुक्तास्वविभाग इति गौतमस्मरणात्। योगश्च क्षेमश्च योगक्षेमम्। योगशब्देनालब्धलाभकारणं श्रौतस्मार्ताग्निसाध्यमिष्टं कर्म लक्ष्यते। क्षेमशब्देन लब्धपरिरक्षणहेतुभूतं बहिर्वेदिदानतडागारामनिर्माणादि पूर्तं कर्म लक्ष्यते। तदुभयं पैतृकमपि पितृद्रव्याविरोधार्जितमप्यविभाज्यम्।

यथाह लौगाक्षिः,

क्षेमं पूर्तं योगमिष्टमित्याहुस्तत्त्वदर्शिनः।
अविभाज्ये च ते प्रोक्ते शयनासनमेव च ॥ इति।

योगक्षेमशब्देन योगक्षेमकारिणो राजमन्त्रिपुरोहितादय उच्यन्ते इति केचित्। छत्रचामरशस्त्रोपा-

* नतथेति । पितृद्रव्याविरोधेनोपार्जितं मैत्रादि न विभजनीयमित्यर्थः ।

६। न केवलमिदं स्ववचनोपात्तसर्वशेषो ऽपि तु अन्यदपि स्मृत्यन्तरेषु यद्यदविभाज्यमुक्तं तस्याप्ययं सर्वस्य शेषो मैत्रादीनामुपलक्षणत्वात्। एवं च तादृशमैत्रादेर्यथा विभाज्यत्वं तथाऽन्यस्यापीत्याह * पितृद्रव्येति। (केचित् तन्न। तथा सति मैत्राद्यन्येषां स्मृत्यन्तरोक्तानामेव तत्त्वलाभेऽपि प्रतिग्रहार्जितस्यातत्त्वेन तत्र तत्त्वस्य दुर्वचत्वात्। तस्मादस्य तदन्यसर्वोपलक्षणत्वं वाच्यम्।) यद्वा मैत्रादेस्तत्त्वे तुल्ययुक्त्यैतत्सिद्धिरित्याह * पितृद्रव्येति । कचिन्नरहितः पाठः। अयमेव युक्तो व्याख्यातृशैलीस्वरससिद्धश्च । पुनर्वाच्यार्थकथने फलाभावश्च । तदा तथेत्युत्तरशेष एव न स्वतन्त्रम् । किञ्चेति तदर्थः । आशयस्तूक्त एवेति युक्तोऽयम् ।

केचित्तु न तथेत्येव पाठः। तथाप्युत्तरशेषत्वमेव। न स्वातन्त्र्यमित्यर्थः । पितृद्रव्याविरोधेनेत्यस्य सर्वशेषत्वादेव वचनोपात्तमैत्रादिमात्रशेषत्वादेव यथा तद्विरोधेनोपार्जितानां मैत्रादीनां विभाज्यत्वं तथा मैत्राद्यन्यत्वात्पितृद्रव्याविरोधेन प्रतिग्रहोपार्जितस्यापि न विभाज्यत्वमित्यर्थः। तस्य तदशेषत्वेन स्वातन्त्र्ये तु तत्रापि विरोधेनोपार्जिते विभाज्यत्वापत्तिरिति भाव इत्याहुः। तन्न। अनुपदं वक्ष्यमाणतथेत्यादिग्रन्थविरोधापत्तेः । ग्रन्थशैल्यस्वरसाच्च ।

७। ननु तथैवास्त्विति तत्रेष्टापत्तिरिति माऽस्तु तस्य तच्छेषत्वमिति स्वातन्त्र्यमेवास्तु ब्राह्मणवसिष्ठन्यायेन तस्य मैत्रादिभिन्नपरत्वसम्भवादत उक्तं द्रढयन् आह * अस्यचेति । तस्य तदशेषत्वे किञ्चित्पदादिस्वारस्याद्यद्यत्तदविरोधेनार्जितं तत्सर्वमविभाज्यमित्यर्थस्य वचनव्यक्त्या लाभेन साधारणेनानेनैव तादृशप्रतिग्रहलब्धवत् तादृशमैत्रादेरविभाज्यत्वे सिद्धे पुनस्तदभिः

* उद्धर्त्तेति। एवमग्रेऽपि। तत्र विशेषमाह * क्षेत्रे चेति। च-स्त्वर्थे। तत्र च क्षेत्रे इति पाठान्तरं युक्तम्। तेषां मध्ये तद्विषये इत्यर्थः। *सर्वेषाम्, उद्धर्त्रादीनाम्। * यथाभागमिति। सर्वस्या भूमेस्तुर्यांशमुद्धर्त्रे दत्त्वा शेषं तेन सह सर्वे यथांशं गृह्णीयुरित्यर्थः। क्रमादित्यस्योद्धरणान्वये फलाभावेन मूलैकवाक्यतया च क्रमादिति वचनस्यप्रतीकं गृहीत्वा शेषं पूरयति * अभ्यागतामिति।

३। तुर्यपादं व्याचष्टे * तयेति। एवेत्यस्यात्रान्वयेनाह * विद्ययैवेति। विनिगमनाविरहात्स्मृत्यन्तरैकवाक्यतया चास्यार्थ-द्वयमाह * वेदाध्ययनेनेति। अस्य मुख्यत्वादिति भावः। चार्थमाह * तदपीति। एवं च तया पाठ एव तत्संमतः।

४। इदं चान्यत्, पितृस्वयंदायादिपदस्वारस्यात् भ्रातॄणां मध्ये एकेनार्जितविषयं सर्वविभागेषु। एवं नारदीयशौर्यविषये ऽपि बोध्यम्। एवं प्रकारेण पित्रार्जिते तु अग्रे वक्ष्यते।

५। तत् स्वतन्त्रम् अव्यवहितविशेषणं सर्वविशेषणं वेत्येवम् उक्तं व्याख्यानं साधारणमपि प्रकरणसंगत्यर्थं स्वाभिमत-परमिति दर्शयति * अत्र चेत्यादिना। *अत्र च, मूल-वाक्ये च। अन्यदर्थमाह * किंचिदिति। एवं पाठ एव वा। तत्र मन्वाद्येकवाक्यत्वार्थं च तृतीयं * सर्वशेष इति। विभागानर्हत्वेन विशिष्य वचनोपात्तानां मैत्रादीनां सर्वेषां शेषो ऽयमंश इत्यर्थः। * अतश्च, तस्य सर्वशेषत्वे च। फलितमाह *तथा चेति। विरोधेनेत्यस्य व्याख्या *प्रत्युपकारेणेति। यद्वा प्रत्युपकारे विरोधो नाशो हेतुः। अत एव तस्य प्रत्युपकारत्वम्। आद्ये वाचनिकपितृद्रव्याविरोधाभावादाह *आसुरादीति। *पित्रा चेति। अत एव सर्वविभागेष्वित्युक्तम्। *विभजनीयमिति। अत एव विभागप्रकरणसङ्गतिः। स्पष्टार्थं वाच्यार्थमाह

द्धेतुकविभागकथनं नारदीयं विरुध्येत। तस्मात्तस्य स्वतो न तादृशस्य विभाज्यत्वाविभाज्यत्वे किं तु अविरोधे ऽविभाज्यत्वं विरोधे विभाज्यत्वमिति विरोधस्वरूपमेव नारदेन हेतुत्वेनोक्तमिति सिद्धान्ते एकवाक्यता सिद्धा । मूले पित्रित्युपलक्षणम्। किन्तु यदि स्वाभाविकी विद्याधनांशप्राप्तिर्नारदाभिमता भवेत्तर्हि तस्य हेतुत्वोक्तिरनर्थिका स्यात्। एवं च विद्याधनस्य यथाकथञ्चिदर्जितस्य न स्वतो विभागार्हता । अन्यथा पितृद्रव्यविरोधेनाप्यार्जितस्याविभाज्यत्वे अत्राप्याविभाज्यत्वमेवोचितमिति विभागकथनस्यैवासङ्गतिरिति भावः।

१०। अत्राश्रुतोऽपीत्यनेन सूचितम्, अश्रुते पित्रादिद्रव्यविरोध एव भागहेतुः सश्रुते तु तद्वत्त्वं विद्यावत्त्वमपि भागहेतुः। अत एव—

कात्यायनः,

नाविद्यानां तु वैद्येन देयं विद्याधनात्क्वचित् ।

समविद्याधिकानां तु देयं वैद्येन तद्धनम् ॥ इति ।

वैद्यो विद्यावान् । अयं च सिद्धान्तेऽविभाज्यत्वेन प्राप्तस्यापवादः । इदमनुपदमेव स्फुटीभविष्यति । एतेन नारदीयं कातीयापवाद इति मन्दोक्तमपास्तम्। कातीयेन अविभाज्यस्यैव तस्य लक्षणकरणात् । प्रकरणात् । तथैव च व्याख्यात्रोक्तम्। अन्यथा तद्विशेषणासङ्गतिरेव स्यात् । एवं च विद्याधनमन्यदपीति नारदादिविरोधो व्याख्यातुरिति बोध्यम् ।

११। ननु विभक्तभ्रातृस्थलेऽपूर्वार्थबोधकं तत्। किञ्च मैत्रादिवचनप्राप्तस्य सर्वथाऽविभाज्यत्वस्यापवादकं सिद्धान्ते तद्वत्तद्विशेषे तदिति न विरोधोऽतो ऽत्र दोषान्तरमाह * तथाविद्येति। *परेति। पित्रादिभिन्नौदनाद्यभ्यवहरणेनेत्यर्थः। * अन्यतः, पित्रादिभिन्नात् । तथा च पित्रादिद्रव्याविरोधेन या विद्या

धानानर्थक्यमित्यर्थः । ब्राह्मणवसिष्ठन्यायस्य तु न अयं विषयः । सति गमके ऽन्यथानुपपत्तौ च तत्प्रवृत्तेः । नैवं प्रकृते । अन्यथा भिन्नविषयतया तत्साफल्यं शङ्कते * अथेति । अपिः पूर्वसमुच्चये । अविभाज्यत्वादिति फलरूपहेतौ पञ्चमी । तत्प्रतिपादनार्थतयेत्यर्थः । अविभाज्यत्वायेति पाठस्तु सुगम एव । *समाचारेति । शिष्टाचाररूपप्रमाणाविरोध इत्यर्थः ।

८। ननु श्रुत्यादीनां पूर्वपूर्वप्राबल्यस्योक्तत्वेन वचनादाचारस्य दुर्बलत्वेनेदमयुक्तम्, आचारेण स्मृतिकल्पनेऽपि क्लृप्तस्मृतेर्झटित्युपस्थितेः प्राबल्यमेवेति चेन्न । आशयानवबोधात् । तथाहि । बाधो ऽगतिका गतिः । अबाधेनैवेति न्यायात् । न हि दुर्बलमित्येव बाधते । किं तु विरोधे निरवकाशत्वे च । विरोधश्चैकत्र मिथो भिन्नोक्त्या नैवमत्र । अबाधेनैवोपपत्तौ बाधो न न्याय्य इति न्यायेन मैत्रादिवचनस्यास्मदुक्तरीत्योपपत्तेः । अत एव न निरवकाशत्वमपि । एवं चानर्थक्यप्रतिहतानामिति न्यायेन विपरीतो बाध इति मदुक्तरीत्या तस्य तथार्थकत्वे शिष्टाचाराविरोधः सम्यगेवेति दिक् ।

९। न केवलमाचाराविरोधोऽपि तु मैत्राद्यन्तर्गतविद्यालब्धविषये स्मृतिविरोधोऽपीत्याह *विद्यालब्धे इति । तदंशे इत्यर्थः । तदेवाह * कुटुम्बमिति । विद्याध्ययनं कुर्वतो भ्रातुर्योऽन्यो भ्राता तस्य कुटुम्बं पोषयति सोऽश्रुतोपि सन् वेदशास्त्राध्ययनरहितो मूर्खोपि सन् तस्माद्विद्याधनात्तदर्जितविद्यया लब्धाद्धनाद्भागमंशं लभेतेत्यर्थः । असुतोऽपीति पाठान्तरम् । अत्र कुटुम्बभरणस्य धनग्रहणे हेतुत्वोक्त्या औपाधिकी विद्याधनांशप्राप्तिर्न भ्रातृत्वेन स्वाभाविकीत्युक्तम् । यदि कथमप्यर्जितस्य विद्याधनस्य तत्त्वेनाविभाज्यत्वं मूलाभिमतं स्यात्तदा त-

मेधातिथिकल्पतर्वादिकृतो न युक्तः । अनेकस्मृतिव्याकोपापत्तेः । एवं तन्मैत्र्यार्जितपाठस्त्वयुक्ततर एव । यद्वा तदा तत् पैतामहविषयकमस्तु । एवं च भ्रातृभागशेषमाहानुपघ्नन्निती त्यपि तदुक्तं तथेति ज्ञेयम् । आदिना कृष्यादि । तस्मात्पितृद्रव्याविरोधेनेत्यादिना वचनद्वयेन एकभ्रात्रर्जितं मैत्रादिकमन्यस्य नांश इति प्रतिपादितम् । पितृपदादायादादिपदस्वारस्यात् । तथा च न पित्राद्यार्जितरपरमिति सिद्धम् । एतेनायमाचारो भ्रातृस्नेहेन पौरुषबुद्ध्या वा अन्यत्र तथा दर्शनेन तन्मूलको वा । यत्किञ्चित्पितरीति मानवस्य एवं तात्पर्यम्. पितेव पालयेत् पुत्रानिति मानवात्पितापुत्रवद्भावेन तद्वज्ज्येष्ठधने कनिष्ठाधिकारः । पित्रार्जिते ऽविदुषामपि ज्येष्ठार्जिते तु विदुषामेवेति विशेषः । इदं च "पितरि प्रेते" इति "ज्येष्ठ" इति "यवीयसाम्" इति "विद्यानुपालिन" इति चोक्त्या लभ्यते । तस्मादविभक्तार्जितत्वमात्रेणाविभक्तभ्रात्रन्तरस्य भवतीत्युक्तमेवेति प्राच्योक्तमपास्तम् । यत्किञ्चिदित्यस्य वैयर्थ्यापत्तेः ।

१५। ननु नैतद्युक्तं, पैतामहे पैतृके च धने पुत्रादेर्जन्मनैव स्वत्वेऽपि भ्रातुर्भ्रात्रर्जिते तदभावेन भ्रातृप्राप्तमैत्रादिधने यद्येन प्राप्तं तत्तस्यैवेति प्रसिद्ध्या विभागप्राप्तेरेवाभावेन तदविभाज्यमिति निषेधकवचनस्यैवोक्तस्यासङ्गतेरित्याशयेनाह * ननु पितृद्रव्येति । प्राप्त्यभावे हेतुमाह * यदिति । यत इत्यादिः । एवं चान्यदीये स्वत्वमेव नेति भावः । अवक्तव्यत्वे हेत्वन्तरमाह *प्रासीति । चो ह्यर्थे ।

१६।एकदेशिमतं दूषयितुं मैत्रादीनां विभागप्राप्तिं तन्मतेनाह * अत्र कश्चिदिति । विभागप्रापकं मनुवचनमाह * यत्किञ्चिदिति । * अधिगच्छति, प्राप्नोति । * तत्र, धने । * य-

तद्विद्याल्लब्धा तया यत्प्राप्तं धनं तद्विद्याप्राप्तं धनं नान्यत् ईदृशमेवाविभाज्यम् अतोऽन्यथा तु तद्विद्याधनमेव नेति तद्विभाज्यमेवेति कात्यायनतात्पर्येण तथाऽर्थस्यैतद्विरुद्धत्वं स्पष्टमेवेति भावः। तस्मान्नारदविरोधाभावेऽपि कातीयविरोधेन तथाऽर्थस्य दुर्वचत्वेन तथा सार्थक्याभावेन तस्य तदशेषत्वे तदानर्थक्यदोषः सुस्थ एव।

१२। तत्र दोषान्तरमाह * तथेति। * प्रतिग्रहेति। पितृद्रव्याविरोधेनेत्यादेः तदा प्रागुक्तरीत्या यद्यत्पितृद्रव्येत्याद्यर्थेन अदृष्टार्थदानक्रियासम्प्रदानभूतस्यैव प्रतिग्रहीतृत्वेन प्रतिग्रहलब्धस्य पितृद्रव्याविरोधेनोपार्जितत्वस्यापि सम्भवेन तस्याप्यविभाज्यत्वापत्तौ वृद्धव्यवहारविरोध इति भावः। तस्मान्मैत्रादिसर्वस्मृत्युक्तविषये विरोधाविरोधकृतद्वैविध्येऽपि प्रतिग्रहविषये सर्वथा विभाज्यत्वमेवाचारसिद्धम्। तद्विषये स्मार्तनिषेधस्तु याजनाध्यापनलब्धवन्न क्वाप्युपलभ्यते इति तत्त्वम्।

१३। *एतदेवेति। पितृद्रव्याविरोधेनोपार्जितस्य मैत्रादिशेषत्वमेवेत्यर्थः। *अनुपघ्नन्निति। अनुपयुञ्जान्नित्यर्थः। अत्र पूर्वार्धार्थः स्पष्टः। अनुपघ्नन्नित्यत्र विभक्तिविपरिणामेन तदनुपघ्नता यत् विद्यया लब्धं तत् पूर्वं चोभयमपि दायादेभ्यो न देयमित्यर्थेन पितृद्रव्यविनाशरूपविरोधाभावेन यद्विद्यालब्धं श्रमलब्धं च तदविभाज्यमिति सिद्ध्या मैत्रादिगणान्तर्गतविद्याधनस्य तथात्वात्तस्योपलक्षणत्वेन मैत्रादीनामपि तथात्वमाविष्कृतमिति भावः।

१४। मानवे—

स्वयमीहितलब्धं च नाकामो दातुमर्हति।

इत्युत्तरार्द्धपाठो, यच्च स्वयमीहितं वाञ्छितं सत् मित्रादिभ्यो लब्धं तदकामोऽनिच्छन् भ्रात्रादिभ्यो न दातुमर्हतीत्यर्थको

ति । तव दुराग्रहस्य तथोपपत्तेश्चेत्यर्थः । * ज्येष्ठादीति । अवि-
वक्षायां कारणाभावात् । तथा च त्रिनिगमकं स्पष्टमेवेति भावः ।
तदाह *व्यामोहेति । नन्वेवं का तस्य सिद्धान्ते गतिः अत आह
*अत इति । त्वदुक्तार्थासम्भवादित्यर्थः । *पितुरिति । मरणा-
दिति शेषः । अविभाज्यत्वेनेति छेदः । * उक्तस्य, मैत्रादिधन-
स्य । * इति, इत्यनेन । पितरि मृते ज्येष्ठेनार्जितान्मैत्रादिकाद्
भागं कनीयांसो लभन्ते यदि ते विद्वांस इत्यर्थस्तस्येति भावः ।
अत एव पितृद्रव्याविरोधेनापि ज्येष्ठो विद्यादिना धनमर्जयति
तत्र कनिष्ठानामपि भागो यदि ते विद्याभ्यासरता इति कल्प-
तरुमेधातिथिप्रभृतयः । एवं प्रागुक्तकातीयादेरपि सिद्धान्ते तद-
पवादत्वं बोध्यम् ।

१९। न्यूनतां निराचष्टे * तथाऽन्यादिति ।
अथान्यदित्यपपाठः । अपिना—
विद्याधनं तु यद्यस्य तत्तस्यैव धनं भवेत् ।
मैत्रमौद्वाहिकं चैव माधुपर्किकमेव च ॥

इत्यस्य सङ्ग्रहः। मधुपर्कदानेन पूज्यतया यल्लब्धम्। *प्रचक्षते
इति । पुस्तकमिति मन्दधृतपाठस्तु व्याख्यातृकल्पतरुमेधातिथ्या-
द्यसंमतत्वादुपेक्ष्यः। वस्त्रमित्यादि क्रमेण व्याचष्टे *धृतानामित्या-
दिना । मूले जातावेकवचनमिति भावः । एतेन वस्त्रपत्रालंका-
रोदकानामेकत्वं विवक्षितम् । वस्त्रं च सममूल्यम् न तु महार्घ-
मिति मेधातिथिकल्पतर्वाद्युक्तमपास्तम् । उद्देश्यविशेषणत्वात् ।
धृतं वस्त्रमलङ्कार इति कातीये धृतत्वस्यैव तदुभयसाधारणस्योक्ते-
श्च । तदेतदभिप्रेत्याह * धृतानामेवेति।एवेन अधृतव्यवच्छेदः । तत्र
पुत्रादिस्थले आह *यदिति । लोकप्रसिद्धमपीदम् । अथ पितृस्थले
आह *पित्रेति । *पितुः,मरणात् । *ऊर्ध्वमिति । अनेन जीवद्वि-

दीति। यदि यवीयांसो विद्यानुपालिनः विद्यासंरक्षकाः विद्वांस इति यावदित्यर्थः। विद्यानुयायिन इति पाठान्तरम्। तुर्यपादेनेदं सूचितम्, यदि तेऽविद्वांसस्तदा नेति।

तथाच गौतमः, स्वयमर्जितमवैद्येभ्यो वैद्यः कामं न दद्यादिति।

नारदोऽपि, ( व्य० प० १३।११ )

वैद्योऽवैद्याय नाकामो दद्यादंशं ततो धनात्।

पित्र्यं द्रव्यं समाश्रित्य नचेत्तेन तदाहृतम्॥ इति।

कात्यायनोऽपि प्रागुक्तः। अस्य वचनस्यार्थकथनेन मैत्रादिविभागप्राप्तिपरत्वमाह *ज्येष्ठो वेति। ज्येष्ठशब्दस्त्रयाणामुपलक्षणम्। यवीयःशब्दो ज्यायसामपि। प्रेते इति अप्रेते इत्यस्यापि। तथा च कालद्वयमपि लब्धम्। तथा च ज्येष्ठाद्यन्यतमो यत्किञ्चिद्धनं यथाकथंचित् प्राप्नोति तस्माद्धनादन्येषामपि भ्रातृणां पितरि स्थिते मृते च भागोऽस्ति यदि ते विद्वांस इत्यर्थपरेण तेन मैत्रादीनामपि विभाज्यत्वे प्राप्ते पितृद्रव्येत्यनेन निषिध्यते इत्यर्थः।

१७। मैत्रादिधनस्य वृद्धव्यवहारासिद्धस्यैवाविभाज्यत्वस्यानुवादकं मूलं, न निषेधकं, येन प्राप्त्यपेक्षा स्यादित्याशयेनाशङ्कां निराकुर्वन् तन्मतं खण्डयति * तदसदिति। * अत्र, मैत्रादिविषये। न केवलमेवमत्रैव अपि तु अन्यत्रापीत्याह *लोकेति। आद्येन एवेन शास्त्रसिद्धत्वव्यवच्छेदः। द्वितीयेन एवेन निषेधकत्वव्यवच्छेदः। क्वचिदन्यथापि वक्ष्यमाणत्वादाह *प्रायेणेति।

१८। भवतु निषेधकं, तथापि वचनान्तरेण प्राप्तिः नत्वदुक्तरीत्येति तुष्यतुदुर्जनन्यायेनाह *अथवेति। वार्हस्पत्यमाह *समवेतैरिति। सर्वाभिप्रायं वहुवचनम्। अत एवाह * सर्वे इति। *तत्र, धने। नन्वेवमपि विनिगमनाविरहोऽत आह * अतश्चे-

कृतान्नं चाकृतान्नेन परिवर्त्य विवर्तयेत् ।
इति बार्हस्पत्यांशेन कल्पतरुः ।

२१। मूले सामान्ये नपुंसकमित्याशयेनाह *अन्नकार इति । *घृतइति । अत्र सर्वत्र मृत इत्यादि पाठान्तरम् । अर्थस्तुल्यः । अघृत इत्यस्य व्याख्या * साधारण इति । * विभाज्य एवेति । विभज्य एवेत्यपपाठः । यद्यपि द्विवचनविभज्योपपदे इति निपातनेन सोऽपि साधुस्तथाप्यपादाने एव नान्यत्र। नचैवं कृत्यल्युट इति प्राप्तस्य ण्यतो बाधेन कथं विभाज्यशब्दसिद्धिरिति वाच्यम् । णिजन्तादचोयता सुसाधत्वात् । न चार्थभेदः ।

निवृत्तप्रेषणात् धातोः प्राकृतेर्थे णिजिष्यते ।

इति णेरणाविति सूत्रे हर्यादिभिर्व्युत्पादनात् । निपातनान्यबाधकानीति तु न युक्तम् । ण्यति कृत्वस्य दुर्वारत्वात् । तत्पक्षस्यैवाभावाच्च । एतेन स्मृतिप्रयुक्ताविभाज्यशब्दस्य साधुत्वं चिन्त्यमिति हरदत्तोक्तमपास्तम् ।

२२। मनुमेवाह *पत्याविति। अत्र पत्याविति स्त्रीभिरिति चोपलक्षणम्। अत एव यो येनेति पूर्वग्रन्थाविरोध इति बोध्यम्। *इति, इत्यत्र । उक्तविशेषे मानमाह *अलमिति । एतेन धृतस्तयैव स्थापितो विभागकाले पुत्रादिविभागमध्ये न देयः, किं तु पतिभागत्वेन यथा सैव परिदध्यात् । न तु पत्यौ जीवति यो धृतः स मृतेऽप्यविभाज्य इति । अदृष्टार्थतापत्तेः। एतेन सर्वथाऽविभाज्यत्वमपि निरस्तम्। तत्सौन्दर्यलोभेन भजने तु पातित्यम्। जीवतीत्युक्त्या मृतेऽन्येनापि ग्रहणे न दोष इति मन्दोक्तमपास्तम्।

२३। कृतान्नमित्यत्र न कर्मधारयः। कृतशब्दवैयर्थ्यापत्तेः। किं तु अन्नेन कृतमिति राजदन्तादिः। अन्नशब्दो यौगिकस्तद्योग्यपर इत्याह *तण्डुलमोदकेति । तत्सवान्विमोदकेत्यर्थः । आ-

भागे स्वांशवत्तान्यपि पित्रैव ग्राह्याणीति सूचितम्। विभजतामिति कृत्यानामिति कर्तरि षष्ठी। पितुस्तदादिकं च यत्तादित्यन्वयः। आदिभ्यामन्यदुपकरणम्। अर्चेने श्राद्धभोक्तैव कर्म। श्राद्धभोक्त्रे इति जातावेकवचनम्। तत्स्थानस्थितविप्रमात्राशयकं वा। तथान्याख्याफलमाह *आभिनवानीति। सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम् इति पत्रं वाहनपक्षयोरिति च कोशादाह *वाहनमिति। आदिना गन्त्र्यादि। *वस्त्रवदेव, श्राद्धभोक्त्रे देयम्।

२०। विशेषमाह *अश्वादीनामिति। जीविनामिति भाग्वत् कर्तरि षष्ठी। बहुत्वे सति तैस्ते विभजनीया इत्यर्थः। *ज्येष्ठस्येति। तस्यैव स भाग इत्यर्थः। अत्र वैषम्यमंशं मत्यपर्याप्तत्वरूपं न विषमसंख्यत्वम्। एवं हि एकं तस्मै दत्त्वा समसंख्यस्थलेऽशविभागस्य पर्याप्तत्वात्तैस्ते विभाज्याः। विषमसंख्यस्थलविशेषे स्वरूपेण सर्वविभागस्य दुष्करत्वात् द्रव्यद्वारा विभागस्य च विक्रयनिषेधेन निषिद्धत्वादंशपर्याप्तान् विभज्य वैषम्येणावशिष्टमश्वादि ज्येष्ठायैव दद्यात्। तदसम्भवे तु सर्वं ज्येष्ठायैव देयम्। यथा चत्वारोऽश्वाः पुत्राः त्रयः पञ्च वेति। अस्मिन्प्रकरणे वैषम्यमेवमेव। तादृशाङ्गीकारे तु बहुव्याकोपः स्यादिति भावः। एवं रीतिरन्यत्रापि बोध्या। अव्यवहिते मानमाह *अजाविकामिति। पशुद्वंद्वैकवद्भावः। *भजेत्, विभजेत्। अत्र हेतुमाह *अजेति। यत इत्यादिः। पत्रशब्देन लेख्यनिविष्टं धनम्।

धनं पत्रनिविष्टं तु धर्मार्थं यन्निरूपितम्।
उदकं चैव दाराश्च निबन्धो यः क्रमागतः॥

इति कातीयात्,

विक्रीय वस्त्राभरणम् ऋणमुद्ग्राह्य लेखितम्।

र्थीक एव । न वास्तुनि विभागो विद्यते इति प्रजापति रपि । उक्तचतुष्टये संवादोऽप्यनेन दर्शितः । परिहरति *तदिति । अत्रादिशब्दग्राह्यो वैश्य एव न शूद्र इत्यग्रे वक्ष्यते । बृहस्पतिमाह *न मतीति । एतद्विशेषणफलमप्यग्रे वक्ष्यते । इदं च शब्दशक्तिस्वारस्यादिच्छया पितृकर्तृकविभागविषयम् । अतएव पुत्रकर्तृकविभागमात्रे तदभावो ऽर्थसिद्धः पित्र्यद्रव्यविषये । पैतामहविषये तु वक्ष्यति । अत एव भूरत्र स्वयमार्जितं भूमिमात्रमथानं प्राकाराङ्कं क्षेत्रम् । भूरित्येतन्मात्रोक्तेः । गृहदानादितो भूमिदानस्य भेदेन कथनाच्च । एवं च क्रमागतस्य गृहादेर्वा नात्र ग्रहणम् । अत एव बृहस्पतिः,

ब्रह्मदायं गतां भूमिं हरेयो ब्राह्मणीसुतः ।
गृहं द्विजातयः सर्वे तथा क्षेत्रं क्रमागतम् ॥ इति ।

ब्रह्मदायः प्रतिग्रहः । एवं चैतन्मूलकप्राग्लिखितमदनो ऽयुक्त एवेति ज्ञेयम् । नचैवं रीत्या व्यासाविरोधपरिहारेऽपि प्रजापतिविरोधस्तदवस्थ एवेति । वाच्यम् । तस्य बृहस्पतिवाक्यानुरोधेन प्रतिग्रहार्जितभिन्नगृहविषये स्वार्जिते विशिष्य निषेधकत्वात् । अत एवोक्तप्रजापत्यनुरोधेन मानवे योगक्षेमशब्देन वास्त्विति यत् मेधातिथिना व्याख्यातं, तदपि पितुरनिच्छायाम् । तदिच्छायां तु तत्रापि तद्भवत्येव । अत एव—

क्रमागते गृहे क्षेत्रे पितृपौत्राः समांशिनः ।
पैतृके न विभागार्हाः सुताः पितुरनिच्छतः ॥

इति व्यासः । सर्वथा क्षेत्रं वास्तुक्षेत्रमिति कल्पतरूक्तमयुक्तमेव । अत एव—

कात्यायनेन,

दृश्यमानं विभज्येत गृहं क्षेत्रं चतुष्पदम् ।

दिना अपूपादि । *यथेति । किन्त्वित्यादिः । एवमग्रेऽपि ।

२४। विषममिति । *अनेन समत्वे विभागः सूचितः।एवमग्रेऽपि।उक्तहेतोः प्राप्तिमात्रमाह *मूल्येति।एवमग्रेऽपि । योग्यतया दास्य इत्युक्तेः फलं सूचयन्विशेषमाह *अवरुद्धास्त्विति । पित्राऽवरुद्धास्तास्त्वित्यर्थः । तत्स्वरूपमाह * स्वैरीति । अपिना विषमाणां समुच्चयः।समानामपि तासां तत्त्वे मानमाह *स्त्रीषु च संयुक्तास्विति । संयुक्तासु उपभुक्तासु अवरुद्धास्विति यावत्। तथैव पाठान्तरं वा । किन्तु मातृवत्पर्यायेण परिपाल्या इति भावः । संयुक्तानां विभागनिषेधाद्विवाहितानामर्थसिद्ध एवासौ। एतेन दासीतुल्यतया तासां व्याख्यानं मन्दादिकृतम् अन्यतरपरतया तदन्यकृतं चापास्तम् । विनिगमनाविरहेणोभयोरपि ग्रहणात् । अत एव सामान्योक्तिः ।

२५। *क्षेमश्चेति । क्षेममस्त्रियामित्यमरः।समाहारद्वन्द्वः। इष्टं तदाख्यं,पूर्त्तं तदाख्यम्। अस्य साधारणत्वादाह *पैतृकमिति । अपिना पैतामहसमुच्चयः । तस्य तच्छेषत्वेऽप्येतदशेषत्वेन साधारण्यादेवाह *पितृद्रव्येति । आपिना ऽविरोधेनार्जितसंग्रहः। साधारण्ये मानमाह *यथाहेति । एतेन मैत्राद्यन्वयवदस्यापि तद्विशेषणं स्यात् तुल्ययुक्त्या वा लभ्येतेत्यपास्तम् ।सामान्येनानेन तस्य बाधात्। मेधातिथिकल्पतरुमतमाह *योगेति। तदन्यमतमाह * छत्रेति । सर्वपक्षे तदुत्पन्नो लाभो विषमश्चेद्विभाज्य एव ।

योगक्षेमवतो लाभः समत्वेन विभज्यते ।

इति बार्हस्पत्यात् । योगक्षेमवतः तद्धेतोः ।

प्रचारशब्दे करणे हलश्चेति घञित्याह *गृहेति ।ननु गृहारामादिप्रवेशनिर्गममार्गस्याविभाज्यत्वोक्त्या गृहारामादेर्विभाज्यत्वं लब्धं, तच्च स्मृत्यन्तरविरुद्धमित्याक्षिपति *यत्त्विति।व्यासोऽप्येवमानुपू-

या० अनेकपितृकाणां तु पितृतो भागकल्पना ॥ १२० ॥

मि० यद्यपि पैतामहे द्रव्ये पौत्राणां जन्मना स्वत्वं पुत्रैरविशिष्टं तथापि तेषां पितृद्वारेणैव पैतामहद्रव्ये विभागकल्पना न स्वरूपापेक्षया। एतदुक्तं भवति। यदाऽविभक्ता भ्रातरः पुत्रानुत्पाद्य दिष्टं गतास्तदैकस्य द्वौ पुत्रावन्यस्य त्रयोऽपरस्य चत्वार इति पुत्राणां वैषम्ये तत्र द्वावेकं स्वपित्र्यमंशं लभेते, अन्ये त्रयोऽप्येकमंशं पित्र्यं, चत्वारोऽप्येकमंशं पित्र्यं लभन्ते इति। तथा केषु चित्पुत्रेषु ध्रियमाणेषु केषुचित्पुत्रानुत्पाद्य विनष्टेष्वप्ययमेव न्यायो ध्रियमाणाः स्वांशानेव लभन्ते नष्टानामपि पुत्राः पित्र्यानेवांशान् लभन्ते इति वाचनिकी व्यवस्था॥ १२० ॥

बा० १। *अस्य, वासिष्ठोक्तभागद्वयस्य। सामान्यार्थेत्यस्य व्याख्या *अविभक्तानामिति। समुत्थाने इत्यस्य व्याख्या *सम्यगिति। तत्र हेतुरुक्तः *कृपीति। एतदर्थमेव नियमातीत्युक्तम्। शेषमाह * केन चिदिति। भ्रातॄणां मध्ये इत्यादिः।

उ० २। उत्तरसंगतिमाह * पित्र्ये द्रव्ये इति। यथाकथंचित्तदीयमात्रद्रव्ये इत्यर्थः। * पुत्राणां, तेषामेव। एवमग्रेऽपि। * पैतामहे, तन्मात्रे। *विभागे इति। जन्मनैव स्वत्वेन तस्य प्राप्तत्वादिति भावः। *अनेकपितृकाणामिति। अनेके पितरो येषामित्यर्थः। भिन्नपितृकाणामिति यावत्। एकपितामहानेकपुत्ररूपभ्रात्रनेकपुत्राणामिति परमार्थः। प्रमीतपितृकाणामिति पाठान्तरम्। अनेकपित्र्यकाणामिति त्वपपाठ एव। शङ्कापूर्वं व्याचष्टे * यद्यपीति। तृतीयान्तात्सार्वविभक्तिकस्तसिरित्याह * पितृद्वारे-

इति तयोर्भेदेनोपादानं कृतम् । एवं व्यासव्यावये ऽप्युक्ते कृतमिति बोध्यम् । अविभाज्यमस्तीति च दर्शयन्ननुक्तत्वाधाज्यशब्दस्योपयुक्तं लक्ष्यार्थमाह * याजनेति ।

पितृद्रव्येत्यादिना ऽविभाज्यं वक्तुमारब्धं मूलकृता न सर्वमुक्तमिति न्यूनतापरिहाराय विभाज्यप्रकरणे एव वक्ष्यमाणमपि स्मरति *पितृप्रसादेति । तस्यापीत्यर्थः । पितृभ्यामित्यादिना मूलकृत् । पूर्वं तु नारदीयत्वेनोक्तम् । इदं च पुत्रकर्तृकाविभागविषयकमेवेति बोध्यम् । अत्राविभाज्यत्वं व्याख्यात्रा विधिनिषेधमुखाभ्यामुक्तम् । तत्राविभाज्यस्वरूपकथनं विधिः । विभाज्यत्वनिरासो निषेधः । तथा सत्यत्रैवोक्तमपि वक्ष्यमाणोपयोगि स्मरति *नियमेति । ब्राह्मणः प्रतिग्रहादिनेत्यादीत्यर्थः । *अनन्तरमेवेति । कस्य विभाग इत्येतद्विचारावसरे शङ्कातः प्राप्तं सिद्धान्तिनेति भावः । *निरास्ति,न्यषेधि । तथा सत्युत्तरसङ्गत्यर्थमव्यवहितफलितं प्रागुक्तमुपसंहरति * पितृद्रव्येति । तथा चेत्यादिः । अत एव महाप्रकरणसङ्गतिः । * तत्र, तथाऽर्जितमैत्रादिविषये । तमेवाह * येनेति । * एषां, भ्रातॄणां मध्ये ॥ ११८ ॥ ११९ ॥

मि० अस्यापवादमाह ।

या० सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः ।

मि० अविभक्तानां भ्रातॄणां साधारणार्थस्य कृषिवाणिज्यादिना समुत्थाने सम्यग्वर्धने केनचित्कृते सम एव विभागो नार्जयितुरंशद्वयम् ।

मि०अव० पित्र्ये द्रव्ये तु पुत्राणां विभागो दर्शितः । इदानीं पैतामहे पौत्राणां विभागे विशेषमाह ।

मि॰भव॰ अधुना विभक्ते पितर्यविद्यमानभ्रातृके वा पौत्रस्य पैतामहे द्रव्ये विभागो नास्ति। अध्रियमाणे पितरि पितृतो भागकल्पनेत्युक्तत्वात्। भवतु वा स्वार्जितवत् पितुरिच्छयैवेत्याशङ्किते आह।

या॰ भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव च।

तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि॥१२१॥

मि॰ भूः शालिक्षेत्रादिका। निबन्ध एकस्य पर्णभरकस्येयन्ति पर्णानि तथा एकस्य क्रमुकफलभरकस्येयन्ति क्रमुकफलानीत्याद्युक्तलक्षणः। द्रव्यं सुवर्णरजतादि यत्पितामहेन प्रतिग्रहाविजयादिना लब्धम्। तत्र पितुः पुत्रस्य च स्वाम्यं लोकप्रसिद्धमिति कृत्वा विभागोऽस्ति। हि यस्मात्तत् सदृशं समानम्। तस्मान्न पितुरिच्छयैव विभागो नापि पितुर्भागद्वयम्। अतश्च पितृतो भागकल्पनेत्येतत् स्वाम्ये समे ऽपि वाचानिकम्। विभागं चेत्पिता कुर्यादित्येतत् स्वार्जितविषयम्।

तथा, (ना॰ व्य॰ प॰ १३।१२)

द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता।

इत्येतदपि स्वार्जितविषयम्।

जीवतोरस्वतन्त्रः स्याज्जरयाऽपि समन्वितः।

इत्येतदपि पारतन्त्र्यं मातापित्रार्जितद्रव्यविषयम्। तथा,अनीशास्ते हि जीवतोरित्येतदपि। तथा च सरजस्कायां मातरि सस्पृहे च पितरि विभागमनिच्छत्यपि पुत्रेच्छया पैतामहद्रव्यविभागो भवति। तथाऽविभक्तेन पित्रा पैतामहे द्रव्ये दीयमाने विक्री-

णवेति। त्वर्थे एवः। नियामकमिदं वचनमिति भावः। तन्नवच्छेद्य-मेवाह * न स्वेति। स्वस्वरूपेत्यर्थः। फलितमाह * एतदिति। अविभक्ता इति छेदः। * तत्र, भ्रातृणां मध्ये।

३। न्यूनतानिरासाय उक्तन्यायमन्यत्रातिदिशति * तथेति। * ध्रियमाणेषु, अवस्थितेषु। जीवत्स्विति यावत्। धृङ् अवस्थाने।

तदुक्तं कात्यायनेन,

अविभक्ते सुते मेते तत्सुतं रिक्थभागिनम्।
कुर्वीत जीवनं येन लब्धं नैव पितामहात्॥
लभेतांशं स्वपित्र्यं तु पितृव्यात्तस्य वा सुतात्।
स एवांशस्तु सर्वेषां भ्रातृणां न्यायतो भवेत्॥
लभेत तत्सुताद्वापि निवृत्तिः परतो भवेत्। इति।

तदाह * वाचनिकीति। अन्यथैतदानर्थक्यापत्तिरिति नियामकमिदमिति भावः।

४। एकस्यां योषिति बहुभिः सङ्गतायां तेभ्यो जातानामित्यर्थः इति कल्पतरुः—

अनेकपितृकाणां तु पितृतोऽशविकल्पना।
यस्य यत्पैतृकं रिक्थं तत् स गृह्णीत नेतरः॥

इति विष्णुव्याख्यावसरे। अत एव बृहस्पतिः,

यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ।
यस्य यत्पैतृकं रिक्थं स तद् गृह्णीत नेतरः॥ इति।

नायं पारिभाषिकः क्षेत्रजः। तस्यान्यविभागस्य वक्ष्यमाणत्वात्। किन्तु क्षेत्रमात्रोत्पन्नः।

द्वौ तु यौ विवदेयातां द्वाभ्यां जातौ स्त्रियां धने।
तयोर्यद्यस्य पित्र्यं स्यात्स तद् गृह्णीत नेतरः॥

इति मनुरपि ( अ० ९।१९१ )॥ १२०॥

नमाप्तिरस्ति अविभक्तत्वात्तथापि सत्त्वादेव तस्य तदभाव इति सर्वथा पैतामहे धने पौत्रस्य जीवत्पितृकस्य विभागाभाव एव स्यादित्युत्तरवाक्यमवतारयन्नाह—

२। * अधुनेति । इत्याशङ्कित इत्यग्रान्वयः । विभक्त इति छेदः । पौत्रस्येत्युपलक्षणं, पौत्रयोः पौत्राणामपि । उभयत्र हेतुमाह * अम्रियमाणे इति । दिष्टं गते इत्यर्थः । म्रियमाणे इति पाठे तस्य पूर्वान्वयः । अपितरीति छेदः । तदभावे । अत्र तूभयत्रापि पितुः सत्त्वमिति भावः ।

३। ननु नैतद्युक्तं, जन्मनैव स्वत्वस्य प्रागुक्तत्वेन द्वारानपेक्षत्वेन तत्रापि विभागस्य युक्तत्वादिति चेत्, तथापि पितरि दिष्टं गते पितृद्वारैवांशविधानाज्जीवति तस्मिन् तद्द्वारकत्वं सुतरामिति अत्र पितुः प्राधान्यप्रतीत्या पितुरिच्छयैव विभागः स्यात्। तत्रापि स्वार्जितवत् द्वावंशाविति नारदवाक्येन पितुरंशद्वयं स्यात्तदाह *भवतु वेति। विभागस्तत्र तस्येत्यस्यानुषङ्गः।परं तु इति शेषः । *इच्छयैव, इच्छयैव च । स्यादिति शेषः। दृष्टान्तसूचितं तत्रापीत्यादि नोक्तम्। भवत्वेति पाठे तु एकवाक्यतैव । शब्दशक्तिमाहात्म्येन लब्धमर्थमाह * शालीति । आदिना यवक्षेत्रादि । तेन वास्त्वादिनिरासः।इदं वास्त्वादिविषयतत्त्वं चानुपदमेव विशदीकृतम्। निबध्यते यः पर्णादिगणनया स निबन्धो वृत्तिः । आकरादौ राजादिदत्तं नियतलभ्यम्। तत्स्वरूपमाह *एकस्येत्यादि। पर्णानां भरो बाहुल्यं यस्मिन्निति विग्रहः। समासान्तः। एवमग्रेऽपि । तथाचैकस्याः पर्णवाटिकायाः क्रमुकवाटिकायाश्चैयन्ति पर्णानि क्रमुकफलानि चेति तद्व्यापारकोविदा एव जानन्ति नान्ये इति तदीयपर्णभरकादिपर्णगणनया निबध्यमान इत्यर्थः। यत्पितामहेनेत्यनयोरग्रेऽपि संबन्धसूचनाय आह * यत्पितेति ।

यमाणे वा पौत्रस्य निषेधेऽप्याधिकारः। पित्रर्जिते तु न निषेधाधिकारः। तत्परतन्त्रत्वात्। अनुमतिस्तु कर्तव्या। तथाहि। पैतृके पैतामहे च स्वाम्यं यद्यपि जन्मनैव तथापि पैतृके पितृपरतन्त्रत्वात् पितुः स्वार्जकत्वेन प्राधान्यात् पित्रा विनियुज्यमाने स्वार्जिते द्रव्ये पुत्रेणानुमतिः कर्तव्या। पैतामहे तु द्वयोः स्वाम्यमविशिष्टमिति निषेधाधिकारोऽप्यस्तीति विशेषः।

मनुरपि— ( अ० ९ श्लो० २०९ )

पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात्।

न तत्पुत्रैर्भजेत्सार्द्धमकामः स्वयमार्जितम्॥ इति—

यत्पितामहार्जितं केनाप्यपहृतं पितामहेनानुद्धृतं यदि पितोद्धरति तत्स्वार्जितमिव पुत्रैः सार्द्धमकामः स्वयं न विभजेदिति वदन् पितामहार्जितमकामोऽपि पुत्रेच्छया पुत्रैः सह विभजेदिति दर्शयति॥१२१॥

बा० १। नन्वनेकपितृकाणामित्यनेन अन्यथाऽनुपपन्नेन एतावत्सम्पन्नं,पौत्रस्य पैतामहद्रव्यप्राप्तिः पितृद्वारा न स्वतः। तत्रापि पितरि अविभक्ते दिष्टं गते एव। विभागस्य स्वत्वाजनकत्वेऽपि तन्नाशकत्वात्। तत्सत्त्वस्य प्रतिबन्धकत्वाच्च। एवं च पौत्रस्यापि भ्रात्रादिवत् सप्रतिबन्ध एव दाय इति तथा प्रागुक्तमयुक्तम्। किंच तथा सति यदा पिता जीवति विभक्तश्च स्वपितुः यद्वा तस्य एकपुत्रत्वेन तस्य भ्रात्रन्तराभावात् स पितुः सकाशादविभक्त एव जीवन्नास्ते, तदाऽऽद्यपक्षे विभक्तत्वादेव पैतामहद्रव्यप्राप्त्यभावः स्वपितुरिति विभक्तत्वात् तस्य सत्त्वाच्च द्वारनिरोधेन पौत्रस्य पैतामहद्रव्यप्राप्त्यभावः। द्वितीयपक्षेऽपि यद्यपि स्वपितुर्ध-

त्रोर्विभागस्तं भजतीति विभागभाक् । पित्रोरूर्ध्वं तयोरंशं लभते इत्यर्थः । मातृभागं च असत्यां दुहितरि । मातुर्दुहितरः शेषमित्युक्तत्वात् । असवर्णायामुत्पन्नस्तु स्वांशमेव पित्र्याल्लभते । मातुर्भागं तु सर्वमेव । एतदेव—

मनुनोक्तम्, ( अ० ९ श्लो० २१६ )

ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम् । इति ।

पित्रोरिदं पित्र्यमिति व्याख्येयम् ॥

अनीशः पूर्वजः पित्रोर्भ्रातुर्भागे विभक्तजः ।

इति स्मरणात् । विभक्तयोर्मातापित्रोर्भागे विभागात्पूर्वमुत्पन्नो न स्वामी, विभक्तजश्च भ्रातुर्भागे न स्वामीत्यर्थः । तथा विभागोत्तरकालं पित्रा यत्किञ्चिदार्जितं तत्सर्वं विभक्तजस्यैव ।

पुत्रैः सह विभक्तेन पित्रा यत्स्वयमार्जितम् ।
विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः ॥

इति स्मरणात् । ये च विभक्ताः पित्रा सह संसृष्टाः, पितुरूर्ध्वं तैः सार्द्धं विभक्तजो विभजेत् ।

यथाह मनुः, ( अ० ९ श्लो० २१६ उ० )

संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह । इति ।

मि० अव० पितुरूर्ध्वं पुत्रेषु विभक्तेषु पश्चादुत्पन्नस्य कथं विभागकल्पनेत्यत आह ।

या० दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ॥ १२२ ॥

मि० *तस्य, पितरि प्रेते ( भ्रातृविभागसमयेऽस्पष्टग-

नियमानतिक्रममाह । * प्रतिग्रहेति । आदिना वाणिज्यद्विजशु-श्रूषादिपरिग्रहः ।

४।एवं पूर्वार्धेनाप्यर्थत्रये प्रतिपादिते उत्तरार्द्धं वाक्यभेदेन सशेषपूरणेन व्याचष्टे *तत्रेति । त्रिष्वित्यर्थः । प्राग्वत् स्याद्-धेमाह *अस्तीति । पूर्वम् एवान्वयादस्त्येवेत्यर्थः । चोभयोरिति कल्पतर्वादिधृतपाठासांगत्यं ध्वनयन्नाह *हि यस्मादिति । *स-दृशं,सदृशमेव । अग्रिमेवान्वयात् । शेषं प्राग्वदाह * तस्मादिति । इच्छयैव न विभाग इति पाठो युक्ततरः । एतेन समांशत्वं सू-चितम् ।

बृहस्पतिरपि,

द्रव्ये पितामहोपात्ते जंगमे स्थावरेऽपि वा ।

सममंशित्वमाख्यातं पितुः पुत्रस्य चैवहि ॥ इति ।

५। एवं सति पूर्ववचनानर्थक्यं प्रथमांशेन प्राप्तं तद्विरोधं च परिहरन् वाचनिकत्वमुक्तं द्रढयति * अतश्चेति । यत एवं स्वाम्यं पितापुत्रयोस्तत्र समानमेव लोकप्रसिद्धम् अत इत्यर्थः । * वा-चनिकमिति । पितरि प्रेते वचनात्तथा नियम्यते न तु जीवति । अत एव प्रमीतपितृकाणामिति पाठो युक्ततर इति भावः । इदं प्रागपि उक्तम् ।

६। द्वितीयांशेन प्राप्तं वचनान्तरविरोधं परिहरति * वि-भागं चेदिति । प्रागपीदमुक्तम् ।

७। तृतीयांशेन प्राप्तं प्रागुक्तान्यवचनाविरोधं परिहरति *तथेति । नारदमाह *द्वावंशाविति । प्रतिपत्तिर्नियमेन ग्रहणम् । आत्मन इति षष्ठ्यन्तं पञ्चम्यन्तं वा । अत्र विषमविभागे लो-कविशेषाद्यभावादयं भवत्येवेति भावः । एवं प्रागुक्तवसिष्ठोक्ते विषमविभागेऽपि बोध्यम् । एवं च स्वार्जिते सर्वविभागेषु अर्ज-

यामित्युक्तः फलमाह * असवर्णायामिति । * स्वांशमेवेति । मुख्यांशमेवेति पाठान्तरम् । ब्राह्मणात् क्षत्रियायामुत्पन्नस्य पादोनं, वैश्यायामर्द्धं, शूद्रायां पादः, क्षत्रियाद्वैश्यायामुत्पन्नस्य पादद्वयं, शूद्रायां पादः, वैश्याच्छूद्रायामुत्पन्नस्य एकः पाद इत्यर्थः । तद्वक्ष्यति चतुस्त्रिद्व्येकभागाः स्युरिति । * पित्र्यादिति । धनादित्यर्थः । पित्र्यमिति पाठान्तरम् ।

२। विशेषमाह *मातुरिति । मातृकं त्विति पाठान्तरम् । अयमपि दुहितृसत्त्वे इति बोध्यम् । मातुर्दुहितर इत्यस्य मातृधनमात्रशेषत्वात् । उक्तमूलस्य तदूर्ध्वं तस्य धनभाक्त्वमितिपरत्वं कुतः, जीवत्येव तस्मिन् तद्भाक्त्वपरत्वं कुतो नेत्याशङ्कां परिहरन्मौलार्थे मानमाह * एतदेवेति । पित्रोरूर्ध्वमित्युक्तमेवेत्यर्थः । * हरेत्, गृह्णीयात् । अनेन तदुत्तरकालिकत्वं स्पष्टमेवोक्तम् ।

३। नन्वेवमपि पित्रोरिति प्रागुक्तमयुक्तं, पितुरिति वाच्यम् । अत्र पित्र्यमित्येवोक्तत्वात् । तस्य च पितुरागतमिति शब्दार्थात् । अत आह *पित्रोरिति । एकशेषं कृत्वा तद्धित इति भावः । इदं फलितार्थकथनम् । ननूभयथापि पित्र्यमित्यस्य तुल्यत्वादत्र तथा व्याख्याने एव न मानम् अत आह *अनीश इति । बार्हस्पत्ये अत्र पित्रोरिति द्विवचननिर्देशात्तथेति भावः । अस्फुटत्वादस्योक्तार्थपरत्वायेदं वाक्यभेदेन व्याचष्टे * विभक्तयोरिति । पूर्वपुत्रेभ्य इति भावः । अन्यथाऽनुपपत्तेः प्रकरणाच्चेदमुक्तम् । भागे इति पाठः । विभागे इत्यपपाठः । स्मृतावसत्त्वात् । पूर्वज इत्यस्यार्थमाह * विभागादिति । द्वितीयवाक्यमाह *विभक्तजश्चेति । विभक्ताभ्यां पितृभ्यां जात इत्यर्थः । * भ्रातुः पूर्वोत्पन्नस्य । तथा च विभक्तपुत्रांशान्न्यूनत्वे ऽधिकत्वे वा वि-

र्भायां मातरि)भ्रातृविभागोत्तरकालमुत्पन्नस्य,विभागस्तद्विभागः। कुत इत्यत आह। दृश्याद् भ्रातृभिर्गृहीताद्धनात् । कीदृशात्? आयव्ययविशोधितात्। आयः प्रतिदिवसं प्रतिमासं प्रत्यब्दं वा यदुत्पद्यते, व्ययः पितृकृतर्णापाकरणं, ताभ्यामायव्ययाभ्यां यच्छोधितं तस्मात् उद्धृत्य तद्भागो दातव्यः स्यात्। एतदुक्तं भवति । प्रातिस्विकेषु भागेषु तदुत्थमायं प्रवेश्य पितृकृतम् ऋणमपनीयावशिष्टेभ्यः स्वेभ्यः भागेभ्यः किञ्चित्किञ्चिदुद्धृत्य विभक्तजस्य भागः स्वभागसमः कर्तव्य इति।

एतच्च विभागसमये भ्रातृभार्यायामप्रजासि अस्पष्टगर्भायां विभागादूर्ध्वमुत्पन्नस्यापि वेदितव्यम् । स्पष्टगर्भायां तु प्रसवं प्रतीक्ष्य विभागः कर्तव्यः।

यथाह वसिष्ठः, अथ भ्रातॄणां दायविभागो, याश्चानपत्याः स्त्रियस्तासामापुत्रलाभादिति ।

गृहीतगर्भाणामाप्रसवात्। प्रतीक्षणीयमिति योजनीयम् ॥ १२२ ॥

बा० १। विभागोत्तरेति। प्रथमतृतीयकालयोरित्यर्थः। *पुत्रस्येत्युपलक्षणं पुत्रयोरित्यादेरपि । एवमग्रेऽपि । * पुत्रेषु, सत्सु । अत एवाह *पश्चादिति । भावघञि विभागभागित्यनुपपन्नमसम्बद्धं च अत आह *विभज्यते इति । कर्मणि घञिति भावः । साकाङ्क्षत्वात्प्रत्यासत्तेराह * पित्रोरिति । विभागो धनम् । तात्पर्यार्थमाह * पित्रोरूर्ध्वमिति । मायणादिति शेषः । *अंशं, तत्त्वेन स्थितं सर्वम् । पित्रोरित्युक्तं सफलयति * मातृभागमिति । चस्त्वर्थे । तत्सद्भावे तु तं न लभते इति भावः । सवर्णा-

तत्कर्तृकविभागेत्यर्थः। भ्रातृविभागेति पाठः मनुरः। मातरि सत्यां पितुरसत्त्वान्मातुर्विभागासम्भवाद्वाधं पृच्छति * कृत इति। इत्यादित्यस्य तात्पर्यार्थमाह * भ्रातृभिरिति। पदार्थमाह * आय इति। वृद्धिभेदस्य भागुक्त्या विनिगमनाविरहादाह *मातिदिवसमिति। वाक्यार्थमाह *ताभ्यामिति। शोधितं परिष्कृतम्। तथा च मकृते विभागोत्तरं मातिस्विकांशैः कृष्यादिषु क्रियमाणेषु यो लाभः स आयः। पितृकृतऋणं स्वकुटुम्बपोषणादिसाधकं तदपाकरणं व्यय इति भावः।

६। आयव्ययरहितादित्यर्थनिरासायाह *एतदिति। *भागेषु, सत्सु। *तदुत्थं, ततः कृष्यादितो लब्धम्। स्वस्वांशमध्ये इति शेषः। *मवेश्य,माक्षिप्य। *अपनीय,अपनीय च। *स्वेभ्यः, स्वीयेभ्यः सर्वेभ्य इत्यर्थः। *किञ्चिदिति। यस्माद्यस्मादंशाद्यावद्यावदुचितं तावत्तावद् गृहीत्वेत्यर्थः। अत एवाह *स्वभागसम इति। अयं भावः। विभक्तमपि तत्पितृधनमविभक्तमिव। यतो गर्भस्थितमप्यपत्यमपत्यत्वादेव पितृधनांशार्हम्। मातुः पितृमरणसमये एव गर्भे सति विभागसमये चाव्यक्ते गर्भे तस्मादेव गर्भादुत्पन्नमपत्यं तस्मात्पितृधनात्तदुत्थलाभाच्च भागार्हमिति। तत्रापि पुत्रसत्त्वे समांशभागित्वं पुत्रीसत्त्वे तु स्वस्वजातिनिबन्धनादंशाच्चतुर्थांशभागित्वं वक्ष्यमाणं बोध्यम्।

७। उक्तन्यायं युक्तितौल्यादन्यत्रातिदिशति *एतच्चेति। भ्रातुर्यस्य कस्य चित्प्रमीतस्य उक्त एव मकारः। अप्रजसीति भार्याविशेषणम्। अप्रजस्येति पाठे यथासंख्यमुभयोरुभयं विशेषणम्। न्यूनतानिरासाय विशेषं सूचितम् उभयत्राप्याह *स्पष्टेति। * अनपत्या इति। बहिरविद्यमानपुत्रा इत्यर्थः। स्त्रियोऽत्र भ्रातृभार्याः अत एवाह *आपुत्रेति। आङ् मर्यादायाम्।

भक्तजस्तावदेव लभते, न तत्पूर्वजा अधिकं गृह्णीयुर्न्यूनं वा पूरयेयुः। अयमेवार्थो मनुवाक्ये एवेन सूचितः।

४। साधारणोक्त्या तन्त्रेण मूलस्यैवार्थान्तररूपविशेषमाह * तथेति। बृहस्पतिमाह * पुत्रैरिति। अस्य विभक्तेनेत्यत्रैवान्वयः। यद्वा पूर्वपुत्राणां विद्यमानत्वेऽपीत्यर्थः। सहैव दशभिः पुत्रैरितिवत्। स्वयमिति स्पष्टार्थम्। अत्रार्जितामिति सामान्योक्त्या धनम् ऋणं च ग्राह्यम्। अत एव बृहस्पतिरेव,

यथा धने तथर्णेऽपि दानाधानक्रयेषु च।
परस्परमनीशास्ते त्यक्त्वा ऽशौचोदकक्रियाम्॥ इति।

विपदस्वारस्यात्तथैव विशेषान्तरमाह *येचेति। पित्रा सहेत्यस्य मध्यमाणिन्यायेनान्वयः। पुनः संसृष्टाश्चेत्यर्थः। *पितुरिति। मायणादिति शेषः। *संसृष्टा इति। प्रागुक्तोत्तरार्द्धमिदम्। अत एव पूर्वसमुच्चये वाशब्दः * तेन वेति। पित्रेत्यर्थः। * सतैरिति। विभक्तजः पूर्वजैरित्यर्थः।

उ० ५। यद्यप्यन्यानिबन्धकारैरत्र इत्याद्वेति पूर्वत्रैव विकल्पपरतया व्याख्यातं, कैश्चिदन्यैश्चैकवाक्यतयैव व्याख्यातं, तथापि तन्न युक्तम्। उक्तस्मृतिविरोधेन विकल्पासम्भवात्। आनर्थक्यस्यान्यतरस्य स्पष्टत्वेनासम्बन्धेन वापदानर्थक्येन चैकवाक्यत्वासम्भवात्। न्यूनतापत्तेश्च। तदेतदभिमेत्योत्तरार्धस्यान्यदवतरणमाह * पितुरिति। मायणादिति शेषः। * पुत्रेष्विति। पितृमरणादव्यवहितपूर्वमेव गर्भे सति विभागसमयेऽपि मातुरस्पष्टगर्भात्वेन तदानीमज्ञानेन तदव्यवहितामिति भावः। वाशब्दः समुच्चये। अवधारणे वा। आयव्ययविशोधिताद् इत्यादेव तद्विभाग इत्यर्थः। ननु तद्विभाग इत्यस्य कथमुक्तार्थोऽतस्तस्येत्यस्यार्थमाह * पितरीति। भ्रातृभिरित्यस्य विभागे एवान्वयः।

इत्यनेनेत्यर्थः । मातृकांशः प्राग्वत् । * तत्र, तस्मिन्सति । माता चेति विकल्पो दाने, न तु विभागे । पितुः पुत्रेभ्यो विभागे मातुस्तस्यार्थसिद्धत्वात् । पृथक् तस्या अविभागाच्च । अत एव पुनस्तत्र विभक्तेति विशेषणानुक्तिः । ताभ्योऽपि पुत्रवत् पृथगंशं दत्त्वा तासां पृथक्कार इति तु न । जायापत्योर्न विभागो विद्यत इति हारीताद्युक्तेः । एवं च पत्न्यः कार्याः समांशका इत्यस्य बहुवचनात् पत्नीत्युक्तेश्च प्रतिपत्नि पुत्रांशसमानमंशं गृह्णीयादित्यर्थो न तु तथेति प्रागुक्तं न विस्मर्तव्यमिति बोध्यम् । * तत्र, विषये ।

पितामहेन यद्दत्तं पित्रा वा प्रीतिपूर्वकम् ।
तस्य तन्नापहर्तव्यं मात्रा दत्तं च यद्भवेत् ॥ इति ।

यस्येति षष्ठी शेषत्वाय ।

२। युक्तिसाम्यादन्यत्रातिदेशमाह *न्यायेति । अस्याग्रेऽप्यन्वयः । अपिः ऊर्ध्वसमुच्चये । एवेन विभाज्यत्वव्यवच्छेदः ।

३। अतिदेशान्तरं तत एवाह * तथेति । तद्वदित्यर्थः । विभक्तजे ऽसतीत्यन्वयः । तदूर्ध्वं, तन्मरणानन्तरम् । विभजतामिति निर्धारणे षष्ठी । न केवलं विभक्तजे पुत्रे सति विभागादूर्ध्वं प्राग्वा यस्य यद्दत्तं तत्तस्यैवेति नियमः, किं तु विभक्तजपुत्राभावेऽपि विभक्ताभ्यां ताभ्यां स्वपुत्रादिभ्यो यत्प्रीत्या दत्तं तत्तयोर्मरणोत्तरं तद्धनं विभजतां मध्ये यस्मै दत्तं तस्यैव न विभागार्हमित्यर्थः ।

उ० ४। व्यवहितसङ्गतिमाह *जीवादिति । स्वपदं स्पष्टार्थम् । पितुरिति प्राग्वत् । *पत्नीनां,सर्वासाम् । *दर्शयितुमिति । दर्शयन्नित्यर्थः । *प्रायणादिति । तादित्यादिः । *विभजतामिति । षष्ठी चानादरे इति षष्ठी ।ताननादृत्येत्यर्थः । तद्धतस्वत्वस्य

अत एव तदर्थमाह * गृहीतेति। पुत्रेत्युपलक्षणमित्याह *आप्र-सत्वादिति। वाक्यार्थपूर्त्तये शेषमाह *प्रतीक्षणीयमिति॥१२२॥

मि० विभक्तजः पित्र्यं मातृकं च सर्वं धनं गृह्णातीत्युक्तम्। तत्र यदि विभक्तः पिता माता वा विभक्ताय पुत्राय स्नेहवशादाभरणादिकं प्रयच्छति तत्र विभक्तजेन दानप्रतिषेधो न कर्तव्यो नापि दत्तं प्रत्याहर्तव्यमित्याह।

पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत्।

मि० मातापितृभ्यां विभक्ताभ्यां पूर्वं विभक्तस्य पुत्रस्य यद्दत्तमलङ्कारादि तत्तस्यैव पुत्रस्य न विभक्तजस्य स्वं भवति। न्यायसाम्याद्विभागात्प्रागपि यस्य यद्दत्तं तत्तस्यैव। तथा, असति विभक्तजे विभक्तयोः पित्रोरंशं तदूर्ध्वं विभजतां यस्य यद्दत्तं तत्तस्यैव नान्यस्येति वेदितव्यम्।

मि० अव० जीवद्विभागे स्वपुत्रसमांशित्वं पत्नीनामुक्तं यदि कुर्यात्समानंशानित्यादिना। पितुरूर्ध्वं विभागेऽपि मातुः स्वपुत्रसमांशित्वं दर्शयितुमाह।

पितुरूर्ध्वं विभजतां माताऽप्यंशं समं हरेत् ॥१२३॥

मि० पितुरूर्ध्वं पितुः प्रायणादूर्ध्वं विभजतां माताऽपि स्वपुत्रांशसमम् अंशं हरेत, यदि स्त्रीधनं न दत्तम्। दत्ते त्वर्द्धांशहारिणीति वक्ष्यते॥ १२३॥

वा०१। व्यवहितसङ्गतिं सूचयन्नुत्तरावतरणमाह *विभक्तज इति। विभागानन्तरं मातापित्रोः सतोरेव य उत्पन्नः स विभक्तजो मातापितृमरणानन्तरं तयोर्धनं गृह्णातीत्युक्तं विभक्तेषु सुतो जात

मिति सिद्धम् । एतेनात्र मातृपदोपात्ता सापत्नमातुरंशभागित्वं नेति निर्वचनः शास्त्रसिद्धान्तः परास्त इति दिक् ॥ १२३ ॥

मि० पितरि प्रेते यद्यसंस्कृता भ्रातरः सन्ति तत्सं-
स्कारे कोऽधिक्रियते इत्यत आह ।

या० असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।

मि० पितुरूर्ध्वं विभजद्भिर्भ्रातृभिरसंस्कृता भ्रातरः समुदायद्रव्येण संस्कर्तव्याः ।

मि० अव० असंस्कृतास्तु भगिनीषु विशेषमाह ।

या० भगिन्यश्च निजादंशाद्दत्वांऽशं तु तुरीयकम् ॥१२४॥

मि० अस्यार्थः । भगिन्यश्चासंस्कृताः संस्कर्तव्या भ्रातृभिः । किं कृत्वा निजादंशाच्चतुर्थमंशं दत्त्वा । अनेन दुहितरोऽपि पितुरूर्ध्वम् अंशभागिन्य इति गम्यते। तत्र निजादंशादिति प्रत्येकं परिकल्पितादंशादुद्धृत्य चतुर्थांशो दातव्य इत्ययमर्थो न भवति। किंतु यज्जातीया कन्या तज्जातीयपुत्रभागाच्चतुर्थांशभागिनी सा कर्तव्या ।

एतदुक्तं भवति । यदि ब्राह्मणी सा कन्या तदा ब्राह्मणीपुत्रस्य यावानंशो भवति तस्य चतुर्थांशस्तस्या भवतीति । तद्यथा। यदि कस्यचिद्ब्राह्मण्येव एका पत्नी पुत्रश्चैकः कन्या चैका, तत्र पित्र्यं सर्वमेव द्रव्यं द्विधा विभज्य तत्रैकं भागं चतुर्धा विभज्य तुरीयमंशं कन्यायै दत्त्वा शेषं पुत्रो गृह्णीयात् ।

यदा तु द्वौ पुत्रौ एका कन्या तदा पितृधनं सर्वं त्रेधा विभज्य एकं भागं चतुर्धा विभज्य तुरीयमंशं

सत्त्वात् । अत एव हरेदित्युक्तिः । अपेस्तत्रैवान्वयः । स च जीवद्विभागे समांशित्वसमुच्चायकः । अत एव तत्तुल्यतया एकत्वमत्र अविवक्षितम् । किं च अत्र मातुरुद्देश्यत्वात्तदुद्देशेन हरणस्य अमाप्तत्वेन विधेयत्वादेकत्वमविवक्षितं, ग्रहं संमार्ष्टीतिवत् । यदि कुर्यादित्यत्र तु तेनैवाद्यपादेनांशभागित्वस्य माप्तत्वात्तदुद्देशेन पत्न्या विधानात्तद्गतं बहुत्वं विवक्षितं, पशुना यजेतेतिवत् । एतेन विपरीतशङ्का निरस्ता । अत एव तदनुरोधेनावतरणे पत्नीनामित्युक्तम् । यद्वा यथाश्रुतापिना जननीभिन्नसमुच्चयः । विष्णुरपि, मातरः पुत्रभागानुसारिभागहारिण्य इति ।

७। प्रागवच्छेपमाह *यदीति । प्रकृतानुरोधेनाह *अर्धांशहारिणीति । * वक्ष्यते इति । सौदायिके दत्ते त्वर्द्धं प्रकल्पयेदित्यनेनेति भावः । प्रागवच्छेपः ।

अत एव स्मृत्यन्तरम्,

जनन्यस्वधना पुत्रैर्विभागेंऽशं समं हरेत् । इति ।

अस्वधना प्रातिस्विकस्त्रीधनशून्या । तत्र जननीग्रहणमपुत्राणां मातृसपत्नीनां पितामहीनां चोपलक्षणम् ।

अत एव व्यासः,

असुताः स्वपितुः पत्न्यः समानांशाः प्रकीर्तिताः ।
पितामह्यश्च ताः सर्वा मातृतुल्याः प्रकीर्तिताः ॥ इति ।

एवं सति प्रकृते मातृशब्दः पत्नीमात्रपर इत्यपि सुवचम् ।

तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा ।
इत्येता मातरः प्रोक्ताः पितुर्मातुः स्वसाऽष्टमी ॥

इति चतुर्विंशतिमतवचनं, पितृपत्न्यः सर्वा मातर इति सुमन्तुवचनमप्यत्र साधकम् । एवं च सापत्नमातुरपि अंशभागित्व-

दंशात् आत्मीयात्मीयभागात् चतुर्थं चतुर्थं भागं द... न चात्मभागादुद्धृत्य चतुर्थांशो देय इत्युच्यते। किंतु स्वजातिविहितादेकस्मादंशात्पृथक्पृथगेकस्यै कन्यायै चतुर्थोंऽशो देय इति । जातिवैषम्ये संख्यावैषम्ये च विभागक्लृप्तिरुक्तैव। पतिताः स्युरदित्सव इत्यकरणे प्रत्यवायश्रवणादवश्यं दातव्यता प्रतीयते।

अत्रापि चतुर्भागवचनमविवक्षितं संस्कारोपयोगिद्रव्यदानमेव विवक्षितमिति चेन्न। स्मृतिद्वयेऽपि चतुर्थांशदानाविवक्षायां प्रमाणाभावात् अदाने प्रत्यवायश्रवणाच्चेति।

यदपि कैश्चिदुच्यते। अंशदानविवक्षायां बहुभ्रातृकाया बहुधनत्वं बहुभगिनीकस्य च निर्धनता प्राप्नोतीति, तत् उक्तरीत्या परिहृतमेव। न ह्यात्मीयाद्भागादुद्धृत्य चतुर्थांशस्य दानमुच्यते, येन तथा स्यात्। अतोऽसहायमेधातिथिप्रभृतीनां व्याख्यानमेव चतुरस्रं न भारुचेः। तस्मात्पितुरूर्ध्वं कन्याऽप्यंशभागिनी। पूर्वं चेद्यत्किञ्चित्पिता ददाति तदेव लभते विशेषवचनाभावादिति सर्वमनवद्यम् ॥ १२४ ॥

या० १। पितुरूर्ध्वमित्यनेन प्रसङ्गसङ्गतिमाह *पितरीति। *सन्तीति। तदेति शेषः। असंस्कृतानामनधिकारादाह *पूर्वसंस्कृतैरिति। तत एवाह * पितुरिति। प्रायणादिति शेषः। * असंस्कृताः, विवाहान्तसंस्कारैः। न च विभागप्रकरणे इदमयुक्तमिति वाच्यम्। पूर्वसंस्कृतैरिति विशेषणेन यथा स्वसंस्कारः पित्रा समुदायद्रव्येण कृतस्तथा तेषामपि कार्य इति स्ववत् तत्कृत्यस्यावश्यकत्वबोधनद्वारा आदौ तथैव समुदायद्रव्येण तत् कृत्वा

कन्यायै दत्त्वा शेषं द्वौ पुत्रौ विभज्य गृह्णीतः।

अथ त्वेकः पुत्रो द्वे कन्ये तदा पित्र्यं धनं त्रेधा विभज्य एकं भागं चतुर्धा विभज्य तत्र द्वौ भागौ द्वाभ्यां कन्याभ्यां दत्त्वाऽवशिष्टं सर्वं पुत्रो गृह्णातीति। एवं समानजातीयेषु समविषमेषु भ्रातृषु भगिनीषु च योजनीयम्।

यदा तु ब्राह्मणीपुत्र एकः क्षत्रियाकन्यैका तत्र पित्र्यं धनं सप्तधा विभज्य क्षत्रियापुत्रभागांस्त्रींश्चतुर्धा विभज्य तुरीयांशं क्षत्रियाकन्यायै दत्त्वा शेषं ब्राह्मणीपुत्रो गृह्णाति।

यत्र तु द्वौ ब्राह्मणीपुत्रौ क्षत्रियाकन्या चैका तत्र पित्र्यं धनमेकादशधा विभज्य तेषु क्षत्रियापुत्रभागान् त्रीन् चतुर्धा विभज्य चतुर्थमंशं क्षत्रियाकन्यायै दत्त्वा शेषं सर्वं ब्राह्मणीपुत्रौ विभज्य गृह्णीतः। एवं जातिवैषम्ये भ्रातॄणां भगिनीनां च संख्यायाः साम्ये वैषम्ये च सर्वत्रोहनीयम्।

न च निजादंशाद्दत्त्वांऽशं तु तुरीयकमिति तुरीयांशाविवक्षया संस्कारमात्रोपयोगि द्रव्यं दत्त्वेति व्याख्यानं युक्तम्।

मनुवचनाविरोधात् (अ० ९. श्लो० ११८.)

स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक्।
स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः॥ इति।

अस्यार्थः। ब्राह्मणादयो भ्रातरो ब्राह्मणीप्रभृतिभ्यो भगिनीभ्यः स्वेभ्यः स्वजातिविहितेभ्योंऽशेभ्यः "चतुरोंऽशान् हरेद्विप्र" इत्यादिवक्ष्यमाणेभ्यः स्वात्स्वा-

(७) न्यायरत्नमाला–श्रीपार्थसारथिमिश्र वि० सं० ( मीमांसा 	२

(८) ब्रह्मसूत्रभाष्यम्–बादरायणप्रणीत-वेदान्तसूत्रस्य यतीन्द्र श्रीमद्विज्ञान-भिक्षुकृत व्याख्यानम् । सम्पूर्णम् । ( वेदान्तः ) ६

(९) स्याद्वादमञ्जरी–मल्लिषेणनिर्मिता सम्पूर्णा । ( जैनदर्शनम् ) २

(१०) सिद्धित्रयम्–विशिष्टाद्वैत–ब्रह्मनिरूपण-परम्–श्रीभाष्यकर्तां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्णम् ( वेदान्तः ) १

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टा-रकाचार्यसंगृहीतः। आचार्यचित्सुख-मुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४

(१२) विभक्त्यर्थनिर्णयःन्यायानुसारिप्रथमादि-सप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः । सम्पूर्णः ( न्यायः ) ५

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सं० ( मीमांसा ) २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्ट-सोमेश्वरविरचिता । ( मीमांसा ) १६

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । ( वेदान्तः ) २

(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशा-ऽध्यायार्थसंग्रहः ) श्रीभट्टनारायणात्मज-भट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि–मीमांसादर्शनम् ) महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितं, श्रीशङ्करभट्टकृतो मीमांसा-सारसंग्रहश्च सम्पूर्णः ( मीमांसा ) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीत-स्तत्कृतव्याख्यासमलङ्कृतश्च । ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्का-चार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितम् ( वेदान्तः ) १

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्ण-विरचितया खण्डनफक्किकाविभजनाख्यया व्या-ख्यया ( विद्यासागरी ) ति प्रसिद्धया समेतम् । ( वेदान्तः ) १३

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता । १

(२३) श्रीलक्ष्मीसहस्रम्–बालबोधिनीव्याख्यया-ऽवतरणिकया च सहितम् । ८

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशताग्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोदितम् ॥ २ ॥

स्तबकः— १७८

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतकं सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकःस्तबको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तबके एक एव ग्रन्थो मुद्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरण धर्मशास्त्रसाहित्यपुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्यो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं — मूल्यम्-मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तबकम् — ,, ,, १ ,, ०

६ प्रापणव्ययः पृथग् नास्ति ।

७ साम्प्रतं मुद्यमाणा ग्रन्थाः— मुद्रिताः स्तबकाः

| | | |
|---|---|---|
| (१) संस्काररत्नमाला । गोपीनाथभट्टकृता | ( संस्कारः ) | ८ |
| (२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः | ( व्याकरणम् ) | १० |
| (३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । | | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्य्यप्रणीतम् । श्रीनारायण तीर्थ विरचित भाष्यभाषा प्रकाशसहितम् । सं० | (वेदान्त) | २ |
| (५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः | (ज्योतिषः) | १ |
| (६) भाट्टचिन्तामणिः । महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपादः | ( मीमांसा ) | २ |

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A 174556

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 178.

832 B 3.58

# व्यवहार- बालंभट्टी

इति प्रसिद्धया लक्ष्मीनामिकया

पायगुण्डे इत्युपनामकेन बालंभट्टेन स्वपत्न्याः लक्ष्मीदेव्याः

स्मारकत्वेन तन्नाम्ना रचितया बृहत्या टीकया सहिता

मिताक्षरा

श्रीयुतगोविन्ददासमहाशयप्रदर्शितरीत्या

पर्वतीयनित्यानन्दपन्तेन परिष्कृत्य संशोधिता ।

# VYAVAHÂRA-BÂLAMBHATTI

THE EXTENSIVE COMMENTARY ON THE MITÂKSHARÂ

WITH THE ORIGINAL

BY

Bâlambhatta Páyagunde

EDITED BY

Pandit Nityanand Pant Parvatiya

Under the supervision of Shri Govinda Das.

FASCICULUS VI.

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT BOOK-DEPOT.

BENARES.

AGENTS:- OTTO HARRASSOWITZ LEIPZIG:

PANDITA JYESHTHÂRAMA MUKUNDAJI BOMBAY:

PRÔBSTHAIN & CO., BOOKSELLERS, LONDON

*Printed by Jai Krishna Dasa Gupta,*

AT THE VIDYÂ VILÂSA PRESS

BENARES.

*Price Rupee one.*

(Registered According to Act XXV of 1867.) (ALL RIGHTS RESERVED.)

अथ स्त्रीणां पतिद्वारको धनसंबन्धः पुत्रद्वारको वा नान्यथेति मतम्। तदप्यसत्।

( मनु अ. ९ श्लो. १९४ )

अध्यग्न्यध्यावहनिकं दत्तं च प्रीतिकर्मणि।

भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम्॥

इत्यादिविरोधात्। किंच। सर्वपुत्राभावे पत्नी दुहितर इत्यारब्धम्। तत्र नियुक्ताया धनसंबन्धं वदता क्षेत्रजस्यैव धनसंबन्ध उक्तो भवति। स च प्रागेवाभिहित इति अपुत्रप्रकरणे पत्नीति नारब्धव्यम्।

अथ पिण्डगोत्रर्षिसंबन्धा रिक्थं भजेरन्स्त्री वाऽनपत्यस्य बीजं वा लिप्सेतेति गौतमवचनान्नियुक्ताया धनसंबन्ध इति। तदप्यसत्। न हि यदि बीजं लिप्सेत तदाऽनपत्यस्य स्त्री धनं गृह्णीयादित्ययमर्थोऽस्मात्प्रतीयते। किन्तु अनपत्यस्य धनं पिण्डगोत्रर्षिसंबन्धा भजेरन्स्त्री वा, सा स्त्री बीजं वा लिप्सेत संयता वा भवेदिति तस्या धर्मान्तरोपदेशः। वाशब्दस्य पक्षान्तरवचनत्वेन यद्यर्थाप्रतीतेः।

अपिच। संयताया एव धनग्रहणं युक्तम्, न नियुक्तायाः स्मृतिलोकनिन्दितायाः।

अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता।

पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च॥

इति संयताया एव धनग्रहणमुक्तम्।

तथा नियोगश्च निन्दितो—

मनुना, ( अ. ९ श्लो. ६४ )

नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः।

कनीयान् ज्येष्ठभार्यायां पुत्रमुत्पादयेद्यदि।
समस्तत्र विभागः स्यादिति धर्मो व्यवस्थितः॥इति।

तथा वसिष्ठोऽपि रिक्थलोभान्नास्ति नियोग इति रिक्थलोभान्नियोगं प्रतिषेधन् नियोगद्वारक एव पत्न्या धनसंबन्धो नान्यथेति दर्शयति। नियोगाभावे तु पत्न्या भरणमात्रमेव।

नारदवचनात्। ( व्यव. १३। २६ )
भरणं चास्य कुर्वीरन्स्त्रीणामाजीवनक्षयात्। इति।
योगीश्वरेणापि किल वक्ष्यते। [ अ. २।१४२ ]
अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः।
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च॥इति।

अपिच। द्विजातिधनस्य यज्ञार्थत्वात् स्त्रीणां च यज्ञेऽनधिकारात् धनग्रहणमयुक्तम्। तथाच केनापि स्मृतम्,

यज्ञार्थं द्रव्यमुत्पन्नं तत्रानधिकृतास्तु ये।
अरिक्थभाजस्ते सर्वे ग्रासाच्छादनभाजनाः॥
यज्ञार्थं विहितं वित्तं तस्मात्तद्धि नियोजयेत्।
स्थानेषु धर्मजुष्टेषु न स्त्रीमूर्खविधर्मिषु॥ इति।

तदनुपपन्नम्। पत्नी दुहितर इत्यत्र नियोगस्याप्रतीतेरप्रस्तुतत्वाच्च। अपिच इदमत्र वक्तव्यम्। पत्न्या धनग्रहणे नियोगो वा निमित्तं तदुत्पन्नमपत्यं वा। तत्र नियोगस्यैव निमित्तत्वे अनुत्पादितपुत्राया अपि धनसम्बन्धः प्राप्नोति। उत्पन्नस्य च पुत्रस्य धनसंबन्धो न प्राप्नोति। अथ तदपत्यस्यैव निमित्तत्वं तथा सति पुत्रस्यैव धनसम्बन्धात्पत्नीति नारब्धव्यम्।

धर्ममर्थं च कामं च यथाशक्ति न हापयेत् ।

तथा "न पूर्वाह्णमध्यन्दिनापराह्णानफलान् कुर्या-यथाशक्ति धर्मार्थकामेभ्यः" तथा– (मनु. अ. २।९६)

न तथैतानि शक्यन्ते संनियन्तुमसेवया ।

इत्यादियाज्ञवल्क्यगौतममनुवचनविरोधः ।

अपिच । धनस्य यज्ञार्थत्वे हिरण्यं भार्यमिति हिरण्यधारणस्य क्रत्वर्थतानिराकरणेन पुरुषार्थत्वमुक्तं, तत्प्रत्युद्धृतं स्यात् ।

किंच । यज्ञशब्दस्य धर्मोपलक्षणत्वे स्त्रीणामपि पूर्तधर्माधिकाराद्धनग्रहणं युक्ततरम् ।

यत्तु पारतन्त्र्यवचनं न स्त्री स्वातन्त्र्यमर्हतीत्यादि, तदस्तु पारतन्त्र्यं, धनस्वीकारे तु को विरोधः ।

कथं तर्हि यज्ञार्थं द्रव्यमुत्पन्नमित्यादिवचनम् । उच्यते । यज्ञार्थमेवार्जितं यद्धनं तत् यज्ञे एव नियोक्तव्यं पुत्रादिभिरपीत्येवंपरं तत् । (मनु. अ. ११।२५)

यज्ञार्थं लब्धमददद्भासः काकोऽपि वा भवेत् ।

इति दोषश्रवणस्य पुत्रादिष्वप्यविशेषात् ।

यदपि कात्यायनेनोक्तम्,

अदायिकं राजगामि योषिद्भृत्त्यौर्ध्वदेहिकम् ।

अपास्य, श्रोत्रियद्रव्यं श्रोत्रियेभ्यस्तदर्पयेत् ॥ इति,

अदायिकं दायादरहितं यद्धनं तत् राजगामि राज्ञो भवति, योषिद्भृत्त्यौर्ध्वदेहिकमपास्य । तत् स्त्रीणामशनाच्छादनोपयुक्तम् औौर्ध्वदेहिकं धनिनः श्राद्धाद्युपयुक्तं चापास्य परिहृत्य राजगामि भवतीति संबन्धः । अस्यापवादः, श्रोत्रियद्रव्यं तु योषिद्भृत्त्यौ-

अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम्॥

इत्यादिना।

यत्तु वसिष्ठवचनम् "रिक्थलोभान्नास्ति नियोग" इति, तत् अविभक्ते संसृष्टिनि वा भर्तरि प्रेते तस्या धनसम्बन्धो नास्तीति स्वापत्यस्य धनसम्बन्धार्थं नियोगो न कर्तव्य इति व्याख्येयम्।

यदपि नारदवचनम्, (व्यव. १३। २६)

भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात्। इति,

तदपि— (व्यव. १३। २४)

संसृष्टिनां तु यो भागस्तेषामेव स इष्यते।

इति संसृष्टिनां प्रस्तुतत्वात्तत्स्त्रीणामनपत्यानां भरणमात्रप्रतिपादनपरम्। न च भ्रातॄणामप्रजाः प्रेयादित्येतस्य संसृष्टिविषयत्वे संसृष्टिनां तु यो भाग इत्यनेन पौनरुक्त्यमाशङ्कनीयम्। यतः पूर्वोक्तविवरणेन स्त्रीधनस्याविभाज्यत्वं तत्स्त्रीणां च भरणमात्रं विधीयते।

यदपि अपुत्रा योषितश्चैषामित्यादिवचनं, तत् क्लीबादिस्त्रीविषयमिति वक्ष्यते।

यत्तु द्विजातिधनस्य यज्ञार्थत्वात्स्त्रीणां च यज्ञेऽनधिकाराच्च धनग्रहणमयुक्तमिति। तदसत्। सर्वस्य द्रव्यजातस्य यज्ञार्थत्वे दानहोमाद्यसिद्धेः।

अथ यज्ञशब्दस्य धर्मोपलक्षणत्वात् दानहोमादीनामपि धर्मत्वात्तदर्थत्वमविरुद्धमिति मतम्। एवं तर्ह्यर्थकामयोर्धनसाध्ययोरसिद्धिरेव स्यात्।

तथा सति— (याज्ञ. १। ११५)

अल्पे तु पुत्रांशसमांशं गृह्णातीति । तच्च न । विधिवैषम्यप्रसङ्गात् । तथाहि । पत्न्यः कार्याः समांशकाः माताऽप्यंशं समं हरेदिति च वक्तृधने जीवनमात्रोपयुक्तं वाक्यान्तरमपेक्ष्य प्रतिपादयति अल्पधने तु पुत्रांशसममंशं प्रतिपादयतीति ।

यथा चातुर्मास्येषु द्वयोः प्रणयन्तीत्यत्र पूर्वपक्षिणा सौमिकप्रणयनातिदेशे हेतुत्वेन "न वैश्वदेवउत्तरवेदिमुपकिरन्ति न शुनासीरीये" इत्युत्तरवेदिप्रतिषेधे दर्शिते, राद्धान्तैकदेशिना न सौमिकप्रणयनातिदेशप्राप्ताया उत्तरवेद्याः प्रथमोत्तमयोः पर्वणोरयं प्रतिषेधः किन्तु उपात्र वपन्तीति प्राकरणिकेन वचनेन प्राप्ताया उत्तरवेद्याः प्रतिषेधोऽयमित्यभिहिते, पुनः पूर्वपक्षिणा उपात्र वपन्तीति प्रथमोत्तमयोः पर्वणोः प्रतिषेधमपेक्ष्य पाक्षिकीमुत्तरवेदिं प्रापयति मध्यमयोस्तु निरपेक्षमेव नित्यवदुत्तरवेदिं प्रापयतीति विधिवैषम्यं दर्शितम् । राद्धान्तेऽपि विधिवैषम्यभयात्प्रथमोत्तमयोः पर्वणोरुत्तरवेदिप्रतिषेधो नित्यानुवादो,द्वयोःप्रणयन्तीत्याद्यर्थवादपर्यालोचनया उपात्र वपन्तीति मध्यमयोरेव वरुणप्रघाससाकमेधपर्वणोरुत्तरवेदिं विधत्ते इति दर्शितम् ।

मपि मतम् ,

[ मनु अ. ९ श्लो. १८५ ]

पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा ।

इति मनुस्मरणात्, तथा स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा

र्ध्वदेहिकमपास्य श्रोत्रियायोपपादयेदिति । एतदप्यवरुद्धस्त्रीविषयम् । योषिद्ग्रहणात् ।

नारदवचनं च– [ व्यव. १३ । ५२ ]

अन्यत्र ब्राह्मणात्किन्तु राजा धर्मपरायणः ।
तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः ॥

इति अवरुद्धस्त्रीविषयमेव । स्त्रीशब्दग्रहणात् । इह तु पत्नीशब्दादूढायाः संयताया धनग्रहणमविरुद्धम् । तस्माद्विभक्ते असंसृष्टिन्यपुत्रे स्वर्याते पत्नी धनं प्रथमं गृह्णातीत्ययमर्थः सिद्धो भवति । विभागस्योक्तत्वात्संसृष्टिनां वक्ष्यमाणत्वात् ।

एतेनाल्पधनविषयत्वं श्रीकरादिभिरुक्तं निरस्तं वेदितव्यम् । तथा हि औरसेषु पुत्रेषु सत्स्वपि जीवद्विभागे अजीवद्विभागे च पत्न्याः पुत्रसमांशग्रहणमुक्तम्, ( याज्ञ. २ । श्लो. ११५ । )

यदि कुर्यात्समानंशान् पत्न्यः कार्याः समांशकाः।

इति— ( याज्ञ. २ श्लो. १२३ )

पितुरूर्ध्वं विभजतां माताऽप्यंशं समं हरेत् ।

इति च ।

तथा सति अपुत्रस्य स्वर्यातस्य धनं पत्नी भरणादतिरिक्तं न लभते इति व्यामोहमात्रम् ।

अथ पत्न्यः कार्याः समांशका इत्यत्र माताऽप्यंशं समं हरेदित्यत्र च जीवनोपयुक्तमेव धनं स्त्री हरतीति मतम् । तदसत । अंशशब्दस्य समशब्दस्य चानर्थक्यप्रसङ्गात् ।

स्यान्मतम् । बहुधने जीवनोपयुक्तं धनं गृह्णाति

आयुषः क्षपणार्थं तु दातव्यं जीवनं तदा ॥ इति,

तदपि शङ्कितव्यभिचारायाः सकलधनग्रहणनिषेधपरम्। अस्मादेव वचनात् अशङ्कितव्यभिचारायाः सकलधनग्रहणं गम्यते । एतदेवाभिप्रेत्योक्तं शङ्खेन, ज्येष्ठा वा पत्नीति। ज्येष्ठा गुणज्येष्ठा अनाशङ्कितव्यभिचारा सा सकलं धनं गृहीत्वाऽन्यां कर्कशामपि मातृवत्पालयतीति सर्वमनवद्यम् । तस्मादपुत्रस्य स्वर्यातस्य विभक्तस्यासंसृष्टिनः सकलमेव धनं परिणीता स्त्री संयता गृह्णातीति स्थितम्।

२। तदभावे दुहितरः । दुहितर इति बहुवचनं समानजातीयानामसमानजातीयानां च समविषमांशप्राप्त्यर्थम्।

तथाच कात्यायनः,

पत्नी भर्तुर्धनहरी या स्यादव्यभिचारिणी।
तदभावे तु दुहिता यद्यनूढा भवेत्तदा ॥ इति।

बृहस्पतिरपि,

भर्तुर्धनहरी पत्नी तां विना दुहिता स्मृता।
अङ्गादङ्गात्सम्भवति पुत्रवद् दुहिता नृणाम् ॥
तस्मात्पितृधनं त्वन्यः कथं गृह्णीत मानवः।इति।

तत्र चोढानूढासमवायेऽनूढैव गृह्णाति।

तदभावे तु दुहिता यद्यनूढा भवेत्तदा।

इति विशेषस्मरणात्। तथा, प्रतिष्ठिताऽप्रतिष्ठितासमवाये अप्रतिष्ठितैव, तदभावे प्रतिष्ठिता। स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां चेति गौतमवचनस्य पितृधनेऽपि समानत्वात्। न चैतत् पुत्रिकावि-

पत्नीति शङ्खस्मरणाच्च अपुत्रस्य धनं भ्रातृगामि इति प्राप्तम्। (ना. व्यव. १३। २६)

भरणं चास्य कुर्वीरन्स्त्रीणामाजीवनक्षयात्।

इत्यादिवचनाच्च भरणोपयुक्तं पत्नी लभते इत्यपि स्थितम्। एवं स्थिते यद्बहुधने अपुत्रे स्वर्याते भरणोपयुक्तं पत्नी गृह्णाति शेषं च भ्रातरः, यदा तु पत्नीभरणमात्रोपयुक्तमेव द्रव्यमस्ति ततो न्यूनं वा तदा किं पत्न्येव गृह्णात्युत भ्रातरोऽपीति विरोधे पूर्वबलीयस्त्वज्ञापनार्थं पत्नी दुहितर इत्यारब्धव्यमिति। तदप्यत्रभवानाचार्यो न मृष्यति।

यतः— [ मनु. अ. ९ श्लो. १८५ ]

पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा।

इति विकल्पस्मरणान्नेदं क्रमपरं वचनम् अपितु धनग्रहणेऽधिकारप्रदर्शनमात्रपरम्, तच्चासत्यपि पत्न्यादिगणे घटते इति व्याचचक्षे। शङ्खवचनमपि संसृष्टभ्रातृविषयामिति।

अपिच। अल्पविषयत्वमस्माद्वचनात्प्रकरणाद्वा नावगम्यते।

धनभागुत्तरोत्तर इत्यस्य च पत्नी दुहितर इति विषयद्वये[1] वाक्यान्तरमपेक्ष्याल्पधनविषयत्वम्, पित्रादिषु तु धनमात्रविषयत्वामिति पूर्वोक्तं विधिवैषम्यं तदवस्थमेवेति यत्किञ्चिदेतत्।

यत्तु हारीतवचनम्,

विधवा यौवनस्था चेन्नारी भवति कर्कशा।

१ पत्नीविषये दुहितृविषये चेत्यर्थः।

मातापित्रोर्मातुरेव प्रत्यासत्त्यतिशयाद्धनग्रहणं युक्ततरम्। तदभावे पिता धनभाक्।

५। पित्रभावे भ्रातरो धनभाजः।

तथाच मनुः, (अ. ९ श्लो. १८५)

पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा। इति।

यत्पुनर्धारेश्वरेणोक्तम्, (अ. ९ श्लो. २१७)

अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्।

मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम्॥

इति मनुवचनाज्जीवत्यपि पितरि मातरि वृत्तायां पितुर्माता पितामही धनं हरेन्न पिता। यतः पितृगृहीतं धनं विजातीयेष्वपि पुत्रेषु गच्छति, पितामहीगृहीतं तु सजातीयेष्वेव गच्छतीति पितामह्येव गृह्णातीति।

एतदप्याचार्यो नानुमन्यते। विजातीयपुत्राणामपि धनग्रहणस्योक्तत्वात्, चतुस्त्रिद्व्येकभागाः स्युरित्यादिनेति।

यत्पुनः— (अ. ९ श्लो. १८९)

अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः।

इति मनुस्मरणं, तत् नृपाभिप्रायं न तु पुत्राभिप्रायम्।

भ्रातृष्वपि सोदराः प्रथमं गृह्णीयुः। भिन्नोदराणां मात्रा विप्रकर्षात्। (मनु. अ. ९। १८७)

अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्।

इति स्मरणात्। सोदराणामभावे भिन्नोदरा धनभाजः।

६। भ्रातृणामप्यभावे तत्पुत्राः पितृक्रमेण धनभाजः।

पयामिति मन्तव्यम् । तत्समः पुत्रिकासुत इति पुत्रिकायास्तत्सुतस्य चौरससमत्वेन पुत्रप्रकरणेऽभिधानात्।

३। चशब्दाद् दुहित्रभावे दौहित्रो धनभाक्। यथाह विष्णुः,

अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः।
पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रका मताः॥इति।

मनुरपि, ( अ. ९ श्लो. १३६ )

अकृता वा कृता वाऽपि यं विन्देत्सदृशात्सुतम्।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम्॥इति।

४।तदभावे पितरौ मातापितरौ धनभाजौ। यद्यपि युगपदधिकरणवचनतायां द्वन्द्वस्मरणात् तदपवादत्वादेकशेषस्य धनग्रहणे पित्रोः क्रमो न प्रतीयते तथापि विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातादेकशेषाभावपक्षे च मातापितराविति मातृशब्दस्य पूर्वं श्रवणात् पाठक्रमादेवार्थक्रमावगमाद्धनसम्बन्धेऽपि क्रमापेक्षायां प्रतीतक्रमानुरोधेनैव प्रथमं माता धनभाक् तदभावे पितेति गम्यते।

किञ्च पिता पुत्रान्तरेष्वपि साधारणो माता तु न साधारणीति प्रत्यासत्त्यातिशयात्–(मनु.अ.९।१८७)

अनन्तरः सापिण्डाद्यस्तस्य तस्य धनं भवेत्।

इति वचनान्मातुरेव प्रथमं धनग्रहणं युक्तम्। न च सपिण्डेष्वेव प्रत्यासत्तिर्नियामिका अपि तु समानोदकादिष्वप्यविशेषेण धनग्रहणे प्राप्ते प्रत्यासत्तिरेव नियामिकेत्यस्मादेव वचनादवगम्यते इति

तेषामभावे समानोदकानां धनसम्बन्धः । ते च सपिण्डानामुपरि सप्त वेदितव्याः । जन्मनामज्ञानावधिका वा ।

यथाह वृद्धमनुः,

सापिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।

समानोदकभावस्तु निवर्तेताचतुर्दशात् ॥

जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यते। इति ।

८ । गोत्रजाभावे बन्धवो धनभाजः । बन्धवश्च त्रिविधाः आत्मबन्धवः पितृबन्धवो मातृबन्धवश्चेति।

यथोक्तम्,

आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः ।

आत्ममातुलपुत्राश्च विज्ञेया ह्यात्मबान्धवाः ॥

पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः ।

पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥

मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः ।

मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥ इति।

तत्र चान्तरङ्गत्वात्प्रथममात्मबन्धवो धनभाजस्तदभावे पितृबन्धवस्तदभावे मातृबन्धव इति क्रमो वेदितव्यः ।

९ । बन्धूनामभावे आचार्यः । तदभावे शिष्यः ।

पुत्राभावे यः प्रत्यासन्नः सपिण्डस्तदभावे आचार्यः आचार्याभावेऽन्तेवासीत्यापस्तम्बस्मरणात् ।

१० । शिष्याभावे सब्रह्मचारी धनभाक् । येन सहैकस्मादाचार्यादुपनयनाध्ययनतदर्थज्ञानप्राप्तिः स सब्रह्मचारी ।

भ्रातृभ्रातृपुत्रसमवाये भ्रातृपुत्राणामनधिकारः। भ्रात्रभावे भ्रातृपुत्राणामधिकारवचनात्।

यदा त्वपुत्रे भ्रातरि स्वर्याते तद्भ्रातृणामविशेषेण धनसम्बन्धे जाते भ्रातृधनविभागात्प्रागेव यदि कश्चिद् भ्राता मृतस्तदा तत्पुत्राणां पितृतोऽधिकारे प्राप्ते तेषां भ्रातृणां च विभज्य ग्रहणे पितृतो भागकल्पनेति युक्तम्।

७। भ्रातृपुत्राणामप्यभावे गोत्रजा धनभाजः। गोत्रजाः पितामही सपिण्डाः समानोदकाश्च। तत्र पितामही प्रथमं धनभाक्।

(अ. ९ श्लो. २१७)

मातर्यपि च वृत्तायां पितुर्माता धनं हरेत्।

इति मात्रनन्तरं पितामह्या धनग्रहणे प्राप्ते पित्रादीनां भ्रातृसुतपर्यन्तानां वद्धक्रमत्वेन मध्येऽनुप्रवेशाभावात् पितुर्माता धनं हरेदित्यस्य वचनस्य धनग्रहणाधिकारप्राप्तिमात्रपरत्वादुत्कर्षे तत्सुतानन्तरं पितामही गृह्णात्यविरोधात्।

पितामह्याश्चाभावे समानगोत्रजाः सपिण्डाः पितामहादयो धनभाजः। भिन्नगोत्राणां सपिण्डानां बन्धुशब्देन ग्रहणात्।

तत्र च पितृसन्तानाभावे पितामही पितामहः पितृव्यास्तत्पुत्राश्च क्रमेण धनभाजः।

पितामहसन्तानाभावे प्रपितामही प्रपितामहस्तत्पुत्रास्तत्सूनवश्चेत्येवमासप्तमात्समानगोत्राणां सापिण्डानां धनग्रहणं वेदितव्यम्।

इत्यत्रैकशेषेण भगिनीनामपि ग्रहणं बोध्यम् । तथेति भ्रातृविशेषणं विभक्ता असंसृष्टिनश्चेत्यर्थकम् । अत एव सफलम् । न तु समुच्चयाद्यर्थकम् । तं विनाऽप्यन्यत्रेवात्रापि तन्मतीत्या तथा साफल्याभावात् । तत्सुता इत्यत्र तयोः सुता इत्यर्थः । सुता इत्यत्र तथैकशेषेण तयोः कन्यानामपि ग्रहणम् । बन्धुशब्देन बान्धववदाचार्यस्य गुरोरपि ग्रहणम् । तस्यानेकार्थत्वात् । हिः त्वर्थे पूर्वतो वैलक्षण्यसूचकः ।

२ । अपुत्रस्येत्यत्र मुख्यपुत्रशून्यत्वमात्रं न विवक्षितं प्रकरणविरोधात्, किं तु मुख्यगौणपुत्राणामभाव एवेत्याशयेन तृतीयपादस्य अग्रे ऽन्वयासंभवात् पूर्वैकवाक्यतामाह *पूर्वोक्ता इति । एषामित्यत्रापि तथैकशेष इत्याह *पत्न्यादीनामिति । इदमो न बुद्धिस्थप्रत्येकपरामर्शित्वमित्याह * अनुक्रान्तानामिति । निर्धारणे षष्ठीत्याह * मध्ये इति । आग्रेमानुरोधेन पूर्वस्येति वीप्सागर्भमित्याह * पूर्वस्य पूर्वस्येति । उत्तरोत्तर इति संबन्ध इति पाठः । उत्तरोत्तरो धनभागीति संबन्ध इत्यपाठः । पौनरुक्त्यादनन्वयाच्च । तथा पाठे तु तदीयधनभाक्त्वमुद्दिश्य तेषां तयोत्तरोत्तरत्वस्य विधानान्न दोषः ।

३ । अत्र पुत्रग्रहणं पौत्रप्रपौत्रयोरप्युपलक्षणम् । जीवति मृते च पुत्रे पौत्राणां भागस्य भूयो पितामहेति अनेकपितृकाणामिति चोक्तत्वात् ।

अविभक्तविभक्तानां कुल्यानां वसतां सह ।
भूयो दायविभागः स्यात् आचतुर्थादिति स्थितिः ॥
इति देवलात् ।
अपुत्रपौत्रसंताने दौहित्रा धनमाप्नुयुः ।
तिइ विष्णोः । पिता सवर्णायाः पुत्रः पौत्रः पुत्रपौत्र इत्यु-

११। तदभावे ब्राह्मणद्रव्यं यः कश्चित् श्रोत्रियो गृह्णीयात्। श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्निति गौतमस्मरणात्। तदभावे ब्राह्मणमात्रम्।

यथाह मनुः, (अ. ९ श्लो. १८८)

सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः।
त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते॥इति।

न कदाचिदपि ब्राह्मणद्रव्यं राजा गृह्णीयात्। (अ. ९ श्लो. १८९)

अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः।

इति मनुवचनात्।

नारदेनाप्युक्तम्,

ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्न कश्चन।
ब्राह्मणायैव दातव्यमेनस्वी स्यान्नृपोऽन्यथा॥इति॥

क्षत्रियादिधनं सब्रह्मचारिपर्यन्तानामभावे राजा हरेत् न ब्राह्मणः।

यथाह मनुः, (अ. ९ श्लो. १८९)

इतरेषां तु वर्णानां सर्वाभावे हरेन्नृपः।

इति॥ १३५॥ १३६॥

वा. १। उक्तवक्ष्यमाणप्रमेययोः कठिनतरत्वात्तयोस्तात्पर्यार्थं सौकर्याय दर्शयंस्तत्र श्रोतृसमवधानाय पद्येन सङ्गतिमाह*मुख्यगौणेति। गौणेत्यनेन दासानामपि सङ्ग्रहः। उक्तक्रमेणेति भावः। * तेषामभावे इति। तेषां सर्वेषां ब्राह्मणादिवर्णानां मूर्द्धावसिक्ताद्यनुलोमजानां दासानां चेत्यर्थः। दायादाः धनग्राहिणः। पत्नीत्यत्र एवकारस्य सर्वत्र प्रत्येकं सम्बन्धः। तेनाद्यादिसत्त्वे द्वितीयादिव्यावृत्तिः। चेन दौहित्रसमुच्चयः। भ्रातर

र्वाहे तद्विवक्षाया अनुपयोगात्, द्वितीयार्थस्य भाष्याद्यसंमतत्वात्, उक्तरीत्या पूर्वपक्षस्यैवासंगतेश्च ।

६। एतेन "पत्नी विवाहिता, पत्युर्नो यज्ञति अत्र वदतो ग्रन्थोपसंहारे उभयत्र तथैव वदतो विज्ञानेश्वरस्य द्वितीयमतमेवेष्टमिति शूद्राया अपि तस्यास्तत्त्वम्, अत एव कात्यायादिकमवरुद्धस्त्रीविषयमिति तेन वक्ष्यते, अन्यथा तां विहाय तत्पर्यन्तधावनासंगतिः स्पष्टैव" इति परास्तम्। तथैष्टत्वे पत्नी धर्मविवाहोढेति प्राग्वद्विवाहितेत्येव सिद्धे पत्युर्नोयज्ञेत्युल्लेखस्य निर्बीजत्वापत्तेः, अर्थान्तरस्य महाभाष्यविरुद्धत्वाच्चेति दिक् ।

७। न्यूनत्वादिनिरासायाह *एकवचनमिति। अत एव पत्न्यः कार्या इत्यत्र बहुवचनम् उक्तम्। *यथांशमिति । सन्ति तदेत्यादिः । चतुस्त्रिद्व्येकभागाः स्युरित्युक्तिक्रमेण ब्राह्मणी क्षत्रिया वैश्या गृह्णीयुरित्यर्थः । तथा च तस्य तादृशस्य समग्रधनग्रहणं पत्न्या कार्यमिति सिद्धम् ।

अत एव व्यासः,

मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता ।
स्नाता प्रतिदिनं दद्यात्स्वभर्त्रे सलिलाञ्जलिम् ॥
कुर्यादनुदिनं भक्त्या देवतानां च पूजनम् ।
विष्णोराराधनं चैव कुर्यान्नित्यमुपोषिता ॥
दानानि विप्रमुख्येभ्यो दद्यात्पुण्यविवृद्धये ।
उपवासांश्च विविधान्कुर्याच्छास्त्रोदितान् शुभान् ॥
लोकान्तरस्थभर्तारमात्मानं च वरानने ।
तारयत्युभयं नारी नित्यं धर्मपरायणा ॥ इति ।

अनेन च पुत्रादिवत्सर्वोपकारकतया नरकादिनिस्तारकत्वेन च तदभावे ऽन्यतः पूर्वं पत्न्या एव तत्त्वम् अन्यथा दानाद्य-

पक्रम्य सत्स्वन्येषु तद्गामीति बौधायनोक्तेश्च। एवं पादत्रयैक-वाक्यार्थमुक्त्वा तुर्यपादार्थमाह * सर्वेष्विति। सर्वशब्दो न वर्ण-विशेषणम् अपि तु स्वतन्त्र इति सर्वे च वर्णाश्चेतीतरेतरद्वंद्व इति भावः। * क्रम इति। इदं क्रमपरमेव हीति स्पष्टमिति भावः।

४। उक्तक्रमं विभज्य विविच्य दर्शयति * तत्रेत्यादिना। *तत्र, पत्न्यादीनां मध्ये। * प्रथमं, तथोपादानात्। तदर्थमाह *विवाहसंस्कृतेति। धर्मविवाहपूर्वकश्रौतस्मार्त्तकर्मसहाधिकारव-तीत्यर्थः। तदेतत् ध्वनयन्नाह * पत्युर्नो यज्ञेति। *स्मरणात्, पाणिनिस्मृतेः। पतिशब्दस्य नकारादेशो भवति यज्ञसंयोगे गम्ये। दंपत्योः सहाधिकारेण यज्ञसाधनत्वात्तत्कर्तृकयज्ञफलभो-क्त्रीत्वाच्च तस्या यज्ञसंयोगः। यज्ञसंयोगे इत्यस्य यज्ञेन संबन्धे इत्यर्थः। स्त्रिया इति शेषः। संयोगपदं संबन्धोपलक्षणम्। संब-न्धश्च यज्ञफलमतियोगिकैश्वर्यवत्त्वम्। तथा च विलक्षणविवाहसं-स्कृतैव यज्ञसाधनं नान्येति सैव पत्नीत्युच्यतइति भावः। सव-र्णासु विधौ धर्म्ये इत्युक्त्या ज्येष्ठां विनाऽन्यासामनधिकारेऽपि त-या सहाधिकारात् तदभावेऽप्यधिकारात्तासामपि तत्संबन्धो बोध्यः।

५। एतेन "यद्यपि ज्येष्ठायामनिषिद्धायां सत्यामन्यासां ना-धिकारस्तथापि तदभावे दीर्घरोगग्रस्तायां तस्यां पतितायां वाऽ-न्यासां क्रमेणाधिकारोऽस्तीति यज्ञसाधनत्वयोग्यता ऽस्तीति यज्ञसंयोगे इत्यत्र यज्ञसाधनत्वयोग्यता विवक्षिता। यद्वा यज्ञसं-योगशब्देन विवाह एव।तत्रापि देवतोद्देशेन द्रव्यस्य दीयमानत्वा-त्तद्रूपत्वाच्च यागस्य।एवमपि विवाहितैव पत्नी नान्येति तदा स्त्रियं विना विवाहस्यैवाभावाद्यज्ञसाधनत्वं बोध्यम्" इति मदनोक्तम-पास्तम्। अन्यार्थे योग्यत्वविवक्षायामपि प्रकृते प्रोक्तरीत्या नि-

साध्वी गृह्यते । अत एव पूर्वस्यैकवाक्यता । अत एव तदभावे इत्यस्य अर्द्धद्वयमध्यपठितस्य पूर्वत्राप्यन्वयः । मूलाद्येकवाक्यतया चाग्रेऽपि प्रतिवाक्यं संबन्धः । अपिना दौहित्रसमुच्चयः । वाशब्द एवार्थः सर्वत्रान्वेति । पुत्राश्च प्रत्यासत्त्या भ्रातुरेव । चेन कन्यानामपि प्राग्वत् ग्रहणं बोध्यम् । भ्रातृपदं भगिनीनामप्युपलक्षणम् । पितामातेत्यंशे ऽनेन प्रागुक्तविष्णुना च तत्रान्यत्र च विरोधो यथा मूलस्य न, तथाऽग्रे स्फुटीभविष्यति । * बृहस्पतिरपीति । सर्वत आदौ पत्न्या धनग्रहणं वक्तीति शेषः । कुल्येष्विति पित्रादिविशेषणमिति काश्चित् । वस्तुतो भिन्नं पितृभ्रातृसपिण्डान्यस्वकुलोत्पन्नदुहितृदौहित्रभ्रातृसुतादिपरम् । पितृपदेनैकशेषेण मातुरपि ग्रहणम् । एवं भ्रातृपदेन भगिनीनामपि ग्रहणं बोध्यम् । सपिण्डाः स्युः सनाभय इति कोशः । तेषु तेषु च विद्यमानेष्वपि अपुत्रस्य मृतस्य पत्न्येव तस्य भर्तुः, भज्यते इति भागो धनं सर्वं, तद्धारिणीत्यर्थः ।

९ । एवं स्वल्पस्मृत्यन्तरानुरोधेन मूलार्थं प्रतिपाद्य दृश्यमानान्यस्मृतिविरोधं परिहर्तुमादौ विरोधमाह * एतदिति । उक्तसर्वविरुद्धानीत्यर्थः । चस्त्वर्थे । * लक्ष्यन्ते, दृश्यन्ते । तान्येवाह * तद्यथेति । तान्येव क्रमेण प्रदर्शयामीत्यर्थः । तत्रादौ नारदमाह * भ्रातॄणामिति । निर्धारणे षष्ठी । अप्रजा इत्यत्र नित्यमसिजित्यसिच् । प्रजाशब्दः पुत्रादिमात्रपरः । * प्रेयात्, परलोकं गच्छेत् । * शेषास्ते, भ्रातर एव प्रत्यासत्तेः । चो भिन्नक्रमः । चेद्यदि स्त्रियः भर्तुः शय्यां प्राग्वत् स्वयोनिं रक्षन्ति सदा जीवनक्षयपर्यन्तमस्य स्त्रीणां भरणं पोषणं कुर्वीरंश्चेत्यर्थः । आच्छिन्द्युरिति । इतरासु व्यभिचारिणीषु स्त्रीषु विषये भरणमप्याच्छिन्द्युरपाकुर्युर्न दद्युरिति यावदित्यर्थः । एतच्चापोष-

सम्भव इति वोधितम् । सवर्णाया अभावेऽसवर्णाऽपि पत्नी। तेन शूद्राव्यवच्छेदः। तस्याः परिणीतात्वेऽप्यपत्नीत्वात्।

अत एव विष्णुः, सवर्णाऽभावे त्वनन्तरया चापदि, न त्वेव द्विजः शूद्रयेति। धर्मकार्यं कुर्यादित्यनुवर्त्तते। आचाराध्याये मूले चोक्तमिदम् । अतस्तस्या जीवनोपयुक्तांशभागित्वं न कृत्स्नांशभागित्वमिति वोध्यम् ।

८। तत्र मानान्तरमप्याह *वृद्धेत्यादिना । *शयनम् इति। तच्छयनसाधनयोनिरक्षणं सम्यक्कुर्वतीत्यर्थः। अत एवाह *व्रते इति । ब्रह्मचर्ये इत्यर्थः। एवेनेतरव्यवच्छेदः। तथा चेदमपि तदंशे क्रमवोधकमेवेति भावः । * तत्, तस्मै भर्त्रे।* अंशं, धनम्। अपुत्रेत्युक्तेरिदमग्रिमं चापुत्रादिविषयमिति स्पष्टमेव।*बृहद्विष्णुरपीति। पत्न्यादीनां क्रमेण सामान्येन सर्वधनग्रहणं वक्तीति शेषः।स हि क्रमपर एव स्पष्टः मूलवत् । विष्णुरप्येवम्।*मातृगामीतीति।तदभावे भ्रातृगामि, तदभावे भ्रातृपुत्रगामि, तदभावे वन्धुगामि, तदभावे सकुल्यगामि, तदभावे सहाध्यायिगामि, तदभावे ब्राह्मणधनवर्जं राजा स्वामीति वाक्यशेषः। *कात्यायनेनापीति । तथोक्तं किंचिदंशे इति भावः। * पत्नीति । सेत्यादिः। *भर्त्तुरिति। अपुत्रस्येत्यादिः। मन्वादिस्मृत्यनुरोधात्। धनहरीत्यत्र विशिष्टस्य पचादिषु पाठादच्। स नदडित्यादिवट्टिदिति ङीप् । * अव्यभिचारिणीति । इदमप्रतिकूलाया अप्युपलक्षणम् । *दुहितेति। तत्सामान्यमित्यर्थः। यद्यनूढेत्यादेरर्थस्तु वक्ष्यमाण एव । उक्तवाक्यमपुत्रपरमिति सूचयन् तदीयमेव वाक्यान्तरमाह * तथेति । अथशब्दः प्रारम्भादाविति यावत्। कुलजात्वं च नात्र सवर्णात् जातात्वमात्रम् अपि तु सवर्णादानुलोम्येन च जातात्वे सति सत्कुलप्रसूतात्वम् । तेनाव्यभिचारिणी

११। * व्यवस्थेति । भ्रात्रंशे इति भावः ।

* एतादिति । मूलवृद्धमनुविष्णुबृहस्पतिकात्यायनादिप्रोक्तवचनसमूह इत्यर्थः । * विभक्तेति । विभागस्योक्तत्वात्, विरुद्धकातीये विभक्ते इत्यस्योपादानाच्च ।

तत्रापि विशेषान्तरमाह *सा चेति सा तु इत्यर्थः । तदा तत् तद्विषयमिति भावः । तदेव शङ्कानिरासेन द्रढयति * कुत इत्यादिना । नियोगार्थिन्या एव पत्न्याः धनग्रहणं न स्वतन्त्रायास्तदनपेक्षिण्यास्तस्या इत्येतत् कुतः कस्माद्धेतोरित्यर्थः । तं हेतुमाह * पितेत्यादिना कारणमस्तीतीत्यन्तेन । आदिना नारदीयस्यापि परिग्रहः । * वचनात्, वचनजाताविरोधात् । * तत्र, उभयेषामप्रामाण्यप्रसङ्गे तन्निरासायेति शेषः । व्यवस्थाकारणमिति समाहारद्वन्द्वः । कारणं च प्रत्यासत्तेस्तस्या एव । ननु तत् अन्यदेवास्तु किमिति नियोगापेक्षित्वमेवेति नियमोऽत आह * नान्यदिति । तथा च विभक्तभ्रातृस्त्रीविषयमित्यनेन व्यवस्थोक्ता । सा चेत्यनेन नियोगार्थित्वं तत्कारणमुक्तमिति भावः । इतिर्हेतौ ।

१२। न केवलं तथोक्तिमात्रेण तदर्थसाधनमपि तु वाचानिकोऽपि सो ऽर्थ इत्याह * गौतमेति । तमेवाह * पिण्डेति । तथाऽस्फुटत्वात् व्याचष्टे * अस्यार्थ इति । ऋषिः प्रवरः । सगोत्रत्वे सप्रवरत्वे च सति सपिण्डा इत्यर्थः । अनेन पित्रादेर्धनसंबन्धस्तावदुक्तः । पक्षान्तरमाह * स्त्रीवेति । बीजं वेति वाशब्दार्थमाह । * यदीति । निपातानामनेकार्थत्वात् ।

१३ । * मनुरपीति । सोऽपि इत्यनेनैतदर्शयतीत्यन्वयः । * विभृयात्, रक्षेत् । स्त्रियमेव चेति पाठः । तद्धनं तस्य भ्रातुर्धनं तस्यैव पुत्राय दद्यादित्युक्त्येदं विभक्तभ्रातृविषयम् । अन्यथा

णमत्यन्तपरिदुष्टासु वोध्यम्। * च भरणमात्रमिति। भरणमात्रं चेत्यर्थः। मानवे एवकारस्य पूर्वत्राप्यन्वयः। वाशब्दः समविकल्पे इत्याह * पितुर्वा भ्रातुर्वेति। मन्वन्तरमेवाह * तथेति। *वृत्तायां, समाप्तायाम्। मृतायामिति यावत्। चः त्वर्थे व्युत्क्रमे च। शङ्खीये हिः त्वर्थे। व्युत्क्रमेणान्वयः। एवार्थो वाशब्दः सर्वत्रान्वयी। ज्येष्ठायाश्चेति चो व्युत्क्रमे। तेन सगोत्रशिष्यसब्रह्मचारिण इति वाक्यशेषसमुच्चयः। पैठीनसिरप्येवम्। तदभावे इत्यस्याग्रेऽपि संबन्ध इत्याशयेनाह * क्रमेण धनेति। * कात्यायनेनापीति। पितुर्भ्रातुर्मातुः पितामह्याश्च क्रमेण धनसंबन्धो दर्शित इति शेषः। क्रमादित्याद्युक्त्या तथा स्पष्टत्वादत्रेदं नोक्तम्। तच्चेत्थं, वाशब्द एवार्थः अथशब्द आनन्तर्यार्थः उत्तरार्द्धे सर्वत्रान्वेति। तेन तत्तदभावो लभ्यते। तदेव स्फुटीकृतं * क्रमादिति। तत्पितुर्माता वेत्यन्वयः। विभागं विना तदीयद्रव्यस्यैव मायोऽसंभवेन पितुस्तद्धनहारित्वासंभवादुक्तम्, * विभक्ते इति। भावे क्तः। विभागे जाते सतीत्यर्थः। यद्वा विभक्ते पितरि संस्थिते मृते सति इति। इतिः समाप्तौ।

१०। एवं विरोधमुक्त्वा तमुपसंहरन्नन्यकृतं तत्परिहारं दूषयितुं तावदनुवदति * एवमादीनामित्यादिना। एवमादीनां कात्यायनादीनाम्। आदिनाऽनुपदं वक्ष्यमाणगौतमादेः।

ततो दायमपुत्रस्य विभजेरन्सहोदराः।
तुल्या दुहितरो वाऽपि ध्रियमाणः पिताऽपि वा॥
सवर्णा भ्रातरो माता भार्या चेति यथाक्रमम्।
तेषामभावे गृह्णीयुः कुल्यानां सह वासिनः॥

इति देवलस्य च परिग्रहः। तुल्याः सवर्णदुहितरः। सवर्णा भ्रातरः सापत्नाः।

स्तुतत्वाच्चेति । अप्रकृतत्वादित्यर्थः ।

१८। नन्वेवमप्यन्यथाऽनुपपत्त्या कल्पितः स इत्युक्तमेव। किं च। अपुत्रेण परक्षेत्रे इत्यत्र स उपात्त इति तत्त्वमेव। अत आह *अपि चेदमिति। नियोगः वीजधारणमूलभूतः।

१९। आद्यं खण्डयति *तत्रेति। तयोर्मध्ये इत्यर्थः। एवेन द्वितीयव्यवच्छेदः। अत एवाह *अनुत्पादितपुत्राया अपीति। अपिनेष्टसमुच्चयः। ननु नियोगस्यैव धनग्रहणे निमित्तत्वेऽनुत्पादितपुत्राया अपि धनग्रहणमस्तु को विरोधोऽत आह *उत्पन्नस्य च पुत्रस्येति। नियोगोत्पन्नपुत्रस्य धनग्रहणे निमित्तत्वाभावेन तस्य धनसम्बन्धाभावे "पित्रोरूर्ध्वं विभजताम्" "पिण्डदोंऽशहरश्चैषाम्" इति "स्वर्यातस्य ह्यपुत्रस्य" इति च यथाक्रमं द्वादशविधपुत्राणां विभागप्रकारकथनं पुत्राभावे एवेतरेषां धनग्रहणकथनं च विरुध्येतेति भावः।

२०। द्वितीयपक्षं दूषयति *अथेति। सर्वं वाक्यमितिन्यायेनाह *तदपत्यस्यैवेति। एवं प्रागपि। एवेनाद्यव्यवच्छेदः। धनग्रहणे इति शेषः। *तथेति। तस्यैव तद्ग्रहणनिमित्तत्वे पुत्रस्यैव धनसम्बन्धनिमित्तत्वलाभात् पत्नी दुहितर इत्यत्र पत्नीत्यंशो न पाठ्यः। तस्या धनसम्बन्धनिमित्तत्वाभावात्, अस्य वचनस्य तत्प्रदर्शनार्थत्वाच्चेति भावः।

२१। यद्यपि पत्न्या धनग्रहणे नियोगो वा निमित्तं, तदुत्पन्नमपत्यं वा, उभयं वा, विशिष्टं वा। अन्त्येऽपि नियोगः प्रधानमपत्यं वा। वैशिष्ट्यं च जन्यजनकभावसम्बन्धेनेति पञ्चपक्षीसंभव इति पक्षद्वयमात्रोपन्यासो न्यूनस्तथापि पक्षद्वयोक्तदूषणैरेवान्येषामपि सुपरिहरत्वेन पृथगनुक्तिः। तथा हि। यदा वैशिष्ट्ये नियोगः प्रधानं तदाऽपत्यं गौणमिति निमित्तमप्यनिमि-

विभागाभावे तस्य पृथग्धनाभावात्तद्धनमित्यस्यासङ्गतिः स्पष्टैवेत्याशयेन एतत्पदार्थमाह *विभक्तेति। वहुव्रीहिः। पूर्वार्द्धोक्त एव उत्पाद्येत्यत्रान्वेतीत्याशयेनाह * द्वारेणैवेति।

१४। एवं विभक्ताविपये उक्त्वाऽविभक्ताविपयेऽपि तथेति मनुमेवाह *तथा ऽविभक्तधनेऽपीति। अनेनेत्यादिभ्रातरीत्यादिच-पूर्वानुपङ्गेण वाक्यार्थः। अपिद्वयं मिथःसमुच्चये। समो विभागः स्यादित्युक्त्येदमाविभक्तविपयम्। विभक्ते विभागाभावात्। प्रतिपेधन्निति हेतुगर्भं वसिष्ठस्य विशेपणम्। लोभादिति हेतौ पञ्चमी। नियोगे चान्वयः। नास्तीत्यस्य न कार्य इत्यर्थः।

१५। एवं तद्विपयमुक्त्वा तद्दाढ्यार्य विरुद्धप्रागुक्तनारदविपयमाह *नियोगाभावेत्विति। एवेन कृत्स्नधनसंवन्धव्यवच्छेदः। तदेवाह *भरणमिति। *जीवनेति। जीवितेति पाठे भावे क्तः। एवं च प्रागुक्तमन्वादिकमप्येतद्विपयमेवेति वोध्यम्। मूलसंमतिमप्यत्राह *योगीति। तदेवाह। * अपुत्रा इति। वस्तुतो ऽरुचौ किलशब्दोऽत्र। यथा, त्वं किल योत्स्यसे इति। अपुत्रा इति मूलस्यार्थान्तरस्य वक्ष्यमाणत्वादिति वोध्यम्।

१६। *अनाधिकारात्, स्वातन्त्र्येण विध्यविपयत्वाद् गुणाद्यभावादेश्च। *यज्ञार्थं, तत्सिद्ध्यर्थम्। *तत्र, यज्ञे। शास्त्रनिषिद्धत्वादपि तदनधिकृतत्वं वोध्यम्। *हि, यतः। तस्मात्तत् तथा स्थानेषु अनिपिद्धसगुणविधिविपयद्विजातिषु नियोजयेत् राजा। शास्त्रनिपिद्धाः शूद्रादयश्च विधर्मिणः। वस्तुतः केनापीत्युक्त्या ऽत्र अनादरो द्योतितः। अत एवात्र वचने मूलं न प्रदर्शितमिति वोध्यम्।

१७। तदुक्तव्यवस्थां दूषयति *तदनुपपन्नमिति। ननु तत्र तद्बोधकशब्दाभावेऽपि प्राकरणिकः सोऽर्थोऽस्त आह * अप-

२४ ब्रह्मसूत्राणि मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्त ) १

२५ [illegible] । अथ [illegible] अनुमानजागदीश्याः [illegible] [illegible] ( [illegible] ) ३

२६ ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टाचार्यविरचितसिद्धान्तसेतुकाऽभिधटीकासमेतम् [illegible] प्रणीतसिद्धान्तजाह्नवीयुतम् २

२७ षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । १

२८ शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च १

२९ अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्याजागदीशी टीका । ११

३० वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा संस्कारप्रकाशात्मकः । १०

३१ वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ५

३२ स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः । ४

३३ वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । २

३४ प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितः २

३५ वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

३६ योगदर्शनम् । परमहंसपरिव्राजकाचार्य-नारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिका-समाख्यया संवलितम् । २

३७ वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वती स्वामिकृत ब्रह्माऽमृतवर्षिणी समाख्य व्याख्यासंवलितम् । ४

३८ विश्वप्रकाशः । कोशः । विद्वद्वर श्रीमहेश्वरसूरिविरचितः । २

३९ श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता । श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचित टिप्पणीसहिता । २

४० वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ४

४१ वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । द्वैताद्वैतदर्शनानुगतः । २

४२ स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्य नारायणाश्रमशिष्यमाधवाश्रमविरचित । स्वकृतटीकाविभूषितश्च । १

४३ याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्य व्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्याय ६

पत्रादिप्रेषणस्थानम् } हरिदास गुप्तः, चौखम्बा, बनारस, सिटी,

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र वि० सं० ( मीमांसा २

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीत-वेदान्तसूत्रस्य यतीन्द्र श्रीमाद्विज्ञान-भिक्षुकृत व्याख्यानम्। सम्पूर्णम्। ( वेदान्तः ) ६

(९) स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता सम्पूर्णा। ( जैनदर्शनम् ) २

(१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपण-परम्-श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्णम् ( वेदान्तः ) १

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः। आचार्यचित्सुख-मुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४

(१२) विभक्त्यर्थनिर्णयःन्यायानुसारिप्रथमादि-सप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः । सम्पूर्णः ( न्यायः ) ५

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम्। सं० ( मीमांसा ) २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्ट-सोमेश्वरविरचिता । ( मीमांसा ) १६

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । ( वेदान्तः ) २

(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशाऽध्यायार्थसंग्रहः ) श्रीभट्टनारायणात्मज-भट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि-मीमांसादर्शनम् ) महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितं, श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः ( मीमांसा ) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च । ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितम् ( वेदान्तः ) १

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम्। आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया ( विद्यासागरी ) ति प्रसिद्धया समेतम्। ( वेदान्तः ) १३

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता । १

(२३) श्रीलक्ष्मीसहस्रम्-बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् । ८

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोदितम् ॥ २ ॥
स्तवकः— १७२

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरण धर्मशास्त्रसाहित्यपुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्-मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तवकम् ,, ,, १ ,, ०

६ प्रापणव्ययः पृथग् नास्ति ।

७ साम्प्रतं मुद्र्यमाणा ग्रन्थाः— मुद्रिताः स्तवकाः

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता ( संस्कारः ) २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः ( व्याकरणम् ) १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायण तीर्थ विरचित भाष्टभाषा प्रकाशसहितम् । सं० (वेदान्त) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः ( ज्योतिषः) १

(६) भाट्टचिन्तामणिः । महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपादः ( मीमांसा ) २

*November* *1912.*

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 179.

832 B 358

# व्यवहार- बालंभट्टी

इति प्रसिद्धया लक्ष्मीनामिकया
पायगुण्डे इत्युपनामकेन बालंभट्टेन स्वपत्न्याः लक्ष्मीदेव्याः
स्मारकत्वेन तन्नाम्ना रचितया बृहत्या टीकया सहिता
मिताक्षरा 17456
श्रीयुतगोविन्ददासमहाशयप्रदर्शितरीत्या
पर्वतीयनित्यानन्दपन्तेन परिष्कृत्य संशोधिता ।

VYAVAHÂRA-BÂLAMBHATTI

THE EXTENSIVE COMMENTARY ON THE MITÂKSHARÂ
WITH THE ORIGINAL

BY

Bâlambhatta Páyagunde

EDITED BY

Pandit Nityanand Pant Parvatiya
Under the supervision of Shri Govinda Das.

FASCICULUS VII

*PUBLISHED AND SOLD BY THE SECRETARY*
CHOWKHAMBÂ SANSKRIT BOOK-DEPOT.
BENARES.

AGENTS:- OTTO HARRASSOWITZ LEIPZIG:
PANDITA JYESHTHÂRAMA MUKUNDAJI BOMBAY:
PROBSTHAIN & CO., BOOKSELLERS, LONDON
*Printed by Jai Krishna Dasa Gupta,*
AT THE VIDYÂ VILÂSA PRESS
BENARES.

*Price Rupee one.*

चेति । मुख्यगौणेत्यर्थः । * तत्र, आरब्धे पर्वाणि वाक्ये । *नियुक्ताया इति।पुत्रद्वारेति भावः। स च पुत्रः क्षेत्रज एवेत्या-ह *क्षेत्रजस्यैवेति । *स च, आरब्धपर्वीतिपाठेपात्रार्थः । *मा-गेव, औरसो धर्मपत्नीज इत्यत्रैव । * अपुत्रेति । अपुत्रसम्बन्धि-धनग्राहिप्रकरणं इत्यर्थः । पौनरुक्त्यापत्तेरिति भावः ।

२५।द्वितीयहेतुनिरासायोक्तार्थस्योक्तं वाचनिकत्वं दोषपुरस्कारार्थं तद्वचनगत्यन्तराय च अनुवदति * अथ पिण्डेति । न ही-त्यस्य प्रतीयते इत्यत्रान्वयः । * हि, यतः । स्त्रीधनमित्यत्र स्त्री-ति पदं भिन्नं कर्त्री च सा। अनपत्यस्य धनं स्त्री गृह्णीयादित्यर्थः।

२६। एतेन स्त्री चेति पाठं धृत्वा "द्विजातीनां केवलशूद्राभा-र्याविषयमिदं, तस्य धनं सपिण्डाद्याः प्रत्यासत्तिक्रमेण भजेरन् स्त्री च, सपिण्डादितस्तस्याः पृथगुक्तेरर्द्धं ते ऽर्धं स्त्रीति त-दर्थः।स्त्रीग्रहणादिदं शूद्रापरमेवान्यासां पत्नीत्वात्" इति भ्रान्तो-क्तमपास्तम् । मूलाशुद्धेः, उपक्रमविरोधात्, तस्याधिकारिप्रद-र्शनमात्रपरत्वाच्च ।

२७। *धर्मान्तरोपदेश इति।प्रतीयते इत्यस्यानुषङ्गः।हेतौ हेतुमाह *वाशब्देति । निपातानामनेकार्थत्वमपि लिङ्गानुशासनानुरोध्ये-वेति भावः । अयं भावः ।ते धनभाजः स्त्री वा तथेत्युक्त्वा तस्या गतभर्तृकाया अन्यधर्मद्वयोपदेशं चिकीर्षुरेकं धर्ममुक्तवान्, सा स्त्री वीजं वा लिप्सेतेति । नियोगधर्मेण पुत्रमपेक्षेतेत्यर्थः । अत्र वाशब्दो न यथार्थः । मानाभावात् । किं तु विकल्पार्थः । स च पक्षान्तरापेक्षया।।तदेव द्वितीयो धर्मः । स च वचने साक्षाद-श्रुतोऽपि वाशब्दबलात्स्मृत्यन्तरानुरोधाच्च नियोगेन पुत्राभि-लापरूपोपात्तपक्षप्रतियोगी संयतत्वरूपो धर्म इति ज्ञायते । तथा च नियोगात् पुत्रमपेक्षेत वा, संयता वा भवेदिति धनभजनम्

त्मिन् परतन्त्रत्वात् । तथा चानुत्पादितेत्याद्यपक्षोक्ताद्यदूषणं तदवस्थमेव। अथापत्यं प्रधानं तदोक्तरीत्या द्वितीयपक्षोक्तदोपस्तदवस्थ एव। उभयोः समप्राधान्ये नियोगवत्याः पत्न्याः पुत्रस्य च धनसम्बन्धात् केवलं पत्नी दुहितर इत्यनेन पत्न्या धनसम्बन्धोक्तिरयुक्ता। अथ तत्रापि नियोगोत्पन्नः पुत्रः प्रधानमित्युच्यते तथापि द्वितीयपक्षोक्तदोप एव। पुत्रस्यैव धनसम्बधादिति सर्वथोक्तदोषतो न मुक्तिरिति।

२२। तत्र द्वितीयपक्षोक्तदोपोद्धारेण तं समर्थयन् शङ्कते *अथ स्त्रीणामिति। अयं भावः। स्त्रीणां सामान्येन भर्तृद्वारा पुत्रद्वारा वा धनसम्बन्धो न साक्षात्। न स्त्री स्वातन्त्र्यमर्हतीति वचनात्। तथा च भर्तृपुत्ररहितायास्तदभावप्राप्तौ भर्त्रभावे नियोगेनैव पुत्रसिद्धेस्तस्यास्तद्द्वारा धनसम्बन्धबोधकं पत्नीति अस्मदुक्तव्यवस्थायामवश्याश्रयणीयायामेतदारम्भः सार्थक इति नोक्तदोप इति।

२३। मनुमाह * अध्यग्नीति। अध्यग्नि विवाहे ऽग्निसमीपे लब्धम्। अध्यावहनिकं, द्विरागमने शिविकाद्यावहनकाले यल्लब्धम्।

तथा च कात्यायनः,

यत्पुनर्लभते नारी नीयमाना पितुर्गृहात्।
अध्यावहनिकं नाम स्त्रीधनं तदुदाहृतम्॥ इति।

इदं सर्वमग्रे स्फुटीभविष्यति। भ्रातृमातृपित्रित्यत्र मध्यमपदलोपिसमासद्वयम्। आदिपदग्राह्यमपि अग्रे एव व्यक्तम्। *विरोधादिति। तदुभयद्वारं विनापि उराद्धेन अन्यथा तत्सम्बन्धस्य तेन प्रतिपादनादित्यर्थः।

२४। उक्तदोपोऽपि तदवस्थ एवेत्याह *किं चेति। * स-

अर्थतो ऽन्यधर्मद्वयोपदेश इति ।

२८। एवं तदीयहेतुद्वयं संखण्ड्य दोषान्तरमाह * आपिचेति । तदयोग्यतासूचकं विशेषणं * स्मृतीति । तत्र हेतुमाह * अपुत्रेति । यत इति शेषः । तत्पिण्डमित्यतो ऽनुषज्यमानेन तच्छब्देन भर्तृपरामर्शात् भर्त्तुः कृत्स्नमंशं पत्नी लभते न तु स्वांशं कृत्स्नमित्यर्थः । * कृत्स्नं, स्थावरं जङ्गमं च ।

अत एव वृहस्पतिः,

जङ्गमं स्थावरं हेम कुप्यं धान्यं रसाम्बरम् ।
आदाय दापयेच्छ्राद्धं मासषाण्मासिकादिकम् ॥
पितृव्यगुरुदौहित्रान् भर्तुः स्वस्रीयमातुलान् ।
पूजयेत्कव्यपूर्ताभ्यां वृद्धांश्चाप्यतिथीन् स्त्रियः ॥
सपिण्डा वान्धवा ये तु तस्याः स्युः परिपन्थिनः ।
हिंस्युर्धनानि तान् राजा चौरदण्डेन घातयेत् ॥ इति ।

क्वचित् स्थावरे ऽपवादमाह स एव,

यद् विभक्ते धनं किं चिदाध्यादिविविधसम्भवम् ।
तज् जाया स्थावरं मुक्त्वा लभते गतभर्तृका ॥ इति ।

एवं च तत्स्थावरं विभक्तस्यापि भ्रातुरेव न पत्न्याः। इदमपि वचनं वक्ष्यमाणसिद्धान्ताद्यंशसाधकं वोध्यम्। एतेन "इदमविभक्तस्थावरविषयं, वृत्तहीनपत्नीविषयं वा, दुहितृरहितपत्नीविषयं वा, दायादानुमतिं विना स्थावरदानविक्रयादिनिषेधपरं वा" इति परास्तम् । आद्यान्त्ययोर्वचनविरोधात् । मानाभावस्यान्ययोः सत्त्वात् ।

मृते भर्तरि भर्त्रंशं लभते कुलपालिका ।
यावज्जीवं न हि स्वाम्यं दानाधमनविक्रये ॥

इति कातीयं तु नियुक्तान्यविषयकमिति वोध्यम् ।

३५। चरमदोषं खण्डयति *यज्ञेति। *जातस्य, तत्समूहस्य। ननु यज्ञशब्दो धर्ममात्रोपलक्षको न यज्ञवाचक इति दानहोमादिसिद्ध्या हेत्वसिद्धिरिति शङ्कते * अथेति । देवतोद्देशेन द्रव्यत्यागो वैधे आधारे स्वपट्कारो यागः। स एवात्रपट्कारो होमः। स्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनं दानमिति यागहोमदानानां भेदः । * एवं तर्हि, धर्ममात्रे एव धनस्योपयोगे सति। धनसाधनकः कृपिवाणिज्यादिलभ्योऽर्थः। तादृशः स्रक्चन्दनादिविषयः कामः। इष्टापत्तावाह * तथा सतीति। मूलोक्तिमाह * धर्ममिति। गौतमोक्तिमाह *तथा न पूर्वाह्णेति। धर्मार्थकामेभ्यो यथाशक्ति पूर्वाह्णमध्यन्दिनापराह्णानफलान्न कुर्यादित्यर्थः। मनूक्तिमाह * न तथैतानीति।

इन्द्रियाणां विचरतां विषयेष्वपहारिषु।
संयमे यत्नमातिष्ठेत्। ( मनु. अ. २। ८८ )
इतीन्द्रियसंयमं प्रक्रम्य—
प्रापणात्सर्वकामानां परित्यागो विशिष्यते। (अ.२।९५ )
न तथैतानि शंक्यन्ते सन्नियन्तुमसेवया। ( अ. २।९६ )

इत्युक्तं मनुना। अस्यार्थः। तेषां तद्विषयके संयमे सर्वभोगाणां प्रापणादुपभोगात् तद्धेतुकपरित्यागो विशिष्यते। समीचीन उत्तम इति यावत्। यतः एतानि विषयासक्त्या दोषजनकानीन्द्रियाणि असेवया स्रगादिविषयानुपभोगेन तथा संनियन्तुं सम्यक् नियन्तुं न शक्यन्ते यथा विषयोपभोगेन। विषयोपभोगेन यथा तद्गतदोषविज्ञानं तथा विषयानुपभोगेन नेति अनिषिद्धविषयोपभोगस्य वैराग्योत्पादकत्वेन कर्त्तव्यत्वादर्थकामाववश्यं साधनीयावित्येतत्प्रतिपादकवचनजाताविरोध इति भावः।

३६। दोषान्तरमाह *अपि चेति। * भार्यामितीति। विहित-

योगं यन्ननुमन्यते तदा ऽपत्ये उत्पन्ने देवरेण धनलोभो न कार्यस्तस्यैव तद्धनं दद्यात्, नापि तन्मात्रे।अत एव बिभृयादिति धारणपोषणवाचिनो भृञ उक्तिरिति।

२१। तेन तदग्रे तद्वत् साधकत्वेनोक्तवसिष्ठतात्पर्यमाह *यत्त्विति।*तत् अविभक्ते इति। पक्षद्वयमिदम्। *तस्याः,तत्पत्न्याः। * नास्ति, उक्तयुक्तेः। इतिर्हेतौ। स च सम्बन्धेऽन्वेति। स्वस्य तदभावेऽपि स्वापत्यस्य स भवत्विति लोभान्नियोगो नापेक्षणीय इति भावः।

२२। अग्रिमयुक्तिं खण्डयति *तदपीति।*प्रस्तुतत्वात्, तानुपक्रम्य भ्रातॄणामित्यादेरुक्तत्वात्। तथा चोपक्रमानुरोधेन तादृशस्य भ्रातुर्धनमितरे संसृष्टिनो भ्रातर एव गृह्णीयुरिति भावः। अत एवाह * तत्स्त्रीणामिति। मात्रपदेन कृत्स्नधनसम्बन्धव्यवच्छेदः।

२३। उक्ताशयेनैव शङ्कते * न चेति। * पौनरुक्त्यमिति। उभयोरेकार्थबोधकत्वात्। * यत इति। पूर्वं संग्रहेण कथितमग्रे विवृण्वता तेन वाक्यद्वयेन स्त्रीधनमविभाज्यमिति तासां भरणमात्रं कार्यमिति चार्थद्वयं विधीयते, न केवलं पूर्वोक्तमेव कथ्यते। येन पौनरुक्त्यं स्यात्। तत्र भ्रातॄणामित्यादिना विवरणं, स्त्रीधनं विनेति तस्याविभाज्यत्वविधिः, उत्तरेणेतरविधिरिति भावः। एतेन "सवर्णाऽभावे त्वनन्तरया चापदि न त्वेव द्विजः शूद्रया" इति विष्णूक्तेः परिणीतात्वे ऽप्यपत्नीत्वात्तद्विषयं नारदवचनम्, अत एव तत्र पत्नीशब्दस्तत्र स्त्रीशब्द इति प्राच्योक्तमपास्तम्। उक्तरीत्योपपत्तेः।

२४। किलेति सूचितं योगीश्वरोक्तेर्वक्ष्यमाणं स्वेष्टार्थमाह *यदपीति।

क्रतुगतं हिरण्यं तद्धारणं चानूद्य लाघवात्सुवर्णमिति शोभनवर्णता विधीयते इत्यन्यः।

३८। एवं त्रेधाऽपि तावत् क्रत्वर्थमिति प्राप्ते उच्यते। यदुक्तं वैदिकत्वक्रियात्वसाम्यात्क्रतुरुपतिष्ठते फलाकाङ्क्षायामिति। नप नियमो घटते। यतः स्वर्गाद्युत्पत्तेरपि क्रियात्वात् दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिषु स्वर्गादेः कर्तृसम्बन्धितयोक्तैर्वैदिकत्वाच्च स्वर्गाद्युत्पात्तिं क्रतुं चोभयमुपस्थापयति वैदिकत्वं क्रियात्वं चेति हेतुद्वयं, न नियमतः क्रतुमेव, येन विशिष्टविधिपक्षेऽपि क्रत्वर्थता स्यात्। लोकेऽपि हिरण्यसत्त्वान्न क्रतुगतहिरण्यप्रतीतिः। न हि धारणं धार्यमाणसंस्कारः। अदृष्टार्थत्वेनापि धारणोपपत्तेः। कृत्यप्रत्ययश्च कर्मत्वं साध्यतामात्रं वाऽऽह न प्राधान्यम्। अनीप्सितकर्मणोऽपि विद्यमानत्वात्। अत एव धारणानुवादेन न सुवर्णतारूपगुणविधिः। क्रतुधारणाप्रतीतेः लोकेऽपि धारणसंभवात्। अतो न सर्वथा क्रत्वर्थं सुवर्णधारणम्। विधिवशाच्चावश्यं फलेन भवितव्यम्। तच्च फलमर्थवादाभावे विश्वजिन्न्यायेन स्वर्गः, तत्सत्त्वे तु रात्रिसत्रन्यायेन तद्गतमेव। अत्र तु दुर्वर्णोऽस्य भ्रातृव्यो भवतीति श्रवणात् भ्रातृव्यस्य दुर्वर्णत्वमात्मनश्च शोभनरूपतैव फलमिति पुरुषार्थमेव हिरण्यधारणमिति सिद्धान्त इति।

३९। दोषान्तरमाह * किं च यज्ञेति। * पूर्तं तडागारामादि।

पूर्वोक्तमनुतात्पर्यशरीरघटकत्वेनोपस्थितमन्वन्तरविरोधमपि परिहरति * यत्तु पारतन्त्र्येति। ( मनु. अ. ९। ३ )

पिता रक्षति कौमारे भर्ता रक्षति यौवने।
रक्षन्ति स्थाविरे पुत्रा इति वाक्यादिः।

स्येति शेषः। * क्रत्वर्थता, पूर्वपक्ष्युक्तेत्यादिः। * उक्तं, सिद्धान्तिना। * तत्प्रत्युद्धृतं, विघटितं विपरीतोक्तमिति यावत्।

अयं भावः। तृतीयाध्यायचतुर्थपादैकादशाधिकरणम्। * अप्रकरणे तु तद्धर्मस्ततो विशेषात्। "पू. मी. अधि. ३। ४। ११" अनारभ्य श्रूयते, तस्मात् सुवर्णं हिरण्यं भार्यं दुर्वर्णोऽस्य भ्रातृव्यो भवतीति। तत्र संशयः—किमिदं हिरण्यधारणं क्रत्वङ्गतया विधीयते, उत क्रतुगतहिरण्यानुवादेन धारणसंस्कारो विधीयते, उत हिरण्यं हस्ते भवतीति विहितं यद्धारणं तदनुवादेन सुवर्णता शोभवनर्णतारूपो गुणो विधीयते यद्धिरण्यं भार्यं तत्सुवर्णमिति, उत हिरण्यधारणं पुरुषार्थतया विधीयते इति।

३७। पूर्वपक्षस्तु—हिरण्यविशिष्टं धारणं यद्यपि विधीयते तथापि तस्य फलापेक्षायामस्य धारणस्य वेदवाक्यविहितत्वेन वैदिकत्वात्क्रियारूपत्वाच्च वैदिकदर्शपूर्णमासादिसाम्यात् फलवद्वैदिकं कर्म बुद्धिस्थं भवति। ततश्च तत्रैव वैदिके कर्मणि प्रयाजादिवदारादुपकारं कुर्वत् क्रत्वङ्गं धारणं भविष्यति। एतावतैव फलाकाङ्क्षानिवृत्तेः स्वर्गादिफलकल्पना न युक्तेत्येकः।

हिरण्यं भार्यमित्यत्र कृत्यप्रत्ययेन धारणविधानात् तत्कर्मणो हिरण्यस्य कृत्यश्रुत्या प्राधान्यप्रतीतेर्धारणं संस्कारो व्रीहीन् प्रोक्षतीत्यत्र प्रोक्षणमिव। भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हतीति न्यायेनोपयुक्तस्योपयोक्ष्यमाणस्य वा संस्कारः कार्यः। उपयोगश्च प्रयोजनवत एव, निष्फलस्य लौकिकसुवर्णस्य धारणसंस्कारायोगात् क्रतुगतहिरण्यानुवादेन धारणसंस्कारविधानमिति प्रयाजादिवन्नारादुपकारकमङ्गम् अपि तु प्रोक्षणादिवत्संस्कारकर्मेत्यपरः।

तत्र च जातावेकवचनमिति बोध्यम् । वृत्तिपदार्थमाह * अशने-ति । योपितो ऽत्रैव सम्बन्धो नाग्रेऽपीति भावः । द्वितीयार्धशे-षार्थमस्यैवाह * अस्यापवादमिति । तदनुवृत्तेराह *योपिदिति। तथा च स्त्रीणामशनादिपर्याप्तधनसम्बन्ध एव न सकलधनस-म्बन्ध इति तदभिमतमिति तद्विरोधोऽसम्बद्धतानिरासश्च स्पष्ट एवेति भावः।एवं तदर्थं व्याख्याय अथ तं परिहरति *एतदपीति। भक्षान्तमपीत्यर्थः । तत्र बीजमाह * योपिदिति ।

४३ । नारदान्तरविरोधमपि तथैव परिहरति *नारदेति । इति नारदवचनमप्यवरुद्धस्त्रीविषयमेवेत्यर्थः । तदेवाह * अन्य-त्रेति । अन्यत्र ब्राह्मणादिति पूर्वान्वयि ।

तथा च पूर्वपद्यम्, ( ना. व्यव. १३ । ५१ )

अभावे दुहितॄणां वै सकुल्या बान्धवास्तथा ।
ततः सजात्याः सर्वेपामभावे राजगामि तत् ॥ इति ।

तथा च सर्वेपामभावे ब्राह्मणात्तदीयधनादन्यत्र तद् धनं राजगामि, किं तु धर्मपरायणो राजा तत्रापि तत्स्त्रीणां जीवनं दद्यादित्याद्यर्थः । बृहस्पतिरप्येवम् । जीवनपदार्थश्च—

बृहस्पतिनैव तदग्रे उक्तः,

अन्नार्थं तन्दुलप्रस्थमपराह्णे तु सेन्धनम् ।
वसनं त्रिपणक्रीतं देयमेकं त्रिमासतः ॥
एतावदेव साध्वीनां चोदितं विधवाधनम् ।
वसनस्याशनस्यैव तथैव रजकस्य च ॥
धनं व्यपोह्य तच्छिष्टं दायादानां प्रकल्पयेत् । इति ।

साध्वीनामित्युक्त्या ऽसाध्वीनां तदपि नेति सूचितम् । एतेनान्यत्र ब्राह्मणादिति बृहस्पतिः क्षत्रियादिपरिणीतशूद्रा-विषय इति भ्रान्तोक्तमपास्तम् । एवं च सामान्यतः परिणी-

आदिना कालेऽदाता पिता वाच्य इत्यादितदग्रिममनुग्रहणम् । * तदास्त्विति। पारतन्त्र्यमेकाकीभूत्वा ऽनवास्थितिरिति तया स्वस्य पत्युर्धनग्रहेऽपि न विरोध इति भावः।

४०। एवं चरमसाधकखण्डने तत्साधकत्वेनोक्तवचनानामन्याशयत्वं शङ्कापूर्वकमाह* कथं तर्हि इत्यादिना ।सर्वं वाक्यमिति न्यायेनाह * यज्ञार्थमेवेति । यज्ञार्थमिति वचने द्रव्यं यज्ञार्थम् उत्पन्नमिति न विधिः, किं तु यागभिक्षयाऽवनिपतिगमनेन यज्ञार्थमेव तदुद्देशेनैव यत् द्रव्यमुत्पन्नं तत् द्रव्यं तेन यज्ञे एव नियोक्तव्यं, लोभादिना तेन तत्र विनियोगे ऽकृतेऽपि तत्पुत्रादिभिरपि धर्मकार्येष्वेव नियोक्तव्यमिति सर्वथा धमार्थमार्जितं द्रव्यं धर्मे एव नियोक्तव्यमिति विधीयते । अत एव धर्मे ऽनधिकृतैस्तत् द्रव्यं न ग्राह्यम् । धर्मकरणेऽधिकाराभावात् । अत एव च ते ग्रासाच्छादनमात्रभाजना इति तदर्थ इति भावः। अपिना ऽर्जकपरिग्रहः ।

४१ । अत्र मानं मनुमेवाह *यज्ञार्थमिति। यज्ञार्थं लब्धमिति मानवे अर्जकनामग्रहणं विना सामान्यत उक्त्याऽनारभ्याधीतनानृतंवदेदितिवत्पुरुषमात्रोद्देशेन तस्य प्रवृत्त्याऽर्जकस्य तत्पुत्रादीनां च धर्मार्थद्रव्यस्य धर्मकृत्येष्वविनियोगे दोष इति भावः।

४२। पूर्वप्रसङ्गोपस्थितकात्यायनविरोधमपि परिहरति *यदपीति । विरोधप्रकटतायै व्यत्यस्तपदोक्त्या ऽसम्बद्धत्वनिरासाय च तदर्थमाह * अदायिकमिति । दायिके मत्वर्थीयठन् । ततो बहुव्रीहिः। दायग्राहकशून्यमित्यर्थः। तदाह * दायादेति । तत्पदोक्तेराह * यदिति ।अनेन श्रोत्रियेभ्यस्तदर्पयेदिति पाठः सूचितः। वक्ष्यमाणात्तु श्रोत्रियायोपपादयेदिति पाठो लभ्यते। तत्र उपेत्यादेः प्रापयेदित्यर्थः । तदाऽत्रोभयमध्याहारलभ्यम्।

दीत्यादि । * व्यामोहेति । यदा पुत्रे सति तत्र जीवति मृते च तत्समांशभाक्त्वं न भरणमात्रपर्याप्तभाक्त्वं तस्याः, तदा किमु वक्तव्यमपुत्रस्य तस्य धनं सा सर्वं प्राप्नोतीति, कैमुतिकन्यायेनैव तस्याः सकलधनभाक्त्वसिद्धेर्ग्रासाच्छादनातिरिक्तं न प्राप्नोतीत्युक्तिर्भ्रान्तिरेवेत्यर्थः ।

४६। किं चान्यपुत्रसत्त्वेऽशग्रहणाधिकारिणा पुत्रान्तराभावे सकलरिक्थग्रहणाधिकारिणा पुत्रेण सह समांशभाक्त्वस्योक्तत्वात्पुत्राद्यभावे विभक्तादेस्तस्य सा सर्वं गृह्णातीति युक्तियुक्तमपि इदमिति तद् उपेक्ष्यमेवेति बोध्यम् ।

४७। समांशकादिशब्दोऽपि जीवनोपयुक्तधनोपलक्षक इति न विरोध इत्याशयेनाह * अथेति । अंशशब्दस्य कथंचित्सार्थक्येऽप्याह *समेति । भागतुल्यतयोरंशसमशब्दौ लोकप्रसिद्धौ । तयोर्निष्फलं स्वार्थत्यागो ऽनुचित इति आनर्थक्यमिति भावः ।

४८। ननु तयोः शब्दयोः पक्षे स्वार्थपरत्वान्न सर्वात्मना ऽऽनर्थक्यमिति विशेषमाशङ्कते *स्यान्मतमिति । *बहु, विपुलम् । कर्मधारयः । खण्डयति * तच्च नेति । विधिवैषम्यमेवाह * तथाहीति । पत्यौ जीवति मृते वा पुत्रैः सह विभागकाले इति शेषः । * वाक्यान्तरमिति । भरणं चास्य कुर्वीरन्नित्यादीत्यर्थः । * प्रतिपादयतीति । विधत्ते इत्यर्थः। पत्न्यामिति भावः। *प्रतिपादयतीति इति । तथा च सकृदुच्चरितमेकमेव वचनं पक्षे सापेक्षं पक्षे निरपेक्षमित्येकरूपत्वाभावाद्विधिवैषम्यमिति भावः ।

४९। अत्रार्थे दृष्टान्ततया मानं दर्शयन् अस्य न्यायस्योपपादकमधिकरणं संगृह्य दर्शयति *यथा चातुर्मास्येष्वित्यादिना। सप्तमतृतीयपादाष्टमाधिकरणम्।*सौमिकं तु प्रणयनमवाच्यं हीतरत्। सोमे सधर्मकमग्निप्रणयनं, दर्शपूर्णमासयोश्चाधर्मकं तत् । आग्निप्र-

तशूद्राविषयकमपीदं द्वयम् । तस्या अप्यपत्नीत्वात् । तथाचावरुद्धग्रहणं पत्नीत्वाभाववदुपलक्षणम् । तथा च यत्र पत्नीत्वाभावः पुनर्भ्वादावपि तत्र सर्वत्र इदमेव । एतदभिप्रायक एव—

प्रजापतिरपि,

आढकं भर्तृहीनाया दद्यादाभरणं स्त्रियाः । इति ।

* ऊढाया इति । श्रौतकर्मसु पाणिग्रहणपूर्वकसहाधिकारवत्या एवेत्यर्थः । नारदाद्येकवाक्यतयाऽऽह * संयताया इति । देवलवाक्ये यथाक्रममित्यस्य न स्वपाठक्रमेणेत्यर्थोऽपि तु मूलविष्णवाद्युक्तक्रमेणेत्यर्थ इति न तद्विरोधोऽपि । सोदरासोदरत्वकृतविशेषस्तु प्रागुक्तबृहस्पतिपराहत एव ।

४४ । एवं तदीयपक्षं संदूष्य स्वाभिमतमर्थमुपसंहरन्नेवाह *तस्मादिति ।*पत्नीति । संयतेत्यादिः । कृत्स्नमित्यग्रे शेषः । ननूक्तस्यैवोपसंहारो युक्त इति अस्यार्थस्य पत्नीदुहितर इत्यत्रानुक्तत्वात्कथमयमुपसंहार इति चेन्न । सकलवाक्यानां सर्वत्र स्वेतरवाक्याविरोधेनैव प्रवृत्तेर्न्याय्यत्त्वात्तदुक्तवक्ष्यमाणानुसन्धानेनास्यार्थस्य लाभादुक्तोपसंहारात् । तदेतत् ध्वनयन् उक्तं स्मारयन् वक्ष्यमाणमाह *विभागस्येत्यादि । एतेन तस्याश्रुतत्वेऽपि प्रस्तुतत्वेनाप्रस्तुतत्वदोषनिरासः सूचितः । साक्षादपवादविषयपरिहारेणैवोत्सर्गप्रवृत्तेर्न्याय्यत्वात् । अन्यथाऽप्रामाण्याद्यापत्तेः ।

४५ । *एतेन, वक्ष्यमाणदोषेण । *अल्पेति । यद्यल्पं धनं तदा तस्य तत् प्रथमं पत्नी गृह्णीयादिति पत्नीतिमूलतात्पर्यमित्यर्थः । निरसनप्रकारमेवाह * तथाहीत्यादि । *जीवदिति । पत्यौ जीवति मृते चेत्यर्थः । * उक्तं, मूलकृता । तदेव क्रमेणाह * य-

---

१ अदायिकामिति कात्यायनबृहस्पतिभ्यामुक्तम् अन्यत्रब्राह्मणादिति नारदोक्तंचेत्यर्थः ।

घन्तपर्वणोर्निषेधकमुक्तवाक्यद्वयमिति तदुपपत्त्या सोमिक्रमणयनातिदेशः पूर्वपक्ष्युक्तो न घटते इति चेत् , तदेवाह * राद्धान्तेके-त्याद्यभिहितइत्यन्तेन । पूर्वपक्षिमततिरस्कारकत्वात्सिद्धान्तित्वं, स्वोक्तेरप्ययुक्तत्वस्य तेनैव वक्ष्यमाणत्वादेकदेशित्वम् । * उपात्रेति । अत्र चातुर्मास्येषु उपवपन्ति वेदिम् उपाकिरन्तीत्यर्थः । * प्राकरणिकेनेति । चातुर्मास्यप्रकरणपठितेनेत्यर्थः ।

८२। नान्विदमप्ययुक्तं, विधिवैषम्यापत्तेः। तथाहि। उपात्रेति वाक्यं चातुर्मास्यपरमापूर्वशेषतयोत्तरवेदिं विदधत् पर्वचतुष्टयेऽप्य-विशेषेण तां विधत्ते । नवैश्वेत्यादिवाक्यद्वयं तु पर्वद्वये निषेधकम् । तथा च तद्विधिनिषेधयोर्द्वयोरपि वाक्यप्रमितत्वेन वाचनिकत्वाविशेषात् तुल्यत्वेन विकल्पः प्राप्नोति । स चेत्थम्, उपात्रेति वाक्यम् आद्यन्त्यपर्वणोर्यदा नवैश्वेत्यादिवाक्यद्वयमपेक्ष्य तेन प्राप्तस्य निषेधद्वयार्थस्यानुष्ठानाभावस्तदैव पक्षे तदपेक्ष्योत्तरवेदिं विधत्ते ऽन्यथा न, मध्यमपर्वणोस्तु निषेधवाक्यानपेक्षयैव नित्यवत् तां विधत्ते। तथा च द्वयोर्वाक्यान्तरानपेक्षतयोत्तरवेदिविधिर्द्वयोर्वाक्यान्तरसापेक्षतया पक्षे विधिरिति सकृच्छ्रुतवाक्यमेकत्र पक्षे प्राप्तमेकत्र नित्यवदिति एकरूपप्रवृत्त्यभावाद्विधिवैषम्यापत्तिः। तस्मादगत्या पूर्वपक्ष्युक्तमेव युक्तमिति चेत्, तदेव स आह *पुनःपूर्वेत्यादिना दर्शितमित्यन्तेन । सिद्धान्त्येकदेशिमतानन्तरं मुख्यसिद्धान्त्युक्तिरुचितेति तद्भ्रान्तिनिरासाय पुनः पूर्वपक्षिणेत्युक्तम् । ईतीति कर्तृ । * प्रतिषेधमिति । न वैश्वेत्यादिवाक्यद्वयप्राप्तम् । * निरपेक्षमिति । प्रतिषेधेत्यादिः । नित्यतावोधकपदाभावादाह * नित्यवदिति ।

१ उपात्र वपन्तीति इत्यत्रत्यम् इतिपदं प्रापयतीत्यस्य कर्तृ इत्यर्थः ।

त्वाद् यावत्स्त्रीधनाविषयत्वाच्च। गौतमस्यापि ऋषिसिद्धार्थस्योक्तत्वेन तदेकवाक्यताऽपि तयोर्न। तस्य शुल्कमात्रविषयत्वस्य स्पष्टत्वाच्च।

४५। यद्यपि पाणिनीये तदस्मिन्वृद्ध्यायेति सूत्रे "आयादिसाहचर्यात्संज्ञावृद्धेरग्रहणम्, उपदेति टावन्तम्, उत्तमर्णेन मूलातिरिक्तं ग्राह्यं वृद्धिः, ग्रामादिषु स्वामिग्राह्यो भाग आयः, विक्रेत्रा मूल्यादधिकं ग्राह्यं लाभः, रक्षानिमित्तभृतिरूपो राजभागः शुल्कः, उत्कोच उपदा उपहार इत्यन्ये, शुल्कग्रहणं प्रपञ्चार्थं तस्याप्यायविशेषत्वात्, तथा च शौल्कशालिक इति ठगायस्थानेभ्य इति ठग् भवति" इत्यभियुक्तैर्व्याख्यातम्। तथापि अत्रत्यपरिभाषा भिन्नेति तात्पर्यम्। तथा च व्याख्यातृक्तशुल्कधनं न प्रजामात्रस्य भर्त्रादेश्च, किं तु सोदर्याणां, तदभावे मातुस्तदभावे पितुस्तदभावे तत्प्रत्यासन्नानामिति। एवं तदुक्तबन्धुदत्तमपि न प्रजामात्रस्य मात्रादेश्च, किं तु बन्धूनां भ्रातॄणां, तदभावे भर्त्रादेः।

बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि तत्।

इति कातीयादिति बोध्यम्।

४६। एवं वृद्धकातीयस्य समूलत्वेच तदपि जङ्गमस्थावरान्यसौदायिकधनाविशेषे। अप्रजःस्त्रीधनमित्यादि सर्वविवाहेष्वादावपत्यादर्कं, तदभावे तथैव। तत्र चेन भ्रातृपितृव्यादि। एवेन भर्तृकुलव्यवच्छेदः। धनं धनं च। अप्रजायामित्यार्षम्। अत एवान्यगृहीतो ऽप्रजायामतीतायां बान्धवा इति मूलपाठो व्याख्यात्रा त्यक्तः। मानवद्वयेऽपि तथैव बोध्यमिति तदाशयः। तुश्चार्थे तेन तदभावे तथेत्यस्य समुच्चयः। सर्वदा सर्वविवाहेषु। प्रजासत्त्वे तु तस्या एवोक्तरीत्येति बोध्यम्।

अपुत्रायां मृतायां तु पुत्रिकायां कथञ्चन।

मध्येऽध्याहारेण व्याख्यानस्य निर्बीजत्वात्। अन्यथाऽनुपपत्त्या हि सः। न तु सा तत्रास्ति। प्रागुक्तरीत्या निर्वाहात्। अत एव कल्पतरुणाऽपि गौतमीयं तथैव व्याख्यातम्। ऊर्ध्वपदसभिव्याहारे तथैव रूपिशब्दीकृत्त्वात्। बन्धूनामभावे इत्यस्यैव तथार्थकत्वेन सूचितमित्यस्यासंबद्धत्वात्। अत एवाग्रिमोक्तेरपि क्लिष्टत्वाचेति दिक्।

४३। मातुस्तु यौतकमिति पुत्रिकाप्रकरणस्थमानवमपि सर्वैकवाक्यतानुरोधेन सर्वधनविषयकम्। अत एव मातुर्यद्धनं स्यात्तत् तस्यां मृतायां कुमारीभाग एवेति सामान्यत एव तद्व्याख्यातम्। मेधातिथिनाऽपि यौतकं पृथग् भूतमित्येवं व्याख्यातं, यु मिश्रणामिश्रणयोरिति धात्वनुसारात्। युक्तं चैतत्।

त्रिभागभावना ज्ञेया गृहक्षेत्रेश्च यौतकैः।

इत्यग्रिममूलवाक्ये तथैव सर्वसंमतत्वात्। त्वद्रीत्याऽपि तांश्चार्थकत्वेन समुच्चायकतया सर्वधनग्रहणसंभवात्। एवं सति अन्वाधेयं चेति अध्यग्न्यध्येत्यग्रिमम् ऊढाविषयं क्रमेण दौहित्र्याद्यर्थं पुत्राद्यर्थं चेति न वैयर्थ्यं तस्य। अत एवानुरोधेनापि समञ्जसवचनानामाकुलीकरणमसंगतमेव तेषामिति दिक्।

४४। वस्तुतस्तु कातीयद्वयस्योढामात्रविषयत्वेन प्रागुक्तान्यार्थासम्भवेऽपि बौधायनीयम् अनूढा या वाग्दत्ता जीवन्ती अवाग्दत्ता वा तद्विषयकम्। कन्याशब्दस्याक्षतयोनिमात्रवाचकस्य साधारणतया तत्रापि प्रवृत्तेः। तदीयधनमाविषयं पितामहादिदत्तमेव। वक्ष्यते चेदं व्याख्यावाऽनुपदमेव। न तु शुल्कपरं तत्। अत एव रिक्थपदोक्तिस्तत्र। तस्य दायवाचकत्ववत्सामान्यधनवाचकत्वस्यापि कोशतः सत्त्वेन तत्रापि प्रवृत्तिसम्भवात्। अत एव मातापित्रोरिति मनुना तस्यैकवाक्यता न। तस्या विवाहविशेषविषय-

गौतमात् । स्त्रीधनं पैतृकं कुमारी अभावे ऊढापि कन्यैव लभते न पुत्रः । गुणलोपे तु मुख्यस्येति न्यायात्, दुहितृपदसामर्थ्याच्च । एवमप्रतिष्ठिताया अभावे प्रतिष्ठिताऽपीति । अन्वाधेयं तु स्त्रीपुंनपुंसकसाधारणप्रजायाः ।

अन्वाधेयं तु यद्दत्तं पत्या प्रीतेन वा पुनः । (अ.२।१४५)

इति मनोरिति ।

यत्तु पत्युः रिक्थत्वेन मात्रा लब्धं तत् पुत्रैर्दुहितृभिश्च समं विभाज्यम् । जनन्यामिति मनोः, भगिन्यः कुमार्यः सममिति शङ्खलिखिताभ्यां, समानमिति देवलाच्च । ऊढास्तु तुर्यांशमात्रं लभन्ते, न समम् । स्त्रीधनमिति बृहस्पतेः । अनूढानां पितृधने इत्रोढानां मातृधने तथैवेत्युक्तं प्राक् ।

यत्तु—

अप्रत्तायास्तु दुहितुः स्त्रीधनं परिकीर्त्तितम् ।

पुत्रस्तु नैव लभते प्रत्तायां तु समांशभाक् ॥

इति, तत् अप्रत्तासद्भावेऽपि प्रत्तायाश्चतुर्थांशस्मरणात्तदभावे समांशस्य न्याय्यत्वमित्येतत्परम् ।

भगिन्यो बान्धवैः सार्धं विभजेरन्सम ततः ।

स्त्रीधनस्येति धर्मोऽयं विभागस्तु समः स्मृतः ॥

इति कात्यायनात् ।

एतेन "भ्रातृभगिन्योः सम्भूयांशहरत्वं नास्ति इतरेतरयोगस्य द्वन्द्वैकशेषाभावादप्रतीतेः" इति परास्तम् । चार्थे द्वन्द्व इत्यनेन तस्य चार्थत्वात् । देवलीये द्वन्द्वश्रवणाच्च । यौतकभिन्ने सर्वत्र दुहितृदौहित्रीसमवाये तस्या अपि किञ्चिद्देयम् । यास्तासामिति मनोः । मृतमातृकाणां तु तासां "पितृतो भागकल्पना" इति न्यायात् पुत्रदुहित्रादिभिः समवाये समांशभाक्त्वमेव । दुहित्रभावे तु पुत्र एवेति ।

धनं तत् पुत्रिकाभर्ता हरेतैवाविचारयन्॥

इति मनुस्तु (अ.९।१३५) भर्तुः अपूर्वधनसम्बन्धबोधकः। स च पुत्रिकाप्रकरणस्थः। संविस्कृता पुत्रिका। तदान्वितेन कथं चनेन्यनेन तथा न कृता। किं त्वाभिमता तस्या अपि ग्रहणम्। अत एव भ्रातृमतीमिति विशेषणं तत्र सफलमित्युक्तं प्राक्।

अत एव "अपुत्रायां कथं चन पुत्रिकायां मृतायां प्रकरणातौरकरिकथल्पतद्रीयधनं पितृसत्त्वेऽपि तद्भर्तैवाविचारयन् गृह्णीयात् पुत्रिकायाः पुत्रसमत्वेनानपत्यस्य पत्नीरहितस्य मृतस्य पुत्रस्येव न्याय्यादिष्वपि पित्रादेर्धनग्रहणप्रसङ्गे तन्निवारणार्थमिदं वचनम्" इति तद्व्याख्यातारः।

प्रेतायां पुत्रिकायां न भर्त्ता द्रव्यमर्हत्यपुत्रायां कुमार्यां मात्रा स्वस्रा वा तद् ग्राह्यमिति पैठीनसिस्तु निर्मूलः। समूलत्वे वा आर्षत्वाविशेषाद्विकल्पोऽस्तु। परं तु तत्रापि मनोः प्रामाण्यातिशयात्तदेवानुष्ठेयं न तादित्यननुष्ठानलक्षणमप्रामाण्यमेव तस्येति दिगिति बोध्यम्।

४७। एतेन अस्यां यो जायते पुत्र इति पुत्रिकाविषयं मानवम्, इयं मे पुत्र इति पुत्रिकाविषयं पैठीनसमिति। एवं भगिनीशुल्कमिति गौतमीये "ऊर्ध्वं मातुः सोदर्याणामभावे मातुरिति व्याख्याय तदुभयाभावे पितुरित्युक्त्वा तत्र बौधायनीयं मानत्वेन संलिख्य रिक्थं शुल्कमिति व्याख्याय पित्राद्यभावे तु भर्तृगाम्येवेत्युक्ते बन्धुदत्तं त्विति कातीयं मानत्वेन संलिख्य बन्धवः पित्रादय" इति उक्तम्। तथा स्त्रीधनविषये इत्थं व्यवस्था-तत्राध्यग्निकृतं तास्वपि कुमार्य एव लभन्ते नोढाः, मातुस्त्विति मनोः। तत्र यौतकं प्राच्योक्तमेव उक्तवासिष्ठात्। पारिणाय्यमित्यस्य स एवार्थः। स्त्रियः कुमार्यः। कुमारीवदप्रतिष्ठिताऽपि। स्त्रीधनमिति

पणत्वं तु न । वैयर्थ्यात् । अन्यथा सपत्नीपुत्रसद्भावेऽपि स्वस्रीयाद्यधिकारापत्तेः। बान्धवशब्देन भ्रातुर्भर्तुर्मातुः पितुरित्यादेर्ग्रहणम् । तदभावे स्वस्रीयादयस्तत्कर्मणेत्यर्थः । एवं—

मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च ।
श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च ॥
एतेषां चैव भार्याभ्यः स्वसुर्मातुः पितुस्तथा ।
श्राद्धदानं तु कर्तव्यमिति वेदविदां स्थितिः ॥

इति वृद्धशातातपीये पिण्डदानांशेऽपि बोध्यम्। पिण्डदत्वं न रिक्थहारित्वव्याप्यमपि तु विपरीतम् । तदप्यौत्सर्गिकमित्यादि हि प्रागेव प्रपञ्चितमिति न विस्मर्तव्यम् ।

४१। एतेन "पुत्राभावे दौहित्रस्तदभावे दौहित्रपुत्रस्तस्याप्यभावे स्वस्रीयाद्या अविशेषेण सर्वधनभाजः। मातृष्वसेति बृहस्पतेः।आद्यशब्देन यस्य मातुलानी स इत्यादि। पूर्वजोऽग्रजः। यद्यप्यत्र पुत्राभावे दौहित्रः श्रूयते तथापि पुत्रदुहितृसद्भावेऽपि दौहित्रीणां किञ्चिद्धनसंबन्धश्रवणात्तदभावे सर्वधनसंबन्धस्याप्रतिबन्धान्मातामहावयवाधिक्येन च दौहित्रापेक्षया प्रत्यासन्नत्वाच्च दौहित्र्यभावे दौहित्रो धनभाक् । अत्राप्ययं विशेषः। यत् पितृकुलादागतं तत्स्वस्रीयाद्याः, यत् भर्तृकुलादागतं तद्देवराद्याः, जामाता तूभयमप्यविशेषात्" इति भ्रान्ताद्युक्तम्, एतद्वचनबलान्मनूक्तत्यागेनान्यथा क्लेशेन यदधिकारप्रतिपादनं प्राच्यानाम्—तथा हि "तदेतेषां पुत्रादीनां भ्रात्रादिभर्तृपर्यन्तानां चाभावे सत्स्वपि श्वशुरभ्रातृश्वशुरादिषु सपिण्डेषु भगिनीपुत्रादीनां धनाधिकारिता अनन्यगतेर्वचनात् स्त्रीणां मातृतुल्यताप्रतिपादनेनामीषां पुत्रत्वज्ञापनेन पिण्डदत्वसूचनस्य दायप्रकरणे धनाधिकारज्ञापनैकप्रयोज्यत्वात् । तत्र स्वस्रीयाद्या इति वचनात्पूर्वपूर्वाभावे सर्वशेषे देवरस्यैवा-

ऽभावत्र तदभावे तत्प्रत्यासन्नानां ग्रहणं तु अनन्तरः सपिण्डाद्य इत्यादिमन्वाद्यनुरोधेन पत्न्यादौ पूर्वं पल्लवेन न्यायेनोक्तम्। अनन्तर इत्यस्य सामान्यस्य उक्तौरसाद्यनन्तरमुक्त्वा तन्मात्रपरत्वे तस्य सामान्यस्य वैयर्थ्यापत्त्याऽनुक्तपत्न्यादिदायपरत्वमिवैतत्परत्वमपि। तत्रानन्तर्यमपि प्रागुक्ततादृशप्रत्यासत्त्यतिशयकृतमेवेति तत्क्रमेणैव तदधिकार इति न कोऽप्यग्रे दोष इति विज्ञानेश्वराशयः।

४८। विशेषवचनानि तु प्रकृतविषयेऽग्रे नोपलभ्यन्ते। पत्न्यादिविषये विद्यमानान्यपि वचनानि तदनुरोधेनैव योजितानि। तस्यैव मुख्यबीजत्वात्। एवं च—

मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा।
श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः॥
यदाऽऽसामौरसो न स्यात्सुतो दौहित्र एव वा।
तत्सुतो वान्धवस्तासां स्वस्रीयाद्याः समाप्नुयुः॥

इति वृहस्पतिरप्यधिकारिमात्रबोधको न क्रमबोधक इति तदनुरोधेनैव योज्यः प्रागुक्तरीत्या।

तथा हि। औरसपदेन कन्यापुत्रयोर्ग्रहणम्। तयोः सर्वापवादकत्वात्। सुत इत्यनेन सपत्नीकन्यापुत्रयोर्ग्रहणम्[१]। इदं च दायग्रहणांशे। स्वस्रीयो भगिनीसुतः। आद्यपदेन स्वभर्तृभागिनेयदेवरपुत्रस्वभ्रातृपुत्रजामातृदेवराणां ग्रहणम्। यथासंख्यमन्वयः। दौहित्र इत्यनेन दौहित्रीदौहित्रयोर्ग्रहणम्। औरसयोः सपत्नीपुत्रयोश्चाभावे अनयोरधिकारात्। तत्सुत इत्यनेनौरससुतोभयजन्यपौत्रग्रहणं, न तु दौहित्रसुतस्य। पिण्डदानांशे अनधिकारात्। सर्वासामिति मनोः। औरसाविशे-

---

१ सपत्न्याः कन्यापुत्रयोरित्यर्थः।

या० दत्त्वा कन्यां हरन्दण्ड्यो व्ययं दद्याच्च सोदयम् ।

मि० कन्यां याचा दत्त्वाऽपहरन् द्रव्यानुबन्धाद्यनुसारेण राज्ञा दण्डनीयः । एतच्चापहरणकारणाभावे । सति तु कारणे—

दत्तामपि हरेत्कन्यां श्रेयांश्चेद्वर आव्रजेत् ।

इत्यपहाराभ्यनुज्ञानान्न दण्ड्यः । यच्च वाग्दाननिमित्तं वरेण स्वसंबन्धिनां कन्यासंबन्धिनां चोपचारार्थं धनं व्ययीकृतं तत्सर्वं सोदयं सवृद्धिकं कन्यादाता वराय दद्यात् ।

मि० अव. अथ कथञ्चिद्वाग्दत्ता संस्कारात्प्राक् म्रियेत तदा किं कर्तव्यमित्यत आह ।

या० मृतायां दत्तमादद्यात्परिशोध्योभयव्ययम् ॥१४६॥

मि० यदि वाग्दत्ता मृता तदा यत्पूर्वमङ्गुलीयकादि शुल्कं वा वरेण दत्तं तद् वर आददीत । परिशोध्योभयव्ययम् । उभयोः आत्मनः कन्यादातुश्च यो व्ययस्तं परिशोध्य विगमय्यावशिष्टमाददीत । यत्तु कन्यायै मातामहादिभिर्दत्तं शिरोभूषणादिकं वा क्रमागतं तत् सहोदरा भ्रातरो गृह्णीयुः । रिक्थं मृतायाः कन्याया गृह्णीयुः सोदरास्तदभावे मातुस्तदभावे पितुरिति बौधायनस्मरणात् ॥ १४६ ॥

बा. १ । प्रकृतासंबद्धत्वादाह *प्रसङ्गेनेति । *किंचित्, अर्धश्लोकोक्तम् । मुख्यदाने ऽपहारस्यैवासंभवादाह * वाचेति । *द्रव्येति । अनुबन्धो दोषोत्पादः । दोष इति यावत् । दोषोत्पादे ऽनुबन्धः स्यादित्यमरात् । द्वंद्वसमासः । आदिना जाति-

धिकारापत्तेर्मदाज्ञनाविरोध इति वस्तुबलमालम्ब्योच्यते । तत्र त्रयाणामिति अनन्तर इति पूर्वदायभागप्रकरणस्थमनोः, पिण्डदोऽशेति सूत्रेण च पिण्डदानेनाधिकारदर्शनात्पुत्रस्यापि सातिशयपिण्डदाने नरकत्राणकारणतया मुख्यत्वेनाधिकारावगतेर्मातुल इत्यादिवृद्धशातातपवचनेनामीषां पिण्डदानप्रतिपादनादयं पिण्डदाननिमित्तादधिकारक्रमः । आदौ देवरः तत्कर्तृदेयपूर्वपुरुषत्रयपिण्डदातृत्वात्सपिण्डत्वाच्च तद्धनाधिकारी । तदभावे भ्रातृश्वशुरदेवराणां सुतः तत्कर्तृदेयपूर्वपुरुषद्वयपिण्डदातृत्वात्सपिण्डत्वाच्च पितृव्यस्त्रीधनेऽधिकारी । तदभावे त्वसपिण्डोऽपि भगिनीपुत्रः तत्पुत्रदेयपित्रादित्रयपिण्डदानात् मातृष्वसृधने ऽधिकारी । तदभावे स्वभर्तृभागिनेयः, पुत्राद्भर्तुर्दुर्बलत्वात्तस्यानपातिनोऽपि तथैव बलाबलस्यापि न्याय्यत्वात् । तत्कर्तृदेयपूर्वपुरुषत्रयपिडदानात्तत्पिण्डदानाच्च मातुलानीधनेऽधिकारी । तदभावे भ्रातृसुतः तत्पितृपितामहयोस्तस्याश्च पिण्डदानात्पितृव्यस्त्रीधनेऽधिकारी । तस्याप्यभावे श्वशुरयोः पिण्डदानाज्जामाता श्वश्रूधनेऽधिकारीत्ययं क्रमो ग्राह्यः । स्वस्त्रीयाद्या इति न क्रमार्थं किं त्वधिकारितामात्रपरम् । षण्णां पुनरेतेषामभावे श्वशुरादेः सपिण्डने तु क्रमे धनाधिकारो बोद्धव्यः । न च सपिण्डाभावे सतीदं वचनमिति वाच्यम् । अस्यामधिकारशृङ्खलायां देवरदेवरसुतयोर्भ्रातृश्वशुरस्य तस्यचाधिकारज्ञापनात् । आसन्नतरश्वशुरभ्रातृश्वशुरादेः परित्यागात्,, इति । तच्चापास्तम् । अज्ञानप्रलपितत्वात्, दोषगणस्योक्तत्वाद्, अन्यस्मृतितो मनोः प्रामाण्यातिशयेन प्राबल्यस्यान्यत्र प्रतिपादितत्वाच्चेति मात्सर्यमुत्सार्य विचारणीयमिति दिक् ॥ १४७ ॥

मि० अव. स्त्रीधनप्रसङ्गेन वाग्दत्ताविषये किञ्चिदाह ।

प्रकारान्तरेणापहरन्दद्यात् । भर्तृव्यतिरेकेण जीवन्त्याः स्त्रिया धनं केनापि दायादेन न ग्रहीतव्यम् ।

( मनु. अ. ८ श्लो. २९ )

जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः ।
ताञ्छिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ॥

इति दण्डविधानात् ।

तथा, ( मनु. अ. ९ श्लो. २०० )

पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत् ।
न तं भजेरन्दायादा भजमानाः पतन्ति ते ॥

इति दोषश्रवणाच्च ॥ १४७ ॥

बा. १।प्रकृतसङ्गतिमाह *मृतेति। *इदानीमिति। प्रसक्तानुप्रसक्त्येति शेषः । अपिना तदन्यसमुच्चयः । *क्वचित्, न तु सर्वत्र। पौलथो व्युत्क्रम इत्याह *संप्रतिरोधके चेति। अन्त्यार्थमाह *बन्दीति। तत्पुरुषगर्भद्वंद्वगर्भो बहुव्रीहिः । निग्रहस्ताडनम्। सर्वशेषमाह *द्रव्यान्तरेति। *पुनः, पश्चात् । द्रव्यलाभोत्तरम् । *अर्हतीति । अवश्यदेयमिति नियमो नास्तीत्यर्थः। अन्यथा न देयमित्येव ब्रूयात् । निमित्तविशेषोल्लेखफलमाह * प्रकारान्तरेति। भर्तेत्युक्तेः फलमाह * भर्तृव्यतिरेकेणेति । तस्यैवोक्तनिमित्तेऽप्यभ्यनुज्ञा नान्येषामिति भावः । * जीवन्त्या इति । मृतायास्तूक्त एव प्रकार इति भावः । * तत्, धनम् । * स्वबान्धवा, दायादाः । * शिष्यात्, शिक्षयेत् । नारदोक्तिरियम् । मानवमप्याह * तथेति । तद्वदित्यर्थः । * दायादाः, पुत्रादयः । तस्मिन्मृतेऽपीति भावः । *पतन्ति, पतिता भवन्ति । विष्णुरप्येवम् ।

२। एतेन "विभागकाले पुत्रादयस्तं जीवति पत्यौ न भजेरन् किंतु यस्याः सोऽलंकारस्तत्पतिभागत्वेनैव देयो यथा सैव

गुणयोर्ग्रहणम् । अत्रैव विशेषमाहाविरोधाय *एतच्चेति । दण्डनं चेत्यर्थः । चार्थमाह * यश्चेति । * वरेणेति । तत्पित्रादिना चेत्यपि बोध्यम् । एवमग्रेऽपि । स्वं वरः । उपचारो व्यवहारः । व्ययमित्यस्य कर्मप्रत्ययान्तस्यार्थमाह *व्ययीकृतमिति । अत्रैव।

ब. २ । अथेति प्रश्ने । तमेवाह *कथञ्चिदिति । *संस्कारात्, पाणिग्रहणादितः । स्वं च शुल्कं वोढाऽर्हतीति गौतमोक्तेराह * वर इति । किं कृत्वेति शङ्कायामाह * परीति । * उभयोरिति । कन्यादातृप्रतिग्रहीतृतत्पित्रादिभिर्विवाहोद्यतैर्वर्गद्वयस्थैर्विवाहनिमित्तं वाग्दाननिमित्तं वा यद्धनं व्ययीकृतं तत् तस्मात्कन्याधनात् गृहीत्वा ऽवशिष्टं तस्मै दद्यादित्यर्थः । * विगमय्य, परिहृत्य । विगणय्येत्यपपाठः । अविरोधाय विशेषमाह * यच्चेति । आदिना पितृव्यादिग्रहणम् । * दत्तं, वाग्दानसमये ततः पूर्वं वा प्रीत्या तस्या एव स्वत्वं कृत्वा समर्पितम् । शिर इत्युभयान्वयि । पक्षान्तरमाह *वा क्रमागतमिति । क्रमायातं वेत्यर्थः । *तदभावे इति । सोदराभावे तन्मातुर्भवति तदभावे पितुर्भवतीत्यर्थः ॥ १४६ ॥

मि० अव. मृतप्रजस्त्रीधनं भर्तृगामीत्युक्तम् । इदानीं जीवन्त्याः सप्रजाया अपि स्त्रिया धनग्रहणे कश्चिद्भर्तुरभ्यनुज्ञामाह ।

या० दुर्भिक्षे धर्मकार्ये च व्याधौ सम्प्रतिरोधके ।
गृहीतं स्त्रीधनं भर्ता न स्त्रियै दातुमर्हति ॥ १४७ ॥

मि० दुर्भिक्षे कुटुम्बभरणार्थं, धर्मकार्ये अवश्यकर्त्तव्ये, व्याधौ, सम्प्रतिरोधके च बन्दिग्रहणनिग्रहादौ द्रव्यान्तररहितः स्त्रीधनं गृह्णन् भर्ता न पुनर्दातुमर्हति ।

वदिति । * व्ययीकृतम्, अलंकरणादिरूपेण । अत्र विशेषबोधकमुत्तरार्द्धमित्याह * यस्या इति । . त्वर्थमाह * पुनरिति । साकाङ्क्षत्वेन प्रकृतत्वादेवाह *आधीति । प्रकल्पयेदित्यस्यार्थमाह * दद्यादिति । एतेन प्रकीर्तितमित्यपपाठः सूचितः । नन्वेवं नियतसमत्वासिद्धिः, कदाचिन्न्यूनाधिकभावस्यापि संभवात् अत आह * अर्धेति । किं त्वंशमात्रपर इति भावः । मात्रमर्थ न नपुंसकलिङ्गम् । येन समप्रविभागवाचकं भवेत्, अर्धं स इत्यमरात् । अपि तु पुंलिङ्गम् । अत एवांशमात्रवाचकं तत् । समत्वस्यैव हि आभिमतत्वमिति केचित् । ते ॥

२। वस्तुतस्तु अर्ध एकार इत्यादिमहाभाष्यप्र पुंसीतिपूर्वान्वयात्, अर्धः अर्धं च समेंऽशके इत्य प्रसक्तानुप्रसस्यापि समांशवाचित्वेन न तत्साधकम् । अपि, न तु सर्वत्र । विवक्षितत्वेन तदनुरोधेनात्र तस्यांशमात्रवाचित्वस्यार्थमाह *वदाविव न तु तद्वाचित्वमिति बोध्यम् । तदाह सू । सर्वशेषमाह तेति । एतावताऽपि स्त्रीधनस्य पित्रादिधनविभाग *अर्हतीति । ज्यत्वमेवेति न तद्बोधकवचनविरोध इति बोध्यम् देयमित्येव सू-

मि. अव. एवं विभागमुक्त्वा इदानीं भर्तेत्युक्तेः निर्णयहेतूनाह । भ्यनुज्ञा

या. विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः । एव प-

विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः ॥१४९॥

मि. विभागस्य निह्नवे अपलापे ज्ञातिभिः पितृबन्धुभिः, बन्धुभिः मातुलादिभिः, साक्षिभिः, पूर्वोक्तलक्षणैः, लेख्येन च विभागपत्रेण विभागभावना विभागनिर्णयो ज्ञातव्यः । तथा यौतकैः पृथक्कृतैर्गृह-

तं परिदद्यान्न तु जीवति पत्यौ यो मृतः स मृतेऽप्यविभाज्य इति । अदृष्टार्थतापत्तेः । एतेन "सर्वथा ऽसावविभाज्य" इत्यपि निरस्तम् । जीवतीति विशेषणान्मृते तस्मिन्नन्येनापि ग्रहणे न दोष "इति भ्रान्तोक्तमपास्तम् ॥ १४७ ॥

मि. अथ. आधिवेदनिकं स्त्रीधनमुक्तं, तदाह ।

या० अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम् ।

न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकल्पयेत्॥१४८॥

मि. यस्या उपरि विवाहः साऽधिविन्ना । सा चासौ स्त्री चेत्यधिविन्नस्त्री तस्यै आधिविन्नस्त्रियै आधिवेदनिकम् आधिवेदनानिमित्तं धनं समं यावदाधिवेदनार्थं व्ययीकृतं तावद्दद्यात् । यस्यै श्वशुरेण भर्त्रा वा स्त्रीधनं न दत्तम् । दत्ते पुनः स्त्रीधने आधिवेदनिकद्रव्यस्यार्द्धं दद्यात् । अर्धशब्दश्चात्र समविभागवचनो न भवति । अतश्च यावता तत्पूर्वदत्तमाधिवेदनिकसमं भवति तावद्देयमित्यर्थः ॥ १४८ ॥

बा. १। प्रकृतसंगतिमाह * आधिवेदनिकमिति । * तत्, सविधिप्रकारं तत्स्वरूपम् । अधीत्यादि चतुर्थ्यन्तमेकं पदम् । विन्नमित्यत्र भावे क्तः । अधि उपरि विन्नं वेदनमिति सुप्सुपेति समासः । तदस्ति यस्या इति अर्शआद्यच् । तत्फलितमाह *यस्याइति । *उपरि, योग्यतया सत्त्वे ।*विवाहः, ऐच्छिकः । अधिवेदनमाप्तधनम् आधिवेदनिकम् । तस्य निमित्तमिति ठगादीय इत्याह * अधीति । बहुव्रीहिः । तादृशविवाहान्तरमेव पूर्वस्या धर्मपत्न्या धनदाने निमित्तमिति भावः। तत्कियदित्याशङ्कायामाह *सममिति । तस्य सापेक्षत्वेन प्रकृतत्वादाह *या-

गलेख्येन, विभागपत्रेण । भोगलेख्येनेति पाठे समाहारद्वन्द्वः । *कार्येति । कृष्यादिरूपेत्यर्थः । द्वितीयमाह * भ्रातॄणामिति । *तथा, तद्वत् ।*तेनैव, नारदेनैव । *मार्तीति । मतिभृत्त्वमित्यर्थः । * नाविभक्ता इति । अन्यथा करणे दण्डाद्याम्नानात्तत्समर्थानामेव तदुचितं नान्येषामितीदमपि क्रियमाणं तच्छिद्रमिति भावः । * कथं चनेति ।

३ । अत एव विभक्तकृत्यमपि तेनैवोक्तम्,(व्यव.१३।४२।४३)

यद्येकजाता बहवः पृथग्धर्माः पृथक्क्रियाः ।
पृथक्कर्मगुणोपेता न ते कार्येषु सम्मताः ॥
स्वभागानपि दद्युस्ते विक्रीणीयुरथापिवा ।
कुर्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य च ॥ इति ।

विभक्ता ह्यविभक्ता वेति बृहस्पतेराशयस्तूक्त एव ।

उक्तरीत्याऽर्थनिर्णये पुनर्विभागमाह—

मनुः,

विभागे यत्र सन्देहो दायादानां परस्परम् ।
पुनर्विभागः कर्त्तव्यः पृथक्स्थानास्थितैरपि ॥ इति ।

सकृदंशो निपततीति मानवं तूक्तरीत्या शक्यनिर्णयाभिगामीति केचित् ।वस्तुतस्त्वाद्यं विभागे न्यूनाधिकभावांशे मिथः सन्देहाभिप्रायं, द्वितीयं निर्णयाभिप्रायं, मौलं यथास्थितं जातस्य तस्यैवान्यतरकृतापलापाभिप्रायम् । अत एव तत्र—

बृहस्पतिः,

स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत् ।
स राज्ञांऽशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत् ॥
इतीति बोध्यम् ॥ १४९ ॥

इति दायविभागः ।

क्षेत्रैश्च । पृथक्कृष्यादिकार्यप्रवर्तनं पृथक्पञ्चमहायज्ञादिधर्मानुष्ठानं च—

भारदेन विभागलिङ्गमुक्तम्, ( व्यव.१३।३६।३७ )

विभागधर्मसन्देहे दायादानां विनिर्णयः ।
ज्ञातिभिर्भागलेख्येन पृथक्कार्यप्रवर्तनात् ॥
ानृणामविभक्तानामेको धर्मः प्रवर्तते ।
या० ३ ागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक् ॥ इति।

न:पराण्यपि विभागलिङ्गानि तेनैवोक्तानि, (३९)

नि द्यं प्रातिभाव्यं च दानं ग्रहणमेव च ।
चासौ स्त्री भ्रातरः कुर्युर्नाविभक्ताः कथञ्चन ॥ इति ।

धिवेदानिकम् वैभागप्रकरणम् ॥ १४९ ॥

नार्थे व्यर्थिकृत्करणशेषतया तेन सङ्गतिमाह*एवमिति । त्रिभास्त्रीधनं न द्यर्थः । * अपलापे, त्रिभागानन्तरं कालान्तरे द्रव्यस्यार्द्धं दत इत्येवंरूपे अन्यतरेण कृते सति । मूले भायो नो न भवति द्वन्द्व इत्याह *ज्ञातिभिरित्यादि । तेषां वहूनामेकसमं भर्त्रा*पितृवन्धुभिरिति । इदमुपलक्षणमन्यद्वयस्यापि ।

वा. १।स्तुतस्तु ज्ञातिभिरित्यस्योदासीनैः सजातीयैरित्यर्थः । सविधिप्रक.त्यस्य वन्धुत्रयंभ्रात्रादिभिश्चेत्यर्थ उचित इति वोध्यविन्नभिन्नभेलेखितेत्यस्यार्थमाह * लेख्येन चेति । अत्र वहुत्वानुपयोगोऽनिष्टावहं च तत्सत्त्वं प्रत्युत इति भावः । सर्वसमक्षं लिखापितमिति तदर्थः।*तथा, तद्वत्। यु मिश्रणामिश्रणयोरित्यनुशासनानुरोधेन तदर्थमाह *पृथगिति । *गृहेति । वहुवचनान्तद्वन्द्वः। चः समुच्चये। न्यूनतानिरासायाह *पृथगिति। पृथक्कृतगृहक्षेत्रादिसत्त्वेऽपीति भावः । * विभागधर्मेति । दायादानां विभागरूपधर्मसन्देहे सतीत्यर्थः । अग्रे ज्ञेय इति शेषः । * भा-

यथाह कात्यायनः,

आधिक्यं न्यूनता चांशे अस्तिनास्तित्वमेव च ।
अभोगभुक्तिः सीमा च षड् भूवादस्य हेतवः ॥ इति ।

तथाहि । ममात्र पञ्चनिवर्तनाया भूमेराधिका भूरस्तीति केनचिदुक्ते, पञ्चनिवर्तनैव नाधिकेत्याधिक्ये विवादः । पञ्चनिवर्तना मदीया भूमिरित्युक्ते, न, ततो न्यूनैवेति न्यूनतायाम् । पञ्चनिवर्तनो ममांश इत्युक्ते अंश एव नास्तीत्यस्तिनास्तित्वविवादः । मदीया भूः प्रागविद्यमानभोगैव भुज्यते इत्युक्ते, न, सन्तता चिरन्तन्येव मे भुक्तिरित्यभोगभुक्तौ विवादः । इयं मर्यादेयं वेति सीमाविवाद इति षट्प्रकार एव विवादः सम्भवति । षट्प्रकारेऽपि भूविवादे श्रुत्यर्थाभ्यां सीमाया अपि निर्णीयमानत्वात् सीमानिर्णयप्रकरणे तस्यान्तर्भावः । समन्ताद्भवाः सामन्ताः, चतसृषु दिक्ष्वनन्तरग्रामादयः । ते च प्रतिसीमं व्यवस्थिताः ।

ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्तितम् ।
गृहं गृहस्य निर्दिष्टं समन्तात्परिरभ्य हि ॥

इति कात्यायनवचनात् । ग्रामादिशब्देन तत्स्थाः पुरुषा लक्ष्यन्ते । ग्रामः पलायित इति यथा । सामन्तग्रहणं च तत्संसक्ताद्युपलक्षणार्थम् ।

उक्तञ्च कात्यायनेन,

संसक्तकास्तु सामन्तास्तत्संसक्तास्तथोत्तराः ।
संसक्तसक्तसंसक्ताः पद्माकाराः प्रकीर्तिताः॥इति ।

स्थाविरा वृद्धाः । आदिग्रहणेन मौलोद्धृतयोर्ग्र-

अथ सीमाविवादप्रकरणम् ॥ ९ ॥

मि. अथ. अधुना सीमाविवादनिर्णय उच्यते ॥

या. सीम्नो विवादे क्षेत्रस्य सामन्ताः स्थविरादयः ।
गोपाः सीमाकृषाणा ये सर्वे च वनगोचराः॥ १५०॥
नयेयुरेते सीमानं स्थलाङ्गारतुषद्रुमैः ।
सेतुवल्मीकनिम्नास्थिचैत्याद्यैरुपलक्षिताम्॥ १५१॥

मि. ग्रामद्वयसम्बन्धिनः क्षेत्रस्य सीम्नो विवादे तथैकग्रामान्तर्गतक्षेत्रमर्यादाविवादे च सामन्तादयः स्थलाङ्गारादिभिः पूर्वकृतैः सीमालक्षणैरुपलक्षितां चिह्नितां सीमां नयेयुः निश्चिनुयुः । सीमा क्षेत्रादिमर्यादा, सा च चतुर्विधा । जनपदसीमा ग्रामसीमा क्षेत्रसीमा गृहसीमा चेति । सा च यथासम्भवं पञ्चलक्षणा ।

तदुक्तं नारदेन,
ध्वजिनी मात्स्यिनी चैव नैधानी भयवर्जिता ।
राजशासननीता च सीमा पञ्चविधा स्मृता ॥ इति।

ध्वजिनी वृक्षादिलक्षिता । वृक्षादीनां प्रकाशत्वेन ध्वजतुल्यत्वात् । मात्स्यिनी सलिलवती । मत्स्यशब्दस्य स्वाधारजललक्षणत्वात् । नैधानी निखाततुषाङ्गारादिमती । तेषां निखातत्वेन निधानतुल्यत्वात् । भयवर्जिता अर्थिप्रत्यर्थिपरस्परसम्प्रतिपत्तिनिर्मिता । राजशासननीता ज्ञातृचिह्नाभावे राजेच्छया निर्मिता।एवम्भूतायां षोढा विवादः सम्भवति।

सीमासन्धिषु कार्याणि देवतायतनानि च ॥
इति प्रकाशरूपाणि ।
[ अ. ८ श्लो. २४९ । २५० । २५१ । २५२ ]
उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत् ।
सीमाज्ञाने नृणां वीक्ष्य नित्यं लोके विपर्ययम् ॥
अश्मनोऽस्थीनि गोवालांस्तुषान् भस्मकपालिकाः ।
करीषमिष्टकाङ्गारशर्करावालुकास्तथा ॥
यानि चैवंप्रकाराणि कालाद् भूमिर्न भक्षयेत् ।
तानि संधिषु सीमायामप्रकाशानि कारयेत् ॥
एतैर्लिङ्गैर्नयेत्सीमां राजा विवदमानयोः ।
इति प्रच्छन्नलिङ्गानि ।

एतैः प्रकाशाप्रकाशरूपैर्लिङ्गैः सामन्तादिप्रदर्शितैः सीमां प्रति विवदमानयोः सीमानिर्णयं कुर्याद्राजा ॥ १५० ॥ १५१ ॥

या. १। दायान्तर्गतस्थावरान्तर्गतगृहक्षेत्रप्रसङ्गेनाह *अधुनेति। मनूक्तक्रमस्तु नैवाभिमतोऽस्येति भावः।एवमग्रेऽपि बोध्यम्।* विवादे सतीति शेषः सीमशब्दो नान्तः डावन्तश्च। स्त्रीलिङ्गौ द्वौ। ग्रामद्वयसंबन्धिक्षेत्रसीम्न इति पाठः। संबन्धित्वं क्षेत्रविशेषणम् । व्यस्तपाठेऽपि व्यस्त एव पाठः । युक्तं चैतत्। मूले तथैव पाठात्। विनिगमकाभावादाह *तथैकेति। तद्वदित्यर्थः। एतेषामर्थान् वक्तुमादौ सर्वविधसीमानिर्णायकत्वमेतेषामिति सिद्धान्तायाकाङ्क्षितं विशेषं मूलानुक्तमाह *सीमा क्षेत्रादीति।*सा चेति। विषयभेदादिति भावः। जनपदो ग्रामसमूहो देशः।*सा च,चतुर्विधाऽपि। *यथासंभवमिति। संभवमनतिक्रम्येत्यर्थः । न नियमेन वक्ष्यमाणपञ्चलक्षणैरुपेतैव सर्वा सीमा, अपितु क्वचिदेकेन क्वचित् द्वाभ्यां क्वचिद्बहुभिरिति।

हणम्। वृद्धादिलक्षणं च—

तेनैवोक्तम्,

निष्पाद्यमानं यैर्दृष्टं तत्कार्यं तद्गुणान्वितैः।
वृद्धा वा यदि वाऽवृद्धास्ते तु वृद्धाः प्रकीर्तिताः॥
ये तत्र पूर्वं सामन्ताः पश्चाद्देशान्तरं गताः।
तन्मूलत्वात्तु ते मौला ऋषिभिः परिकीर्तिताः॥
उपश्रवणसम्भोगकार्याख्यानोपचिह्निताः।
उद्धरन्ति पुनर्यस्मादुद्धृतास्ते ततः स्मृताः॥ इति।

गोपाः गोचारकाः। सीमाकृषाणाः सीमासंलिखितक्षेत्रकर्षकाः। सर्वे च वनगोचराः। वनचारिणो व्याधादयः।

ते च मनुनोक्ताः, (अ. ८ श्लो. २६०)

व्याधान् शाकुनिकान् गोपान् कैवर्तान् मूलखानकान्।
व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरान्॥ इति।

स्थलम् उन्नतो भूप्रदेशः। अङ्गारोऽग्नेरुच्छिष्टम्। तुषा धान्यत्वचः। द्रुमा न्यग्रोधादयः। सेतुर्जलप्रवाहबन्धः। चैत्यं पाषाणादिबन्धः। आदिशब्देन वेणुवालुकादीनां ग्रहणम्।

एतानि च प्रकाशाप्रकाशभेदेन द्विप्रकाराणि।

तथा च मनुः, (अ. ८ श्लो. २४६। २४७। २४८)

सीमावृक्षांस्तु कुर्वीत न्यग्रोधाश्वत्थकिंशुकान्।
शाल्मलीशालतालांश्च क्षीरिणश्चैव पादपान्॥
गुल्मान्वेणूंश्च विविधान् शमीवल्लीस्थलानि च।
शरान्कुब्जकगुल्मांश्च यथा सीमा न नश्यति॥
तडागान्युदपानानि वाप्यः प्रस्रवणानि च।

तुषाङ्गारकपालैस्तु कुम्भैरायतनैस्तथा ।
सीमा प्रतिचिता कार्या नैधानी सा निगद्यते ॥
साक्ष्यभावे द्वयोर्यत्र प्रभुणा परिकीर्तिता ।
सामन्तानुमता सीमा सा ज्ञेया राजकारिता ॥
स्वच्छन्दगा बहुजला झषकूर्मसमन्विता ।
नित्यप्रवाहिणी यत्र सा सीमा मात्स्यिनी मता ॥ इति ।

३। * एवमिति। उक्तप्रकारेण यथासंभवं पञ्चलक्षणलक्षितायां भूम्यामित्यर्थः। न्यूनताचांशे इति पाठः । उक्तभूविवादे पट्प्रकारत्वं कातीयव्याख्यानेन प्रदर्शयन्नत्रादौ प्रथमप्रकारमाह * ममात्रेति । प्रदेशे इत्यर्थः । निवर्त्तनं भूपरिमाणमादावुक्तम् । द्वितीयमाह * पञ्चनिवर्तनेति । नेत्यग्रे किं त्विति शेषः । एवमग्रेऽपि । विवाद इत्यस्यानुपङ्गः । अंश इत्युत्तरान्वयीति तृतीयं तुर्यं चाह *पञ्चनिवर्तन इति । अत्र तथोक्ते अंशोऽस्ति पञ्चनिवर्तन इत्येतन्नास्तीति तृतीयपक्षं व्याख्यातृबुद्धिपरीक्षार्थं स्फुटमनुक्त्वाऽग्रिमं पक्षमेव व्यक्तीकरोति * अंश एव नास्तीति । अत एव संभूयोपसंहरति * अस्तिनास्तित्वेति । पञ्चमप्याह * मदीयेति। संततेत्यस्यैव व्याख्या *चिरन्तन्येवेति। तथा चाभोगभुक्तिरित्यस्य प्रागविद्यमानभोगकस्य क्षेत्रादेर्भुक्तिरित्यर्थः । षष्ठमाह * इयं मर्यादेयं वेतीति ।

४। यद्वा पञ्चनिवर्त्तनो ममांश इत्यत्रैक एव प्रकारः। मदीया भूरिति तुर्यः। सीमाशब्देनोभयम्। तत्र पञ्चम इयं मर्यादेयं वेति। इयं सीमेयं वेति षष्ठः । अनेनैवाशयेन तथा सीमाविवाद इत्युक्तं मानवे । मर्यादायाः सीम्नश्च भेदं दर्शयिष्यति मर्यादायाः प्रभेदे त्वित्यत्र । तथा चात्र भेदे पूर्वत्रैवयं तत्र भेदे सीमा-

१ कात्यायनवाक्यस्थमिति शेषः ।

यत्र यथा प्राप्तिस्तत्र तथैवेति भावः । * वृक्षादिलक्षिता. वृक्षादिकृता । गौण्या योगार्थमप्याह * वृक्षादीनामिति । अत इनिठनाविति इनिः सर्वत्र । अत्र शुद्धतया तमप्याह *पत्त्येति । तद्विना तदस्थितेः । स्वाधारेत्यनेन तन्मूलसंबन्धो दर्शितः । निधीयते इति निधानं तदेव नैधानं स्वार्थे ऽण् । तदर्थमाह *निखातेति । अत्रापि गौणी वृत्तिरित्याह *तेषामिति । तुषाङ्गारादीनामित्यर्थः । * निखातत्वेन, खनित्वाऽन्तर्गुप्ततया स्थापितत्वेन । उक्तहेतोरेवाह *निधानेति । भयवर्जितेत्यस्यार्थमाह *अर्थीति।वादिप्रतिवादिनोः सत्यसंधत्वेन मिथोऽत्यन्तं विश्वस्तत्वेन इयं मदीया भूः इयं मदीयेति स्वस्वचित्तानुसंधानपुरःसरं मिथः संमत्या वाङ्मात्रादिनिर्मितेत्यर्थः । अत्रार्थित्वं प्रत्यर्थित्वं च प्रातिवेश्यत्वेन तद्योग्यत्वाशयेन न मत्सरग्रस्तत्वेनेति ज्ञेयम् । * ज्ञातृचिह्नेति । ज्ञातारश्च चिह्नानि च तेषामभावे इत्यर्थः । ज्ञातारः साक्षिसामन्तादयः । चिह्नानि वृक्षादीनि ।

२। व्यासेन तु अन्यथा भेदानुक्त्वा विवृताः । तद्यथा,

निम्नोन्नता च ध्वजिनी नैधानी राजकारिता ।
स्थिरा पञ्चविधा सीमा मत्स्यिनी तु चला स्मृता ॥
ग्रामयोरुभयोर्यत्र गर्त्तः सीमाप्रवर्तकः ।
निम्नोपलक्षिता सा तु शास्त्रविद्भिरुदाहृता ॥
शरकुञ्जकवल्मीकान्यत्र देवगृहाणि च ।
अश्मकूटाश्च दृश्यन्ते ज्ञेया सा तु समुन्नता ॥
ग्रामयोरुभयोः सीम्नि वृक्षा यत्र समुन्नताः ।
समुच्छ्रिता ध्वजाकारा ध्वजिनी सा प्रकीर्तिता ॥
इष्टकाङ्गारसिकताः शर्करास्थिकपालिकाः ।
निहिता यत्र दृश्यन्ते नैधानी सा प्रकीर्तिता ॥

पुणमतित्वरूपगुणयुक्तैर्निष्पाद्यमानं यद्दृष्टं ते इत्याद्यर्थः। यदि वाऽवृद्धा इत्यत्राकारप्रश्लेषः। *तत्र, विषये। *तन्मूलत्वात्, सामन्तत्वस्य पूर्वस्थितत्वात्। *उपेति। अत्रेयं स्थितिरिति सभ्येभ्यः श्रवणमुपश्रवणम्। उपश्रवणं च संभोगकार्यं च तयोराख्यानं तेनोपलक्षिता इत्यर्थः। सीम्नि कर्षणासंभवादाह * सीमासंनिहितेति।

* व्याधानिति।

इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान्।

इत्यस्य पूर्वशेषः। व्याधा लुब्धकाः। शाकुनिकाः पक्षिवधजीविनः। कैवर्तास्तटादिखननवृत्तयः। मूलखानकाः वृक्षादिमूलोत्पाटनजीविनः। व्यालग्राहाः सर्पग्राहिण आहितुण्डिकाः। उञ्छवृत्तयः।

उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्। इति यादवः।
अन्ये च वनचारिणः फलपुष्पाद्यर्थमरण्यचारिणः।

८। अथ स्थलाङ्गारादि व्याचष्टे * स्थलमित्यादि। निम्नभूप्रदेशस्य निम्नपदेन वक्ष्यमाणत्वादाह *उन्नत इति। *अग्रेरुच्छिष्टं, कोलसा इति माहाराष्ट्रभाषया प्रसिद्धम्।[1] द्रुमाणामुक्तत्वादाह * पाषाणादीति। चत्वर इत्यर्थः। चैत्यमायतनं तुल्ये इत्यमरः। विशेषमाह * एतानि चेति। उक्तलक्षणानीत्यर्थः। * सीमावृक्षानिति। तत्प्रकाशकवृक्षानेतान् तथा कुर्वीत यथा सीमेत्यर्थः। अत्रोभयत्र द्वन्द्वोत्तरपदको द्वन्द्वः।

पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः।
अनोकहः कुटः शालः इत्यमरः।
भागवते पञ्चमे तु भेदा उक्ताः,

---

१ कोयला इति मध्यदेशभाषया प्रसिद्धम्।

मर्यादयोरेकत्वेन व्यवहार इति बोध्यम्।

५। यद्वा आधिक्यं न्यूनत्वम् अस्तित्वं नास्तित्वम् अभोगभुक्तिः सीमा चेत्यमी षट् हेतवः । कचिव्यस्ताः कचिन्मिलिता इति। एतमुक्ताशयगर्भितमुपसंहरति * इति षट्प्रकार एवेति।

नन्वेवं प्रकरणासंगतिरत आह * पडिति। * श्रुत्यर्थाभ्यामिति। यत्र साक्षात्सीमाविवादस्तत्र श्रुत्या, अन्यत्रार्थेनेति विवेकः। अपिना भूसमुच्चयः। * तस्य, षड्विधभूवादस्य।

६। अथ मौलं सामन्ता इत्यादि व्याचष्टे * समन्तादित्यादिना। सामन्तशब्दः पृषोदरादिः। ननु तत्रापि अन्यपार्श्ववर्तिनोऽन्यसीमानिर्णायकत्वं कथमत आह * तेचेति। आदिसंग्राह्यं प्रकटयन् अत्र मानमाह * ग्रामस्येति। ग्रामजातो ग्रामजनस्य सामन्त इत्यर्थः। एवं क्षेत्रादावपि। सामन्त इत्यस्याग्रे उभयत्रानुषङ्गः। तत्र हेतुमाह * समन्तादिति। * हि, यतः। समंतात्परिरभ्य संवध्य व्यवस्थिता इत्यर्थः। यथाश्रुतेऽनुपपत्तेराह * ग्रामादीति। आदिना क्षेत्रादिपरिग्रहः। * तत्स्था इति। ते च तत्स्वामिनोऽन्ये वा। न्यूनतां निराचष्टे * सामन्तेति। तस्यापीत्यर्थः। अत्रादिसंगृहीतान् दर्शयन्नुक्तार्थे संमतिमाह * उक्तं चेति। निकटवर्तिनः संसक्तकाः सामन्ता इति। * तथा, तद्वत्। तत्संसक्तास्तदनन्तरास्थिता उत्तरा इति, संसक्तसक्तसंसक्ताः तदनन्तरस्थिताः पद्माकारा इति च प्रकीर्तिता इत्यर्थः। सामन्तादयस्त्रयोऽपि संज्ञाद्वयभाज इति यावत्। अत एव न सर्वनामसंज्ञाः।

७। * आदीति। स्थविरादय इत्यादीत्यर्थः। वृद्धत्वं पारिभाषिकमित्याह *वृद्धादीति। * तेनैव, कात्यायनेनैव। *तत्कार्यमिति। सीमानिर्णयादिरूपं कार्यं सीमानिर्णयादिविषयकानि-

चयन्नुपसंहरति * यानीति । उक्तसदृशान्यन्यानीत्यर्थः । सीमायां बोधनीयायां सन्धिषु तत्सान्धिषु नयेत् निश्चयेन प्रतिपादयेत् एतैरिति ।

९। मनुमात्रार्थमाह * एतैरिति । उभयोपसंहारोऽयमित्याह * प्रकाशाप्रकाशेति। सीमामित्यस्योभयत्रान्वय इत्याह * सीमां प्रतीति । द्वितीयस्य फलितमाह * सीमानिर्णयमिति । पूर्वभुक्त्या तु सततमुदकस्यागमनेन चेत्यस्य शेषो बोध्यः । अविच्छिन्नया भुक्त्या न तु त्रिपुरुषादिकया । तस्या "आधिः सीमा" इति पर्युदस्तत्वात् । ग्रामद्वयसन्धिस्थनद्यादिप्रवाहेण चेति तदर्थः ॥ १५० ॥ १५१ ॥

मि० अव. यदा पुनश्चिह्नानि न सन्ति, विद्यमानानि वा लिङ्गालिङ्गतया संदिग्धानि, तदा निर्णयोपायमाह ।

या० सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा ।
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥ १५२॥

मि० सामन्ताः पूर्वोक्तलक्षणाः, समग्रामाश्चत्वारोऽष्टौ दश चेत्येवं समसंख्याः प्रत्यासन्नग्रामीणाः, रक्तस्रग्विणो रक्ताम्बरधरा मूर्धारोपितक्षितिखण्डाः सीमानं नयेयुः प्रदर्शयेयुः । सामन्ता वेति विकल्पाभिधानं स्मृत्यन्तरोक्तसाक्ष्यभिप्रायम् ।

यथाह मनुः, ( अ. ८ श्लो. २५३ )

साक्षिप्रत्यय एव स्यात्सीमावादविनिर्णयः ।इति।

तत्र च साक्षिणां निर्णेतृत्वं मुख्यं, तदभावे सामन्तानाम् ।

तदुक्तम्, ( मनुः अ. ८ श्लो. २५८ )

वनस्पत्योषधिलतात्वक्सारा वीरुधो द्रुमाः। इति।

पुष्पं विना फलतीति वनस्पतिर्वटोदुम्बरादिः। फलपाकान्ता ओषधयो गोधूमादिधान्यानि। आश्रयेणारोहति सा लता। ताम्बूलादिवल्ली तु व्रततिः। लतेति तु सामान्यम्। त्वक्सारो वंशादिः। विनाऽऽश्रयेणारोहन्तीति वीरुधो लताविशेषाः। समयेन फलन्तीति द्रुमा आम्रादय इति तदर्थः। गुल्मा अप्रकाण्डस्तम्बाः। अप्रकाण्डे स्तम्बगुल्मावित्यमरः। तृणजङ्गा वा। स्थलं कृत्रिमोन्नतभूभागः। कुञ्जकगुल्मांश्चेतिपाठे गुल्मांशे पौनरुक्त्यमिति न स पाठः। किन्तु कुप्यकगुल्मांश्चेति। तत्र कुप्यसम्बन्धिनो गुल्माः कुप्यकगुल्माः। कुप्यमेव कुप्यकं स्वार्थे कन्। सुवर्णरजतभिन्नं ताम्रादि कुप्यम्।

हेमरूप्ये कृताकृते। ताभ्यां यदन्यत्तत्कुप्यमित्यमरात्।

कुप्यकस्य मलापकर्षणवर्णोत्कर्षमिथःसंश्लेषादिषूपयोगित्वात्तत्सम्बन्धित्वम्। अत एवाधिकोपयोगित्वेन गुल्मेत्यस्य पृथक् ग्रहणमिति भेदः। एवं तु सोऽपि पाठः कथञ्चित्सुयोजः। तत्रैव पाठे प्रचुरोपयोगत्वेनादरार्थं पृथक् निर्दिष्टा इति तद्व्याख्यातारः।

तथेति व्याख्यातम्। यद्वा तथा कृते सति सीमा न नश्यतीत्यर्थः। तडागशब्दो ऽर्धर्चादिः। उदपानानि कूपाः। कूप उदपानं तु पुंसि वेत्यमरः। वाप्यः पाषाणादिबद्धा दीर्घिकाः। वापी तु दीर्घिकेत्यमरः। प्रस्रवणानि निर्झरादयः। * उपच्छन्नानि, गुप्तसदृशानि। सीमाया ज्ञाने। * नित्यं, सर्वदा। * विपर्ययं, वैपरीत्यम्। वीक्ष्येति पूर्वान्वयि। अन्यस्य पुनः करणे हेतुरनेन सूचितः। तान्येवाह * अश्मन इत्यादि। आनन्त्याद्विरमन्नन्यान्यपि सू-

योऽयम्— (ना. व्यव. ११ । ९.)

नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि ।
गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता ॥

इत्येकस्य निषेधः, स उभयानुमतधर्मविद्व्यतिरिक्तविषय इत्यविरोधः ।

स्थलादिचिह्नाभावेऽपि साक्षिसामन्तादीनां सीमाज्ञाने उपायविशेषो—

नारदेनोक्तः, (व्यव. ११ । ६)

निम्नगापहृतोत्सृष्टनष्टचिह्नासु भूमिषु ।
तत्प्रदेशानुमानाच्च प्रमाणाद्भोगदर्शनात् ॥ इति ।

निम्नगया नद्या अपहृतेनापहरणेनोत्सृष्टानि स्वस्थानात्प्रच्युतानि नष्टानि वा लिङ्गानि यासु मर्यादाभूमिषु । तत्र तत्प्रदेशानुमानादुत्सृष्टनष्टचिह्नानां प्राचीनदेशानुमानात्, ग्रामादारभ्य सहस्रदण्डपरिमितं क्षेत्रमस्य ग्रामस्य पश्चिमे भागे इत्येवंविधात्प्रमाणाद्वा, प्रत्यर्थिसमक्षमविप्रतिपन्नाया अस्मार्तकालोपलक्षितभुक्तेर्वा निश्चिनुयुः ।

बृहस्पतिना चात्र विशेषो दर्शितः,

आगमं च प्रमाणं च भोगकालं च नाम च ।
भूभागलक्षणं चैव ये विदुस्तेऽत्र साक्षिणः॥इति ।

एते च साक्षिसामन्तादयः शपथैः श्राविताः सन्तः कुलादिसमक्षं राज्ञा प्रष्टव्याः ।

यथाह मनुः, [ अ. ८ श्लो. २५४ ]

ग्रामेयककुलानां तु समक्षं सीम्नि साक्षिणः ।
प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः ॥ इति ।

साक्ष्यभावे तु चत्वारो ग्रामाः सीमान्तवासिनः।
सीमाविनिर्णयं कुर्युः प्रयता राजसन्निधौ ॥ इति।

तदभावे तत्संसक्तादीनां निर्णेतृत्वम्।

यथाह कात्यायनः,

स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात्।
तत्संसक्तैस्तु कर्त्तव्य उद्धारो नात्र संशयः॥
संसक्तसक्तदोषे तु तत्संसक्ताः प्रकीर्तिताः।
कर्त्तव्या न प्रदुष्टास्तु राज्ञा धर्मं विजानता॥ इति।
सामन्ताद्यभावे मौलादयो ग्राह्याः।
तेषामभावे सामन्ता मौलवृद्धोद्धृतादयः।
स्थावरे षट्प्रकारेऽपि कार्या नात्र विचारणा॥

इति कात्यायनेन क्रमविधानात्।

एते च सामन्तादयः संख्यागुणातिरेकेण भवन्ति।

सामन्ताः साधनं पूर्वं निर्दोषाः स्युर्गुणान्विताः।
द्विगुणास्तूत्तरा ज्ञेयास्ततोऽन्ये त्रिगुणा मताः॥

इति स्मरणात्। ते च साक्षिणः सामन्तादयश्च स्वैः स्वैः शपथैः शापिताः सन्तः सीमां नयेयुः।

( अ० ८ श्लो० २५६ )

शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः।
सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसम्॥

इति मनुस्मरणात्। नयेयुरिति बहुवचनं द्वयोर्निरासार्थं नैकस्य। ( व्यव. ११। १० )

एकश्चेदुन्नयेत्सीमां सोपवासः समुन्नयेत्।
रक्तमाल्याम्बरधरो भूमिमादाय मूर्द्धनि॥

इति नारदेनैकस्याभ्यनुज्ञानात्।

क्ष्यमाणमनोरिति भावः। सीमामित्यस्य व्याख्या * सीमानमिति। एवं सति वाशब्दासङ्गतिं निराचष्टे * सामन्ता वेतीति। * साक्षिप्रत्यय इति।

यदि संशय एव स्याल्लिङ्गानामपि दर्शने। ( मनु.८।२५३)

इति अस्य पूर्वशेषः। एवोऽप्यर्थे। तत्र क्रममाह * तत्रेति। तयोर्मध्ये इत्यर्थः। * तदुक्तमिति। मनुनेवेति शेषः। * चत्वार इति। एतद्वादिसमसंख्योपलक्षणम्। प्रयता इत्यनेनाव्यवस्थितानां दुष्टानां तत्त्वं निरस्तम्। अत एव प्रदुष्टेषु न प्रदुष्टा इति कातीये उक्तम्। * स्वार्थेति। तद्विषये ऽर्थगौरवात्तल्लोभाद् दोषयुक्तेषु सामन्तेषु सत्स्वित्यर्थः। तात्पर्यार्थमुपसंहरति * कर्त्तव्या इति। * सामन्ताद्यभावे इति। आदिना तत्संसक्तादिग्रहणम्। अनेन— ( अ. ८। २५९ )

'सामन्तानामभावे तु मौलानां सीमसाक्षिणाम्।

इति मानवे सामन्तशब्दस्त्रितयपर इति सूचितम्। अत एवाविरोधः। एवमग्रिमकातीयेऽपि। * तेषां, साक्षिणाम्। * सामन्ताः, संसक्तादयस्त्रयः। * मौलेति। पूर्वपूर्वाभावे परः परः। एवं च मूलं न क्रमपरमिति भावः।

२। विशेषान्तरमाह * एतेचेति। संसक्तादयस्त्रय इत्यर्थः। संख्या च गुणाश्च ताभ्यामाधिक्येन भवन्तीत्यर्थः। अत्र मानं कातीयमेवाह * सामन्ता इति। पूर्वं साधनं सामन्ता निर्दोषाः स्युः। उत्तरास्तु गुणान्विता द्विगुणाश्च। तृतीया अपि गुणान्विताास्त्रिगुणाश्चेत्यर्थः। द्वैगुण्यादि च प्रागुक्तचतुष्टादितो बोध्यम्।

३। विशेषान्तरमाह * ते चेति। स्मृत्यन्तरोक्ताश्चेत्यर्थः। * स्वैः स्वैरिति। यज्जातीयो यस्तदीयसुकृतैरित्यर्थः। * उर्वीं, त-

ते च पृष्टाः साक्ष्यादयः एकमत्येन समस्ताः सीम्नि निर्णयं ब्रूयुः । तैर्निर्णीतां सीमानं तत्प्रदर्शितसकललिङ्गयुक्तां साक्ष्यादिनामान्वितां चाविस्मरणार्थं पत्रे समारोपयेत् ।

उक्तञ्च मनुना, ( अ. ८ श्लो. २६१ )

ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निर्णयम् ।
निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः ॥ इति ।

एतेषां च साक्षिसामन्तप्रभृतीनां सीमाचङ्क्रमणदिनादारभ्य यावत्त्रिपक्षं राजदैविकं व्यसनं चेन्नोत्पद्यते तदा तत्प्रदर्शनात्सीमानिर्णयः । अयं च राजदैविकव्यसनावधिः—

कात्यायनेनोक्तः,

सीमाचङ्क्रमणे कोशे पादस्पर्शे तथैव च ।
त्रिपञ्चपक्षसप्ताहं दैवराजिकमिष्यते ॥ इति॥१५२॥

बा. १। अथाग्रिमसङ्गतिमाह * यदापुनरिति । यदा त्वित्यर्थः । सर्वथाऽसत्ताया विरुद्धत्वादाह * विद्यमानानीति। सन्देहे बीजं कोटिद्वयमाह * लिङ्गालिङ्गेति । समग्रामा इति सामन्तविशेषणं न पृथगित्याह * प्रत्यासन्नेति । सक्ता इत्यर्थः । चत्वार इत्यादि दिक्प्रदर्शनं न परिगणनम् । अत एव अपिः । तेन तादृशबहूपादानात्तादृशा एव समुच्चीयन्ते वाशब्दो विकल्पे इत्याह * इत्येवमिति । उक्तप्रकारेण । * समसंख्याः, न तु विषमसंख्या नाप्येते एवेत्यर्थः । रक्तत्वमुभयविशेषणमित्याह * रक्तस्रगिति । नीलरूपवदितिवत्प्रयोगद्वयम् । मूलं तु सम्यगेव । क्षितिधारिण इत्यस्यार्थमाह * मूर्द्धेति । क्षितिशब्दो विशेषपरः । धारणमपि स्थलविशेषे एव व-

णाविशेषः प्रागुक्तः । प्रदेशानुमानाग्नेति चो वार्थे उभयत्रान्वेतीत्याह * प्रमाणाद्वेति । तृतीयस्वरूपमाह * प्रत्यर्थीति । एतत्समक्षं कदाऽपि विप्रतिपत्तिमप्राप्तया इत्यर्थः । सामन्तेयुः सीमानमित्यनुवृत्तिमभिप्रेत्याह * निश्चिनुयुरिति । प्रमुखेनादिपचकः प्रागुक्त एव,पूर्वभुक्त्या त्विति । वृहस्पतिना चेति चस्त्वर्थे । एवमग्रेपि । * अत्र, परमप्रकृतसाक्षिसामन्तादिविषये सीमानिर्णये वा । आगमादिस्वरूपं प्रागुक्तम् । तेऽन्वेति पाठः । साक्षिपदं सामन्तादीनामप्युपलक्षणम् ।

६। विशेषान्तरमाह * एतेनेति । * ग्रामेयकेति । ग्रामेयका ग्राम्यजनाः । कुलानि पूगश्रेणीकुलानीत्युक्तानि । एतेषां समक्षमित्यर्थः । यद्वा ग्रामेयका ग्राम्यजनास्तेषां कुलानि समूहाः तेषामित्यर्थः । * सीम्नि, विषये । एवमग्रेऽपि । ये साक्षिणस्ते तानि प्रष्टव्या एव । द्विकर्मकोऽयम् । गौणे कर्मणि तव्यः । विवादिनोस्तयोश्च, समक्षमित्यस्यानुषङ्गः । सीमसाक्षिण इति पाठान्तरम् । * निबध्नीयात्, पत्रे लेखयेत् । तान्सर्वान्, साक्ष्यादीन् । चेन सकललिङ्गसमुच्चयः ।

७। मूलं सङ्गत्याऽवतारयितुं विशेषान्तरमाह * एतेषां चेति । राजेति । * राजिकं दैविकं च दुःखमित्यर्थः । अत्र मानमाह * अयं चेति । चस्त्वर्थे । कोशः प्रागुक्तः । त्रिपक्षेति बहुव्रीहि । यथासंख्यमन्वयः । आर्षत्वासाधुत्वमस्य । पूर्वनिपाताऽनियमो धर्मादित्वात् ॥ १५२ ॥

मि. अव. यदा स्वमीयानुक्तसाक्ष्यवचसां त्रिपक्षाभ्यन्तरे रोगादि दृश्यते, अथवा प्रतिवादिनिर्दिष्टाभ्यधिकसंख्यागुणसाक्ष्यन्तराविरुद्धवचनता, तदा ते मृषाभाषितया दण्डनीयाः । तदाह ।

त्खण्डम्। * तां,सीमाम् । समञ्जसमिति क्रियाविशेषणम् । नयेयुरिति बहुवचनादेकस्य द्वयोश्च तन्निर्णेतृत्वं न स्यादत आह * नयेयुरिनीति । अत एव मूलादौ चत्वार इत्यादौ चोक्तम् । एवं च तत्रापि तदेकवाक्यतया समा एव ग्राह्या न विषमा इत्यर्थः। * भूमिं, तत्खण्डम् ।

४। अन्यवादिर्तितत्प्रागवर्तिनारदाविरोधमेव तस्य परिहरति * यो ऽयमिति । प्रत्ययो विश्वासः। * अस्य, सीमानिर्णयरूपस्य । * उभयेति । अर्थिप्रत्यर्थीत्यर्थः।

अत एव बृहस्पतिरपि,

ज्ञातृचिह्नविनाशे तु एकोऽप्युभयसम्मतः।

रक्तमाल्याम्बरधरो मृदमादाय मूर्द्धनि ॥

सत्यव्रतः सोपवासः सीमां सन्दर्शयेन्नरः । इति ।

५। विशेषान्तरमाह * स्थलादीति । * साक्षिसामन्तादीनां, तेषामेव न तु अन्येषाम् । नारदीयं व्याचिख्यासुरादौ सान्दिग्धतया समासपूर्वकं पदार्थमाह * निम्नगयेति । भावे क्त इत्याह * अपहरणेनेति । निम्नगयेत्यस्योत्सृष्टादौ कर्तृत्वेनान्वयः । अत एव नलोकेति निषेधात्तत्र षष्ठी न कृता । अपहरणस्य तत्र करणत्वेनान्वयः । उत्सृष्टानीति पाठः । अत एव तथार्थमाह * स्वेति । कल्पतरौ तु उत्सृष्टेति पाठो धृतः । अर्थः स एव। यौगपद्यासम्भवादाह । * नष्टानि वेति । फलितार्थोऽयम् । समासस्तु द्वन्द्वगर्भो बोध्यः। भूमिपदं प्रकरणाद्विशेषपरमित्याह *मर्यादेति। अत्र वाक्ये उपायत्रयम् उक्तम् । तत्राद्यस्वरूपं विविच्याह *तत्रेति । तेषां त्रयाणां मध्ये इत्यर्थः । तत्पदेनोत्सृष्टादिचिह्नपरामर्शस्तदाह * उत्सृष्टेति । प्रार्थमाह * प्राचीनेति । द्वितीयस्वरूपमाह * ग्रामादिति । दण्डः परिमा-

अमृते तु पृथक् दण्ड्या इत्येतद्दण्डविधानमज्ञानविषयम् ।

यद्बूनां तु गृहीतानां न सर्वे निर्णयं यदि ।
कुर्युर्भयाद्वा लोभाद्वा दण्ड्यास्तूत्तमसाहसम् ॥

इति ज्ञानविषये साक्ष्यादीनां कात्यायनेन दण्डान्तरविधानात् ।

तथा साक्षिवचनभेदेऽप्ययमेव दण्डस्तेनैवोक्तः,
कीर्तिते यदि भेदः स्याद्दण्ड्यास्तूत्तमसाहसम् ।इति।

एवमज्ञानादिनाऽनृतवदने साक्ष्यादीन् दण्डयित्वा पुनः सीमाविचारः प्रवर्तयितव्यः ।

अज्ञानोक्तौ दण्डयित्वा पुनः सीमां विचारयेत् ।

इत्युक्त्वा—

त्यक्त्वा दुष्टांस्तु सामन्तानन्यान्मौलादिभिः सह।
संमिश्र्य कारयेत्सीमामेवं धर्मविदो विदुः ॥

इति निर्णयप्रकारस्तेनैवोक्तः ।

मि. अव. यदा पुनः सामन्तप्रभृतयो ज्ञातारश्चिह्नानि च न सन्ति तदा कथं निर्णय इत्यत आह ।

या० अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्तिता ॥ १५३॥

मि० ज्ञातॄणां सामन्तादीनां लिङ्गादीनां च वृक्षादीनामभावे राजैव सीम्नः प्रवर्तिता प्रवर्तयिता । अन्तर्भावितोऽत्र ण्यर्थः । ग्रामद्वयमध्यवर्तिनीं विवादास्पदीभूतां भुवं समं प्रविभज्य अस्येयं भूरस्येयमित्युभयोः समर्प्य तन्मध्ये सीमालिङ्गानि कुर्यात् । यदा तस्यां भूमावन्यतरस्योपकारातिशयो दृश्यते तदा तस्यैव ग्रामस्य सकला भूः समर्पणीया ।

या. अनृते तु पृथक् दण्ड्या राज्ञा मध्यमसाहसम् ।

मि. अनृते मिथ्यावदने निमित्तभूते सति सर्वे सामन्ताः प्रत्येकं मध्यमसाहसेन चत्वारिंशदधिकेन पणपञ्चशतेन दण्डनीयाः । सामन्तविषयता चास्य साक्षिमौलादीनां स्मृत्यन्तरे दण्डान्तरविधानादवगम्यते ।

तथाच मनुः, ( अ. ८ श्लो. २५७ )
यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः ।
विपरीतं नयन्तस्तु दाप्याःस्युर्द्विशतं दमम् ॥इति।
नारदोऽपि—(व्यव. ११।७ )
अथ चेदनृतं ब्रूयुः सामन्ताः सीमनिर्णये।
सर्वे पृथक् पृथक् दण्ड्या राज्ञा मध्यमसाहसम् ॥
इति सामन्तानां मध्यमसाहसं दण्डमभिधाय—
शेषाश्चेदनृतं ब्रूयुर्नियुक्ता भूमिकर्मणि ।
प्रत्येकं तु जघन्यास्ते विनेयाः पूर्वसाहसम् ॥
इति तत्संसक्तादिषु प्रथमं साहसमुक्तवान् ।
मौलादीनामपि तमेव—
दण्डमाह, ना. व्यव. ११।८ )
मौलवृद्धादयस्त्वन्ये दण्डगत्या पृथक् पृथक् ।
विनेयाः प्रथमेनैव साहसेनानृते स्थिताः ॥ इति ।

आदिशब्देन गोपशाकुनिकव्याधवनगोचराणां ग्रहणम् । यद्यपि शाकुनिकादीनां पापरतत्वाल्लिङ्गप्रदर्शनएवोपयोगो न साक्षात्सीमानिर्णये तथापि लिङ्गदर्शने एव मृषाभाषित्वसम्भवाद्दण्डविधानमुपपद्यतएव ।

इत्यारभ्य यत् मूलमनुनारदादि प्रदर्शितमित्यर्थः। अत्र हेतुमाह * बहूनां त्विति। निर्णतृत्वेन समाश्रितानां बहूनां साक्ष्यादीनां मध्ये यदि सर्वेऽपि साक्ष्यादयः प्रत्येकमुक्तहेतुना निर्णयं न कुर्युरित्याद्यर्थः। अत्र भयाद्वा लोभाद्वेति हेतुत्वाऽस्य ज्ञानविषयत्वं स्पष्टमेव। तदाह * ज्ञानेति।

३। विशेषान्तरमाह * तथेति। किं चेत्यर्थः। तद्वदित्यर्थो वा। * अयमेव, उत्तमसाहसाख्य एव। * तेनैव, कात्यायनेनैव। एवमग्रेऽपि।

४। विशेषान्तरमाह * एवमिति। उक्तप्रकारेणेत्यर्थः। आदिना ज्ञानग्रहः। अत्र मानमाह * अज्ञानोक्ताविति।

ज्ञानेन हि विमुच्यन्ते सामन्ता निर्णयं प्रति।

इत्यस्यादिः। यत इत्यादिः। * संमिश्र्य, संमिश्रीकृत्य।

उ. ५। मूलमवतारयति *यदेति। ज्ञातृचिह्नानामिति द्वंद्व इत्याह *ज्ञातॄणामिति। चिह्नानामित्यस्यार्थो *लिङ्गानां चेति। उक्तहेतोरेवाह *राजैवेति। यथाश्रुते बाधादाह *प्रवर्त्तयितेति। तदुपपादयति *अन्तरिति। व्यापारद्वयार्थत्वं तस्येति भावः। तत्प्रकारमाह *ग्रामेति। समं स्यादिति न्यायेनाह *सममिति। तत्र विशेषमाह *यदेति। विवादास्पदीभूतायां भुव्यन्यतरस्य ग्रामस्याधिकोपकारसंभवे यावत्युपयुक्ता तावती सर्वाऽपि तस्य देयेत्यर्थः। *सीमायामिति। लिङ्गाद्यभावेन परिच्छेत्तुमशक्यायां सीमायां धर्मज्ञान्यासंभवाद्राजैव स्वयं पक्षपातरहितः सन् येषामुपकारातिशयस्तेषामेव ततः प्रदिशेन्निर्दिशेदित्यर्थः॥ १५३॥

मि० अव० असत्यामप्यतद्भावाशङ्कायामस्याः स्मृतेर्न्यायमूलतां दर्शयितुमतिदेशमाह।

या० आरामायतनग्रामनिपानोद्यानवेश्मसु॥

ण्यपि वचांसि सन्तीति शिष्यबोधार्थमनुक्तन्यायसिद्धार्थमपि वि-
षयान्तरेषु वचनेनातिदिशतीति ।

२। तदर्थभूतनिवेशनमेव विशदयति * पञ्चालेति । कूटं समूहः ।
आदिना तृणान्तरकाष्ठादिपरिग्रहः। न्यूनतां निराचष्टे * ग्रामेति ।
चो व्युत्क्रमे, तदुपलक्षणार्थमपि । यद्यपि—

आहावस्तु निपानं स्यादुपकूपजलाशये ।

इत्यमरेणोक्तं तथाप्युपलक्षणत्वेनाह * पानीयेति । प्रभृ-
तिना तस्यापि ग्रहणम् ।

३। एवं पदार्थानुक्त्वा वाक्यार्थमाह * एतेष्विति । अग्रिमं
स्वतन्त्रमित्याह * तथेति । प्रवहशब्दो भयादित्वात्साधुः । के-
दारो वप्रमस्त्रियाम् । गृहं सामान्यम् । यद्यपि प्रासादो देवभूभुजा-
मित्यमरस्तथाप्यत्र तयोः पृथगुक्तेः प्रासादो महागृहम् । प्रसादो-
ऽपि । उभयत्राधिकरणे घञ् । आहुधिकआद्ये । आवसथम्
अग्निमत् गृहम् ॥ १५४ ॥

मि० अव. सीमानिर्णयमुक्त्वा तत्प्रसङ्गेन मर्यादा-
प्रभेदनादादौ दण्डमाह ।

या० मर्यादायाः प्रभेदे च सीमाऽतिक्रमणे तथा ।
क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः ॥ १५५ ॥

मि० अनेकक्षेत्रव्यवच्छेदिका साधारणा भूर्मर्या-
दा तस्याः प्रकर्षेण भेदने, सीमातिक्रमणे सीमानमति-
लङ्घ्य कर्षणे, क्षेत्रस्य च भयादिप्रदर्शनेन हरणे, यथाक्र-
मेण अधमोत्तममध्यमसाहसा दण्डा वेदितव्याः । क्षे-
त्रग्रहणं चात्र गृहारामाद्युपलक्षणार्थम् । यदा पुनः
स्वीयभ्रान्त्या क्षेत्रादिकमपहरति तदा द्विशतो

एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु ॥ १५४ ॥

मि० आरामः पुष्पफलोपचयहेतुर्भूभागः । आयतनं निवेशनं पलालकूटाद्यर्थं विभक्तो भूप्रदेशः । ग्रामः प्रसिद्धः । ग्रामग्रहणं च नगराद्युपलक्षणार्थम् । निपानं पानीयस्थानं वापीकूपप्रभृतिकम् । उद्यानं क्रीडावनम् । वेश्म गृहम् ।

एतेष्वारामादिष्वयमेव सामन्तसाक्ष्यादिलक्षणो विधिर्ज्ञातव्यः । तथा प्रवर्षणोद्भूतजलप्रवाहेषु । अनयोर्गृहयोर्मध्येन जलौघः प्रवहति अनयोर्वेत्येवंप्रकारे विवादे । आदिग्रहणात्प्रासादेष्वपि प्राचीन एव विधिर्वेदितव्यः ।

तथाच कात्यायनः,

क्षेत्रकूपतडागानां केदारारामयोरपि ।
गृहप्रासादावसथनृपदेवगृहेषु च ॥ इति ॥ १५४ ॥

वा० १। उत्तरसंगतिमाह*असत्यामिति । तत् तादृक् स्वरूपमस्यास्तीति तद्वत् । तद्वतो भावस्तद्वद्भावस्ततो नञ्समासस्तस्य या ऽऽशङ्का तस्यामसत्यामपीत्यर्थः। *अस्याः, वक्ष्यमाणायाः । अयं भावः। अतिदेशो ह्यधिकमाकाङ्क्षते इति जैमिनीयन्यायेन यत्राधिका शङ्का तत्र पूर्वोक्तविषयसादृश्यप्रतीतेस्तद्वद्भावाभावेनातद्वद्भावाशङ्कायां पूर्वोक्तवदेतदपीत्यतिदेशो वाच्यः । यथा ऽऽहिताग्नेः पिण्डपितृयज्ञं विधाय एवमनाहिताग्नेरिति तस्यातिदेशः । प्रकृते तु सीम्नो विवादइत्यादिना यो न्याय उक्तः क्षेत्रादिसीमायां तस्य आरामादेस्तस्यामत्यन्ततुल्यत्वेन संभवेन तेष्वतिदेशानपेक्षत्वेनारामेति वक्ष्यमाणवचनं निष्फलं यद्यपि तथापि न्यायप्रभवा-

या० न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः।
परभूमिं हरन्कूपः स्वल्पक्षेत्रो बहूदकः ॥ १५६॥

मि० परकीयां भूमिमपहरन् नाशयन्नपि सेतुर्जलप्रवाहबन्धः क्षेत्रस्वामिना न प्रतिषेध्यः, स चेदीषत्पीडाकरो बहूपकारकश्च भवति। कूपश्च अल्पक्षेत्रव्यापित्वेन अल्पबाधो बहूदकत्वेन बहूपकारकोऽतो नैव निवारणीयः। कूपग्रहणं च वापीपुष्करिण्याद्युपलक्षणार्थम्। यदा पुनरसौ समक्षेत्रवर्तितया बहुबाधो नद्यादिसमीपक्षेत्रवर्तितया वा अल्पोपकारकस्तदाऽसौ निषेध्य इत्यर्थादुक्तं भवति।

सेतोश्च द्वैविध्यमुक्तं नारदेन, ( व्यव. ११।१८ )
सेतुश्च द्विविधो ज्ञेयः खेयो बन्ध्यस्तथैव च।
तोयप्रवर्तनात्खेयो बन्ध्यः स्यात्तन्निवर्तनात् ॥ इति।

यदा त्वन्यनिर्मितं सेतुं भेदनादिना नष्टं स्वयं संस्करोति तदा पूर्वस्वामिनं तद्वंश्यं नृपं वा पृष्ट्वैव संस्कुर्यात्।

यथाह नारदः, ( व्यव. ११।२०।२१ )
पूर्वप्रवृत्तमुत्सन्नमपृष्ट्वा स्वामिनं तु यः।
सेतुं प्रवर्तयेत्कश्चिन्न स तत्फलभाग्भवेत् ॥
मृते तु स्वामिनि पुनस्तद्वंश्ये वाऽपि मानवे।
राजानमामन्त्र्य ततः कुर्यात्सेतुप्रवर्तनम्॥इति॥१५६॥

बा. १। परभूमिमिति पूर्वान्वयीत्याह *परकीयामिति। जलप्रवा-हेति पाठः। नेदं सार्वत्रिकमित्याह *स इति। त्वर्थमाह *चेदिति। अल्पेत्यस्यार्थं *ईषदिति। कल्याणेत्यस्यार्थो *बहिति। भाग्वदे-

दमो वेदितव्यः।

यथाह मनुः, [अ. ८ श्लो. २६४]

गृहं तडागमारामं क्षेत्रं वा भीषया हरन्।

शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो दमः॥इति।

अपह्रियमाणक्षेत्रादिभूयस्त्वपर्यालोचनया कदाचिदुत्तमोऽपि दण्डः प्रयोक्तव्यः।

अत एवाह,

वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने।

तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे॥इति॥१५५॥

बा. १। तथाशब्दः समुच्चये।सीमातिक्रमणं तामुल्लङ्घ्य गमनं न विवक्षितं दण्डाविशेषोक्तेरित्याह*कर्षणे इति। तथार्थमाह*चेति। वक्ष्यमाणमनोराह *भयादीति। यथासंख्यमन्वय इत्याह *यथेति। अत्राप्यार्षत्वात्साधुत्वम्। एवमन्यत्रापि बोध्यम्। न्यूनतानिरासायाह *क्षेत्रेति। वचमात्तस्यापि ग्रहणम्। सामान्योक्तेर्विशेषपरतया योजनफलमाह * यदापुनरिति। * भीषयेति। भीषां भयमन्यस्मादुत्पाद्य तया हरन्नित्यर्थः। इदमुपलक्षणं लोभस्यापि। अत एव भयादीत्यादावुक्तम्।

२। विशेषान्तरमाह * अपह्रियमाणेति। तस्यां दशायामेव तत्सत्त्वादाह *कदाचिदिति। अपिना तस्यापि समुच्चयः। *आह, मनुः। * उत्तमसाहसे, विषये। *इतीति। वधादिरूपो दण्ड उक्तः इत्यर्थः। तथा च साहसं तदेवोत्तमं यत्रैतदन्यतम इति भावः। अन्यत्प्राग् व्याख्यातम्॥ १५५॥

मि० अव. यः पुनः परक्षेत्रे सेतुकूपादिकं प्रार्थनयाऽर्थदानेन वा लब्धानुज्ञो निर्मातुमिच्छति तं निषेधतः क्षेत्रस्वामिन एव दण्ड इत्याह।

२४ ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्त ) ४

२५ खोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः सत्प्रतिपक्ष-व्याप्त्यनुगमगादाधर्याः पक्षतानुमानगादाधर्याः अनुमितिगादाधर्याः सामान्यनिरुक्तिगादाधर्याः शब्द-शक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च खोडपत्राणि । ( न्यायः ) १

२६ ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टविरचितसिद्धान्तसेतुकाभिधटीकासहितं श्रीदेवाचार्य-प्रणीतसिद्धान्तजाह्नवीयुतम् २

२७ षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शन संग्रह । मणिभद्रकृत-टीकया सहितः । हरिभद्रसूरिकृतः । १

२८ शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च १

२९ अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्याः जागदीशी टीका । ११

३० वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा संस्कारप्रकाशात्मकः । १०

३१ वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ५

३२ स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः । ४

३३ वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । २

३४ प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितः २

३५ वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

३६ योगदर्शनम् । परमहंसपरिव्राजकाचार्य-नारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिका-समा-ख्यया संवलितम् । २

३७ वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वती स्वामिकृत ब्रह्माऽमृतवर्षिणी समाख्य व्याख्यासंवलितम् । ४

३८ विश्वप्रकाशः । कोशः । विद्वद्वर श्रीमहेश्वरसूरिविरचितः । २

३९ श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता । श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षि-तविरचित टिप्पणीसहिता । २

४० वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ४

४१ वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । द्वैता-द्वैतदर्शनानुगतः । २

४२ स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्य नारायणाश्रमशिष्यमाधवाश्रमविरचित । स्वकृतटीकाविभूषितश्च । १

४३ याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्य व्याख्यासमलङ्कृतामिताक्षरासहिता । व्यवहाराध्याय ८

पत्रादिप्रेषणस्थानम् } हरिदास गुप्तः, चौखम्बा, बनारस, सिटी,

(७) न्यायरत्नमाला–श्रीपार्थसारथिमिश्र वि० सं० ( मीमांसा ) २

(८) ब्रह्मसूत्रभाष्यम्–बादरायणप्रणीत-वेदान्तसूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षुकृत व्याख्यानम् । सम्पूर्णम् । ( वेदान्तः ) ६

(९) स्याद्वादमञ्जरी–मल्लिषेणाविनिर्मिता सम्पूर्णा । ( जैनदर्शनम् ) २

(१०) सिद्धित्रयम्–विशिष्टाद्वैत–ब्रह्मनिरूपणपरम्–श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्णम् ( वेदान्तः ) १

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४

(१२) विभक्त्यर्थनिर्णयःन्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः । सम्पूर्णः ( न्यायः ) ५

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सं० ( मीमांसा ) २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा ) १६

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । ( वेदान्तः ) २

(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशाऽध्यायार्थसंग्रहः ) श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि–मीमांसादर्शनम् ) महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितं, श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः ( मीमांसा ) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च । ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितम् ( वेदान्तः ) १

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया ( विद्यासागरी ) ति प्रसिद्धया समेतम् । ( वेदान्तः ) १३

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता । १

(२३) श्रीलक्ष्मीसहस्रम्–बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् । ८

॥ श्रीः ॥

आनन्दवनविद्योतितसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितनव्याभरातपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोदितम् ॥ २ ॥

स्तबकः— १८१

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतकै सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरण धर्मशास्त्रसाहित्यपुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्-मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तबकम् " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति।

७ साम्प्रतं मुद्र्यमाणा ग्रन्थाः-

| ग्रन्थाः | | मुद्रिताः स्तबकाः |
|---|---|---|
| (१) संस्काररत्नमाला। गोपीनाथभट्टकृता | (संस्कारः) | २ |
| (२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः | (व्याकरणम्) | १० |
| (३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम्। सम्पूर्णम्। | | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम्। विशिष्टाद्वैतदर्शनप्रकरणम्। श्रीमल्लोकाचार्यप्रणीतम्। श्रीनारायण तीर्थ विरचित भाट्टभाषा प्रकाशसहितम्। सं० | (वेदान्त) | २ |
| (५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः सम्पूर्णः | (ज्योतिषः) | १ |
| (६) भाट्टचिन्तामणिः। महामहोपाध्याय-श्रीगागाभट्ट विरचितः। तर्कपादः | (मीमांसा) | २ |

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 181.

037 IS 339

# व्यवहार- बालंभट्टी

इति प्रसिद्धया लक्ष्मीनामिकया
पायगुण्डे इत्युपनामकेन बालंभट्टेन स्वपत्न्याः लक्ष्मीदेव्याः
स्मारकत्वेन तन्नाम्ना रचितया बृहत्या टीकया सहिता
मिताक्षरा 17456
श्रीयुतगोविन्ददासमहाशयप्रदर्शितरीत्या
पर्वतीयनित्यानन्दपन्तेन परिष्कृत्य संशोधिता ।

# VYAVAHÂRA-BÂLAMBHATTI

THE EXTENSIVE COMMENTARY ON THE MITÂKSHARÂ
WITH THE ORIGINAL
BY
Bâlambhatta Páyagunde
EDITED BY
Pandit Nityanand Pant Parvatiya
Under the supervision of Shri Govinda Das.

FASCICULUS IX.

*PUBLISHED AND SOLD BY THE SECRETARY,*
CHOWKHAMBÂ SANSKRIT BOOK-DEPOT.
BENARES.
AGENTS:- OTTO HARRASSOWITZ: LEIPZIG:
PANDITA JYESHTHÂRAMA MUKUNDAJI BOMBAY:
PROBSTHAIN & CO., BOOKSELLERS, LONDON
*Printed by Jai Krishna Dasa Gupta,*
AT THE VIDYÂ VILÂSA PRESS
BENARES.

*Price Rupee one.*

( Registered according to Act XXV of 1867. ( All Rights Reserved. )

न्यूनतां नारदतः प्राप्तां निराचष्टे * तदभावे इति । आर्त्वा-
त्कर्मणि चतुर्थी । अर्थादाह * परक्षेत्रेति । लिङर्थो ऽनिवक्षित
इत्याह * प्रवर्त्तयतीति । फलितार्थमाह * तस्मादिति ॥ १५७ ॥

मि० अथ. क्षेत्रस्वामिना सेतुर्न प्रतिषेध्य इत्युक्तम् ।
इदानीं तस्यैव प्रसक्तानुप्रसक्त्या क्वचिद्विध्यन्तरमाह ।

या० फालाहतमपि क्षेत्रं न कुर्याद्यो न कारयेत् ।
स प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत् ॥ १५८ ॥

मि० यः पुनः क्षेत्रस्वामिपार्श्वे अहमिदं क्षेत्रं कृ-
षामीति अङ्गीकृत्य पश्चादुत्सृजति न स्वान्येन कर्षयति
तच्च क्षेत्रं यद्यपि फालाहतम् ईषद्धलेन विदारितं न
सम्यग्बीजवापार्हं तथापि तस्याकृष्टस्य फलं यावत्त-
त्रोत्पत्त्यर्हं सामन्तादिकल्पितं तावदसौ कर्षको दा-
पनीयः । तच्च क्षेत्रं पूर्वकर्षकादाच्छिद्यान्येन कारयेत् ।

इति सीमाविवादप्रकरणम् ॥ १५८ ॥

बा० १ । व्यवहितसङ्गतिमाह * क्षेत्रस्वामिनेति । * तस्यैव,
क्षेत्रस्वामिन एव । * प्रसक्तेति । प्रस्तुतसीमानिर्णयप्रसक्तम-
र्यादाप्रभेदनादिदण्डानुप्रसक्तिः तन्निषेधकक्षेत्रस्वामिदण्डे तयेत्य-
र्थः । स्वामिसम्बन्धि क्षेत्रं, तत्सम्बन्धात्क्षेत्रगतविचार इति भा-
वः । * क्वचित्, न तु सर्वत्र । * विध्यन्तरम्, अन्यविधिम् ।

२ । अङ्गीकारं विना तदसम्भवादाह * क्षेत्रस्वामिपार्श्वे
इति । योग्यतया आदौ द्वितीयपादार्थमाह * पश्चादिति । आ-
द्यपादार्थमाह * तच्च क्षेत्रमिति । आपिसूचितमाह * यद्यपीति ।
आङः फालादेश्चार्थानाह * ईषदिति । तत्फलितमाह * नेति ।
स प्रदाप्यः कृष्टफलमिति पाठेनाह * तस्येति । ईषत्कर्षणात्कृ-

वाह *कूपेति। चः प्राग्वत्। द्वितीये विशेषणसूचितं विशेषमाह * यदापुनरिति। * असौ, कूपादिः।* तोयेति। यत्राधो जलप्रवाहः स खेयः। तत्रोपर्येव खनित्वा काष्ठाद्यारोपणात्। यत्र सर्वात्मना जलनिरोध एव स बन्धनीयत्वाद् बन्ध्य इत्यर्थः। अत एव—

तेनैवोक्तम्, (ना. व्यव. ११।१९)

नान्तरेणोदकं सस्यं नाशश्चात्युदके भवेत्।
य एवानुदके दोषः स एवात्युदके भवेत्॥

इति। * पूर्वेति। पूर्वस्थितमित्यर्थः। स्वामिनीत्यग्रेऽभ्याद्वारापकर्षाभ्यां तद्वंश्यमामन्त्र्येत्यादेः सम्बन्धः। तद्वंश्ये मानवेऽपि * पुनः तु मृते राजानमित्याद्यन्वयः। अन्यथा द्वितीयपादानर्थक्यं स्पष्टमेव॥ १५६॥

मि० अव. क्षेत्रस्वामिनं प्रत्युपदिष्टम्। इदानीं सेतोः प्रवर्तयितारं प्रत्याह।

या० स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्त्तयेत्।
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः॥ १५७॥

मि० क्षेत्रस्वामिनमनभ्युपगमय्य तदभावे राजानं वा यः परक्षेत्रे सेतुं प्रवर्तयति असौ फलभाग् न भवति अपितु तदुत्पन्ने फलं क्षेत्रस्वामिनो भोगस्तदभावे राज्ञः। तस्मात्प्रार्थनया अर्थदानेन वा क्षेत्रस्वामिनं, तदभावे राजानं वाऽनुज्ञाप्यैव परक्षेत्रे सेतुः प्रवर्तनीय इति तात्पर्यम्॥ १५७॥

बा. १। सङ्गतिमाह * क्षेत्रेति। अनिवेद्येत्यस्य लाक्षणिकमभिमतमर्थमाह *अनभ्युपगमय्येति। यथाश्रुते तु विरोधः स्पष्ट एव।

## अथ स्वामिपालविवादप्रकरणम् ॥ १० ॥

मि० अत्र. व्यवहारपदानां परस्परहेतुहेतुमद्भावाभावात् तेषामाद्यमृणादानमित्यादिपाठक्रमो न विवक्षित इति व्युत्क्रमेण स्वामिपालविवादोऽभिधीयते ।

या० माषानष्टौ तु महिषी सस्यघातस्य कारिणी ।
दण्डनीया तदर्द्धं तु गौस्तदर्द्धमजाविकम् ॥ १५९ ॥

मि० परसस्यविनाशकारिणी महिषी अष्टौ माषान्दण्डनीया । गौस्तदर्द्धं चतुरो माषान् । अजा मेषाश्च माषद्वयं दण्डनीयाः । महिष्यादीनां धनसंबन्धाभावात्तत्स्वामी पुरुषो लक्ष्यते ।

माषश्चात्र ताम्रिकपणविंशतितमो भागः ।
माषो विंशतिमो भागः पणस्य परिकीर्तितः ।

इति नारदस्मरणात् । एतच्चाज्ञानविषयम् । ज्ञानपूर्वे तु—

पणस्य पादौ द्वौ गां तद्द्विगुणं महिषीं तथा ।
तथाऽजाविकवत्सानां पादो दण्डः प्रकीर्तितः ॥

इति स्मृत्यन्तरोक्तं द्रष्टव्यम् ।

यत्पुनर्नारदेनोक्तम्, [ व्यव. ११ । ३१ ]

माषं गां दापयेद्दण्डं द्वौ माषौ महिषीं तथा ।
तथाऽजाविकवत्सानां दण्डः स्यादर्द्धमाषकः ॥

इति, तत् पुनःप्ररोहयोग्यमूलावशेषभक्षणविषयम् ॥ १५९ ॥

वा. १ । व्यवहिताव्यवहितसङ्गत्यभावेऽपि महाप्रकरणसङ्ग-

ष्टार्थमाह * अकृष्टस्येति । स इत्यस्यार्थमाह * असाविति ।
प्रदाप्यइत्यस्यार्थमाह * दापनीय इति । कृष्टशदमिति पाठेऽपि
शदशब्देन फलमेव ।

एतेन "तं प्रदाप्याकृष्टशदामिति, तमकृष्टशदं प्रदाप्येत्य-
न्वयः । अकृष्टशदमिति व्याचष्टे तस्याकृष्टस्य फलमिति" इति-
प्राचोक्तमपास्तम् । असंबद्धत्वात् व्याख्यानविरोधाच्च ॥ १५८ ॥

इति सीमाविवादः ॥

या० समन्तेषां विवीतेऽपि खरोष्ट्रं महिषीसमम् ॥ १६० ॥

मि० विवीतः प्रचुरतृणकाष्ठो रक्ष्यमाणः परिगृहीतो भूप्रदेशः । तदुपघातेऽपीतरक्षेत्रदण्डेन समं दण्डमेषां महिष्यादीनां विद्यात् । खराश्च उष्ट्राश्च खरोष्ट्रं तत् महिषीसमम् । महिषी यत्र यादृशेन दण्डेन दण्ड्यते तत्र तादृशेनैव दण्डेन खरोष्ट्रमपि प्रत्येकं दण्डनीयम् । सस्योपरोधकत्वेन खरोष्ट्रयोः प्रत्येकं महिषीतुल्यत्वाद्दण्डस्य चापराधानुसारित्वात्खरोष्ट्रमिति समाहारो न विवक्षितः ॥ १६० ॥

वा. १ । उक्तेहेतारेवाह * अपराधेति । उक्ते सर्वत्र । स्वयमित्यादिः । * क्वचित्, नारदाद्युक्तभिन्नविषये । * यथोक्तादिति । अज्ञाने माषानष्टाविति मूलोक्तात् । * द्विगुणो दण्डः, ज्ञानपूर्वके परसस्येति कातीयात् द्विगुणो दण्डः, अज्ञानपूर्वके तादृशे नारदोक्तात् द्विगुण इति विवेको बोध्यः । कातीयमेवाह * वसतामिति । सवत्सानामिति भावः ।

२।उ. * आहेति । यथाक्रमं पादाभ्यामिति भावः । विवीत इति व्याप्त्यर्थस्य वीधातो रूपम् । विशेषेण वीतं व्यापनं तृणादेर्यस्मिन्निति व्युत्पत्तेः । तदाह * प्रचुरेति । अत एव * रक्ष्यमाण इति । अत एव * परिगृहीत इति । तस्य स्वरूपतो निमित्तत्वादाह * तदुपघातइति । * इतरेति । सस्येत्यर्थः । वृक्षादीनां फलं सस्यमित्यमरः । योग्यतयाऽऽह * विद्यादिति । महिषीसाम्यं वैवक्षिकमाह * महिषीति । यत्र क्षेत्रे यादृशो यत्परिमाणो दण्डस्तस्या विहितस्तत्र तादृशेनैव तत्समेनैव दण्डेन खर उष्ट्रश्च तथैव स्वापराधे दण्ड्यो न तु विशिष्टमुभयमपीत्यर्थः ।

तिमाह * व्यवहारपदानामिति । *क्रमः, मनूक्तः । अर्थादाह *प- रेति । इदं सर्वविशेषणं यथासम्भवम् । * तदर्थमिति । समांश- त्वान्वित्वेऽपि पाक्षिकषष्ठीतत्पुरुषः । अजाविकामिति समाहारद्वन्द्वः पाक्षिक इत्याह * अजा इति । असङ्गतिं परिहरति * माहिष्या- दीनामिति ।

२। अग्रिमोपयोगिनं विशेषमाह * मापश्चेति । एवमग्रे स- र्वत्र बोध्यम् । * ताम्रिकेति । ताम्रिकः कार्षिकः पण इति मू- ल्याध्याये कात्यायनेन द्विरुक्तेः । मूलेऽपि उक्तत्वाच्च । इदं स- र्वं मूल्याध्यायविवरणे मत्कृते स्पष्टं तत एव बोध्यम् । विंशतिम- इत्यार्षम् । कातीयमाह * पणस्येति । गां प्रति द्वौ पादौ पण- स्यार्द्धभागो दण्डः । महिषीं प्रति तद्द्विगुणं सम्पूर्णः पणो द- ण्डः । अजादीनां तु पणस्य चतुर्थो भागो दण्ड इत्यर्थः । अत्र दण्डाधिक्यादेव ज्ञानविषयतेति गम्यते । अन्यथा विरोधापत्तेः ।

३। अन्यविरोधं परिहरति * यत्पुनरिति । तथाशब्दः उभ- यत्र समुच्चये सादृश्ये वा । * तत्पुनरिति । दण्डस्य न्यूनत्वात् ॥ १५९ ॥

मि० अव. अपराधातिशयेन क्वचिद्दण्डद्वैगुण्यमाह ।

या० भक्षयित्वोपविष्टानां यथोक्ताद् द्विगुणो दमः ।

मि० यदि पशवः परक्षेत्रे सस्यं भक्षयित्वा तत्रै- वानिवारिताः शेरते तदा यथोक्ताद्दण्डाद् द्विगुणो दण्डो वेदितव्यः । सवत्सानां पुनर्भक्षयित्वोपविष्टा- नां यथोक्ताच्चतुर्गुणो दण्डो वेदितव्यः ।

वसतां द्विगुणः प्रोक्तः सवत्सानां चतुर्गुणः ।
इति वचनात् ।

मि० अव. क्षेत्रान्तरे पश्वन्तरे चातिदेशमाह ।

ग्रहीतव्यम्। मध्यस्थकल्पितमूल्यदानेन क्रीतप्रायत्वात्।

अत एव नारदः, [ व्यव. ११। श्लो. ३८।३९ ]

गोभिस्तु भक्षितं सस्यं यो नरः प्रतियाचते।
सामन्तानुमतं देयं धान्यं यत्तत्र वापितम्॥
पलालं गोमिनो देयं धान्यं वै कर्षकस्य तु॥इति॥१६१॥

भा. १। * गोस्वामिनः, गवादिस्वामिनः। क्वचित् स्वामिन इत्येव पाठः। * दण्डः, राजग्राह्यः। न्यूनतानिरासायाह * सस्यग्रहणमिति। अत एव निर्वीजस्यापि ग्रहणम्। तदेवाह * यस्मिन्निति। व्यवस्थार्थमाह * एतावदेवेति। फलितार्थमाह * तस्मैवेति। * न फलमिति। एतेनैतत्सस्यनाशक एव तुः। नन्वेवं धनदण्डोऽपि तस्य वचनान्न स्यात्, अतोऽपवादं क्वचिदाह * गोपस्य चेति। अत एव न फलमित्येव प्रागुक्तम्। क्वाचित्कत्वमेवाह * पालेति। गोपालेत्यर्थः। स्वदोषेणेति यावत्। पालनं पालः तद्दोषेणेति वाऽर्थः। अत्र मानं कात्यायमाह * येति। * नष्टा, अदर्शनं गता स्वामिनः।

२। तुर्यपादं व्याचष्टे * गोमी पुनरिति। गोमी गोमानित्यर्थः। ज्योत्स्नातमिस्रेति सूत्रेण निपातितोऽयम्। अत्रापि तुल्यन्यायत्वमाह * दण्डमेवार्हतीति न ताडनमिति। फलांशे तु तुल्यत्वमेवेत्याह * फलेति।

३। विनियममाह * गवादीति * मध्यस्थेति। सामन्तादीत्यर्थः। तस्य पृथक् तदभावादाह * क्रीतप्रायेति * गोभिरिति। गोभिस्तदादिभिर्भक्षितं सस्यं यः क्षेत्रस्वामी प्रतियाचते परावृत्त्य याचते तस्मै, सामन्तादिपरिकल्पितं यत् तत्र क्षेत्रे वापितं तावद्धान्यं तदुत्पाद्यं तदादि तन्मूल्यं वा देयं, भक्षितावशिष्टं पलालं तदा-

ननु समाहारद्वन्द्वात्तथैवोचितम् अतोऽत्र हेतुमाह * सस्योपेति। तयोस्तन्नाशकत्वे प्रत्येकं तयोस्तत्तुल्यत्वादित्यर्थः। आहाराद्यंशेऽत्यन्तभेदाभावादिति भावः। ननु वचनात् तथैव कुतो न अत आह * दण्डस्य चेति। नन्वेवं कथं समाहारोऽत आह * खरोष्ट्रमिति। अत एव पूर्वं स्वयमितरेतरयोगः कृतः॥ १६०॥

मि० अव. परसस्याविनाशे गोस्वामिनो दण्ड उक्तः। इदानीं क्षेत्रस्वामिने फलमप्यसौ दापनीय इत्याह।

या० यावत्सस्यं विनश्येत्तु तावत्स्यात्क्षेत्रिणः फलम्।
गोपस्ताड्यस्तु गोमी तु पूर्वोक्तं दण्डमर्हति॥ १६१॥

मि० सस्यग्रहणं क्षेत्रोपचयोपलक्षणार्थम्। यस्मिन् क्षेत्रे यावत्पलालधान्यादिकं गवादिभिर्विनाशितं तावत्क्षेत्रफलम् एतावति क्षेत्रे एतावद्भवतीति सामन्तैः परिकल्पितं तत्क्षेत्रस्वामिने गोमी दापनीयः। गोपस्तु ताडनीय एव न फलं दापनीयः।

गोपस्य च ताडनं पूर्वोक्तधनदण्डसहितमेव पालदोषेण सस्यनाशे द्रष्टव्यम्।

या नष्टा पालदोषेण गौस्तु सस्यानि नाशयेत्।
न तत्र गोमिनां दण्डः पालस्तं दण्डमर्हति॥ इति वचनात्।

गोमी पुनः स्वापराधेन सस्यनाशे पूर्वोक्तं दण्डमेवार्हति न ताडनम्। फलदानं पुनः सर्वत्र गोस्वामिन एव। तत्फलपुष्टमहिष्यादिक्षीरोपभोगद्वारेण तत्क्षेत्रफलभागित्वात्।

गवादिभक्षितावशिष्टं पलालादिकं गोस्वामिनैव

अन्तशब्दः समीपवाची त्रयाणां द्वन्द्वोत्तरं षष्ठीसमासः। अथवा षष्ठी-तत्पुरुषोत्तरपदकद्वन्द्वगर्भः सः। सर्वव्याख्यात्रभिमतोऽत्र द्वितीय एव। तदाह * मार्गेति। पथि मार्गेत्यपपाठः। आद्ये ग्रामविवीतेत्यत्र ग्रामसमीपवर्तिनि विवीतसमीपवर्तिनि च क्षेत्रे चेत्यर्थः। द्वितीये ग्राम-सम्बन्धि यद्विवीतं तत्समीपेत्याद्यर्थः। ग्रामाद्बहिर्यो गवादिस्थि-त्यर्थो भूप्रदेशः स विवीतपदेन लक्ष्यते, तत्समीपवर्त्तिनीत्या-द्यर्थो वा। अकामत इति पूर्वान्वयीत्याह * अकामेति। * गो-भिः, तदादिभिः। ननु प्रत्यक्षदोषस्य पापस्य च सत्त्वात्क-थमदोषत्वम् अत आह * दोषाभावेति।

२। शिष्टं व्याचष्टे * कामेति। * अनावृतेति। आवरण-रहितेत्यर्थः। वृञ् वरणे इत्यस्य रूपम्। एवमग्रे सर्वत्र। * तत्र, परीहारस्थाने। * मार्गादिक्षेत्रे, आदिना ग्रामादि। नन्वावरणमेव नोक्तमत आह * वृतीति। * तेनैव, मनुनैव। * वृतिम्, आवृ-तिम्, कण्टकादिमयीम्। * तत्र, क्षेत्रसमन्ततः। तादृशीमुन्नता-मिति शेषः। कीदृशीमित्याह * यामिति। अभिलक्ष्य परपार्श्वे इति शेषः। * उष्ट्रोऽपि उन्नतोऽपि धान्यादि न पश्येदित्यर्थः। छिद्रं वा वारयेदित्यत्र वाशब्दः चार्थे। क्वचित् चवारयेदित्येव पाठः। निवारयेदिति पाठान्तरम्। यथाश्रुतो वा वाशब्दः। तयोः मुखमनु तत्समीपे गच्छति येन तादृशामित्यर्थः। मुखोन्मितामिति पाठान्तरम्। अयम्भावः। तत्र क्षेत्रे समन्ततः उष्ट्रकर्तृकधान्यादिकर्मकावलोकनायोग्यां प्राकारसदृशीम् अत्यु-न्नताम् आवृतिं कुर्यात्। तत्र यानि छिद्राणि श्वादिमुखप्रवे-शयोग्यानि तान्यपि निवध्यात्। तस्य यथाश्रुतत्वे श्वादिमुखप्र-वेशयोग्यसर्वच्छिद्ररहितं यथा तथाऽत्युन्नतां तां कुर्यादिति तत्करणे प्रकारान्तरकथनमिति ॥ १६२ ॥

दि तृणबुसादिकं शेषे षष्ठी गोस्वामिने देयम्। यो नर इति सामान्योक्तं विशेषाकाङ्क्षायामर्थप्रकरणसिद्धमपि विशेषं स्पष्टीकुर्वन्नन्यग्रासत्वभ्रमाभावाय विशदयति * धान्यमिति। यद्वा स्वल्पस्थलेऽप्येवमित्याह * धान्यमिति। वैशब्दः निश्चये। तस्मात्क्षेत्रस्वामिना सर्वथा तन्नाहर्तव्यमिति तात्पर्यार्थः॥ १६१॥

मि॰ अप. क्षेत्रविशेषे अपवादमाह।

या॰ पथिग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते।
अकामतः कामचारे चौरवद्दण्डमर्हति॥१६२॥

मि॰ मार्गसमीपवर्तिनि क्षेत्रे ग्रामाविवीतसमीपवर्तिनि च क्षेत्रे अकामतो गोभिर्भक्षिते गोपगोस्विनोर्द्वयोरप्यदोषः। दोषाभावप्रतिपादनं दण्डाभावार्थं विनष्टसस्यमूल्यदानप्रतिषेधार्थं च। कामचारे कामतश्चारणे चौरवत् चौरस्य यादृशो दण्डस्तादृशं दण्डमर्हति। एतच्चानावृतक्षेत्रविषयम्।

(मनु. अ. ८ श्लो. २३८)
यत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि।
न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम्॥

'इति दण्डाभावस्यानावृतक्षेत्रविषयत्वेन मनुनोक्तत्वात्। आवृते पुनर्मार्गादिक्षेत्रेऽपि दोषोऽस्त्येव। वृतिकरणं च—

तेनैवोक्तम्, [मनु. अ. ८ श्लो. २३९]
वृतिं च तत्र कुर्वीत यामुष्ट्रो नावलोकयेत्।
छिद्रं निवारयेत्सर्वं श्वसूकरमुखानुगम्॥इति॥१६२॥

वा॰ १।*अपवादमिति।उभयोरपि प्रागुक्तसर्वापवादमित्यर्थः।

सपालान्वा विपालान्वा अदण्ड्यान्मनुरब्रवीत् ॥

इति मनोराह * अनिर्दशाहेति । अनिर्गतदशाहा गौरि-त्यर्थः।मानवे "चक्रशूलाङ्कितोत्सृष्टा वृषाः, हरिहराद्विप्रतिमासं-बन्धिपशवो देवपशव" इति कुल्लूकभट्टः । नगन्दवत्साद्निमित्ता-न्तरपरतयोत्तरार्धं व्याचष्टे * येषां चेति। विभिन्नविभक्तिकत्वेन यथाश्रुतान्वयासम्भवादाह * विद्यते इति । अध्याहारः। * म-स्येति । परेत्यादिः । मोच्या इत्यस्यैवार्थं माग्यदाह * न दण्ड्या इति । ते चोशनसोक्ता इति पाठः । तथा च मनुरित्यपपाठः । तथा तत्रापाठात् । तत्र हेतुमाह * मजेति * हि, यतः । राज-सम्बन्धित्वात् । एकाक्षिविकलः काणः । पादरहितः कुण्टः । प-ङ्गुरिति यावत्। शश्वद् वारं वारं सस्यनाशकत्वेन कृतं लक्षणम् अङ्कनं धनग्रहणादि वा येषाम् । ते च पुनः पुनः सस्यनाशक-त्वेन दण्डिता इति यावत् । आगन्तुकी मृतिका आभिसारिणी या गर्भाधानार्थमभिसरति सा चेति त्रिविधा गौश्चादण्ड्या । राजगृहे उत्सवे श्राद्धसमये चेत्याद्यर्थः । असङ्गतिमंशे प-रिहरति * अत्रोत्सृष्टेति । उत्सृष्टपाणामपि गर्भार्थं गोकुले पालैर्धारणात्सपालत्वसम्भव इति तु मनुव्याख्यातारः ॥१६३॥

मि० अव. गोस्वामिन उक्तम् । इदानीं गोपं प्र-त्युपादिश्यते ।

या० यथाऽर्पितान् पशून्गोपः सायं प्रत्यर्पयेत्तथा ।
प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः ॥ १६४ ॥

मि० गोस्वामिना प्रातःकाले यथा गणयित्वा स-मर्पिताः पशवस्तथैव सायंकाले गोपो गोस्वामिने प-शून् विगणय्य प्रत्यर्पयेत् । प्रमादेन स्वापराधेन मृता-

मि॰ अथ. पशुविशेषेऽपि दण्डाभावमाह।

या॰ महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः।
पालो येषां च ते मोच्या दैवराजपरिप्लुताः ॥१६३॥

मि॰ महांश्चासावुक्षा च महोक्षो वृषः सेक्ता। उत्सृष्टपशवः वृषोत्सर्गादिविधानेन देवतोद्देशेन वा त्यक्ताः। सूतिका प्रसूता अनिर्दशाहा। आगन्तुकः स्वयूथात्परिभ्रष्टो देशान्तरादागतः। एते मोच्याः। परसस्यभक्षणेऽपि न दण्ड्याः। येषां च पालो विद्यते तेऽपि। दैवराजपरिप्लुताः दैवराजोपहताः सस्यनाशकारिणो न दण्ड्याः। आदिग्रहणाद्धस्त्यश्वादयो गृह्यन्ते।

ते चोशनसोक्ताः,

अदण्ड्या हस्तिनो ह्यश्वाः प्रजापाला हि ते स्मृताः।
अदण्ड्यौ काणकुण्ठौ च ये शश्वत्कृतलक्षणाः॥
अदण्ड्याऽऽगन्तुकी गौश्च सूतिका वाऽभिसारिणी।
अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव च॥इति।

अत्रोत्सृष्टपशूनामस्वामिकत्वेन दण्ड्यत्वासंभवात् दृष्टान्तार्थमुपादानम्। यथोत्सृष्टपशवो न दण्ड्या एवं महोक्षादय इति ॥ १६३ ॥

बा. १। अपिः पूर्वसमुच्चये। पूर्वार्द्धे पदद्वयम्। यथासम्भवं द्वन्द्व उभयत्रेत्याह ॠमहानिति। अचतुरेत्यादिना निपातितोऽयम्। सेक्ता वृष इत्यन्वयः। साण्ड इति प्रसिद्धः। वक्ष्यमाणभिन्नः। कर्मधारयोऽग्रेऽपि। तेन तेषां तद्भिन्नानां न ग्रहणम्।

अनिर्दशाहां गां सूतां वृषान् देवपशूंस्तथा। (अ.८।२४२)

विषमे श्वभ्रादिप्रदेशे पतनेन मृतं च गोपाल एव स्वामिने दद्या-
दित्यर्थः। *महतेति। चौरैर्बलादपहृतानेतान् गवादीन् स्वामिने
गोपालो न दाप्य इत्यर्थः। एतेन चौरैर्बलादपहृतस्वात् पालात्
स्वामिने पशुर्न दाप्य इति व्याख्यानमपास्तम्। * विघुष्येति।
चौरैः पटहाद्युद्घोषेण प्रसिद्धमपहृतं पालो दातुं नार्हति, यदि
तस्मिन्नेव देशे संनिहितोद्देशे हरणे तस्मिन्नेव काले हरणोत्तरमेव
स्वस्य स्वामिने कथयतीत्यर्थः। शेषत्वविवक्षायां षष्ठी। अन्यथा
तु दाप्य एव। अत एव न दातुमर्हतीत्युक्तं, न तु न दाप्य इति।
*तु पुनः, मरणोत्तरम्। पुनरित्येव पाठे त्वर्थे सः। *चर्म, त्व-
क्। * वालान्, लोमानि चिह्नभूतानि। वस्तिर्मूत्राधारोऽङ्ग-
विशेषः। वस्तिर्नाभेरधो द्वयोरिध इत्यमरः। स्नायुर्वस्नसा। अथ व-
स्नसा स्नायुः स्त्रियामित्यमरः। पायुमिति पाठान्तरम्। रोचना
गोरोचना। एतानि, *पशुस्वामिषु वैवक्षिकसप्तमी, दद्यात्। तुश्चार्थे।
मृतेष्वित्युभयान्वयि। तथा च तेषु मृतेषु अन्यान्यप्यङ्गानि ज्ञा-
तिज्ञापकानि शृङ्गखुरादीनि दर्शयेत् इत्यर्थः। अङ्कांश्चेति पाठे
पशुदेहस्थितान्मुद्रादिचिह्नानपि दर्शयेदित्यर्थः। अङ्कांश्च दर्शयन्निति
पाठे तेषु मृतेषु अङ्कान् चिह्नानि दर्शयन्सः कर्णादिकं तेभ्यो
दद्यादित्यर्थः। अङ्कानीति पाठेऽप्येवम्। इति मनुवचनादिति
पाठः। इति स्मरणादिति पाठेऽपि तथा ॥ १६४ ॥

मि० अव. किञ्च।

या० पालदोषविनाशे तु पाले दण्डो विधीयते।
अर्द्धत्रयोदशपणः स्वामिनो द्रव्यमेव च ॥१६५॥

मि० पालदोषेण पशुविनाशे अर्द्धाधिकत्रयोदश-
पणं दण्डं पालो दाप्यः, स्वामिनश्च द्रव्यं विनष्टप-

नष्टांश्च पशून् कृतवेतनः कल्पितवेतनो गोपः स्वामिने दाप्यः । वेतनकल्पना च—

नारदेनोक्ता, (व्यव. ६ । १०)

गवां शताद्वत्सतरी धेनुः स्याद्द्विशताद् भृतिः ।
प्रतिसंवत्सरं गोपे सन्दोहश्चाष्टमेऽहनि ॥ इति ।

प्रमादनाशश्च मनुना स्पष्टीकृतः, (अ. ८ श्लो. २३२)

नष्टं जग्धं च कृमिभिः श्वहतं विषमे मृतम् ।
हीनं पुरुषकारेण प्रदद्यात्पाल एव तु ॥ इति ।

प्रसह्य चौरैरपहृतान् न दाप्यः ।

यथाह मनुः, (अ. ८ श्लो. २३३)

विघुष्य तु हृतं चौरैर्न पालो दातुमर्हति ।
यदि देशे च काले च स्वामिनः स्वस्य शंसति ॥ इति ।

दैवराजमृतानां पुनः कर्णादि प्रदर्शनीयम् ।

(अ. ८ श्लो. २३४)

कर्णौ चर्म च वालांश्च वस्तिं स्नायुं च रोचनाम् ।
पशुस्वामिषु दद्यात्तु मृतेष्वङ्गानि दर्शयेत् ।

इति मनुस्मरणात् ॥ १६४ ॥

वा. १ । यथेति भिन्नं पदं, तदर्थो *गणयित्वेति । तथेत्यस्य * तथैवेति । तस्य च विगणय्येत्यवार्थः । मृतेति निमित्तद्वयं नैकम्, अन्यतरवैयर्थ्यापत्तेरित्याह *मृतानिति । कृतेत्यनेन तदभावे । भृतिर्वेतनम् । प्रतीति पूर्वान्वयि । गोपे इत्युभयान्वयि । भृतिरित्यस्याग्रेऽप्यनुषङ्गः । * नाशश्च, नाशादि च । * नष्टमिति । तृतीयपादस्य सर्वत्र पूर्वत्रान्वयः । गोपालसम्बन्धिरक्षणाख्यपुरुषव्यापारेण हीनं रहितं क्षतं नष्टं दृष्टिगोचरातीतं कृमिभिर्जग्धं भक्षितं श्वभिः उपलक्षणत्वेन श्वापदादिभिर्हतं

यथा तेनैवोक्तम्,

स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेष्विति।

यत्पुनरुक्तम्,

तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम्।

अनापृच्छन् हि गृह्णानो हस्तच्छेदनमर्हति ॥

इति, तद् द्विजव्यतिरिक्तविषयमनापद्विषयं वा गवादिव्यतिरिक्तविषयं चेति ॥ १६६ ॥

वा. १। विरोधात् ग्रामशब्दस्तत्स्थजनपरः प्राग्वदित्याह *ग्रा-स्येति। द्वितीयपादार्थद्वयमाह * भूम्यल्पत्वेति। तात्पर्यार्थमाह *गवादीनामिति। *चरक्षार्थमिति। चरणार्थमिति पाठान्तरम्। *तृणेति। अस्वामिकतृणाद्यन्तराभावे इत्यर्थः। गवार्थीत्यनेनान्यार्थं तदभावः सूचितः। *सर्वतः, आवृतादनावृताच्च। * स्ववत्, स्वतुल्यम्। वातिमत्ययसूचितमाह *अनिवारित इति। अनेन निवारितः सन्न गृह्णीयादिति सूचितम्। इदमेव ततो न्यूनत्वम्। सर्वत इति पुष्पाणीति च सूचितमाह * फलानि त्वपरिवृतादेवेति। आवरणरहितादेवाहरेन्न तु सर्वत इत्यर्थः। तत्र हेतुमाह *गोऽग्न्यर्थमिति। वैकल्पिकत्वादवङ् न। इदं देवताया अप्युपलक्षणम्। * एधांसि, काष्ठानि। वीरुदित्युभयान्वयि।*च पुष्पाणि, पुष्पाणि च। चोऽग्रे त्वर्थे। *एतच्चेति। द्विजस्तृणैध इति मूलोक्तं चेत्यर्थः। *द्विजेति। वर्णत्रयान्यशूद्रादेरपीत्यर्थः। * तेनैव, * गौतमेनैव।

२। नारदविरोधं परिहरति * यत्पुनरिति। मूले द्विजस्योक्तत्वादाह * द्विजव्यतिरिक्तविषयमिति। अनापृच्छन्नित्यनेन तस्य परिगृहीतविषयताया एव लाभादिति भावः। तृणान्तराभावे इत्युक्तेस्तत्सत्त्वे द्विजस्यापि तत्र प्रश्नपूर्वं-

शुमूल्यं मध्यस्थकल्पितम् । दण्डपरिमाणार्थः श्लोकोऽन्यत्पूर्वोक्तमेव ॥ १६५ ॥

बा. १। किं चेति। अन्यदपि गोपं प्रत्युच्यते इत्यर्थः। तस्यानुषङ्गेण तुर्यपादे तस्य द्रव्यं देयत्वेन विधीयते चेति शाब्दोऽर्थः। तदनुरोधेनोभयत्र फलितमेवाह * अर्धाधिकत्रयोदशपणमिति । अधिकेन समासस्य विहितत्वादेवमुक्तम् । द्रव्यमिति मौलस्य व्याख्या * विनष्टेति। पालो दाप्य इत्यस्यानुषङ्गः। षष्ठी प्राग्वत् । पौनरुक्त्यं परिहरति * दण्डेति। प्रागुक्तवचनेनैव दण्डस्य प्राप्तत्वात्तमनूद्यार्धत्रयोदशपणत्वरूपतत्परिमाणांश एव अत्र विधेय इत्यर्थः॥ १६५ ॥

मि० अव. गोप्रसङ्गात् गोप्रचारमाह।

या० ग्रामेच्छया गोप्रचारो भूमी राजवशेन वा।

द्विजस्तृणैधःपुष्पाणि सर्वतः स्ववदाहरेत् ॥१६६॥

मि० ग्रामेच्छया ग्राम्यजनेच्छया भूम्यल्पत्वमहत्त्वापेक्षया राजेच्छया वा गोप्रचारः कर्तव्यः । गवादीनां चरणार्थं कियानपि भूभागोऽकृष्टः परिकल्पनीय इत्यर्थः। द्विजस्तृणेन्धनाद्यभावे गवाग्निदेवतार्थं तृणकाष्ठकुसुमानि सर्वतः स्ववदनिवारित आहरेत्। फलानि त्वपरिवृतादेव ।

गोऽग्न्यर्थं तृणमेधांसि वीरुद्वनस्पतीनां च पुष्पाणि स्ववदाददीत फलानि चापरिवृतानामिति गौतमस्मरणात्।

एतच्च परिगृहीतविषयम्। अपरिगृहीते द्विजव्यतिरिक्तस्यापि परिग्रहादेव स्वत्वसिद्धेः।

भूस्थाने पतति तादृशाश्रय इत्यर्थः । त्रैगुण्यमुक्तान्यतरापेक्षया । प्रचुरेति खर्वटशब्दार्थः । कण्टकानां सन्तानो विस्तारो यत्र ते, प्रचुरास्ते यत्र तस्येत्यर्थः । बहुकण्टकिवृक्षाक्रान्तस्येति यावत् । * ग्रामस्य, क्षेत्रस्य चान्तरं धनुःशतमिति शेषः ॥ १६७ ॥

इति स्वामिपालविवादः ॥

क्षेत्र ग्रहणं नान्यथा। अन्यलाभेऽनन्यगतेरभावादित्याशयेना-
ह * अनापद्विषयमिति। गवादीत्यनेनान्यार्थमग्रहणं सूचितम्।
तदाह * गवादीति॥ १६६॥

मि० अव० इदानपरं गवादीनां स्थानासनसौकर्या-
र्थमुच्यते।

या० धनुःशतं परीणाहो ग्रामक्षेत्रान्तरं भवेत्।
द्वे शते खर्वटस्य स्यान्नगरस्य चतुःशतम्॥१६७॥

मि० ग्रामक्षेत्रयोरन्तरं धनुःशतपरिमितं परीणा-
हः सर्वतो दिक्षु असस्यं कार्यम्। खर्वटस्य प्रचुर-
कण्टकसन्तानस्य ग्रामस्य द्वे शते परीणाहः। नगरस्य
बहुजनसंकीर्णस्य धनुषां चतुःशतपरिमितमन्तरं
कार्यम्॥ १६७॥

इति स्वामिपालविवादप्रकरणम्॥

बा० १। *इदं, वक्ष्यमाणम्। स्थानं स्थितिर्गतिनिवृत्तिः। आस-
नमुपवेशनम्। *अन्तरं, व्यवधानम्। चतुर्हस्तं धनुः, धनुषां शतं,
तस्य परिच्छेदत्वेनान्वयादाह * धनुःशतपरिमितमिति। य-
द्यपि परिणाहो विशालतेत्यमरस्तथापि सामानाधिकरण्याय
धर्मिपरमत्र। तदाह * सर्वत इति। सस्यमित्यादेर्भूस्थानमिति
विशेष्यं बोध्यम्।

अत एव मनुः, (अ० ८ २३७)
धनुःशतं परीहारो ग्रामस्य स्यात्समन्ततः।
शम्यापातास्त्रयो वाऽपि त्रिगुणो नगरस्य तु॥
इति। शम्या दण्डयष्टिः। सा बाहुवेगेन प्रेरिता यत्र

प्रकाशक्रयतः शुद्धिः क्रेतुः स्तेयं रहःक्रयात्॥इति॥१६८॥

बा० १। * उपक्रमते, वक्तुं प्रारभते। आद्येन मूलकृदिति शेषः। * निक्षिप्तमिति। निक्षिप्तं परद्रव्यं नष्टं वा परद्रव्यं लब्ध्वा परद्रव्यमपहृत्य वा यत्स्वामिनोऽसमक्षं विक्रीयते इत्याद्यर्थः। तत्र स्वामिनोऽसमक्षमित्यस्य परोक्षमित्यर्थः। तदनुज्ञामन्तरेणेति यावत्।

२। अथ मूलमवतारयति * तत्रेति। *तत्र एवंविधेऽस्वामिविक्रयस्थलेऽस्वामिविक्रेतृविषये * किं शास्त्रविधानं कीदृशं भवतीत्याशङ्कायामाहेत्यर्थः। स्वशब्द आत्मीयपर इत्याह * आत्मेति। ततश्चार्थात् धनमेवेत्याह * द्रव्यमिति। शेषं पूरयति अगत्या * यदीति। प्राग्वदाह * विक्रीतग्रहणमिति। * दत्ताहितयोः, दत्ताहितयोरपि। * उक्तं, कात्यायनेन।

द्वितीयपादार्थमाह * क्रेतुरिति।

३। उत्तरार्धार्थमाह * तथेति। हीनादित्यादीनां तस्करत्वेऽन्वयः। क्रयः सर्वत्र विशेष्यभूतो बोध्यः। * तद्द्रव्येति। अपहृताद्यनीप्सितमूल्यभूतद्रव्येत्याद्यर्थः। मूले रह इत्यव्ययम्। तदर्थमाह * रहसि चेति। उक्तेनापौनरुक्त्यायाह * संभाव्येति। यद्वस्तु यावन्मूल्यद्रव्यमर्हति तस्मादपि न्यूनेन मूल्येनेत्यर्थः। प्रकारान्तरमाह * अल्पेति। तस्करत्वातिदेशफलमाह * तस्करवदिति। तदीयदण्डादीत्यर्थः। आदिना शासनादिः। * यथोक्तमिति। नारदेनेति भावः। समाप्नुयादिति पाठः। प्रकाशं यथा स्यात्तथा यः क्रयस्तस्मात्। सार्वविभक्तिकस्तासिः अपादाने इति वा। * क्रेतुः, तत्कर्तुरित्यर्थः। क्रेतुरित्यग्रेऽप्यन्वेति॥ १६८॥

मि० अव० स्वाम्यभियुक्तेन क्रेत्रा किं कर्त्तव्यमि-

## अथ अस्वामिविक्रयप्रकरणम् ॥ ११ ॥

मि० अव. संप्रत्यस्वामिविक्रयाख्यं व्यवहारपदमुपक्रमते । तस्य च लक्षणं—

नारदेनोक्तम्, (व्यव. ७ । १)

निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वाऽपहृत्य वा ।
विक्रीयतेऽसमक्षं यत् स ज्ञेयोऽस्वामिविक्रयः॥इति।

तत्र किमित्याह ।

या० स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते ।
हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः॥ १६८॥

मि० स्वमात्मसंबन्धि द्रव्यम् अन्यविक्रीतमस्वामिविक्रीतं यदि पश्यति तदा लभेत गृह्णीयात्। अस्वामिविक्रयस्य स्वत्वहेतुत्वाभावात् । विक्रीतग्रहणं दत्ताहितयोरुपलक्षणार्थम् । अस्वामिकृतत्वेन तुल्यत्वात् ।

अत एवोक्तम्,

अस्वामिविक्रयं दानमाधिं च विनिवर्तयेत् । इति ।

क्रेतुः पुनरप्रकाशिते गोपिते क्रये दोषो भवति ।

तथा हीनात् तद्द्रव्यागमोपायहीनात्, रहसि चैकान्ते, संभाव्यद्रव्यादपि हीनमूल्येनाल्पतरेण च मूल्येन क्रये, वेलाहीने वेलया हीनो वेलाहीनः क्रयो राज्यादौ कृतस्तत्र च, क्रेता तस्करो भवति । तस्करवत् दण्डादिभाग्भवतीत्यर्थः ।

यथोक्तम्, (ना. व्यव. ७ । २)

द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी समाप्नुयात् ।

क्वचित्तथैव पाठः । * तद्धनं, गृहीत्वेति शेषः । * शुद्धः, राज्ञो ऽदण्ड्यश्च ।

२। अयंभावः । नष्टं वाऽपहृतं वाऽन्यदीयद्रव्यं क्रयप्रतिग्रहादिभिरस्वामिनः सकाशाद्यः कश्चन प्राप्य स्वयमप्यन्यस्मै विक्रीणीते तस्मात्क्रेता पुरुषस्तं विक्रेतारं रजनीचरादिभी राजपुरुषैर्ग्राहयेत्,स्वचौर्यनिवृत्त्यर्थं राजदण्डाप्राप्त्यर्थं च। अथ केनापि प्रकारेण तं ग्राहयितुं प्रदर्शयितुं वा न समर्थस्तदा तस्माद् गृहीतं द्रव्यं मूलस्वामिने समर्प्य स्वयं शुद्धो भवतीति ।

३। दूषयति * तदिदमिति। तत्र हेतुमाह * विक्रेतुरिति। वक्ष्यमाणेन मूलेनेत्यर्थः । स्वेष्टार्थमाह * अत इति । * नाष्टिकं प्रति, न तु द्वितीयक्रेतारं प्रति । अत एव तद्विरुद्धमाह * आत्मीयमिति । आसाद्येत्यस्यार्थमाह * क्रेत्रिति । * तं, नरम् । देशकालातिपत्ताविति षष्ठीतत्पुरुष इत्याह * देशकालातिक्रमे इति । तयोरतिक्रमणे इत्यर्थः । * तद्विज्ञापनकालादिति । स्थानपालादिभ्यः कथनकालादित्यर्थः । * गृहीत्वा, तामिति शेषः ॥ १६९ ॥

मि० अव. ग्राहिते हर्तरि किं कर्तव्यमित्यत आह ।

या० विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् ।
क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी॥१७०॥

मि० यद्यसौ गृहीतः क्रेता न मयेदमपहृतमन्यसकाशात्क्रीतमिति वक्ति तदा तस्य क्रेतुर्विक्रेतुर्दर्शनमात्रेण शुद्धिर्भवति । न पुनरसावभियोज्यः । किं तु तत्प्रदर्शितेन विक्रेत्रा सह नाष्टिकस्य विवादः ।

यथाह बृहस्पतिः,

त्यत आह ।

या० नष्टापहृतमासाद्य हर्त्तारं ग्राहयेन्नरम् ।
देशकालातिपत्तौ च गृहीत्वा स्वयमर्पयेत् ॥ १६९॥

मि० नष्टमपहृतं वाऽन्यदीयं क्रयादिना प्राप्य हर्त्तारं विक्रेतारं नरं ग्राहयेत् चौरोद्धरणकादिभिः, आत्मविशुद्ध्यर्थं राजदण्डाप्राप्त्यर्थं च । अथाविदितदेशान्तरं गतः कालान्तरे वा विपन्नस्तदा मूलसमाहरणाशक्तेर्विक्रेतारमदर्शयित्वैव स्वयमेव तद्धनं नाष्ठिकस्य समर्पयेत् । तावतैवासौ शुद्धो भवतीति श्रीधराचार्येण व्याख्यातम् ।

तदिदमनुपपन्नम् । विक्रेतुर्दर्शनाच्छुद्धिरित्यनेन पौनरुक्त्यप्रसङ्गात् ।

अतोऽन्यथा व्याख्यायते । नष्टापहृतमिति नाष्ठिकं प्रत्ययमुपदेशः । नष्टमपहृतं वाऽऽत्मीयद्रव्यमासाद्य क्रेतृहस्तस्थं ज्ञात्वा तं हर्तारं क्रेतारं स्थानपालादिभिर्ग्राहयेत । देशकालातिपत्तौ देशकालातिक्रमे स्थानपालाद्यसन्निधाने तद्विज्ञापनकालात् प्राक् पलायनाशङ्कायां स्वयमेव गृहीत्वा तेभ्यः समर्पयेत्॥१६९॥

वा० १ । दूषयितुमेकदेशीयमतमनुवदति *नष्टमित्यादिना । मूले समाहारद्वंद्व इति भावः । तत्फलमाह * आत्मेत्यादि । उत्तरार्धार्थमाह * अथेति । मूले देशकालयोरतिपत्तिरिति सुप्सुपेति सप्तमीसमासः । तत्राद्येऽतिपत्तिर्गमनम् । देशशब्दश्च विशेषपरः, कालशब्दोऽपि, द्वितीयेऽतिपत्तिर्मरणम्—इत्याह * अविदितेति । * मूलेति । विक्रेत्रित्यर्थः । यद्वा मूल्येत्यर्थः ।

दार्थमाह * तस्येति। तस्मादित्यस्यार्थमाह * तस्य सकाशादिति। दण्डाभ्रमायाह * स्तैर्यमिति। विशेषानुक्तेराह * अवाप्नोतीति।

३। विशेषमाह * अथासाविति। * विक्रेतेत्यर्थः। काकातीयमाह * प्रकाशमिति। * तत्र, विवादे। * क्रयं शोधयित्वेति। स्वक्रये साक्ष्यादिप्रदर्शनेनेत्यर्थः। * शुद्धः, अतस्करः। तमेवाह * अप्रमादार्येति। * स एव, क्रेतेव। तमेवाह * अनुपस्थापयन्निति। अप्रदर्शयन्नित्यर्थः। * यथेति। अभियुज्यमानमनतिक्रम्येत्यर्थः। * दमं च, राज्ञेति शेषः। * सः, क्रेतेति विशेष्यम्॥ १७०॥

मि० अव. स्वं लभेतान्यविक्रीतमित्युक्तं, तल्लिप्सुना किं कर्तव्यमित्यत आह।

या० आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा।
पञ्चबन्धो दमस्तस्य राज्ञे तेनाविभाविते॥ १७१॥

मि० आगमेन रिक्थक्रयादिना उपभोगेन वा मदीयमिदं द्रव्यं, तच्चैवं नष्टमपहृतं वेत्यपि भाव्यं साधनीयं तत्स्वामिना। अतोऽन्यथा तेन स्वामिना अविभाविते पञ्चबन्धो नष्टद्रव्यस्य पञ्चमांशो दमो नाष्टिकेन राज्ञे देयः।

अत्र चायं क्रमः। पूर्वस्वामी नष्टमात्मीयं साधयेत्। ततः क्रेता चौर्यपरिहारार्थं मूल्यलाभाय च विक्रेतारम् आनयेत्। अथानेतुं न शक्नोति तदाऽऽत्मदोषपरिहाराय क्रयं साधयित्वा द्रव्यं नाष्टिकस्य समर्पयेदिति॥ १७१॥

मूले समाहृते क्रेता नाभियोज्यः कथञ्चन ।
मूलेन सह वादस्तु नाष्टिकस्य विधीयते ॥ इति ।

तस्मिन् विवादे यद्यस्वामिविक्रयनिश्चयो भवति तदा तस्य नष्टापहृतस्य गवादिद्रव्यस्य यो विक्रयी विक्रेता तस्य सकाशात्स्वामी नाष्टिकः स्वीयं द्रव्यमवाप्नोति । नृपश्चापराधानुरूपं दण्डं, क्रेता च मूल्यमवाप्नोति । अथासौ देशान्तरं गतस्तदा योजनसंख्ययाऽऽनयनार्थं कालो देयः ।

प्रकाशं वा क्रयं कुर्यान्मूलं वापि समर्पयेत् ।
मूलानयनकालश्च देयस्तत्राध्वसंख्यया ॥ इति स्मरणात् ।

अथाविज्ञातदेशतया मूलमाहर्तुं न शक्नोति तदा क्रयं शोधयित्वैव शुद्धो भवति ।

असमाहार्यमूलस्तु क्रयमेव विशोधयेत् । इति वचनात् ।

यदा पुनः साक्ष्यादिभिर्दिव्येन वा क्रयं न शोधयति मूलं च न प्रदर्शयति तदा स एव दण्डादिभाग्भवति ।

अनुपस्थापयन्मूलं क्रयं वाऽप्यविशोधयन् ।
यथाभियोगं धनिने धनं दाप्यो दमं च सः ॥
इति स्मरणात् ॥ १७० ॥

वा० १ । * हर्तरि, क्रेतरि । * किमिति । तेनैवेति भावः । * गृहीतः, ग्राहितः । * अपहृतमिति । किं त्विति शेषः । मात्रपदलब्धमेवाह * न पुनरिति । पश्चादपीत्यर्थः । * मूले, विक्रेतरि । यस्मात्क्रीतं तेन तस्मिन्निति यावत् । एवमग्रेऽपि । सतिसप्तमी । * नाष्टिकस्य, नष्टधनस्वामिनः ।

२ । अथाग्रिमार्थमाह * तस्मिन्नित्यादिना । आदौ तुर्यपा-

ना भयप्रार्थनादि । किञ्चोऽनिवासिन इत्याह * गृहीतेति । मात्वदाह * षडिति । तत्प्रतिपिनान्वितान् । ननु दण्डान्तराभावाद्धेतुमाह * तस्करेति ॥ १७२ ॥

मि० अथ. राजपुरुषानीतं प्रत्याह ।

या० शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।
अर्वाक्संवत्सरात्स्वामी हरेत परतो नृपः ॥ १७३ ॥

मि० यदा तु शुल्काधिकारिभिः स्थानरक्षिभिर्वा नष्टमपहृतं द्रव्यं राजपार्श्वं प्रत्यानीतं तदा संवत्सरादर्वाक् प्राप्तश्चेत् नाष्टिकस्तद्द्रव्यमाप्नुयात् । ऊर्ध्वं पुनः संवत्सराद्राजा गृह्णीयात् । स्वपुरुषानीतं च द्रव्यं जनसमूहेष्वुद्घोष्य यावत्संवत्सरं राज्ञा रक्षणीयम् ।

यथाह गौतमः, प्रनष्टस्वामिकमधिगम्य राज्ञे प्रब्रूयुर्विख्याप्य संवत्सरं राज्ञा रक्ष्यमिति ।

यत्पुनर्मनुना विध्यन्तरमुक्तम् । (अ. ८ श्लो. ३०)

प्रनष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत् ।
अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेत् ॥

इति, तत् श्रुतवृत्तसंपन्नब्राह्मणविषयम् । रक्षणनिमित्तषड्भागादिग्रहणं च—

तेनैवोक्तम्, (मनु. अ. ८ श्लो. ३३)

आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः ।
दशमं द्वादशं वापि सतां धर्ममनुस्मरन् ॥ इति ।

तृतीयद्वितीयप्रथमसंवत्सरेषु यथाक्रमं षष्ठादयो भागा वेदितव्याः । प्रपञ्चितं चैतत्पुरस्तात् ॥ १७३ ॥

बा० १ । शुल्कं राजग्राह्यः करः । आहृतमित्यस्यार्थमाह

वा० १ । व्यवहितसंगतिमाह *स्वामिति । *तदिति । तल्ला-भेच्छुना स्वामिनेत्यर्थः । उपभोगेन वेति पाठः । *एवं, प्रकारेण । नष्टमित्युपलक्षणमित्याह *अपहृतंवेति । मूलेऽतोन्यथेत्यस्यैव वि-वरणं *तेनाविभावित इति । तदर्थमाह *तेन स्वामिनेति । ना-ष्टिकेनेत्यर्थः । *अविभाविते, असाधिते । तस्येत्यस्यार्थमाह *न-ष्टद्रव्यस्येति । तत्रेति तत्र पाठान्तरम् । अर्थः स एव । यद्यपि वन्ध आर्थो च वन्धने इति कोशस्तथाप्युभयत्र लक्ष्यार्थमाह *पञ्चमांश इति । तच्छोधनेनैव शुद्धेः दानाभावसंदेहाभावाय मा-गुक्तक्रमं स्पष्टयति । * अत्र चेति । * आत्मदोपेति । चौर्येत्य-र्थः । * साधयित्वेति । साक्ष्यादिभिरिति भावः । * द्रव्यं, तदीयम् ॥ १७१ ॥

मि० अथ. तस्करस्य प्रच्छादकं प्रत्याह ।

या० हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात् ।
अनिवेद्य नृपे दण्ड्यः स तु पणवतिं पणान् ॥ १७२ ॥

मि० हृतं प्रनष्टं वा चौरादिहस्तस्थं द्रव्यमनेन मदीयं द्रव्यमपहृतमिति नृपस्यानिवेद्यैव दर्पादिना यो गृह्णाति असौ षड्नवतिं पणान् दण्डनीयः । तस्करप्रच्छादकत्वेन दुष्टत्वात् ॥ १७२ ॥

वा० १ * । प्रच्छादकमिति । स्वेनैव द्रव्यस्य ततो ग्रहात्फ-लाभावेन कारुण्येन च राजादावप्रकाशकमित्यर्थज्ञानाय मूले परहस्तादित्युक्तम् । यद्वा । परहस्तम् अतति गच्छतीति व्युत्प-त्या प्रथमान्तं द्रव्यविशेपणम् । तदाह * चौरादिहस्तस्थमिति । आदिनोदासीनादिग्रहणम् । तथा चादौ अग्रे च तस्करग्रहणम-प्युपलक्षणमिति भावः । नृपस्येति शेषे षष्ठी । दर्पादीति आदि-

अत्र च प्रनष्टस्वामिकद्रव्ये एकवर्षत्रिवर्षदशवर्षधारणविकल्पानां व्यवस्था दूरतमदेशवर्तितदीयपुत्रादिदायादवार्तायां सत्यां नानाविधानेकगमनप्रतिबन्धसम्भवे वा ऽवगन्तव्येति तु कल्पतरुः । * पुरस्तादिति । अत्रैवाध्याये इति भावः ॥ १७३ ॥

मि० अव. मनूक्तषड्भागादिग्रहणस्य द्रव्यविशेषे अपवादमाह ।

या० पणानेकशफे दद्याच्चतुरः पञ्च मानुषे ।
महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥ १७४ ॥

मि० एकशफे अश्वादौ प्रनष्टाधिगते तत्स्वामी राज्ञे रक्षणनिमित्तं चतुरः पणान् दद्यात् । मानुषे मनुष्यजातीये द्रव्ये पञ्च पणान् । महिषोष्ट्रगवां रक्षणनिमित्तं प्रत्येकं द्वौ द्वौ पणौ । अजाविके पुनः प्रत्येकं पादं पादम् । दद्यादिति सर्वत्रानुषज्यते । अजाविकमिति समासनिर्देशेऽपि पादं पादमिति वीप्साबलात्प्रत्येकं संबन्धोऽवगम्यते ॥ १७४ ॥

इत्यस्वामिविक्रयप्रकरणम् ।

बा. १। महिषोष्ट्रगवामित्यार्षत्वात्साधुः । * प्रनष्टाधिगते, सति । एवमग्रेऽपि । धनदाने निमित्तमाह * रक्षणेति । द्वंद्वात्समुदाये प्राप्तावाह * प्रत्येकमिति । उभयत्र । अजाविके इति प्राग्वत् । तत्र द्वितीये उपपत्तिमाह * अजेति । * वीप्सेति । एवं प्रागपि बोध्यम् ॥ १७४ ॥

इत्यस्वामिविक्रयप्रकरणम् ।

* राजेति। परत इत्यस्यार्थमाह *ऊर्ध्वमिति। विशेषमाह * स्वेति। * मनुष्युः, तत्पुरुषाः। * विख्याप्य, जनसमूहेपूद्घोष्य।

२। विरोधं परिहरति * यत्पुनरिति। प्रनष्टस्वामिकमिति पाठः। पाठान्तरेऽदृष्टस्वामिकमित्यर्थः। एवं गतिद्वयं प्रागपि। तत्र व्यस्तपाठोऽपि। * श्रुतेति। वेदशास्त्रसदाचरणपूर्णेत्यर्थः। उत्तरसङ्गतये प्राग्वदाह * रक्षणेति। बहुव्रीहिः। एवमग्रेऽपि। आद्यर्थो वचने एव स्फुटः। * तेनैव, मनुनैव। * अथ, रक्षणानन्तरम्। * षड्भागम्, षट्त्वसंख्यापूरकभागम्। * प्रनष्टाधिगमादिति। अधिगमे कर्मणि घञ्। प्रनष्टादधिगम्यमानात् द्रव्यादित्यर्थः। यद्वा प्रनष्टस्याधिगमात्प्राप्तिपूर्वकरक्षणाद्धेतोरित्यर्थः।

३। व्यवस्थामाह * तृतीयेति। भागानुसारेण व्युत्क्रम इति भावः।

बृहस्पतिः,

राजाऽऽददीत षड्भागं नवमं द्वादशं तथा।
शूद्रविट्क्षत्रजातीनां विप्रात् गृह्णीत विंशकम्॥
त्र्यब्दादूर्ध्वं तु नागच्छेत्तत्र स्वामी कथं चन।
तदा गृह्णीत तद् राजा ब्रह्मस्वं ब्राह्मणान् श्रयेत्॥ इति।

बौधायनः,

अब्राह्मणस्य प्रनष्टस्वामिकरिक्थं संवत्सरं परिपाल्य राजा हरेदिति।

नारदः, (व्यव. ३। १८)

अस्वामिकमदायादं दशवर्षस्थितं ततः।
राजा तदात्मसात्कुर्यादेवं धर्मो न हीयते॥ इति।

एतेषामपि व्यवस्था प्रागेवोक्ता। तदाह * प्रपञ्चितमिति।

न कुटुम्बभरणावशिष्टमिति यावत् । तस्मात् । त-
द्भरणस्यावश्यकत्वात् ।

तथाच मनुः, ( अ. ८ श्लो. ३५ )

वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ।
अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥ इति ।

कुटुम्बाविरोधेनेत्यनेनादेयमेकविधं दर्शयति । स्वं दद्यादित्यनेन च अस्वभूतानाम् अन्वाहितया-चितकाधिसाधारणनिक्षेपाणां पञ्चानामप्यदेयत्वं व्यतिरेकतो दर्शितम् ।

यत्पुनर्नारदेनाष्टविधत्वमदेयानामुक्तम्, (व्यव.४)

अन्वाहितं याचितकमाधिः साधारणं च यत् ।
निक्षेपः पुत्रदारञ्च सर्वस्वं चान्वये सति ॥ ( ४ )
आपत्स्वपि हि कष्टासु वर्तमानेन देहिना ।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम् ॥ इति,(५)

तद् अदेयत्वमात्राभिप्रायेण । न पुनः स्वत्वाभावाभिप्रायेण ।पुत्रदारसर्वस्वप्रतिश्रुतेपु स्वत्वस्य सद्भावात् । अन्वाहितादीनां स्वरूपं प्रागेव प्रपञ्चितम् ।

मि० अव. स्वं दद्यादित्यनेन दारसुतादेरपि स्वत्वाविशेषेण देयत्वप्रसङ्गे प्रतिषेधमाह ।

या० दारसुतादृते ॥

नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम् ॥ १७५ ॥

मि० दारसुतादृते दारसुतव्यतिरिक्तं स्वं दद्यान्न दारसुतमित्यर्थः । तथा पुत्रपौत्राद्यन्वये विद्यमाने सर्वं धनं न दद्यात् ।

अथ दत्ताप्रदानिकप्रकरणम् ॥ १२ ॥

मि० उ. अधुना विहिताविहितमार्गद्वयाश्रयतया दत्तानपाकर्म दत्ताप्रदानिकमिति च लब्धाभिधानद्वयं दानाख्यं व्यवहारपदम् अभिधीयते ।

तत्स्वरूपं च नारदेनोक्तम्, ( व्यव. ४ । १ )

दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम व्यवहारपदं हि तत् ॥ इति ।

असम्यक् अविहितमार्गाश्रयेण द्रव्यं दत्त्वा पुनरादातुमिच्छति यस्मिन् विवादपदे तद्दत्ताप्रदानिकम् । दत्तस्याप्रदानं पुनर्हरणं यस्मिन्दानाख्ये तद्दत्ताप्रदानिकं नाम व्यवहारपदम् । विहितमार्गाश्रयत्वेन तत्प्रतिपक्षभूतं तदेव व्यवहारपदं दत्तानपाकर्मेत्यर्थादुक्तं भवति । दत्तस्यानपाकर्म अपुनरादानं यत्र दानाख्ये विवादपदे तद्दत्तानपाकर्म । तच्च देयादेयादिभेदेन चतुर्विधम् ।

यथाह नारदः, ( व्यव. ४ । २ )

अथ देयमदेयं च दत्तंचादत्तमेव च ।
व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः ॥ इति ।

तत्र देयमित्यनिषिद्धदानक्रियायोग्यमुच्यते । अदेयम् अस्वतया निषिद्धतया वा दानानर्हम् । यत्पुनः प्रकृतिस्थेन दत्तमव्यावर्तनीयं तद्दत्तमुच्यते । अदत्तं तु यत्प्रत्याहरणीयं तत्कथ्यते ।

अव. तदेतत्संक्षेपतो निरूपयितुमाह ।

मि० स्वं कुटुम्बाविरोधेन देयम् ।

मि० स्वमात्मीयं कुटुम्बाविरोधेन कुटुम्बानुपरोधे-

तद्योग्यमित्यर्थः*। कुटुम्बाविरोधि स्त्रीयद्द्रव्यं हि तादृशम्। *अस्वतयेति। अन्वाहितादिकमस्वतया दानानर्हं, कुटुम्बपोषणेऽपर्याप्तं तन्मात्रपर्याप्तं वा स्वं द्रव्यं निषिद्धतया दानानर्हमिति विवेकः। *अव्यावर्तनीयमिति। अपुनर्ग्राह्यमित्यर्थः। *यत्प्रत्याहरणीयमिति। यथाकथंचिद्दत्तं पुनर्ग्राह्यमित्यर्थः।

३। नारदोक्तार्थपरतया मूलमवतारयति * तदेतदिति। पूर्वोक्तं सर्वमित्यर्थः। प्राग्वदाह * आत्मीयमिति। स्वतस्तस्य तदविरोधादाह * अनुपरोधेनेति। तदविघातेनेत्यर्थः। तस्यापि तात्पर्यार्थमाह * कुटुम्बभरणेति। देयमित्यस्यार्थमाह * दद्यादिति। विशेषणफलमाह * तदिति। कुटुम्बेत्यर्थः। *वृद्धौ, अशीत्युत्तरसंख्याकौ। * शिशुः, षोडशन्यूनः। * अकार्यशतमपि, अकार्यदुष्प्रतिग्रहाद्यानन्त्यमपि। * मनुरिति। इतीत्यादिः। एवमग्रेऽपि।

४। पूर्वं नारदोक्त्या अस्वतयेत्यादिना अदेयं द्विविधमुक्तम्। अतः संक्षेपप्रकारमेवाह * स्वमिति। आद्यादेयं व्यतिरेकेण मूलकृता दर्शितमित्याह * स्वं दद्यादिति। * अन्वाहितेति। अत्र क्रमस्य वक्ष्यमाणनारदीयस्य विवक्षितत्वान्न दोषः। द्वन्द्वोत्तरपदकद्वन्द्वो वा। एवं कुटुम्बेत्यनेन तदपर्याप्तं निषिद्धतया न देयमिति द्वितीयमप्यदेयं व्यतिरेकेणैव दर्शितमित्यपि बोध्यम्। तथा च अस्वम् अदेयं, स्वमपि तदपर्याप्तमदेयमिति द्विविधमदेयमिति सिद्धमिति तात्पर्यम्।

५। व्याख्यात्रा ऽन्वाहितादिपञ्चानामदेयत्वमुक्तं, नारदेन त्वष्टानामिति तद्विरोधमाह *यत्पुनरिति। कष्टास्वित्यापद्विशेषणम्। *कष्टासु,अत्यन्तदुःखदापत्स्वपि वर्त्तमानेनेत्याद्यर्थः। काष्ठास्विति पाठे सर्वासु दिक्षु आपत्स्वपीत्याद्यर्थः। तं परिहरति

पुत्रानुत्पाद्य संस्कृत्य वृत्तिं चैषां प्रकल्पयेत्।

इति स्मरणात्।

तथा हिरण्यादिकमन्यस्मै प्रतिश्रुतमन्यस्मै न देयम्॥ १७८॥

या. १। *अधुनेति। दानप्रसङ्गादिति भावः। तत्र तावदेतत्प्रकरणाभिधेयं प्रमेयं निष्कृष्टमाह * विहितेति। यथासंख्यमन्वयः। विहितमार्गाश्रयं दत्तानपाकर्माख्यम्, अविहितमार्गाश्रयं दत्ताप्रदानिकाख्यमित्यत्रान्तरभेदः। तदाह * इति चेति। किं-चेतीत्यर्थः। उभयसामान्यमाह * दानाख्यमिति। चस्त्वर्थे। तत्रोक्तेर्न्यूनतानिरासाय नारदीयं व्याचष्टे * असम्यगिति। अस्यैवार्थमाह * अविहितेति। तत्र य इत्यस्य कश्चिदित्यर्थः। अत एवासंभवान्न तस्य तच्छब्देन परामर्श इत्याकाङ्क्षानिरासाय शेषं पूरयति * यस्मिन्निति। तस्य योगार्थमप्याह * दत्तस्येति। अप्रदानमिति च्छेदः। अत एवाह * पुनरिति। षष्ठीसमासगर्भो मत्वर्थीयष्ठन्। अविहितेत्यादिना तत्स्वरूपनिरुक्त्यैव तद्विपरीतरूपस्य दत्तानपाकर्मणः स्वरूपमर्थसिद्धमेवेति हिना सूचितमेवेति न पृथक्कथितमित्याह * विहितेति। * तदेव, दानाख्यमेव। तद्योगार्थमाह * दत्तस्येति। अनपाकर्मेत्यस्यार्थः * अपुनरिति। शास्त्रविहितमार्गेणैव दत्तत्वात्पुनरादानस्य निषिद्धत्वेनापुनर्ग्रहणमित्यर्थः।

२। * तच्च, द्विविधं दानाख्यं व्यवहारपदं च। एकैकस्य द्वैविध्याच्चतुर्विधत्वं, तदाह * अथदेयमिति। देयं दत्तं चेति द्वयं दत्तानपाकर्मभेदः। अदेयमदत्तं चेति द्वयं दत्ताप्रदानिकभेदः। एवं तत्र दानमार्गश्चतुर्विधो विज्ञेय इत्यर्थः। * तत्र, तेषां मध्ये। *अनिषिद्धेति। अनिषिद्धा या दानक्रिया

दत्त्वा नापहरेत्पुनः । न्यायमार्गेण यद्दत्तं तत्सप्तविधमपि पुनर्नापहर्तव्यम् । किन्तु तथैवानुमन्तव्यम् । यत्पुनरन्यायेन दत्तं तद् अदत्तं षोडशप्रकारमपि प्रत्याहर्तव्यमेवेत्यर्थादुक्तं भवति ।

नारदेन च— ( व्यव. ४ )

दत्तं सप्तविधं प्रोक्तमदत्तं षोडशात्मकम् । ( ३ )

इति प्रतिपाद्य दत्तादत्तयोः स्वरूपं विवृतम्,

पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः ।
स्त्रीशुल्कानुग्रहार्थं च दत्तं दानविदो विदुः ॥ (८)
अदत्तं तु भयक्रोधशोकवेगरुजान्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥ ( ९ )
बालमूढास्वतन्त्रार्तमत्तोन्मत्तापवर्जितम् ।
कर्ता ममेदं कर्मेति प्रतिलाभेच्छया च यत् ॥(१०)
अपात्रे पात्रमित्युक्तेऽकार्ये वा धर्मसंहिते ।
यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतम् ॥(११)इति ।

अयमर्थः । पण्यस्य क्रीतद्रव्यस्य यन्मूल्यं दत्तम् । भृतिर्वेतनं कृतकर्मणे दत्तम् । तुष्ट्या वन्दिचारणादिभ्यो दत्तम् । स्नेहाद् दुहितृपुत्रादिभ्यो दत्तम् । प्रत्युपकारतः उपकृतवते प्रत्युपकाररूपेण दत्तम् । स्त्रीशुल्कं परिणयनार्थं कन्याज्ञातिभ्यो यद्दत्तम् । यच्चानुग्रहार्थमदृष्टार्थं दत्तम् । तदेतत्सप्तविधमपि दत्तमेव, न प्रत्याहरणीयम् ।

भयेन बन्दिग्राहादिभ्यो दत्तम् । क्रोधेन पुत्रादिभ्यो वैरनिर्यातनायान्यस्मै दत्तम् । पुत्रवियोगादिनिमित्तशोकावेशेन दत्तम् । उत्कोचेन का-

*तदिति । मात्रं कार्त्स्न्ये । *न पुनः, न तु । अन्वाहिताद्यष्टानामेकगणपाठो ऽदेयत्वमात्रसाम्येन, न तु अस्वत्वेनेति भावः । अत्र हेतुमाह * पुत्रेति । * प्रतिश्रुतेषु, त्रिषु । चस्त्वर्थे ।

६ । एवमाद्यपादं व्याख्याय द्वितीयपादांशं व्याख्यातुमवतारयति * स्वमिति । दारसुतग्रहणमुपलक्षणमित्याह *दारसुतादेरिति । समाहारद्वन्द्वस्तत्र । तदाह * दारसुतमिति ।

७ । तृतीयपादं व्याचष्टे * तथेति । मनुमाह * पुत्रानिति । * वृत्तिं, जीविकाम् ।

८ । तुर्यपादं व्याचष्टे * तथेति । यत्पदार्थमाह *हिरण्यादिकमिति ॥ १७५ ॥

मि० अव. एवं दारसुतादिव्यतिरिक्तं देयमुक्त्वा प्रसङ्गाद्देयधनग्रहणं च प्रतिग्रहीत्रा प्रकाशमेव कर्तव्यमित्याह।

या० प्रतिग्रहः प्रकाशः स्यात्स्थावरस्य विशेषतः ।

मि० प्रतिग्रहणं प्रतिग्रहः स प्रकाशः कर्तव्यः विवादनिराकरणार्थम् । स्थावरस्य च विशेषतः प्रकाशमेव ग्रहणं कार्यम् ।तस्य सुवर्णादिवदात्मनि स्थितस्य दर्शयितुमशक्यत्वात् ॥

मि० अव. एवं प्रासङ्गिकमुक्त्वा प्रकृतमनुसरन्नाह ।

या० देयं प्रतिश्रुतं चैव दत्त्वा नापहरेत्पुनः ॥ १७६ ॥

मि० देयं प्रतिश्रुतं चैव । यद् यस्मै धर्मार्थं प्रतिश्रुतं तत्तस्मै देयमेव, यथासौ धर्मात्प्रच्युतो न भवति । प्रच्युते न पुनर्दातव्यम् । प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यादिति गौतमस्मरणात् ।

नारदेनोक्तः, ( व्यव. ४ । १२ )

गृह्णात्यदत्तं यो लोभाद्यश्चादेयं प्रयच्छति ।
अदेयदायको दण्ड्यस्तथाऽदत्तप्रतीच्छकः ॥ इति ।

इति दत्ताप्रदानिकं नाम प्रकरणम् ॥ १७३ ॥

बा. १। उत्तरसङ्गतिमाह * एवमिति । उक्तप्रकारेणेत्यर्थः । चो वाक्यालङ्कारे । * आहेति । अर्थेनेति भावः । अत एव तदवतरणपूर्वकं वक्ष्यति । प्रतिग्रहे भावे घञित्याह * प्रतिग्रहणमिति । स्यादिति विधिरित्याह * कर्तव्य इति । तत्फलमाह * विवादेति । इदमुभयान्वायि । तस्य विशेषेण तथा प्रतिग्रहे हेतुमाह * तस्येति । स्थावरस्येत्यर्थः ।

२ । द्वितीयार्धं प्रकरणसम्बन्धमवतारयति * एवमिति । यदि तु प्रतिग्रहशब्देन करणघञोत्सर्गो दानाख्य एवोच्यते तदपि प्रकृतसम्बद्धमेवेति बोध्यम्। पादभेदेन वाक्यद्वयं न तु देयादिभेदेनेत्याह * यदिति । विशेषमाह * धर्मार्थमिति । अनेनान्यस्यातथात्वं सूचितम् । प्राग्वदेवोक्तहेतोराह * यस्मा इति । यस्मै दातुं प्रतिश्रुतं स इत्यर्थः ।

३ । एवं देयादेयविषयं वक्तव्यमभिधाय दत्तादत्तविषयं वक्तव्यं वक्तुं तस्य द्वितीयपादं सप्रतीकं व्याचष्टे * दत्त्वेत्यादि। * पुनः, पश्चात् । दत्तानपहरणकथनेनैव तत्प्रतिपक्षभूतस्यादत्तप्रत्याहरणस्यापि कथनमर्थसिद्धमेव नारदवादित्याह * यत्पुनरिति । चो ऽप्यर्थे । * दत्तं तत्सप्तविधमिति ।

तत्र त्वष्टावदेयानि देयमेकविधं स्मृतम् । ( व्यव. ४ । ३)
इति अस्यादिः ।

४। नारदीयं सर्वं क्रमेण व्याचष्टे * अयमर्थ इति । क्रीतद्रव्यस्येति बहुव्रीहिः । * तुष्ट्या, सन्तोषेण । * दुहित्रिति ।

र्थप्रतिबन्धनिरासार्थमधिकृतेभ्यो दत्तम् । परिहासेनो-
पहासेन दत्तम् । एकः स्वं द्रव्यमन्यस्मै ददात्यन्योऽपि
तस्मै ददातीति दानव्यत्यासः । छलयोगतः शतदा-
नमभिसन्धाय सहस्रमिति परिभाष्य ददाति । बा-
लेनाप्राप्तषोडशवर्षेण । मूढेन लोकवेदानभिज्ञेन ।
अस्वतन्त्रेण पुत्रदासादिना । आर्तेन रोगाभिभूतेन ।
मत्तेन मदनीयमत्तेन, उन्मत्तेन वातिकाद्युन्मादग्रस्तेन
वा अपवर्जितं दत्तम् ।

तथाऽयं मदीयं कर्म करिष्यतीति प्रतिलाभेच्छया
दत्तम् । अचतुर्वेदाय चतुर्वेदोऽहमित्युक्तवते दत्तम् ।
यज्ञं करिष्यामीति धनं लब्ध्वा द्यूतादौ विनियुञ्जानाय
दत्तम्–इत्येवं षोडशप्रकारमपि दत्तम् अदत्तमित्युच्यते ।
प्रत्याहरणीयत्वात् ।

आर्तदत्तस्यादत्तत्वं धर्मकार्यव्यतिरिक्तविषयम् ।
स्वस्थेनार्तेन वा दत्तं श्रावितं धर्मकारणात् ।
अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥
इति कात्यायनस्मरणात् ॥

तथेदमपरं संक्षिप्तार्थवचनं सर्वविवादसाधारणम् ।
( मनु अ. ८ श्लो. १६५ ) ।

योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यस्य चाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत् ॥ इति ।

योग उपाधिः । येनागामिनोपाधिविशेषेणाधिक्रय-
दानप्रतिग्रहाः कृतास्तदुपाधिविगमे तान् क्रयादीन्वि-
निवर्तयेदित्यस्यार्थः । यः पुनः षोडशप्रकारमपि अदत्तं
गृह्णाति यश्चादेयं प्रयच्छति तयोर्दण्डो—

कर्त्तव्यत्वेन धर्मं ब्रुवते, अकार्यं अकार्यं यस्य तस्मै अकार्यकर्त्रे ऽविज्ञानाद्यद्दत्तं स्यादित्यर्थस्तदाह * यज्ञमिति ।

७ । विशेषमाह * आर्तेति । वेत्यस्योभयत्रान्वयः । * दत्तमित्यस्य संकल्पितमित्यर्थः । अत एव साधारणमाह * अदत्त्वेति । * मृते, तस्मिन् सति । पूर्वं पूर्णे दाने तु न परावृत्तिरिति तुना सूचितम् ।

८ । कात्यायनेनैव सर्वविवादसाधारणमन्यदप्युक्तमित्याह * तथेदमिति । वक्ष्यमाणम् । * अपरम्, उक्ताभिन्नम् । तदर्थमाह * योग इति । उभयत्रेति भावः । कृतसमाहारद्वंद्वाभ्यां योगयोस्तृतीयासमास इत्याह * येनेत्यादि । आधमनादीनाह * आधीति । विशेषेण क्रीतमित्याह * क्रयेति । भावे क्त इति भावः । * विगमे, तज्ज्ञाने । * अस्य, अपरस्य ।

९ । विशेषान्तरमाह * यः पुनरिति । यस्तु । अदत्तं गृह्णातीति पाठः । तद्ग्रहणे मूलमाह * लोभादिति । अत एवाज्ञः स इति भावः । यद्यपि तावुभावपि दण्ड्यावित्येव सिद्धं तथापि स्फुटार्थं व्युत्क्रमेण सांनिध्यादाह * अदेयदायक इति । * तथा, च । * अदत्तेति । अदत्तं प्रतीच्छक इति तथा । सचवर्गः प्रतीच्छधातुर्ग्रहणार्थः । धातुगणे वाहुलकोक्तेरिति भावः ॥ २७६ ॥

इति दत्ताप्रदानिकप्रकरणम् ।

## अथ क्रीतानुशयप्रकरणम् ॥ १२ ॥

मि० उ. अथ क्रीतानुशयः कथ्यते ।

तत्स्वरूपं नारदेनोक्तम्, ( व्यव. ९ । १ )

क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते ।
क्रीतानुशय इत्येतद्विवादपदमुच्यते ॥ इति ।

दुहितुः पुत्रादिभ्य इत्यर्थः । दृष्टस्योक्तत्वात् अनुग्रहपदेन तदित्याह * अदृष्टेति । सर्वं वाक्यमिति न्यायेनाह * दत्तमेवेति । एतव्यावर्त्त्यमाह * न प्रत्याहरणीयमिति । नारदीये दत्तपदं पण्यमूल्यादिशेषतया स्वतन्त्रतया च तन्त्रेणोपात्तमिति भावः । यच्चादृष्टार्थमित्येव पाठे ऽनुग्रहार्थमित्यस्यैव व्याख्यानं तद् बोध्यम् ।

५। अदत्तं त्विति व्याचष्टे * भयेनेत्यादि । तत्र भयं च क्रोधश्च शोकश्च तेषां वेगस्तेन रुजा पीडा तया अन्वितैरिति शाब्दोऽर्थः । तत्फलितमाह * भयेनेत्यादि । *बन्दीति कारागृहाधिकृतादिभ्य इत्यर्थः । निर्यातनं दूरीकरणम् । * अन्यस्मै, येन साकं पित्रादीनां वैरं तस्मै।पुत्रादीति पाठान्तरम् । छलसंबद्धमेव योगपदं नान्येन । योगत इति तृतीयान्तात्सार्वविभक्तिकस्तासिरित्याह * उत्कोचेनेति । * तस्माइति । तस्माएव । तद् अन्यद्वा ददातीत्यर्थः । * शतदानमिति । शतं दीयमानमिति मनसि निधाय कारणोच्छ्वासादिवशात्सहस्रं दीयते इत्युक्तौ सत्यां मनसो ऽनभिमेतमप्युक्त्यनुसारेण यद् दीयते तादित्यर्थः । उन्मत्तान्तेन द्वंद्वोत्तरपदकद्वंद्वेनापवर्जितमित्यस्य दत्तमित्यर्थकस्य साधनं कृतेति समास इत्याह * बालेनेत्यादि । * मदनीयेति। तत्साधनद्रव्येण यो मत्तस्तेनेत्यर्थः ।

६। कर्त्तेति व्याचष्टे * तथेति । ममेदमित्यस्यार्थो * मदीयमिति । * कर्त्तेति लुडर्थानद्यतनत्वमात्रं न विवक्षितमित्याह *करिष्यतीतीति। अपात्रे इति तस्य तत्त्वविवक्षायां सप्तमी। अपात्रायेत्यर्थः । तदाह * अचतुर्वेदायेति । उक्ते इत्यत्रार्शआद्यच् । सप्तमी तथैवेत्याह * चतुरिति । अकार्ये इति छेदः । सप्तम्युभयत्र प्राग्वत् । * धर्मः संहितो येनेति आहिताग्न्यादिः ।

सोऽन्तर्दशाहात् तद् द्रव्यं दद्याच्चैवाददीत च ॥ इति,

तत् उक्तलोहादिव्यतिरिक्तोपभोगाविनश्वरगृहक्षेत्रयानशयनासनादिविषयम् ।

सर्वं चैतत् अपरीक्षितक्रीतविषयम् ।

यत्पुनः परीक्ष्य न पुनः प्रत्यर्पणीयमिति समयं कृत्वा क्रीतं, तद् विक्रेत्रे न प्रत्यर्पणीयम् ।

तदुक्तम्, (ना. व्यव. ९ । ४)

क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः ।
परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत्पुनः ॥ इति ॥१७७॥

बा. १। प्राग्वदाह * क्रीतेति । तत्र संगतिं सूचयन्नाह * तदित्यादि । * बहु, विपुलम् । सम्यगिति यावत् । * तत्र च, तदनुशये च । * तेनैव, नारदेनैव । एवमग्रेऽपि । षष्ठी प्राग्वत् । तस्मिन्नेवाक्षयविक्षतामिति पाठः । नाशरहितामिति तदर्थः । अविक्षितमिति पाठेऽप्येवम् । * आवहेत्, त्यजेत् । तस्मै दद्यात् । तावता न्यूनं मूल्यं ग्राह्यमिति यावत् । * द्विगुणं, पूर्वोक्तत्रिंशांशात् द्विगुणं, पञ्चदशांशमिति यावत् । तुर्यपादस्य तात्पर्यार्थमाह * परत इति । * अनुशयो, विचारपूर्वकपश्चात्तापः ।

२। संगतये विशेषमाह * एतच्चेति । नारदोक्तं चेत्यर्थः । * बीजादीति । बीजादिव्यतिरिक्तं च तत् उपभोगादिविनश्वरं च तत् वस्तु च तद्विषयकमित्यर्थः । भोगवास्त्विति पाठे स्पष्टार्थम् । भोगेति भोग्येत्यर्थः । एवं स्मृत्यन्तरोक्तं मनसि निधायोक्तान्यविषये मूलकृत् प्रत्यर्पणप्रकारं दर्शयतीत्याह * बीजादीति । * दशैकेति । पूर्वार्धे समाहारद्वंद्वोऽग्रे पूर्वमितरेतरद्वंद्वपूर्वकसमाहारद्विगुः । अत एव वक्ष्यति दशाहादिक इत्यादि । उत्तरार्धे इतरेतरद्वंद्वः । क्रमस्य विवक्षितत्वान्न दोषः । तदाह * बीजमित्यादि ।

तत्र च यस्मिन्नहनि पण्यं क्रीतं तस्मिन्नेवाह्नि तदविकृतं प्रत्यर्पणीयमिति—

तेनैवोक्तम्, (व्यव. ९। २)

क्रीत्वा मूल्येन यत्पण्यं दुष्क्रीतं मन्यते क्रयी।
विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतम्॥ इति।

द्वितीयादिदिने तु प्रत्यर्पणे विशेषः—

तेनैवोक्तः, (व्यव. ९। ३)

द्वितीयेऽह्नि ददत्क्रेता मूल्यात्त्रिंशांशमावहेत्।
द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तत्॥ इति।

परतोऽनुशयो न कर्तव्य इत्यर्थः। एतच्च बीजादिव्यतिरिक्तोपभोगविनश्वरवस्तुविषयम्।

मि० अव. बीजादिक्रये पुनरन्य एव प्रत्यर्पणविधिरित्याह।

या० दशैकपञ्चसप्ताहमासत्र्यहार्द्धमासिकम्।
बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम्॥ १७७॥

मि० बीजं व्रीह्यादिबीजम्। अयो लोहादि। वाह्यो बलीवर्दादिः। रत्नं मुक्ताप्रवालादिकम्। स्त्री दासी। दोह्यं माहिष्यादि। पुमान् दासः। एषां बीजादीनां यथाक्रमेण दशाहादिकः परीक्षाकालो विज्ञेयः। परीक्ष्यमाणे च बीजादौ यदि असम्यक्त्वबुद्ध्याऽनुशयो भवति तदा दशाहाद्यभ्यन्तरएव क्रयनिवृत्तिर्न पुनरूर्ध्वमित्युपदेशप्रयोजनम्।

यत्तु मनुवचनम्, (अ. ८ श्लो. २२२)

क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत्।

णि सीसे च शतपले प्रताप्यमानेऽष्टौ पलानि क्षीय-
न्ते। ताम्रे शतपले पञ्च पलानि । अयसि दश पलानि
क्षीयन्ते । अत्रापि शते इत्येव ।

कांस्यस्य तु त्रपुताम्रयोनित्वात्तदनुसारेण क्ष-
यः कल्प्यः । अतोऽधिकक्षयकारिणः शिल्पिनो द-
ण्ड्याः ॥ १७८ ॥

या० १। यद्यपि बीजाय इति बीजादिक्रमेण मूले परिग-
णितं तथापि दोह्ये महिष्यादौ प्रतिसवनदोहनेन तत्परीक्षायाः
पयोनिष्ठाल्पत्वमहत्त्वाभ्यां सुज्ञानत्वात्तत्प्राधान्येनाह * दोह्या-
दीति । * परीक्षेति । तत्कालेत्यर्थः । * इतरथा, तन्न्यूनत्वे ।
अयं तात्पर्यार्थः । शतशब्दः प्रत्यासत्तेः पलपर इत्याह * श-
तपले इति । द्विपलमिति बहुव्रीहिस्तदाह * पलद्वयमिति ।
प्रागवदाह * शतपले इति । अनुवृत्तिरग्रेऽपि । पञ्च दशेति
पदद्वयम् । तदाह * पञ्चपलानीति । * इत्येव, तच्च पलपरमेव ।
प्रताप्यमाने इत्यप्युभयत्र बोध्यम् ।

२। न्यूनतां परिहरति * कांस्यस्येति । कांस्ये त्विति पा-
ठान्तरम् । त्रपुताम्रयोनित्वादिति बहुव्रीहिः । * तदनुसारेण,
तद्भागानुसारेण । क्वचित् तथैव पाठः। एवं पित्तलेऽपि बोध्यम् ।
तात्पर्यार्थमत्राह * अतोऽधिकमिति ॥ १७८ ॥

मि० अव० क्वचित्कम्बलादौ वृद्धिमाह ।

या० शते दशपला वृद्धिरौर्णे कार्पाससूत्रके ।
मध्ये पञ्चपला वृद्धिः सूक्ष्मे तु त्रिपला मता॥ १७९॥

मि० स्थूलेनौर्णसूत्रेण यत्कम्बलादिकं क्रियते त-
स्मिन् शतपले दशपला वृद्धिर्वेदितव्या । एवं कार्पा-
ससूत्रनिर्मिते पटादौ वेदितव्यम् । मध्ये अनतिसू-

अय इत्युपलक्षणमित्याह * लोहादीति । परीक्षणपदार्थमाह * परीक्षाकाल इति । करणल्युटा कालसामान्यवाचकं तदिति भावः। एतत्कथनफलमाह * परीक्ष्यमाणेचेति ।

३। मनुविरोधं तेनैकस्यैव कालस्य सामान्येनोक्तत्वात्प्राप्तं मूलनारदयोः परिहरति * यस्त्विति । * इह, व्यवहारे। द्वितीयं आह * आददीत चेति । विचारस्य तुल्यत्वात् तदेकतयैव मनुनोक्तत्वान्मूलकृताऽप्येकतयैवोक्तं, न तु भेदेन। कल्पतर्वादीनां भेदेनोक्तिस्तु स्पष्टार्थेति बोध्यम् ।

४। मूलाविरोधायाह * उक्तलोहादीति । नारदाविरोधायाह * उपभोगानश्वरेति । * सर्वं, मनुमूलनारदोक्तम् ।

५। परीक्षापूर्वकक्रये विशेषमाह * यत्पुनरिति । परीक्षितं सदिति शेषः। परीक्ष्येति पाठान्तरम्। * पुनः, पश्चात् । * तदुक्तमिति। नारदेनेति शेषः । * प्राक्, क्रयात्। * गुणेति। गुणदोषाभ्याम्। सार्वविभक्तिकस्तसिः। *परीक्षाभिमतामिति। परीक्षया अभिमतामित्यर्थः । परीक्ष्याभिमतामिति पाठान्तरम्। *पुनः, पश्चात् ॥ १७७ ॥

मि० अव० दोह्यादिपरीक्षाप्रसङ्गेन स्वर्णादेरपि परीक्षामाह ।

या० अग्नौ सुवर्णमक्षीणं रजते द्विपलं शते ।
अष्टौ त्रपुणि सीसे च ताम्रे पञ्च दशायसि ॥१७८॥

मि० वह्नौ प्रताप्यमानं सुवर्णं न क्षीयते । अतः कटकादिनिर्माणार्थं यावत्स्वर्णकारहस्ते प्रक्षिप्तं तावत्तुलितं तैः प्रत्यर्पणीयम् । इतरथा क्षयं दाप्या दण्ड्याश्च। रजते तु शतपले प्रताप्यमानं पलद्वयं क्षीयते। अष्टौ त्रपुणि सीसे च। शते इत्यनुवर्तते। त्रपु-

त्यर्थः। कार्मिकमित्यस्य व्याख्या * कर्मणेति। चित्रं सूत्रम्। अत एव तस्यापि व्याख्या *यत्रेति। मेचकं मयूरपिच्छनेत्रम्। तत्र अधिकरणे यञित्याह * यत्रेति। प्रावार उत्तरासङ्गः। द्वौ प्रावारोत्तरासङ्गौ समावित्यमरः। * तत्र, उभयत्रापि। त्रिंशच्छब्दो भागपर इत्याह *त्रिंशत्तम इति। तात्पर्यार्थमाह * किंत्विति॥१८०॥

मि० अव० द्रव्यानन्त्यात्प्रतिद्रव्यं क्षयवृद्धिप्रतिपादनाशक्तेः सामान्येन ह्रासवृद्धिज्ञानोपायमाह।

या० देशं कालं च भोगं च ज्ञात्वा नष्टे बलाबलम्।

द्रव्याणां कुशला ब्रूयुर्यत्तद्दाप्यमसंशयम् ॥१८१॥

मि० शाणक्षौमादौ द्रव्ये नष्टे ह्रासमुपगते द्रव्याणां कुशलाः द्रव्यवृद्धिक्षयाभिज्ञाः देशं कालमुपभोगं तथा नष्टद्रव्यस्य बलाबलं सारासारतां च परीक्ष्य यत्कल्पयन्ति तत् असंशयं शिल्पिनो दाप्याः॥१८१॥

इति क्रीतानुशयप्रकरणम्॥

वा० १। उत्तरसंगतिमाह *द्रव्यानन्त्यादिति। *क्षयवृद्धीति। धर्मादित्वात्साधुत्वम्। एवमग्रेऽपि। अत एव वृद्धिक्षयेत्यग्रिमविरोधो नेति बोध्यम्। उक्ताभिन्नविषयमेवास्य साफल्यायाह * शाणेत्यादि। शणसूत्रनिर्मितम्। क्षुमा अतसी तत्सूत्रनिर्मितम्। नष्ट इति मूलार्थमाह * ह्रासमिति। सर्वथा नाशो ऽत्र नाभिमतः प्रकरणादिति भावः। *तथा, किं च तद्वत् वा। प्रत्यासत्तेराह * नष्टद्रव्यस्येति। तत्र तत्त्वाविवक्षया सप्तमीति भावः। एकश्चो व्युत्क्रमे इत्याह *सारासारतां चेति। ज्ञात्वेत्यस्य व्याख्या * परीक्ष्येति। तुर्यपादार्थमाह * यदिति। दाप्यमित्यस्य शिल्पिकदम्बकमिति विशेष्यम्। तदाह *शिल्पिन इति ॥१८१॥

इति क्रीतानुशयप्रकरणम्।

क्ष्मनिर्मिते पटादौ पञ्चपला वृद्धिः । सूक्ष्मसूत्ररचिते शते त्रिपला वृद्धिर्वेदितव्या । एतच्चाप्रक्षालितवासोविषयम् ॥ १७९ ॥

वा० १। * क्वचित्, कम्बलादावपि न सर्वत्र किं तु क्वचित्, वृद्धिमाहेति पाठः । सूक्ष्मे वक्ष्यमाणत्वादाह * स्थूलेनेति । और्णे शतपले कम्बलादाविति तु मूलार्थः । * निर्मिते इति । रोपयेतोः प्राचामिति वुञ् तत्रानेन सूचितः । स हि शैषिकः । शतपले दशपला वृद्धिरित्यर्थः । दशपलेति बहुव्रीहिरेव । मध्ये इति तृतीयपादप्रतीकम्, अत एवाह * अनतिसूक्ष्मेति । * पटादाविति । यद्यप्यौर्णे इत्यादिना कम्बलादितया ग्रहणं कृतं तथापि पटादावित्युक्तिः प्रतिलोमाभिप्रायेति नानुपपत्तिरिति भावः । शते इति बोध्यम् । * सुसूक्ष्मेति । अतिसूक्ष्मेत्यर्थः । * अप्रक्षालितेति । तथा च प्रक्षालिते नेयमेव वृद्धिरिति भावः ॥ १७९ ॥

मि० अव० द्रव्यान्तरे विशेषमाह ।

या० कार्मिके रोमबन्धे च त्रिंशद्भागः क्षयो मतः ।
न क्षयो न च वृद्धिः स्यात् कौशेये वल्कलेषु च ॥ १८० ॥

मि० कार्मिकं कर्मणा चित्रेण निर्मितम् । यत्र निष्पन्ने पटे मेचकस्वस्तिकादिकं चित्रं सूत्रैः क्रियते तत्कार्मिकमित्युच्यते । यत्र प्रावारादौ रोमाणि बध्यन्ते स रोमबन्धः । तत्र त्रिंशत्तमो भागः क्षयो वेदितव्यः । कौशेये कोशप्रभवे वल्कलेषु वृक्षत्वङ्निर्मितेषु वसनेषु वृद्धिह्रासौ न स्तः । किंतु यावद्वयनार्थं कुविन्दादिभ्यो दत्तं तावदेव प्रत्यादेयम् ॥ १८० ॥

वा० १। * विशेषमिति । क्षयमुभयाभावं च स्थलविशेषेणे-

अशुभं कर्म विज्ञेयं शुभमन्यदतः परम् ॥ (७)इति ।

तत्र शिष्यो वेदविद्यार्थी । अन्तेवासी शिल्पशिक्षार्थी । मूल्येन यः कर्म करोति स भृतकः । कर्मकुर्वतामधिष्ठाताधिकर्मकृत् । अशुचिस्थानमुच्छिष्टप्रक्षेपार्थं गर्तादिकम् । अवस्करो गृहमार्जनपांस्वादिनिचयस्थानम् । उज्झनं त्यागः । भृतकश्चात्र त्रिविधः ।

तदुक्तम्, ( ना. व्यव. ५।२३ )

उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः ।
अधमो भारवाही स्यादित्येवं त्रिविधो भृतः ॥ इति ।

दासः पुनः, ( ना. व्यव. ५)

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
अनाकालभृतस्तद्वदाहितः स्वामिना च यः ॥(२६)
मोक्षितो महतश्चर्णाद्युद्धप्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥ (२७)
भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥(२८)

गृहे दास्यां जातो गृहजातः । क्रीतो मूल्येन । लब्धः प्रतिग्रहादिना । दायादुपागतः पित्रादिदासः । अनाकालभृतो दुर्भिक्षे यो दासत्वाय मरणाद्रक्षितः । आहितः स्वामिना धनग्रहणेनाधितां नीतः । ऋणमोचनेन दासत्वमभ्युपगतः ऋणदासः । युद्धप्राप्तः समरे विजित्य गृहीतः । पणे जितः यद्यस्मिन् विवादे पराजितोऽहं तदा त्वद्दासो भवामीति परिभाष्य जितः । तवाहमित्युपगतः तवाहं दास इति स्वयं संप्रतिपन्नः । प्रव्रज्यावसितः प्रव्रज्यातश्च्युतः । कृतः एतावत्कालं

## अथाभ्युपेत्याशुश्रूषाप्रकरणम् ॥ १४ ॥

मि० उ० साम्प्रतमभ्युपेत्याशुश्रूषाख्यमपरं विवादपदमभिधातुमुपक्रमते।

तत्स्वरूपं च नारदेनोक्तम्, ( व्यव. ५ । १ )

अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते।
अशुश्रूषाऽभ्युपेत्यैतद्विवादपदमुच्यते ॥इति।

आज्ञाकरणं शुश्रूषा। तामङ्गीकृत्य पश्चाद्यो न संपादयति तद्विवादपदमभ्युपेत्याशुश्रूषाख्यम्। शुश्रूषकश्च पञ्चविधः। शिष्योऽन्तेवासी भृतकोऽधिकर्मकृद् दास इति। तेषामाद्याश्चत्वारः कर्मकरा इत्युच्यन्ते। ते च शुभकर्मकारिणः। दासाः पुनर्गृहजातादयः पञ्चदशप्रकाराः गृहद्वाराशुचिस्थानरथ्यावस्करशोधनाद्यशुभकर्मकारिणः।

तदिदं नारदेन स्पष्टीकृतम्, ( व्यव. ५ )

शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः।
चतुर्विधः कर्मकरस्तेषां दासास्त्रिपञ्चकाः ॥ (२)
शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत्।
एते कर्मकरा ज्ञेया दासास्तु गृहजादयः ॥ (३)
सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः।
जातिकर्मकृतस्तूक्तो विशेषो वृत्तिरेव च ॥ (४)
कर्मापि द्विविधं ज्ञेयमशुभं शुभमेव च।
अशुभं दासकर्मोक्तं शुभं कर्मकृतां स्मृतम् ॥ (५)
गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम्।
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम् ॥ (६)
इच्छतः स्वामिनश्चाङ्गैरुपस्थानमथान्ततः।

राज्ञा मोचयितव्यास्ते दास्यं नेषु हि नेष्यते॥इति।

चौरव्याघ्राद्यवरुद्धस्य स्वामिनः प्राणान् यः प्रददाति रक्षति असावपि मोचयितव्यः। तदिदं सर्वदासानां साधारणं दास्यनिवृत्तिकारणम्।

यो वैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात्।
दासत्वात्स विमुच्येत पुत्रभागं लभेत च॥

इति नारदस्मरणात्(व्यव.५।३०)भक्तदासीनां प्रातिस्विकमपि मोक्षकारणमुच्यते।अनाकालभृतभक्तदासौ भक्तस्य त्यागाद्दासभावादारभ्य स्वामिद्रव्यं यावदुपभुक्तं तावद्दत्त्वा मुच्येते। आहितर्णदासौ तु तन्निष्क्रयात्, यद् गृहीत्वा स्वामिना आहितो यच्च दत्त्वा धनिनोत्तमर्णान्मोचितः तस्य निष्क्रयात्सवृद्धिकस्य प्रत्यर्पणान्मुच्येते।

नारदेन विशेषोऽप्युक्तः, (व्यव. ५)

अनाकालभृतो दास्यान्मुच्यते गोयुगं ददत्।
सम्भक्षितं यद् दुर्भिक्षे न तच्छुद्ध्येत कर्मणा॥(३१)
भक्तस्योत्क्षेपणात्सद्यो भक्तदासः प्रमुच्यते। (३६)
आहितोऽपि धनं दत्त्वा स्वामी यद्येनमुद्धरेत्॥(३२)
ऋणं तु सोदयं दत्त्वा ऋणी दास्यात्प्रमुच्यते(३३)इति।

तथा तवाहमित्युपगतयुद्धप्राप्तपणाजितकृतकवडवाहृतानां च प्रातिस्विकं मोचनकारणं च तेनैवोक्तम्।

यथा,

तवाहमित्युपगतो युद्धप्राप्तः पणे जितः।
प्रतिशीर्षप्रदानेन मुच्येरंस्तुल्यकर्मणा॥ (३४)
कृतकालव्यपगमात्कृतकोऽपि विमुच्यते। (३३)

त्वद्दास इति अभ्युपगतः । भक्तदासः सर्वकालं भक्तार्थमेव दासत्वमभ्युपगम्य यः प्रविष्टः । वडवाहृतः वडवा गृहदासी तया हृतः तल्लोभेन तामुद्वाह्य दासत्वेन प्रविष्टः । य आत्मानं विक्रीणीते असावात्मविक्रेता—इत्येवं पञ्चदशप्रकाराः ।

यत्तु मनुना ( अ. ८ श्लो. ४१५ )

ध्वजाहृतो भक्तदासो गृहजः क्रीतदात्रिमौ ।
पैतृको दण्डदासश्च सप्तैते दासयोनयः ॥

इति सप्तविधत्वमुक्तं, तत्तेषां दासत्वप्रतिपादनपरम् । न तु परिसंख्यार्थम् ।

तत्रैषां शिष्यांन्तेवासिभृतकाधिकर्मकृद्दासानां मध्ये शिष्यवृत्तिः प्रागेव प्रतिपादिता, (याज्ञ.१।२७)

आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत् ।

इत्यादिना । अधिकर्मकृद्भृतकानां तु वेतनादानप्रकरणे वक्ष्यते, ( याज्ञ. २ । १९६ )

यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम् । इत्यादिना ।

मि० अव. दासान्तेवासिनोस्तु धर्मविशेषं वक्तुमाह ।

या० बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते ।
स्वामिप्राणप्रदो भक्तत्यागात्तन्निष्क्रयादपि ॥१८२॥

मि० बलात् बलावष्टम्भेन यो दासीकृतः । यश्चौरैरपहृत्य विक्रीतः । अपिशब्दादाहितो दत्तश्च स मुच्यते । यदि स्वामी न मुञ्चति तर्हि राज्ञा मोचयितव्यः ।

उक्तं च नारदेन, ( व्यव. ५ । ३८ )

चौरापहृतविक्रीता ये च दासीकृता बलात् ।

न्यं साधारणधर्मं इत्येवं मनीषिणो महर्षय आहुरित्यर्थः । *जातीति । तेषां पञ्चानां मध्ये शिष्यादिरूपचतुर्विधसमुदायस्य जात्या स्वस्वजात्यनुरूपं शुभमिति यावत् तादृशं कर्म कुर्वतस्तु कर्मकर इत्येवंरूपोऽवान्तरविशेषो मनीषिभिरुक्त इत्यर्थः । कर्मकरत्वं चतुर्णामप्यवान्तरजातिरित्यर्थः । * वृत्तिरेव चेति । विशेष इत्यनुवर्त्तते । तथा वृत्तिर्वर्तनमपि शुभकर्मकरत्वेन विशेषो विशिष्टं, शुभकर्मकरत्वं विशिष्टा वृत्तिरित्यर्थः। अत एव चसंगतिः ।

३ । उक्तमेव विविच्याह * कर्मापीति । * कर्मकृतां, चतुर्णाम् । तत्राशुभमाह * गृहद्वारेत्यादि । अत्र द्वंद्वोत्तरपदकद्वंद्वस्य शोधनेन षष्ठीसमासः । उत्तरार्द्धे प्रत्येकमितरेतरद्वंद्वद्वयगर्भेतरेतरद्वन्द्वोत्तरपदकषष्ठीसमासोत्तरपदकसमाहारद्वन्द्वः।अग्रे यथासंख्यमन्वयः। * इच्छत इति । इच्छतः स्वामिनः स्वाङ्गरन्ततः पर्यन्ते उपस्थानं सेवनं चेत्यर्थः । *शुभमिति । अतोऽन्यत् यत् तत् परं केवलम् उत्कृष्टं वा शुभमित्यर्थः ।

४ । शिष्यान्तेवासीत्यादिनारदवचनांशं विशिष्य व्याचष्टे * तत्रेति । तेषां मध्ये इत्यर्थः । वेदग्रहणं शास्त्रस्याप्युपलक्षणम्। शिल्पं कौशलम् । * अधिष्ठाता नियन्ता ।

५ । अशुचीत्यादि तथैव व्याचष्टे *अशुचीति । शिष्याद्युद्दिष्टानां मध्ये भृतकत्रैविध्यमाह * भृतक इति । * अत्र, एषां मध्ये । * तदुक्तमिति । नारदेनेति शेषः । अत्रेति प्राग्वत् । आयुधजीवी आयुधीयः । * भारवाहीति । तद्वहनशीलः । भारवाह इति पाठान्तरम् ।

६ । दासास्त्रिपञ्चकाः दासास्तु गृहजादयः इत्युक्तं, तत्प्रपञ्चयति—

निग्रहाद्वडवायास्तु मुच्यते वडवाहृतः ॥ इति।(३६)

दासेन सह संभोगनिरोधादित्यर्थः । तदेवं गृहजातक्रीतलब्धदायप्राप्तात्मविक्रयिणां स्वामिप्राणप्रदानतत्प्रसादरूपसाधारणकारणव्यतिरेकेण मोक्षो नास्ति । विशेषकारणानभिधानात् । दासमोक्षश्चानेन क्रमेण कर्त्तव्यः । (व्यव. ५ । श्लो. ४२ ४३ )

स्वं दासमिच्छेद्यः कर्तुमदासं प्रीतमानसः ।
स्कन्धादादाय तस्यासौ भिन्द्यात्कुम्भं सहाम्भसा ॥
साक्षताभिः सपुष्पाभिर्मूर्द्धन्यद्भिरवाकिरेत् ।
अदास इत्यथोक्त्वा त्रिः प्राङ्मुखं तमवासृजेत् ॥
इति तेनैवोक्तम् ॥ १८२ ॥

वा. १। *साम्प्रतामिति । गृहीतादानदण्डप्रसङ्गेनेति भावः । *अपरमिति । तेषामाद्यमित्यादौ मनुनाऽपरिगणितत्वात्ततो भिन्नमेवेत्यर्थः । नारदीयं व्याचष्टे * आज्ञाकरणमिति । प्रतिपद्यते इत्यस्यार्थमाह * सम्पादयतीति । मूले व्युत्क्रमेणान्वय इत्याह *अभ्युपेत्येति । शिष्यादिचतुर्णां सामान्यसंज्ञामाह * तेषामिति । मध्ये इत्यर्थः । * कर्मकरा इति । कर्मणि भृताविति टः । यद्यपि भृतके तत्त्वं सूत्रसिद्धं भृतावित्युक्तेस्तथापि साहचर्यादन्येषामपि तत्त्वं बोध्यम् । वक्ष्यमाणानुरोधेन तेषां तत्त्वं योगरूढ्येत्याह * तेचेति । चत्वार इत्यर्थः ।

२ । *तदिदं, सर्वम् । *शास्त्रे, प्रोक्त इत्यर्थः । *चतुर्विधः, आदितः । * तेषां, मध्ये । * त्रिपञ्चका इति । त्रिः पञ्चेति त्रिपञ्च ते परिमाणं येषां ते । सुजर्थे समासः । तद्धितः कन् । तदेव विशदयति * शिष्यान्तेवासीति । * सामान्यमिति । * एषां, शिष्यादीनां पञ्चानां मध्ये । अस्वतन्त्रत्वं नाम सामा-

रहत्यादितो दत्तश्चेत्यर्थः। न: सर्वसमुच्चये इत्यादि *दत्तश्चेति।
सः, सर्वविधः। अत एव स्वाम्यादितादि विषये पृथक् आह
यदीति। बलादिनेति भावः। उक्तं चेति चो ऽर्थे। चौरेणापहृ-
ास्सन्तो विक्रीता इत्यर्थः। *हि, यतः। *दास्यं, तदेव।

१०। उत्तरार्धैकदेशं व्याचष्टे *चौरेति। उत्तरसंगतये आह
* तदिदमिति। मूलोक्तं स्वामिप्राणरक्षकत्वमित्यर्थः। * यो
षामिति। एषां दासानां पञ्चदशानां मध्ये य एव कश्चिदि-
त्यर्थः। न केवलं तावन्मात्रं किं त्वन्यदपीत्याह * पुत्रभागमि-
ति। तद्भागसदृशभागमित्यर्थः।

११। नन्वेवं भक्तत्यागादित्यादि निष्फलम् अत आह *भक्तेति।
आदिशब्दः प्रकारे। तेषां केषां चिदित्यर्थः। अत एवोक्तकर्मणा-
ह * अनाकालेति। भक्तत्यागो भुक्तिदिनादारभ्य न विवक्षित-
स्तस्य तत्राहेतुत्वादत आह * दासभावादिति। * तस्य, धनस्य।
निश्शब्दार्थमाह * सवृद्धिकस्येति। सामान्यार्थस्य प्रकरणात्क्री-
धातोर्विशेषपरत्वमित्याह * प्रत्यर्पणादिति। * विशेषोऽपीति।
अनाकालभृतांशमात्रे इति भावः। * संभक्षितमिति। दुर्भिक्षे
यत् संभक्षितं तत् कर्मणा न शुध्येतेत्यर्थः। यदीयमुपभुक्तं तदीय-
व्यापारकरणमात्रेण शुद्धिर्न, दास्यान्न निर्मुक्तिः, किं तु त-
त्कर्मकरणेन गोद्वयदानेन च शुद्धिरिति यावत्। । शि
लतो विशेष इति बोध्यम्। * अ अयमेव मू-

१२। भक्तस्येति। प्रागुक्त एवार्थः। *सद्यः, त्रेति प्र तत्कालमेव,
न तु पूर्ववदन्यदानापेक्षेति भावः। * धनं, सो। तद्वहन द्व्यमित्यस्याप-
कर्षः। प्रमुच्यते इत्यस्यानुषङ्गः। स्वामी य नोद्धरेदिति
पाठः। यदि स्वामी नैवोद्धरेत्तदा ऽऽहितोऽग्न्यादयः इत्युक्त
दास्यात्प्रमुच्यते इत्यर्थः। यद्येनमुद्धरे द्वयं धनं दत्त्वा
त तत्संमति

* दासाः पुनरिति । दासास्त्वित्यर्थः । उच्यन्ते इति शेषः । तानेव नारदोक्त्या आह * गृहजात इत्यादि । क्रमेण व्याचष्टे * गृहे इत्यादि । तत्र पत्नीपरगृहशब्दस्य लक्ष्यार्थमाह *दास्यामिति । तद्वदित्यनेन किंचिन्न्यूनता सूचिता । अन्नाकाले इत्यस्यार्थो * दुर्भिक्षे इति । मृत इत्यस्य * रक्षित इति । *आधितामिति । अन्यत्रेति भावः ।*अहं, स्याम् । * परिभाष्येति । परिभाषयित्वेत्यर्थः । * स्वयमिति । स्वयमेवागत इत्यर्थः । प्रव्रज्या संन्यासः । त्वं दास इति पाठे अग्र इत्यभ्युपगमित इति पाठः । त्वद्दास इति पाठे अहं तव दास इत्यर्थेनाग्रे इत्यभ्युपगत इति पाठः । एतावन्तं कालमहं तव दास इत्यङ्गीकारित इति मदनरत्नेऽप्युक्तम् । भक्तमन्नम् एवेनान्यव्यवच्छेदः ।

७ । मनुविरोधमनुवदति * यत्त्विति । मानवे भक्तदासः गृहजः क्रीतश्च प्रागुक्त एव । * पैतृकः, पितुरागतः । सोऽपि दायादुपगत एव । दत्त्रिमोऽपि कृत एव । ध्वजाहृतः ध्वजेन तद्वता युद्धेनाहृत इति सोऽपि युद्धप्राप्त एव।प्रव्रज्यातश्च्युतस्य प्रायश्चित्तमकुर्वतः पुंसो दण्डार्थमेवामरणाद्दास्यं राज्ञो भवतीति दण्डदासः प्रव्रज्यावसित एवेति बोध्यम् । * दासेति । अयं धर्मपरः । दासत्वाश्रया दासा इति यावत् ।

८। परिहरति * तदिति । तथा च सप्तग्रहणं न्यूनसंख्याव्यवच्छेदार्थं न तु परिगणितभिन्ननिषेधार्थम् । तदाह * न तु परीति ।

९। एवं प्रकरणोपोद्घातत्वेन स्मृत्यन्तरोक्तमुक्त्वा मूलविषयं विवेचयितुं तदवतारयितुं चाह * तत्रैषामित्यादि । तत्र तथा सति । *अधिकर्मकृद्भृतकानामिति । अभ्यर्हितत्वात्पूर्वनिपातः। भृतकत्रैविध्याद् बहुवचनम् । वृत्तिरित्यनुषज्यते । मूलमवतारयति *दासान्तेवासीति । * अपिशब्दादिति । चौरैरित्यनुवर्तते । चौरै-

मि० ब्राह्मणादीनां वर्णानामानुलोम्येन दास्यम्। ब्राह्मणस्य क्षत्रियादयः। क्षत्रियस्य वैश्यशूद्रौ। वैश्यस्य शूद्र—इत्येवमानुलोम्येन दासभावो भवति, न प्रातिलोम्येन। स्वधर्मत्यागिनः पुनः परिव्राजकस्य प्रातिलोम्येनापि दासत्वमिष्यतएव।

यथाह नारदः, (व्यव. ५। ३९)

वर्णानां प्रातिलोम्येन दासत्वं न विधीयते।
स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता॥ इति॥१८३॥

बा० १। अवशिष्टगतिमाह * प्रव्रज्येति। तुर्वैलक्षण्ये। एवं सति प्रायश्चित्तविध्यानर्थक्यापत्तेराह * अनभ्युपगतेति। तथा सति तु पुनस्तस्य प्रव्रज्यैवेति भावः। एवेनान्यव्यवच्छेदः। अवतरणार्थमत्र प्रतिपादयन् आमरणेत्यस्यार्थमाह * मरणमेवेति। * अन्तो, मोक्षः। *अन्तरा, मध्ये जीवनदशायाम्। *प्रतिमोक्षः, तत्प्रतिपक्षभूतो मोक्षः। एतेन आ समन्तात् मरणमेवान्तो यस्य स एव तथेति विनयादित्वात्स्वार्थे ठगिति सूचितम्।

उ. २। * दासभावः, दासत्वम्। प्रतिलोमशब्दो धर्मपरस्तृतीयान्तात्तसिरित्याह *न प्रातिलोम्येनेति। नन्वेवम् अस्योक्तमूलविरोधोऽत आह *स्वधर्मेति। *पुनः, तु। निषेधशेषमाह *स्वधर्मेति। एवं निषेधमुक्त्वा विधिमाह *दारवादिति। यथाऽऽनुलोम्येनैव विवाहो न प्रातिलोम्येन तथा दासत्वमपीत्यर्थः॥१८३॥

मि० अव० अन्तेवासिधर्मानाह।

या० कृतशिल्पोऽपि निवसेत्कृतकालं गुरोर्गृहे।
अन्तेवासी गुरुप्राप्तभोजनस्तत्फलप्रदः॥१८४॥

मि० अन्तेवासी गुरोर्गृहे कृतकालं वर्षचतुष्टयमा-

विना नैव मुक्तिरिति बोध्यम् । ऋणदासे आह * ऋणं त्विति ।

१३। * तथा, किं च । क्रमेणाह *तवाहमित्यादि । *हृतानां च, तेषामपि । * तेनैव, नारदेनैव । प्रतिनिधिः प्रतिशीर्षपदार्थः।तुल्यं कर्म यस्य देयसाम्येन, तुल्यव्यापारेण पुरुषान्तरदानेनेत्यर्थः । कर्मणा स्वतुल्यपुरुषान्तरं दत्त्वा मुच्येरन्निति यावत् । निग्रहादित्यस्यार्थमाह * दासेन सहेति । वडवाया इति शेषः । दासीस्वामिकृतादिति भावः । प्रागुक्तफलितं प्रागुक्तमेवोपसंहरन्नाह * तदेवमिति । तस्मादुक्तप्रकारेणेत्यर्थः । क्रमेणाह * गृहेति । स्वामिप्राणप्रदत्वमुपलक्षणमित्याह * तत्प्रसादेति । स्वामिप्रसादेत्यर्थः । स च तथा वाऽन्यथा वेति भावः । यद्वा स्वामिप्राणप्रदत्वस्य साक्षान्मोचने कारणत्वाभावादाह * तदिति । तेन यस्तत्प्रसाद इत्यर्थः ।

१४। तन्मोचने विधिमाह *दासेति । * अनेन, वक्ष्यमाणेन । * स्वं, स्वीयम् । * तस्य, दासस्य । स्कन्धात् सजलं कुम्भमादायासौ स्वामी भिन्द्याद्भूमावित्यर्थः । त्रिरिति पूर्वान्वयि । * तेनैव, नारदेनैव । यत इति शेषः ॥ १८२ ॥

मि० अव० प्रव्रज्यावसितस्य तु मोक्षो नास्तीत्याह ।

या० प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकः ।

मि० प्रव्रज्या संन्यासस्ततोऽवसितः प्रच्युतः अनभ्युपगतप्रायश्चित्तश्चेद्राज्ञ एव दासो भवति । मरणमेव तद्दासत्वस्यान्तो नान्तरा प्रतिमोक्षोऽस्ति ।

मि० अव० वर्णापेक्षया दास्यव्यवस्थामाह ।

या० वर्णानामानुलोम्येन दास्यं न प्रातिलोमतः ॥१८३॥

२। एवं तद्धर्ममुक्त्वाऽऽचार्यधर्ममाह * आचार्य इति। पुन-स्तद्धर्ममाह * शिक्षयन्तमिति। * बलादिति। तद्वान्यवं राज्ञा वेति भावः। अत एवाह * वधेनेति। * शिक्षितोऽपीति। कृत-कालात्प्रागिति भावः। * समाप्नुयादिति। तन्निकटे समापयेदित्यर्थः। * तत्र,तद्गृहे। * समये, अतीते सति। * प्रदक्षिणं, समदक्षिणम्। अर्थआयजन्तम्। यथाश्रुतं वा। आचार्यप्रदक्षिणामिति पाठान्तरम्। शक्तितश्चानुपाल्यैनमिति पाठः। * एनम् आचार्यम् यथाशक्ति * अनुपाल्य तोषयित्वा स्वगृहं प्रति परावर्त्यागच्छतीत्यर्थः। * ताडनेति। दण्डादिकृतेत्यर्थः॥ १८४॥

इत्यभ्युपेत्याशुश्रूषाख्यं विवादपदम्।

---

युर्वेदादिशिल्पशिक्षार्थं त्वद्गृहे वसामीति यावदङ्गीकृतं तावत्कालं वसेत्, यद्यपि वर्षचतुष्टयादर्वागेव लब्धापेक्षितशिल्पविद्यः । कथं निवसेत् । गुरुप्राप्तभोजनः–गुरोः सकाशात् प्राप्तं भोजनं येन स तथोक्तः । तत्फलप्रदः–तस्य शिल्पस्य फलमाचार्याय प्रददातीति तत्फलप्रदः । एवं भूतो वसेत् ।

नारदेन विशेषोऽप्यत्र दर्शितः, (व्यव. ५)

स्वशिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया ।
आचार्यस्य वसेदन्ते कृत्वा कालं सुनिश्चितम् ॥(१६)
आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम् ।
न चान्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेत् ॥ (१७)
शिक्षयन्तमदुष्टं य आचार्यं संपरित्यजेत् ।
बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हति ॥ (१८)
शिक्षितोऽपि कृतं कालमन्तेवासी समाप्नुयात् ।
तत्र कर्म च यत्कुर्यादाचार्यस्यैव तत्फलम् ॥ (१९)
गृहीतशिल्पः समये कृत्वाऽऽचार्यं प्रदक्षिणम् ।
शक्तितश्चानुमान्यैनमन्तेवासी निवर्तते ॥(२०)इति ।

वधशब्दोऽत्र ताडनार्थः । दोषस्याल्पत्वात् ॥ १८४ ॥

इत्यभ्युपेत्याशुश्रूषाख्यं विवादपदम् ।

वा० १। * अन्तेवासिधर्मोनाहेति । एवं दासे धर्मानुक्तेत्यादिः । * कृतकालमिति । तद्विशेषणार्थं पूर्वशेषमाह * यद्यपीति । सर्वशिल्पग्रहे कालाद्यभावादाह * अपेक्षितेति । तत्र प्रकारजिज्ञासामाह *कथमिति । *फलं, भृतिम् । * स्वशिल्पमिति । बान्धवानां भ्रात्रादीनाम् अनुज्ञया आज्ञया स्वं स्वजातिविहितं शिल्पं ग्रहीतुमित्याद्यर्थः । * अन्ते, अन्तिके ।

संभवः। कर्मेत्यन्तेनान्वयमुखेन संविद्व्यतिक्रमाख्यविवादपदस्य प्रतिपक्षभूतमुक्त्वा तद्विवादपदं स्मृतमित्युक्तं तदाह * तन्नातिक्रम्यमाणमिति। मूलमवतारयति * तदुपक्रमार्थमिति। प्रत्यासत्तेराह * स्वेति। नपुंसकत्वोपपत्तये बहुवचनलभ्यं तत्पदार्थमाह * ब्राह्मणव्रातमिति। त्रैविद्यत्वादेरन्यतः सिद्धौ राजनियोज्यत्वासंभवादाह * कृत्वेति। शेषोऽयं, कृत्वा चेत्यर्थः।

अत एव बृहस्पतिः,

वेदविद्याविदो विप्रान् श्रोत्रियानग्निहोत्रिणः।
आहूय स्थापयेत्तत्र तेषां वृत्तिं प्रकल्पयेत् ॥
अनाच्छेद्यकरास्तेभ्यः प्रदेया गृहभूमयः। इति।

स्वशब्दार्थमाह * वर्णेति। बहुव्रीहिः। धर्मशब्दार्थमाह * श्रुतीति ॥ १८५ ॥

मि० अव. एवं नियुक्तैस्तैर्यत्कर्म कर्तव्यं तदाह।

या० निजधर्माविरोधेन यस्तु सामयिको भवेत्।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः॥ १८६ ॥

मि० श्रौतस्मार्तधर्मानुपमर्देन समयान्निष्पन्नो यो धर्मो गोप्रचारोदकरक्षणदेवगृहपालनादिरूपः सोऽपि यत्नेन पालनीयः। तथा राज्ञा च निजधर्माविरोधेनैव यः सामयिको धर्मः "यावत्पथिकं भोजनं देयम् अस्मदरातिमण्डलं तुरङ्गादयो न प्रस्थापनीया" इत्येवंरूपः, सोऽपि रक्षणीयः॥ १८६ ॥

वा० १। * तैः, ब्राह्मणैः। निजेत्यस्यार्थः * श्रौतेति। वर्णाश्रमनिमित्तकेत्यादिः। * समयात्, पारिभाषिकधर्मेण व्यवस्थाना-

## अथ संविद्व्यतिक्रमप्रकरणम् ॥ १५ ॥

मि० उ. संप्रति संविद्व्यतिक्रमः कथ्यते । तस्य च लक्षणं—

नारदेन व्यतिरेकमुखेन दर्शितम्, (व्यव. १०।१)
पाखण्डिनैगमादीनां स्थितिः समय उच्यते ।
समयस्यानपाकर्म तद्विवादपदं स्मृतम् ॥ इति ।

पारिभाषिकधर्मेण व्यवस्थानं समयः तस्यानपाकर्म अव्यतिक्रमः परिपालनं, तद् व्यतिक्रम्यमाणं विवादपदं भवतीत्यर्थः ॥

अव. तदुपक्रमार्थं किञ्चिदाह ।

या० राजा कृत्वा पुरे स्थानं ब्राह्मणान्न्यस्य तत्र तु ।
त्रैविद्यं वृत्तिमद् ब्रूयात्स्वधर्मः पाल्यतामिति ॥ १८५ ॥

मि० राजा स्वपुरे दुर्गादौ स्थानं धवलगृहादिकं कृत्वा तत्र ब्राह्मणान् न्यस्य स्थापयित्वा तद्ब्राह्मणव्रातं त्रैविद्यं वेदत्रयसंपन्नं वृत्तिमद् भूहिरण्यादिसंपन्नं च कृत्वा स्वधर्मो वर्णाश्रमनिमित्तः श्रुतिस्मृतिविहितो भवद्भिरनुष्ठीयतामिति तान् ब्राह्मणान् ब्रूयात् ॥१८५॥

बा. १। *संप्रतीति। अङ्गीकारत्यागस्य पूर्वत्र सत्त्वेन तत्प्रसङ्गादिति भावः। नैगमादीति आदिना श्रेण्यादित्रैविद्यादीर्ग्रहणम्। अस्यार्थमाह * पारिभाषिकधर्मेणेति।धर्मशास्त्रपरिभाषां कृत्वेत्यर्थः। एतेन तत्रत्यस्थितिशब्दो विशेषपर इति सूचितम्। तस्याप्यर्थमाह * परिपालनमिति। यद्यपि तच्छब्दस्य प्रक्रान्तपरामर्शित्वात्परिपालनस्यैव विवादपदत्वं प्राप्नोति तथापि बाधात्तद-

दिपरिग्रहः । एवमग्रेऽपि । ग्रामदेशशब्दौ तत्स्थजनबोधकौ जघन्यवृत्त्या । संघो वणिगादिसमूहः । इदमस्माभिः कार्यं परिहार्यं वेत्येवंरूपं संकेतं सत्यादिशपथेन कृत्वा तन्मध्ये यो नरो लोभादिनाऽतिक्रामेदित्याद्यर्थः ।

२ । पक्षान्तराण्याह *निवृतेति । निरस्येनेत्यर्थः । *समयव्यभिचारिणं, संविद्व्यतिक्रमकारिणम् । चतुःसुवर्णमित्यादि समाहारद्विगुः । चतुःसुवर्णानिति पाठान्तरम् । राजतं शतमानं च विंशत्यधिकरक्तिकाशतत्रयपरिमितं रजतम् ।*निर्वासनेति । सर्वस्वहरणाद्यभावात् केवलनिर्वासनेत्यर्थः । * निष्कं, सुवर्णाश्चत्वारः । सुवर्णं कर्षमितम् । * शतमानेति । राजतेत्यादिः । इदं त्रयं विषयलाघवगौरवापेक्षया व्यस्तं समस्तं वेति तु तद्व्याख्यातारः ॥ १८७ ॥

मि० अव. इदं च तैः कर्तव्यमित्याह ।

या० कर्तव्यं वचनं सर्वैः समूहहितवादिनाम् ॥

मि० गणिनां मध्ये ये समूहहितवदनशीलास्तद्वचनमितरैर्गणानामन्तर्गतैरनुसरणीयम् ॥

अव. अन्यथा दण्ड इत्याह ।

या० यस्तत्र विपरीतः स्यात्स दाप्यः प्रथमं दमम् ॥१८८॥

मि० यस्तु गणिनां मध्ये समूहहितवादिवचनप्रतिबन्धकारी राज्ञा प्रथमसाहसं दण्डनीयः ॥ १८८ ॥

वा० १। * इदं च, इदमपि । *तैः, ब्राह्मणैः । *गणिनां, समूहिनाम् । एवमग्रेऽपि । सर्वैरित्यस्य प्रकृतार्थमाह * इतरैरिति । अन्यवचनस्य अन्यकर्तृककरणासंभवादाह * अनुसरणीयमिति ।

त्। सोऽपीति अपिना निजधर्मसमुच्चयः। एवमग्रेऽपि। * तथा, तद्वत्। * धर्म इति। कृत इति शेषः। यावत्पार्थिकमिति वीप्सायामव्ययीभावः॥ १८६॥

मि० अव. एवं समयधर्मः परिपालनीय इत्युक्त्वा तदतिक्रमादौ दण्डमाह।

या० गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत्॥ १८७॥

मि० यः पुनर्गणस्य ग्रामादिजनसमूहस्य संबन्धि साधारणं द्रव्यमपहरति, संवित् समयः तां समूहकृतां राजकृतां वा यो लङ्घयेदतिक्रामेत्, तदीयं सर्वं धनमपहृत्य स्वराष्ट्राद्विप्रवासयेन्निष्कासयेत्। अयं च दण्डोऽनुबन्धाद्यतिशये द्रष्टव्यः। अनुबन्धाल्पत्वे तु—

(अ. ८ श्लो. २१९। २२०)
यो ग्रामदेशसंघानां कृत्वा सत्येन संविदम्।
विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत्॥
निगृह्य दापयेदेनं समयव्यभिचारिणम्।
चतुःसुवर्णं षण्निष्कं शतमानं च राजतम्॥

इति मनुप्रतिपादितदण्डानां निर्वासनचतुःसुवर्णषण्निष्कशतमानानां चतुर्णामन्यतमो जातिशक्त्याद्यपेक्षया कल्पनीयः॥ १८७॥

बा० १। * समयधर्मः, सोऽपि। तदतिक्रमादाविति आदिना गणद्रव्यहरणग्रहणम्। * पुनः, तु। आदिना देशः। अत एवाह * साधारणमिति। दण्डबाहुल्यादाह * अयं चेति। * अनुबन्धो, दोषः। अपराध इति यावत्। आदिना जात्या-

नेभ्यो निवेदयेत् । अन्यथा लब्धादेकादशगुणं दण्डं दापनीयः ॥ १९० ॥

वा० १ । *समूहेति । समूहाय दत्तस्यापहारिणं गच्छस्वामि-त्यर्थः । समूहकार्याय प्रहित इति सुप्सुपेति समास इत्याह * समूहकार्यार्थमिति । तन्निष्पत्त्यर्थमित्यर्थः । प्रत्यासत्तेराह * प्रदानैरिति । एवमग्रेऽपि । लिङर्थो न विवक्षित इत्याह * लभते इति । विधिफलमाह * अप्रार्थित एवेति । अत एवाग्रे स्वय-मित्युक्तम् ।

२ । तुर्यपादार्थमाह * अन्यथेति । साकाङ्क्षत्वादाह * लब्धादिति । *एकादशगुणम्, एकादशभागम् । अपराधस्याल्प-त्वात् ॥ १९० ॥

मि० अव. एवंप्रकाराश्च कार्यचिन्तकाः कार्या इत्याह ।

या० धर्मज्ञाः शुचयोऽलुब्धा भवेयुः कार्यचिन्तकाः ।
कर्तव्यं वचनं तेषां समूहहितवादिनाम् ॥ १९१ ॥

मि० श्रौतस्मार्तधर्मज्ञा बाह्याभ्यन्तरशौचयुक्ताः अर्थेष्वलुब्धाः कार्यविचारकाः कर्तव्याः । तेषां वचनमितरैः कार्यमित्येतदादरार्थं पुनर्वचनम् ॥ १९१ ॥

वा० १ । *एवमिति । वक्ष्यमाणेत्यर्थः । चस्त्वर्थे व्युत्क्रमे च । विनिगमनाविरहादाह * श्रौतेति । एवमग्रेऽपि । धर्मलुब्धत्वस्य गुणत्वादाह * अर्थेष्विति । चिन्तनमात्रस्यानुपयोगादाह * विचारका इति । भवेयुरित्यत्र ण्यर्थान्तर्भाव इत्याह * कर्तव्या इति । अत एवावतरणमपि सङ्गच्छते । * तेषामिति । समूहेत्याद्यादिः । प्रत्यासत्तेराह * इतरैरिति । उक्तार्थे पौनरुक्त्यं परिहरति * आदरेति ॥ १९१ ॥

उ. २। * अन्यथा, तदननुसरणे। तत्रेत्यस्यार्थो *गणिनामिति। विपरीत इत्यस्यार्थः * समूहेति। * प्रतिबन्धेति। प्रतिपंथेति पाठान्तरम्। *राज्ञेति। स इति मौल एवादिः। यच्छब्दोपादानेन तस्यार्थसिद्धत्वात्तु तदनुक्तिरिति भावः। दममित्यस्यार्थः * साहसमिति ॥ १८८ ॥

मि० अव. राज्ञा चेत्थं गणिषु वर्तनीयमित्याह।

या० समूहकार्यआयातान्कृतकार्यान् विसर्जयेत्।
स दानमानसत्कारैः पूजयित्वा महीपतिः ॥ १८९ ॥

मि० समूहकार्यनिर्वृत्त्यर्थं स्वपार्श्वं प्राप्तान् गणिनो निर्वर्तितात्मयिप्रयोजनान् दानमानसत्कारैः स राजा परितोष्य विसर्जयेत् ॥ १८९ ॥

बा० १। मूले समूहकार्ये इति सतिसप्तमी। तया च निमित्तत्वं फलति। कार्यशब्दश्च तन्निष्पत्तिपरः। तदाह * समूहकार्यनिर्वृत्त्यर्थमिति। तेनोभयथाऽर्थान्तरनिरासः। प्रकृतत्वादाह * स्वेति। कृतेत्यस्यार्थो * निर्वर्तितेति। मानोऽभ्युत्थानादिकृतः। सत्कारोऽर्घ्यपाद्यादिकृतः। स महीपतिरित्यन्वय इत्याह * सराजेति। पूजयित्वेत्यस्य तात्पर्यार्थं मुख्याभावादाह *परितोष्येति ॥ १८९ ॥

मि० अव. समूहदत्तापहारिणं प्रत्याह।

या० समूहकार्यप्रहितो यल्लभेत तदर्पयेत्।
एकादशगुणं दाप्यो यद्यस्मै नार्पयेत्स्वयम् ॥ १९० ॥

मि० समूहकार्यार्थं महाजनैः प्रेरितो राजपार्श्वे यद्धिरण्यवस्त्रादिकं लभते तत् अप्रार्थित एव महाज-

अत एव नारदः, ( व्यव. १० श्लो. २।३ )

पाषण्डिनैगमश्रेणिपूगव्रातगणादिषु ।
संरक्षेत्समयं राजा दुर्गे जनपदे तथा ॥
यो धर्मः कर्म यच्चैषामुपस्थानविधिश्च यः ।
यच्चैषां वृत्त्युपादानमनुमन्येत तत्तथा ॥ इति ॥ १९२ ॥

इति संविद्व्यतिक्रमप्रकरणम् ।

---

मि० अव. इदानीं त्रैविद्यानां प्रतिपादितं धर्मं श्रे-
ण्यादिष्वतिदिशन्नाह ।

या० श्रेणिनैगमपाखण्डिगणानामप्ययं विधिः ।
भेदं चैषां नृपो रक्षेत्पूर्ववृत्तिं च पालयेत् ॥ १९२ ॥

मि० एकपण्यशिल्पोपजीविनः श्रेणयः । नैगमाः ये वेदस्याप्तप्रणीतत्वेन प्रामाण्यमिच्छन्ति पाशुपतादयः । पाखण्डिनो ये वेदस्य प्रामाण्यमेव नेच्छन्ति नग्नाटसौगतादयः । गणो व्रातः आयुधीयादीनामेककर्मोपजीविनाम् । एषां चतुर्विधानामप्ययमेव विधिः, यो निजधर्माविरोधेनेत्यादिना प्रतिपादितः । एषां च श्रेण्यादीनां भेदं धर्मव्यवस्थां नृपो रक्षेत् । पूर्वोपात्तां वृत्तिं च पालयेत् ॥ १९२ ॥

इति संविद्व्यतिक्रमप्रकरणम् ॥

वा० १ । *इदानीं, तदनन्तरम् । एकाभ्यां पण्यशिल्पाभ्यामित्यर्थः । * पाशुपतादय इति । तन्त्राध्ययनपूर्वकानुष्ठातार इत्यर्थः । आदिना पाञ्चरात्राद्यध्येतारः, नैयायिकादयश्च । नग्नाटः दिगम्बरः । * आयुधीयादीति । आयुधजीव्यादीनामित्यर्थः । साधारणमाह *एकेति । "समानकर्मकराः कारवः श्रेणयः, नानापौरसमूहा नैगमाः, प्रव्रज्यावसिताः पाषण्डिनः, गणो ब्राह्मणसमूह" इति कल्पतरुः ।

२ । एवं पदार्थानुक्त्वा वाक्यार्थमाह * एषामिति । उत्तरार्धार्थमाह * एषां चेति । प्रसिद्धार्थासंभवात्प्रकृतार्थमाह * धर्मेति । * पूर्वोपात्तां, पूर्वदत्ताम् ।

पोक्षादिकं यथाज्ञात्वा रक्षणीयम् । इतरथा कृष्यादि-निष्पत्त्यनुपपत्तेः ॥ १०३ ॥

बा० १। *संभृतीति । तत्तसङ्गादेवेति भावः। *भृतानां, भृ-त्यानाम् । क्वचित्तथैव पाठः । दानादानयोर्विधी तयोः क्रम इत्यर्थः । पूर्वं नोक्तोऽस्यैवारम्भे उक्तत्वात् अत आह * वक्ष्य-माणेति । अत्रैवेति भावः । तदुक्तेः शेषमाह * यत्रेति ।

२। एवं स्मृत्यन्तरोक्तलक्षणके तत्र विवादे निर्णयमदर्शको मूलक्कादिति मूलमवतारयति * तत्रेति । उक्ताख्यविवादपदे इत्यर्थः । आवहेदित्यस्यार्थो * दद्यादिति । तृतीयपादार्थमाह *यदेति। सर्वं वाक्यमिति न्यायेनाह * अगृहीते एवेति । तत्फ-लमाह * न द्विगुणमिति । अत्रैव विषये पक्षान्तरमाह * पश्चा-ऽङ्गीति । असममिति छेदः, तस्य बलादित्यर्थो, दाप्य इत्यस्य दत्त्वा कारणीय इत्यर्थ इति भावः । प्रतिश्रुत्याङ्गीकृत्येतिपूर्वा-न्वयि । *कार्यः, कारणीयः। * तेनैव, नारदेनैव । तुर्यपादेनेति भावः । * भृतायेति। भृताय भृत्यायादिमध्यावसानेषु यथाक्रम-मैच्छिककमपनतिक्रम्य उक्तसमयमैच्छिकमनतिक्रम्येति यावत् । तेन क्रमेण वेतनं दत्त्वा कर्म, कारयेदिति शेषः । वेतनस्वरूपमाह *कर्मण इति । कर्मणोऽनुसारेण यत् मध्यस्थैर्विनिश्चितं क-ल्पितं द्रव्यं तद्वेतनमित्यर्थः । तथा चानेन भृतिस्वरूपमप्युक्तम् । तुर्यपादार्थमाह * वैश्येति । उपकरणं तत्तत्कर्मयोग्यसामग्री । त-त्र तां क्रुपावाह * लाङ्गलादीनामिति । प्रग्रहो रज्जुः । योक्त्रं केशादिनिर्मितम् । विधिसार्थक्यायाह * इतरथेति । तदरक्षणे इत्यर्थः ॥ १९३ ॥

मि० अव. भृतिमपरिच्छिद्य यः कर्म कारयति तं प्रत्याह ।

अथ वेतनादानप्रकरणम् ॥ १९ ॥

मि॰ उ. संप्रति वेतनस्यानपाकर्माख्यं व्यवहारपदं प्रस्तूयते ।

तत्स्वरूपं च नारदेनोक्तम्, (व्यव. ६ । १)

भृतानां वेतनस्योक्तो दानादानविधिक्रमः ।

वेतनस्यानपाकर्म तद्विवादपदं स्मृतम् ॥ इति ।

अस्यार्थः । भृतानां वेतनस्य वक्ष्यमाणश्लोकैरुक्तो दानादानविधिक्रमो यत्र विवादपदे तद् वेतनस्यानपाकर्मेत्युच्यते ।

अव. तत्र निर्णयमाह ।

या॰ गृहीतवेतनः कर्म त्यजन् द्विगुणमावहेत् ।
अगृहीते समं दाप्यो भृत्यै रक्ष्य उपस्करः ॥ १९३ ॥

मि॰ गृहीतं वेतनं येनासौ स्वाङ्गीकृतं कर्म त्यजन् अकुर्वन् द्विगुणां भृतिं स्वामिने दद्यात् । यदा पुनरभ्युपगतं कर्म अगृहीते एव वेतने त्यजति तदा समं यावद्वेतनमभ्युपगतं तावद्दाप्यो न द्विगुणम् । यद्वा अङ्गीकृतां भृतिं दत्त्वा बलात्कारयितव्यः ।

कर्माकुर्वन् प्रतिश्रुत्य कार्यो दत्त्वा भृतिं बलात् ।

इति नारदवचनात् । (व्यव. ६ । ५)

भृतिरपि तेनैवोक्ता,

भृताय वेतनं दत्त्वा कर्म स्वामी यथाक्रमम् ।

आदौ मध्येऽवसाने वा कर्मणो यद्विनिश्चितम् ॥

इति ।

तैश्च भृत्यैरुपस्कर उपकरणं लाङ्गलादीनां प्रग्रह-

नमधिकं स्वामिना भृत्याय दातव्यम् ॥ १९५ ॥

या० १। *अनागतकारिणम्, आज्ञामुल्लङ्घ्यकारिणं भृत्यम्। कालं चेत्यस्य दर्पादिनोल्लङ्घयेदित्यत्रान्वयः । किंभूतो ऽत आह *पण्येति। तत्रैवेत्यादिः। आदिना क्रयः। उत्तरत्रादिनाऽऽलस्यादिः। अतीयादित्यस्यार्थं * उल्लङ्घयेदिति । द्वितीयपादार्थमाह * तस्मिन्नेवेति । कुर्यान्निति चो वार्थ इत्याह * वेति । भाग्यदाह * करोतीति । तद्येत्याद्यर्थमाह * तस्मिन्नित्यादि । तत्फलमाह * नपुनरिति । नत्वित्यर्थः । तुर्यपादार्थमाह * यदेति । स्वामितोऽपीति भावः ॥ १९५ ॥

मि० अव. अनेकभृत्यसाध्यकर्मणि भृतिदानप्रकारमाह ।

या० यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम् ।
उभयोरप्यसाध्यं चेत् साध्ये कुर्याद्यथाश्रुतम् ॥ १९६॥

मि० यदा पुनरेकमेव कर्म नियतवेतनमुभाभ्यां क्रियमाणम्, उभयोरप्यसाध्यं चेत्—व्याध्याद्यभिभवादुभाभ्याम् अपिशब्दाद्बहुभिरपि यदि न परिसमापितं, तदा यो भृत्यो यावत्कर्म करोति तावत् तस्मै तत्कृतकर्मानुसारेण मध्यस्थकल्पितं वेतनं देयं, न पुनः समम् ।

न चावयवशः कर्मणि वेतनस्यापरिभाषितत्वाददानमिति मन्तव्यम् ।

साध्ये तु—उभाभ्यां कर्मणि निर्वर्तिते यथाश्रुतं यावत्परिभाषितं तावदुभाभ्यां देयं, न पुनः प्रत्येकं कृत्स्नवेतनं, नापि कर्मानुरूपं परिकल्प्य देयम् ॥१९६॥

या० दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः ।
अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षिता ॥ १९४ ॥

मि० यस्तु स्वामी वणिक् गोमी क्षेत्रिको वा अपरिच्छिन्नवेतनमेव भृत्यं कर्म कारयति स तस्माद्वाणिज्यपशुसस्यलक्षणात्कर्मणो यल्लब्धं तस्य दशमं भागं भृत्याय महीक्षिता राज्ञा दापनीयः ॥ १९४ ॥

या० १। *अपरिच्छिद्य, अनिश्चित्य । *यः, स्वामी । सः वाणिज्यादिभेदात्त्रिविध इत्याह * वणिगित्यादि । लिङर्थो ऽविवक्षित इत्याह *कारयतीति । *सः, त्रिविधः स्वामी । तस्य साकाङ्क्षत्वादाह * तस्मादिति । वाणिज्यं च पशुश्च सस्यं चेति समाहारद्वंद्वात्पञ्चम्यन्तात्सार्वविभक्तिकस्तसिरित्याह * वाणिज्येति । पशुसस्यशब्दौ तत्कर्मोपलक्षकावित्याह * कर्मण इति । यल्लब्धं तस्य इत्यनेनासंवद्धत्वं मूले निरस्तम् ॥ १९४ ॥

मि० अव. अनाज्ञसकारिणं प्रत्याह ।

या० देशं कालं च योऽतीयाल्लाभं कुर्याच्च योऽन्यथा ।
तत्र स्यात्स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके ॥ १९५ ॥

मि० यस्तु भृत्यः पण्यविक्रयाद्युचितं देशं कालं च पण्यविक्रयाद्यकुर्वन् दर्पादिनोल्लङ्घयेत्, तस्मिन्नेव वा देशे काले च लाभम् अन्यथा व्ययाद्यतिशयसाध्यतया हीनं करोति, तस्मिन् भृतके भृतिदानं प्रति स्वामिनः छन्द इच्छा भवेत्, यावदिच्छति तावद्दद्यान्न पुनः सर्वामेव भृतिमित्यर्थः । यदा पुनर्देशकालाभिज्ञतया आधिको लाभः कृतस्तदा पूर्वपरिच्छिन्नाया भृतेरपि किमपि ध-

प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम् ॥ १९७॥

मि० न विद्यते राजदैविकं यस्य भाण्डस्य तत्तथो-क्तम्। तद्यदि प्रज्ञाहीनतया वाहकेन नाशितं तदा नाशानुसारेणासौ तद्भाण्डं दापनीयः।

तदाह नारदः, ( व्यव. ६।९ )

भाण्डं व्यसनमागच्छेद्यदि वाहकदोषतः।

दाप्यो यत्तत्र नश्येत्तु दैवराजकृतादृते ॥ इति।

यः पुनर्विवाहाद्यर्थं मङ्गलवति वासरे प्रतिष्ठमा-नस्य तत्प्रस्थानौपयिकं कर्म प्रागङ्गीकृत्य तदानीं न करिष्यामीति प्रस्थानविघ्नमाचरति तदाऽसौ द्विगुणां भृतिं दाप्यः। अत्यन्तोत्कर्षहेतुकर्मनिरोधात् ॥१९७॥

वा० १ ।अभ्युपेत्याशुश्रूषाख्ये विवादपदे शुश्रूषकः पञ्च-विध इत्युपक्रम्य चतुर्विधः कर्मकर इत्यादिना तस्य तत्त्वमुक्त्वा भृतकत्रैविध्यं दर्शितम् उत्तमस्त्वायुधीयोऽत्रेत्यनेन। तत्र गृहीत-वेतनः कर्मेत्यनेनात्र कृषीवलभृतकवेतनविषये उक्तम्। अत एव तुर्यपादस्तत्र तथैव व्याख्यातः। सांप्रतमायुधीयभारवाहकभृत-कौ प्रति विशेषं दर्शयतीत्याह * आयुधीयेति। यद्यप्यग्रे वच-ने व्युत्क्रमस्तथापि पूर्वक्रमेण पूर्वनिपातानियमेन वक्ष्यमाणाशयेन चैवमुक्तम्। भाण्डं पात्रादिकम्।

सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम्।इत्यमरः।

स्याद्भाण्डमश्वाभरणेऽमत्रे मूले वणिग्धने—

इति स एव नानार्थप्रकरणे। * तत्, तादृशं भाण्डम्। वाहकेनेत्युपलक्षणमायुधीयस्यापि । मूले नष्टमित्यत्रान्तर्भावि-वितो ण्यर्थ इत्याह *नाशितमिति। नाशानुसारेणेत्यत्र मानमाह

या० १। * अनेकभृत्येति। द्विप्रभृतिभिर्मिलित्वैतत्कर्मैतावत्या भृत्या क्रियते इति परिभाष्य क्रियमाणे कर्मणीत्यर्थः। पादत्रयस्यैकोऽर्थ इत्याह * यदा पुनरिति। आदावनेकभृत्यसाध्यकर्मस्वरूपमाह *एकमेवेति। उभयोरप्यसाध्यं चेदित्यस्यार्थमाह * व्याध्याद्यभिभवादिति। अन्यथाऽङ्गीकारस्यैवासंभवापत्तेरिति भावः। तस्येति शेषे षष्ठीत्याह * तस्माइति। वेतनस्वरूपस्य पूर्वमुक्तत्वात्तदनुरोधेन तावत्पदार्थमाह * तत्कृतेति। एकस्मिन्कर्मणि पञ्चभिः कर्मकरैर्दशभिः पणैर्भृत्या क्रियमाणे व्याध्यादिना चाशक्तैः सर्वैरपि तत्कर्म न निष्पादितं किं तु कियदेव, तत्र प्रतिपुरुषं पणद्वयं विभज्य साम्येन न देयम् अपि तु तत्तत्कर्मानुसारेण न्यूनाधिकं देयमित्यर्थः। एतेन तत्कर्मणि निष्पन्ने पूर्णे परिभाषितवेतनमपरिभाषितं स्वामिदत्तं कर्मकरा अपि स्वकृतव्यापारानुरोधेनैव विभज्य गृह्णीयुरिति सूचितम्।

२। ननु न पुनः सममित्युक्त्वा तत्कृतकर्मानुसारेण वेतनदानप्राप्त्याऽन्वयवशो विभज्य देयमिति लब्धं, तच्चानुपपन्नम्। कर्मणि समुदितनियतवेतनस्यैव परिभाषितत्वेन पृथक् पृथक् तदनुक्त्या परिभाषानुसारेण तत्र वेतनादानस्यैवौचित्यात्। अत आह *न चेति। नापीत्यर्थः। यद्यपि विभज्य दानमपरिभाषितं तथापि व्याध्यादिना तदसमाप्तेस्तत्र दोषाभावेन कर्मानुसारेण दातुमुचितमेवेति भावः।

३। तुर्यपादार्थमाह *साध्येत्विति। अस्यार्थमाह *उभाभ्यामिति। उभाभ्यामित्युपलक्षणं, बहुभिरित्यपि बोध्यम्। यथाश्रुतमित्यस्य व्याख्या *यावदिति। प्राग्वदाह *न पुनरिति॥१९६॥

मि० अव. आयुधीयभारवाहकौ प्रत्याह।

या० अराजदैविकं नष्टं भाण्डं दाप्यस्तु वाहकः।

भृतोऽनार्तो न कुर्याद्यो दर्पात्कर्म यथोदितम् ।
स दण्ड्यः कृष्णलान्यष्टौ न देयं तस्य वेतनम् ॥ इति ।
यदा पुनर्व्याधावपगतेऽन्तरितदिवसानपरिगणय्य पू-
रयति तदा लभतएव वेतनम् ।
(अ. ८ श्लो. २१६)
आर्तस्तु कुर्यात्स्वस्थः सन् यथाभाषितमादितः ।
सुदीर्घस्यापि कालस्य स्वं लभेतैव वेतनम् ॥
इति मनुस्मरणात् । यस्त्वपगतव्याधिः स्वस्थ एव
चालस्यादिना स्वारब्धं कर्माल्पोनं न करोति परेण
वा न समापयति तस्मै वेतनं न देयमिति ।
यथाह मनुः, (अ. ८ श्लो. २१७)
यथोक्तमार्तः स्वस्थो वा यस्तत्कर्म न कारयेत् ।
न तस्य वेतनं देयमल्पोनस्यापि कर्मणः ॥ इति ॥ १९४ ॥

इति वेतनादानप्रकरणम् ॥

वा० १। * किं चेति । अत्रैवान्यदप्याहेत्यर्थः । प्रक्रान्ते इत्य-स्य प्रकृतत्वात्प्रस्थानमेव विशेष्यम् । मध्ये वेति तदर्थः । तदाह * प्रक्रान्ते इति । प्रत्यासत्तेराह * भृतेरिति ।

२। स्वविरोधमेव स्वस्याह * नन्विति । * अत्रैव, प्रस्था-नविघ्नकरणरूपे एव । तस्य सप्तमो भाग इत्यस्योच्यतइति शेषः। तदवसरस्ततः पूर्वमेव । अत एवाध्यवसिते इति व्याख्यातं न तु कृते इति ! * प्रस्थानलग्नेति । अत एव तत्र तथैव व्याख्यातम् ।

३। द्वितीयपादार्थमाह * यः पुनरिति । प्रक्रान्ते इत्यनुव-र्त्तते । मार्गे समाक्रान्ते इत्यर्थः । तत्फलितमाह * गमने इति । यद्वा पथि मार्गे प्रक्रान्ते इत्यत्र वर्तमाने क्त इति तदर्थमाह ग-मने इति ।

* तदाहेति । *व्यसनं, नाशम् । * दोषतः, दोषेण बुद्धिहीनत्वरूपेण । * तत्र, भाण्डे । अनेनोक्तार्थलाभः ।

२ । उत्तरार्द्धार्थमाह * यः पुनरिति । * वासरे इति । *तदानीं, प्रस्थानलग्नवेलायाम् । द्वैगुण्ये हेतुमाह *अत्यन्तोत्कर्षेति । विवाहादिहेतुभूतप्रस्थाननिरोधादित्यर्थः । एवं च स्वतो दोषाल्पत्वेऽपि परतो दोषबाहुल्यामिति भावः ॥ २९७ ॥

मि० अव. किञ्च ।

या० प्रक्रान्ते सप्तमं भागं चतुर्थं पथि संत्यजन् ।
भृतिमर्द्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि च ॥ १९८ ॥

प्रक्रान्ते अध्यवसिते प्रस्थाने स्वाङ्गीकृतं कर्म यस्त्यजति असौ भृतेः सप्तमं भागं दाप्यः ।

नन्वत्रैव विषये प्रस्थानविघ्नकृदित्यादिना द्विगुणभृतिदानमुक्तम्, इदानीं सप्तमो भाग इति विरोध उच्यते । भृत्यान्तरोपादानावसरसंभवे स्वाङ्गीकृतं कर्म यस्त्यजति तस्य सप्तमो भागः, यस्तु प्रस्थानलग्नसमयएव त्यजति तस्य द्विगुणभृतिदानमित्यविरोधः ।

यः पुनः पथि प्रक्रान्ते गमने वर्तमाने सति कर्म त्यजति स भृतेश्चतुर्थं भागं दाप्यः । अर्धपथे पुनः सर्वां भृतिं दाप्यः । यस्तु त्याजकः कर्मात्यजन्तं त्याजयति स्वामी पूर्वोक्तप्रदेशेषु असावपि पूर्वोक्तसप्तमभागादिकं भृत्याय दापनीयः ।

एतच्च व्याधितादिविषयम् ।

( मनु अ. ८ श्लो. २१५ )

न्तादिभिर्यो दीर्घचतुरस्त्राः। आदिग्रहणादाकर्षादिक्रीडासाधनं कारितुरङ्गरथादिकं गृह्यते। नैरप्राणिभिर्यद्देवनं क्रीडा पणपूर्विका क्रियते, तथा वयोभिः पक्षिभिः कुक्कुटपारावतादिभिः चशब्दान्मल्लमेषमहिषादिभिश्च प्राणिभिर्या पणपूर्विका क्रीडा क्रियते, तदुभयं यथाक्रमेण द्यूतसमाह्वयाख्यं विवादपदम्। द्यूतं च समाह्वयश्च द्यूतसमाह्वयम्। तदुक्तं—

मनुना, (अ. ९ श्लो. २२३)

अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते।

प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वयः॥ इति।

अव. तत्र द्यूतसभाधिकारिणो वृत्तिमाह।

या० ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम्।

गृह्णीयाद् धूर्तकितवादितराद्दशकं शतम्॥ १९९॥

मि० परस्परसंप्रतिपत्त्या कितवपरिकल्पितः पणो ग्लह इत्युच्यते। तत्र ग्लहे तदाश्रया शतिका शतपरिमितादधिकपरिमाणा वा वृद्धिर्यस्यासौ शतिकवृद्धिः तस्माद् धूर्तकितवात्पञ्चकं शतमात्मवृत्त्यर्थं सभिको गृह्णीयात्। पञ्च पणा आयो यस्मिन् शते तत्पञ्चकं शतम्। तदस्मिन्वृद्ध्यायलाभेत्यादिना कन्। जितग्लहस्य विंशतितमं भागं गृह्णीयादित्यर्थः। सभा कितवनिवासार्था यस्यासौ सभिकः कल्पिताक्षादिनिखिलक्रीडोपकरणस्तदुपचितद्रव्योपजीवी सभापतिरुच्यते। इतरस्मात्पुनरपरिपूर्णशतिकवृद्धेः धूर्तकितवाद्दशकं शतं, जितद्रव्यस्य दशमं भागं

४। त्याजकोऽपि चेति व्याचष्टे * यस्त्विति । प्रत्यासत्तेरेवाह * पूर्वोक्तेति । त्रिष्वित्यर्थः । * एतच्चेति । प्रस्थानविघ्नकृदित्यारभ्य यदुक्तं तत्सर्वमित्यर्थः । ननु एवं विषयविभागे किं मानम्, अत आह * भृत इति । यो भृतः भृतिपरिक्रीतः भृत्यः तथा पाठ एव वा * अनार्त्तः व्याध्यादिरहितः दर्पादहंकाराद्यथापरिभाषितं कर्म न कुर्यात्स कृष्णलानि अष्टौ दण्ड्यः । गुञ्जापरिमितं सुवर्णं कृष्णलम् । कृष्णलानित्यपपाठः । यावत्कर्म कृतं तस्य वेतनं च न देयमित्यर्थः । इतीत्यग्रे "अनार्ते मनुना सदण्डतद्दानविधानात्" इति शेषः । *आदितः आदौ यथोक्तं तथा कुर्यात् । सुदीर्घस्येति हेतौ शेषे षष्ठी । चिरकालादपीत्यर्थः । * अपगतेति । व्याध्युपसृष्टः पश्चान्निवृत्तव्याधिराद्यः । व्याध्यसंसृष्ट एव द्वितीयः । आदिना दर्पग्रहणम् । * वेतनमिति । किंचिच्छेषकस्य कृतस्य कर्मण इत्यादिः । * स्वस्थोवा, सुस्थो वेति पाठान्तरम् । तत् स्वारब्धेत्युपलक्षणं, न कुर्यादित्यपि बोध्यम् । अल्पेन कर्मणा न्यूनस्य कृतस्यापि कर्मणः वेतनं तस्य तस्मै न देयमित्यर्थः ॥ १९८ ॥

इति वेतनादानप्रकरणम् ।

## अथ द्यूतसमाह्वयप्रकरणम् ॥ १७ ॥

मि० उ. अधुना द्यूतसमाह्वयाख्यं विवादपदमधिक्रियते । तत्स्वरूपं—

नारदेनाभिहितम्, ( व्यव. १६।१ )

अक्षवध्रशलाकाद्यैर्देवनं जिह्मकारितम् ।
पणक्रीडा वयोभिश्च पदं द्यूतसमाह्वयम् ॥

अक्षाः पाशकाः । वध्रश्चर्मपट्टिका । शलाका द-

तिरत्र नेति सूचयन् तद्व्युत्पत्तिमाह * सभेति । न राजादिसभेति भावः । व्रीह्यादीति ठन् । फलितमाह * कल्पितेति । अक्षादिरूपाणि निखिलक्रीडाया उपकरणानि सामग्रीरूपाणि कल्पितानि सम्पादितानि येनेत्यर्थः । तत्र हेतुं सूचयन्नाह * तदुपचितेति । उत्तरार्धार्थमाह * इतरस्मादिति । अस्यैव व्याख्या * अपरिपूर्णेति । अत एवायं कितव एव न तु धूर्त इति केचित् । वस्तुतोऽत्रापि तथैव पाठः ॥ १९९ ॥

मि० अव. एवं कल्पसवृत्तिना सभिकेन किं कर्तव्यमित्यत आह ।

या० स सम्यक्पालितो दद्याद्राज्ञे भागं यथाकृतम् ।
जितमुद्ग्राहयेज्जेत्रे दद्यात्सत्यं वचः क्षमी ॥ २०० ॥

मि० य एवं क्लृप्तवृत्तिर्द्यूताधिकारी स राज्ञा धूर्तकितवेभ्यो रक्षितस्तस्मै राज्ञे यथासंप्रतिपन्नमंशं दद्यात् ।तथा जितं यद् द्रव्यं तद् उद्ग्राहयेत्, बन्धकग्रहणेनासेधादिना च पराजितसकाशादुद्धरेत् । उद्धृत्य च तद्धनं जेत्रे जयिने सभिको दद्यात् । तथा क्षमी भूत्वा सत्यं वचो विश्वासार्थं द्यूतकारिणां दद्यात् ।

तदुक्तं नारदेन, ( व्यव. १६।२ )
सभिकः कारयेत् द्यूतं देयं दद्याच्च तत्कृतम्।इति॥२००॥

बा० १ । इत्यत आहेति पाठः । इत्याहेति पाठे इत्याशङ्कायामाहेत्यर्थः। कुत इत्याकाङ्क्षायामाह * राज्ञेति।*जितं यदिति । शब्दत इति भावः । द्यूतकारिणामिति शेषे षष्ठी । दद्यादित्यस्यानुषङ्गः ।

गृह्णीयादिति यावत् ॥ १९९ ॥

धा० १। *अधुनेति । महाप्रकरणसङ्गत्येति भावः । द्यूतं च समाह्वयश्च तावाख्ये यस्य विवादपदस्य तदित्यर्थः । करणभेदेऽपि तत्स्वरूपस्यैक्यादेकत्वेन निर्देशः । अप्राणिभिरक्षादिभिः साध्यं देवनं द्यूतं, प्राणिभिः कुक्कुटादिभिः साध्यं देवनं समाह्वय इति विवेकः । तदेतदुभयं नारदीयव्याख्यानेन दर्शयति *अक्षा इत्यादिना । पाशक इत्यत्राल्पार्थे कन् । अत एवाग्रे *दीर्घेति । वध्नशब्दो दन्त्योष्ठ्यादिः । *दन्तेति । गजदन्तादिविकारभूता इत्यर्थः।रथादिकमिति आदिनोष्ट्रादिपरिग्रहः।मूले देवनमित्यस्यैव व्याख्या । * पणक्रीडेति । अत्र शाकपार्थिवादिसमास इत्याह * पणपूर्विकेति । * तदुभयमिति । जिह्मेन सभिकेन कारितमिति बोध्यम् । तत्र द्यूतेति नामनामिनोरभेदः । तदाह * द्यूतेति । पदमित्यस्यार्थो * विवादेति । एकवचनोपपत्तये आह * द्यूतं चेति । समाहारद्वन्द्व इति भावः । *क्रियमाणः, क्रीडाविशेषः ।

२। एवं स्मृत्यन्तरोक्तलक्षणके तत्र विवादपदे सभिकवृत्तिप्रदर्शकं मूलमिति तदवतारयति * तत्रेति । उक्तपदे इत्यर्थः । संप्रतिपत्तिः संवादः । * पण इति । न तु वराटकानामित्यादिलक्षित इति भावः । * तदाश्रया, ग्लहाश्रया । शतशब्दो न्यूनसंख्याया व्यवच्छेदको नाधिकसंख्याया इति तस्या अप्युपलक्षणमित्याह * तदधिकेति । वक्ष्यमाणस्यात्रापि संबन्ध इत्याह * तस्मात् धूर्तेति । यत्र द्यूते शतेन तदधिकैर्वा काकिण्यादिभिः परिकल्पितं पणं जयति यः स जेता शतिकादिवृद्धिः।तस्मात् द्यूतकारात्तज्जेतुः सभाधिकारी पञ्च काकिण्यादीन् गृह्णीयादिति भावः । तदाह * जितग्लहस्येति । प्रागुक्तसभाप-

मि० अव. क्वचित् द्यूतं निषेद्धुं दण्डमाह ।

या० राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः॥२०२॥

मि० कूटैरक्षादिभिरुपाधिना च मतिवञ्चनहेतुना मणिमन्त्रौषधादिना ये दीव्यन्ति तान् श्वपदादिनाऽङ्कयित्वा राजा स्वराष्ट्रान्निर्वासयेत् ।

नारदेन निर्वासने विशेष उक्तः, ( व्यव. १७।६ )

कूटाक्षदेविनः पापान् राजा राष्ट्राद्विवासयेत् ।
कण्ठेऽक्षमालामासज्य स ह्येषां विनयः स्मृतः ॥

इति ।

यानि च मनुवचनानि द्यूतनिषेधपराणि-
( अ. ९ श्लो. २२४ )

द्यूतं समाह्वयं चैव यः कुर्यात् कारयेत वा ।
तान् सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः॥

इत्यादीनि तान्यपि कूटाक्षदेवनाविषयतया राजाध्यक्षसभिकराहितद्यूतविषयतया च योज्यानि ॥२०२॥

वा० १। प्रकृतत्वादाह * द्यूतेति । एतदर्थमाह * सभ्या इति । एवफलमाह * न तत्रेति । तद्विषये इत्यर्थः । वाक्यान्तरमाह * साक्षिणश्चेति । तएवेत्यस्य संबन्धादाह * द्यूतकारा एवेति । प्राग्वदाह * न तत्रेति । तद्विषये इत्यर्थः ।

उ० २। *क्वचित्,न तु सर्वत्र। कूटाक्षादिभिर्दीव्यतो दण्डविधानात्तादृशैरक्षादिभिर्देवनं निषिद्धम्। एवं सभिकराजाध्यक्षरहितस्थलेऽपि देवनं निषिद्धमिति बोध्यम् । *कूटैः, सकपटैः । अक्षपदमुपलक्षणमित्याह * अक्षादीति । * अक्षमालां, प्रकृताक्षादिमालाम् । सर्वज्ञानायेति भावः । * हि, यतः । * सः,

२।तृतीयपादार्थे संमतिमाह * तदुक्तमिति।*तत्कृतं, कितवेन पणीकृतं देयं तत उद्धृत्य सभिको जेत्रे दद्याच्चेत्यर्थः॥२००॥

मि० अव. यदा पुनः सभिको दापयितुं न शक्नोति तदा राजा दापयेदित्याह ।

या० प्राप्ते नृपतिना भागे प्रसिद्धे धूर्तमण्डले ।
जितं ससभिके स्थाने दापयेदन्यथा न तु ॥ २०१ ॥

मि० प्रसिद्धे अप्रच्छन्ने राजाध्यक्षसमन्विते ससभिके सभिकसाहिते कितवसमाजे सभिकेन च राजभागे दत्ते राजा धूर्तकितवमविप्रतिपन्नं जितं पणं दापयेत् । अन्यथा–प्रच्छन्ने सभिकरहिते अदत्तराजभागे द्यूते जितं पणं जेत्रे न दापयेत् ॥ २०१ ॥

या० १। ससभिके इत्यस्यार्थः *सभिकेति । धूर्तेत्यस्यार्थः *कितवेति। प्राप्ते इत्यादिव्याख्या *साभिकेनचेति। मूले स्थाने इति अन्ययं युक्तमित्यर्थकं, तदर्थमाह * अविप्रतिपन्नमिति। अर्थादाह * पणमिति । अन्यथेत्यनेनोक्तत्रितयव्यतिरेक उच्यते इत्याहोक्तक्रमेण * प्रच्छन्ने इत्यादि । *जेत्रे इति। राजेति भावः ॥ २०१ ॥

मि० अव. जयपराजयविप्रतिपत्तौ निर्णयोपायमाह ।

या० द्रष्टारो व्यवहाराणां साक्षिणश्च तएव हि ।

द्यूतव्यवहाराणां द्रष्टारः सभ्यास्तएव राज्ञा नियोक्तव्याः । न तत्र श्रुताध्ययनसंपन्ना इत्यादिर्नियमोऽस्ति । साक्षिणश्च द्यूते द्यूतकारा एव कार्याः । न तत्र स्त्रीबालवृद्धकितवेत्यादिनिषेधोऽस्ति ॥

तात्पर्यार्थमाह * प्रायश इति ।

अत एव मनुः, ( अ. ९ )

द्यूतं समाह्वयं चैव राजा राष्ट्रान्निवारयेत् ।

राज्यान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम् ॥ ( २२१ )

प्रकाशमेतत्तास्कर्यं यद्देवनसमाह्वयौ ।

तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान् भवेत् ॥ ( २२२ )

कितवान्कुशीलान् चौरान् पाखण्डस्थांश्च मानवान् ।

विकर्मस्थान् शौण्डिकांश्च क्षिप्रं निर्वासयेत्पुरात् ॥ (२२५)

एते राष्ट्रे वर्त्तमाना राज्ञः प्रच्छन्नतस्कराः ।

विकर्मक्रियया नित्यं बाधन्ते भद्रिकाः प्रजाः ॥ ( २२६ )

द्यूतमेतत्पुरा कल्पे दृष्टं वैरकरं महत् ।

तस्मात् द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥ ( २२७ )

प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत यो नरः ।

तस्य दण्डविकल्पः स्याद्यथेष्टं नृपतेस्तथा ॥ ( २२८ )

क्षत्रविट्शूद्रयोनिस्तु दण्डं दातुमशक्नुवन् ।

आनृण्यं कर्मणा गच्छेद्विप्रो दद्याच्छनैः शनैः ॥ ( २२९ )

स्त्रीबालोन्मत्तवृद्धानां दरिद्राणामरोगिणाम् ।

शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम् ॥ इति । (२३०)

अस्य द्यूतत्वाभावाल्लक्ष्यार्थं तस्याह *निर्वर्त्त्ये इति ॥ २०३ ॥

इति द्यूतसमाह्वयाख्यं प्रकरणम् ।



कण्ठे ऽक्षमालाबन्धपूर्वकविवासः । * एषां, कूटाक्षदेविनाम् । * विनयः, शिक्षेत्यर्थः ।

३। विरोधं परिहरति *यानिचेति । कूटेत्युपलक्षणमुपधेरपि । * राजेति । अत एव पूर्वं तथा प्रतिपादितम् ॥२०२॥

मि० अव. किञ्च ।

या० द्यूतमेकमुखं कार्यं तस्करज्ञानकारणात् ।

मि० यत्पूर्वोक्तं द्यूतं तत् एकमुखम् एकं मुखं प्रधानं यस्य द्यूतस्य तत्तथोक्तं कार्यम् । राजाध्यक्षाधिष्ठितं राज्ञा कारयितव्यमित्यर्थः । तस्करज्ञानकारणात्-तस्करज्ञानरूपं प्रयोजनं पर्यालोच्य । प्रायशश्चौर्यार्जितधना एव कितवा भवन्ति, अतश्चौरविज्ञानार्थमेकमुखं कार्यम् ॥

मि० अव. द्यूतधर्मं समाह्वयेऽतिदिशन्नाह ।

या० एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये ॥ २०३ ॥

मि० ग्लहे शतिकवृद्धेरित्यादिना यो द्यूतधर्म उक्तः स एव प्राणिद्यूते मल्लमेषमहिषादिनिर्वर्त्ये समाह्वयसंज्ञके ज्ञातव्यः ॥ २०३ ॥

इति द्यूतसमाह्वयाख्यं प्रकरणम् ।

बा० १ । *किं चेति । अन्यत्रापि तन्निषेद्धुम् अन्यदपि द्यूतविषये आहेत्यर्थः । मुखपदार्थः * प्रधानमिति । विशिष्टतात्पर्यार्थमेवाह * राजाध्यक्षेति । कार्यते ऽनेनेति व्युत्पत्त्या कारणशब्दः फलपरः, कर्मधारयः, ल्यब्लोपे पञ्चमीत्याह * तस्करेति । अन्यथा कारणादित्यस्य वैयर्थ्यं स्पष्टमेव ।

या० सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम् ।
क्षेपं करोति चेद्दण्ड्यः पणानर्द्धत्रयोदशान् ॥ २०४ ॥

मि० न्यूनाङ्गाः करचरणादिविकलाः । न्यूनेन्द्रिया नेत्रश्रोत्रादिरहिताः । रोगिणो दुश्चर्मप्रभृतयः । तेषां सत्येनासत्येनान्यथास्तोत्रेण च निन्दार्थया स्तुत्या । यत्र नेत्रयुगलहीन एवोऽन्ध इत्युच्यते तत्सत्यम् । यत्र पुनश्चक्षुष्मानेवोऽन्ध इत्युच्यते तत् असत्यम् । यत्र विकृताकृतिरेव दर्शनीयस्त्वमसीत्युच्यते तत् अन्यथास्तोत्रम् । एवंविधैर्यः क्षेपं भर्त्सनं करोत्यसौ अर्द्धाधिकद्वादशपणान् दण्डनीयः ।

(अ. ८ श्लो. २७४)

काणं वाऽप्यथवा खञ्जमन्यं वापि तथाविधम् ।
तथ्येनापि ब्रुवन् दाप्यो दण्डं कार्षापणावरम् ॥

इति यन्मनुवचनं, तत् अतिदुर्वृत्तासवर्णविषयम् ।

यदा पुनः पुत्रादयो मात्रादीन् शपन्ति तदा शतं दण्डनीया इति—

तेनैवोक्तम्, (मनु अ. ८ श्लो. २७५)

मातरं पितरं जायां भ्रातरं श्वशुरं गुरुम् ।
आक्षारयन् शतं दाप्यः पन्थानं चाददद्गुरोः ॥ इति ।

एतच्च सापराधेषु मात्रादिषु गुरुषु निरपराधायां च जायायां द्रष्टव्यम् ॥ २०४ ॥

वा० १। प्राग्वदाह * इदानीमिति । जातिर्ब्राह्मणत्वादिः । कुलं वंशपरम्परा । नारदीयं व्याचष्टे * देशादीनामिति । अवद्यं गर्ह्यम् । प्रत्येकयुक्तत्वं न विवक्षितमित्याह * तदुभयेति । अर्थशब्दः

## अथ वाक्पारुष्यप्रकरणम् ॥ १८ ॥

मि० उ. इदानीं वाक्पारुष्यं प्रस्तूयते ।

तल्लक्षणं चोक्तं नारदेन, (व्यव. १५ । १)

देशजातिकुलादीनामाक्रोशन्यङ्गसंयुतम् ।
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते ॥

देशादीनाम् आक्रोशन्यङ्गसंयुतम्, उच्चैर्भाषणमाक्रोशो न्यङ्गमवद्यं तदुभययुक्तं, यत्प्रतिकूलार्थमुद्वेगजननार्थं वाक्यं तद्वाक्पारुष्यं कथ्यते ।

तत्र कलहप्रियाः खलु गौडा इति देशाक्रोशः । नितान्तं खलु लोलुपा विप्रा इति जात्याक्रोशः । क्रूरचरिता ननु वैश्वामित्रा इति कुलाक्षेपः । आदिग्रहणात्स्वविद्याशिल्पादिनिन्दया विद्वच्छिल्प्यादिपुरुषाक्षेपो गृह्यते ।

तस्य च दण्डतारतम्यार्थं निष्ठुरादिभेदेन त्रैविध्यमभिधाय तल्लक्षणं—

तेनैवोक्तम्, (व्यव. १५ । श्लो. २ । ३)

निष्ठुराश्लीलतीव्रत्वात्तदपि त्रिविधं स्मृतम् ।
गौरवानुक्रमात्तस्य दण्डोऽपि स्यात्क्रमाद्गुरुः ॥
साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंयुतम् ।
पतनीयैरुपाक्रोशैस्तीव्रमाहुर्मनीषिणः ॥ इति ।

तत्र धिङ् मूर्खं जाल्ममित्यादि साक्षेपम् । अत्र न्यङ्गमिति असभ्यमवद्यं भगिन्यादिगमनं, तद्युक्तमश्लीलम् । सुरापोऽसीत्यादिमहापातकाद्याक्रोशैर्युक्तं वचस्तीव्रम् ।

अव. तत्र निष्ठुराक्रोशे सवर्णविषये दण्डमाह ।

तस्य व्याख्या * करचरणादीति । न्यूनेन्द्रिया इत्यस्य व्याख्या * नेत्रेति । यथासंख्येन नान्वय इत्याह * तेषामिति । अन्यथेत्यादेर्व्याख्या * निन्दार्थेति । सत्यादिस्वरूपमुदाहरणेन वाक्यार्थमध्ये एवाकाङ्क्षानिवृत्तये आह * यत्रेति । क्षेपार्थो * भर्त्सनमिति । अर्धोऽधमेष्विति वक्ष्यमाणैकमूलकल्पनालाघवानुरोधेनार्धन्यूनाख्ययोदशेति मूले समास इत्याशयेनाह * अर्धाधिकद्वादशेति ।

५। नन्वेवं मनुना कार्षापणादन्यूनदण्डाभिधानात्तस्य च षोडशपणात्मकत्वात्तेन विरोध इत्याह * काणं वेति। खञ्जं पादविकलम् अन्याङ्गविकलमपिवा । *तथ्येन, सत्येनापि काणादिशब्देन । अपिना ऽसत्यादिसमुच्चयः । कार्षापणः अवरो यस्मिन्दण्डे स तादृशः, अत्यन्ताल्पः कार्षापणो न तु ततो न्यून इत्यर्थः ।

६। तं परिहरति * तदतिदुर्वृत्तेति । आचारादिभिरत्यन्तनिकृष्टसवर्णेत्यर्थः । तथा च तादृशसवर्णेन यदि सवर्ण एवाक्षिप्यते तथा, तदा तद्विषय एव दण्डो न सर्वविषय इति विषयभेदान्न विरोध इति भावः ।

७। विशेषमाह * यदा पुनरिति । * शतं, पणाः । * तेनैव, मनुनैव । * आक्षारयन्, अभिशपन् । * अददत्, अत्यजन् ।

८। ननु जायायाः शापे मात्राद्यभिशापसाम्येन दण्डविधानं न युक्तमत आह * एतच्चेति । * गुरुषु, पूज्येषु । गुरुर्भिन्नं निमित्तम् । एतेन भार्यादीनां तत्साम्येन दण्डविधानं समाधेयमिति कुल्लूकभट्टोक्तं समाहितम् । मेधातिथिस्त्वाक्षारणं भेदनमुक्त्वा तनयं गुरुमिति पाठमङ्गीकृत्य मात्रादीनां मिथो

प्रयोजनवाचीत्याह * उद्वेगेति । देशाद्याक्रोशानुदाहरणत आह *तत्रेति । तेषां मध्ये इत्यर्थः । * देशाक्रोशः, देशनिन्दा । लोलुपः सतृष्णः । चारितमाचरणम् । वैश्वामित्रास्तत्पुत्रास्तत्पुत्रादयः । *स्त्रविद्येति । साक्षात्पुरुषनिन्दामकुर्वता तन्निन्दाशयेनैव स्वयं विद्वानपि अविद्वानिव स्वीयविद्याशिल्पादिनिन्दया यत्र तद्विद्याविषयनैपुण्यमस्ति यत्र वा शिल्पविद्यायां परः कुशलस्तद्विद्ज्जनाद्यधिक्षेप इत्यर्थः ।

२ । * तस्य चेति । वाक्पारुष्यस्येत्यर्थः । त्रैविध्ये ऽन्वयः । तत्र चेति पाठान्तरम् । तदा ऽव्यवहितान्वयः । * दण्डेति । दण्डवैषम्याभिधानार्थमित्यर्थः । * निष्ठुरेति । तद्रूपसंज्ञाभेदेनेत्यर्थः । * तल्लक्षणं, निष्ठुरादिलक्षणमपि । * तेनैव, नारदेनैव । * तदपि, वाक्पारुष्यमपि । *तस्य, त्रिविधस्य । निष्ठुराक्षेपादश्लीलाक्षेपो गुरुः, ततस्तीव्राक्षेपो गुरुरित्यर्थः । साक्षेपमित्यादि व्याचष्टे * तत्रेति । तेषां मध्ये इत्यर्थः । त्वामित्यस्य विशेषणद्वयम् । धिग्योगे द्वितीया । जाल्मो ऽसमीक्ष्यकारी स्यात् ।

३। ननु पूर्वं न्यङ्गमवद्यमित्युक्तम् । तच्चावद्यत्वं निष्ठुरादिषु त्रिषु वाक्पारुष्यभेदेषु साधारणमिति अत्राश्लीलरूपवाक्पारुष्यस्य न्यङ्गसंयुतमिति विशेषलक्षणकथनमयुक्तम्, अत आह *अत्रेति । तथा चासभ्यरूपो ऽवद्यविशेषो न्यङ्गशब्दार्थ इति भावः। तत्स्वरूपमाह *भगिनीति । पतनीयैरित्यत्र साकाङ्क्षत्वाच्छेपमाह * युक्तमिति ।

४ । अथ मूलमवतारयति *तत्रेति । तेषां मध्ये इत्यर्थः । असवर्णविषये वक्ष्यमाणत्वादाह * सवर्णेति । न्यूनाङ्गेत्यत्र द्वंद्वोत्तरपदकबहुव्रीहिपूर्वपदकद्वंद्व इत्याशयेनाह * न्यूनाङ्गा इति ।

मि० वर्णा ब्राह्मणादयः । जातयो मूर्द्धावसिक्ता-द्याः । वर्णाश्च जातयश्च वर्णजातयः । उत्तराश्च अध-राश्च उत्तराधराः । वर्णजातयश्च ते उत्तराधराश्च व-र्णजात्युत्तराधराः । तैः वर्णजात्युत्तराधरैः परस्पर-माक्षेपे क्रियमाणे दण्डस्य प्रणयनं प्रकर्षेण नयनमूहनं वेदितव्यम् ।

तच्च दण्डकल्पनमुत्तराधरैरिति विशेषोपादाना-दुत्तराधरभावापेक्षयैव कर्तव्यमित्यवगम्यते । यथा मूर्द्धावसिक्तं ब्राह्मणाद्धीनं क्षत्रियादुत्कृष्टं चाक्रुश्य ब्राह्मणः क्षत्रियाक्षेपनिमित्तात्पञ्चाशत्पणदण्डात्कि-ञ्चिदधिकं पञ्चसप्तत्यात्मकं दण्डमर्हतीति । क्षत्रियोऽपि तमाक्रुश्य ब्राह्मणाक्षेपनिमित्ताच्छतदण्डादूनं पञ्च-सप्ततिमेव दण्डमर्हति । मूर्द्धावसिक्तोऽपि तावा-क्रुश्य तमेव दण्डमर्हति ।

मूर्द्धावसिक्ताम्बष्ठयोः परस्पराक्षेपे ब्राह्मणक्षत्रि-ययोः परस्पराक्रोशनिमित्तकौ यथाक्रमेण दण्डौ वे-दितव्यौ । एवमन्यत्राप्यूहनीयम् ॥ २०६ ॥

वा० १। अश्लीलाक्षेपे एव स्थलविशेषे दण्डविशेषप्रतिपादकं मूलमित्याह * एवमिति । गुणो वृत्तादिः । * वर्णिषु, सवर्णेषु। *विषमगुणेषु, तेष्वेव । पूर्ववाक्यस्य संख्यापेक्षयाऽत्रार्द्धद्वैगुण्या-दिप्रतिपादनादश्लीलाक्षेपविषयकमेवेदम् । तद् ध्वनयन्वक्ष्यति व्याख्याने पूर्वेत्यादि । साकाङ्क्षत्वादाह * आक्षेप्त्रपेक्षयेति । अधमत्वं न जातिकृतं, तत्र तस्य वक्ष्यमाणत्वात् । अत आह *न्यूनवृत्तेति । आकाङ्क्षानिरासायाह *पूर्वेति । *अविशेषेणेति । आक्षेप्त्रपेक्षया न्यूनवृत्तस्याधिकवृत्तस्य समवृत्तस्य वा भार्येति

भेदनकर्तुरयं दण्डविधिरिति व्याख्यातवान् ॥ २०४ ॥

मि० अव. अश्लीलाक्षेपे दण्डमाह ।

या० अभिगन्तास्मि भगिनीं मातरं वा तवेति ह ।
शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम् ॥ २०५ ॥

मि० त्वदीयां भगिनीं मातरं वा अभिगन्तास्मीति शपन्तम्, अन्यं वा–त्वज्जायामभिगन्तास्मीत्येवं शपन्तं राजा पञ्चविंशतिकं–पणानां पञ्चाधिका विंशतिर्यस्मिन्दण्डे स तथोक्तः तं दमं दापयेत् ॥२०५॥

बा० १ । मूले हशब्दश्चार्थे, तत्समुच्चेयमाह *अन्यं वेति । तदर्थमेवाह * त्वज्जायामिति । पञ्चविंशतिकमित्यस्य व्याख्या * पणानामिति ॥ २०५ ॥

मि० अव. एवं समानगुणेषु वर्णिषु दण्डमभिधाय विषमगुणेषु दण्डं प्रतिपादयितुमाह ।

या० अर्द्धोऽधमेषु द्विगुणः परस्त्रीषूत्तमेषु च ।

अधमेष्वाक्षेप्त्रपेक्षया न्यूनवृत्तादिगुणेष्वर्धो दण्डः । पूर्ववाक्ये पञ्चविंशतेः प्रकृतत्वात्तदपेक्षयाऽर्द्धः सार्द्धद्वादशपणात्मको द्रष्टव्यः । परभार्यासु पुनरविशेषेण द्विगुणः पञ्चविंशत्यपेक्षयैव पञ्चाशत्पणात्मको वेदितव्यः । तथोत्तमेषु च स्वापेक्षयाऽधिकश्रुतवृत्तेषु दण्डः पञ्चाशत्पणात्मक एव ।

अव. वर्णानां मूर्द्धावसिक्तादीनां च परस्पराक्षेपे दण्डकल्पनामाह ।

या० दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैः ॥ २०६ ॥

मि० अव० एवं सर्ववर्णविषये दण्डमभिधाय वर्णानामेव प्रतिलोमानुलोमाक्षेपे दण्डमाह ।

या० प्रातिलोम्यापवादेषु द्विगुणत्रिगुणा दमाः ।
वर्णानामानुलोम्येन तस्मादेवार्द्धहानितः ॥ २०७ ॥

मि० अपवादा अधिक्षेपाः । प्रातिलोम्येनापवादाः प्रातिलोम्यापवादास्तेषु ब्राह्मणाक्रोशकारिणोः क्षत्रियवैश्ययोर्यथाक्रमेण पूर्ववाक्यीयद्विगुणपदोपात्तपञ्चाशत्पणापेक्षया द्विगुणाः शतपणास्त्रिगुणाः सार्द्धशतपणा दण्डा वेदितव्याः । शूद्रस्य ब्राह्मणाक्रोशे ताडनं जिह्वाच्छेदनं वा भवति ।

यथाह मनुः, ( अ० ८ श्लो. २६७ )

शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ।
वैश्योऽध्यर्द्धशतं द्वे वा शूद्रस्तु वधमर्हति ॥ इति ।

विट्शूद्रयोरपि क्षत्रियादनन्तरैकान्तरयोस्तुल्यन्यायतया शतमध्यर्द्धशतं च यथाक्रमेण क्षत्रियाक्रोशे वेदितव्यम् । शूद्रस्य वैश्याक्रोशे शतम् ।

आनुलोम्येन तु वर्णानां क्षत्रियविट्शूद्राणां ब्राह्मणेनाक्रोशे कृते तस्माद्ब्राह्मणाक्रोशनिमित्ताच्छतपरिमितात्क्षत्रियदण्डात्प्रतिवर्णमर्द्धस्यार्द्धस्य हानिं कृत्वाऽवशिष्टं पञ्चाशत्पञ्चविंशत्यर्धत्रयोदशपणात्मकं यथाक्रमं ब्राह्मणो दण्डनीयः ।

तदुक्तं मनुना, ( अ० ८ श्लो. २६८ ) ।

पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने ।
वैश्ये स्यादर्द्धपञ्चाशच्छूद्रे द्वादशको दमः ॥ इति ।

यथाकथंचित्परभार्यात्वमत्र विवक्षितम् । अत एवाविशेषेणेत्युक्तम् । अन्यूनवृत्तसंबन्धित्वे भेदेनोक्त्यसङ्गतिर्द्विगुणदण्डासङ्गतिश्च । अधिकवृत्तादिसंबन्धित्वेऽप्याद्यदोष एव । समवृत्तादिसंबन्धित्वेऽपि तथा । पूर्वत एव प्राप्तत्वात् । तस्मात्रितयभिन्नविषयकं तदिति भावः ।

२ । न च पूर्वपद्यव्याख्यावसरे "अन्यं वा त्वज्जायाम्" इत्याद्युक्त्वा पञ्चविंशतिको दम उक्तः, इह तु पञ्चाशत्पणात्मक इति मिथो विरोध इति वाच्यम् । पूर्वत्र भार्याद्वारा पुरुषस्याक्षेपे दण्डविशेष उक्तः, अत्र तु परभार्याया एवाक्षेपे विशेष उच्यतइति भेदात् ।

उ. ३। *वर्णानां, ब्राह्मणादीनाम् । * कल्पनां, न तु दण्डम् । चतुर्णां युगपत् द्वंद्वभ्रमाभावायाह *वर्णाश्चेत्यादि । क्रमविवक्षया न दोषः । यथासंख्यमप्यत एव सिद्धम् । प्रत्यासत्तेरन्यस्याभावाच्चाह * परस्परामिति । कल्पनामेवाह * प्रकर्षेणेति ।

४। विशेषं तत्राह * तच्चेति । विशेषो विशेषणम् । शेषो इति पाठेऽप्येवम् । * उत्तराधरभावेति । वर्णकर्तृको जातिविषयकः जातिकर्तृको वर्णविषयको वा य आक्षेपस्तदनुरोधेनेत्यर्थः । तत्र ब्राह्मणकर्तृकमूर्द्धावसिक्तविषयकाक्षेपे आह * यथेति । प्रातिलोम्येतिवक्ष्यमाणवचनेन क्षत्रियकर्तृकब्राह्मणविषयाक्षेपे ब्राह्मणकर्तृकक्षत्रियविषयाक्षेपे च क्रमेण प्रतिपादितं शतपणं पञ्चाशत्पणात्मकं च बुद्धिस्थीकृत्याह * क्षत्रियाक्षेपेति । ब्राह्मणकर्तृकक्षत्रियविषयाक्षेपेत्यर्थः । किंचित् अधिकं यस्मिन्निति बहुव्रीहिः । पदद्वयं वा । किंचिदिति पादाशयकम् । स चात्र शतापेक्षया चतुर्थांशः । तथा च तत्पादाधिकं तत्स्वरूपमाह * पञ्चसप्तत्यात्मकमिति ।

वहितः। यथा ब्राह्मणादनन्तरैकान्तरयोः क्षत्रियवैश्ययोर्ब्राह्मणविषयापराधे दण्डस्तथैव क्षत्रियादनन्तरैकान्तरयोर्वैश्यशूद्रयोरपीत्यर्थः। ब्राह्मणानन्तरेण क्षत्रियेण ब्राह्मणाक्रोशे शतमिव वैश्यानन्तरेण शूद्रेण वैश्याक्रोशेऽपि शतमित्याह * शूद्रस्य चेति।

३। वर्णानामित्युत्तरार्धं व्याचष्टे * आनुलोम्ये न त्विति। शेषमाकाङ्क्षितं प्रकृतमाह * आक्रोशे इति। तस्मादिति मौलस्य व्याख्या * ब्राह्मणाक्रोशेति। क्षत्रियकर्तृकब्राह्मणविषयाक्षेपनिमित्तात् क्षत्रसंबन्धिशतपरिमितदण्डादित्यर्थः। प्रत्यासत्तेराह *प्रतिवर्णमिति। ब्राह्मणेन क्षत्राक्षेपे कृते शतादर्धं पञ्चाशत् दण्डः, तेनैव वैश्याक्षेपे कृते पञ्चाशतोऽर्धं पञ्चविंशतिः, तेनैव च शूद्राक्षेपे कृते पञ्चविंशतेरर्धं सार्द्धद्वादशपणा इति विवेकः। वीप्सेयम्। हानित इत्यपादानपञ्चम्यन्तात्तसिरित्याह * हानिं कृत्वेति। अत एव शेषं साकाङ्क्षमाह * अवशिष्टमिति। * अर्धेति। अर्धन्यूनत्रयोदशेत्यर्थः। * पञ्चाशत्, पणाःन्। * क्षत्रियस्येति। क्षत्रियविषयकेत्यर्थः। * वैश्ये, अभिशस्ते सति। एवमग्रेऽपि। ब्राह्मणो दण्ड्यः स्यादित्यर्थः। * द्वादशक इति। सार्द्धः। परिमाणे कन्।

४। उक्तरीत्यैवोक्तन्यायमन्यत्राप्याह * क्षत्रियेणेति। अत्राद्ये गौतमसंमतिमाह * ब्राह्मणराजन्यवदिति। तयोस्तादृशयोर्यथा न्यायस्तथाऽनयोरपि तादृशयोरित्यर्थः। द्वितीये मनुसंमतिमप्याह * विडिति। वैश्यशूद्रयोः स्वजातिं प्रति अन्योन्यजातिं प्रति आक्रोशे एवमेव ब्राह्मणक्षात्रियवत्। वैश्ये शूद्राक्रोशिनि प्रथमसाहसः, शूद्रे वैश्याक्रोशिनि मध्यमसाहस इत्येवंरूपं दण्डप्रणयनं जिह्वाच्छेदरहितं तत्त्वतो यथावत्कर्त्तव्यमिति शास्त्रनिश्चय इत्यर्थः। अस्य हि—

क्षत्रियेण वैश्ये शूद्रे वाऽऽक्रुष्टे यथाक्रमं पञ्चाशत्पञ्चविंशतिकौ दमौ, वैश्यस्य च शूद्राक्रोशे पञ्चाशदित्यूहनीयम् । ब्राह्मणराजन्यवत्क्षत्रियवैश्ययोरिति गौतमस्मरणात् ।

( अ. ८ श्लो. २७७ )

विट्शूद्रयोरेवमेव स्वजातिंप्रति तत्त्वतः ।

इति मनुस्मरणाच्च ॥ २०७ ॥

वा० १ । * एवं सर्ववर्णेति । सर्वे च वर्णाश्चेति समासः । सर्वे मूर्द्धावसिक्तादयः । वर्णाः ब्राह्मणादयः । एतेन जातिव्यवच्छेदः । मिथ इति शेषः । प्रातिलोम्यानुलोम्याभ्यामाक्षेपे इत्यर्थः । अपवादो वाधो नात्र विवक्षित इत्याह * अधिक्षेपा इति ।

अपवादस्तु निन्दायामाज्ञाविश्रम्भयोरपि । इति विश्वः ।

* ब्राह्मणेति । तद्विषयकेत्यर्थः । * पूर्ववाक्यीयाद्द्विगुणेति । अर्थोऽधमेषु द्विगुण इत्यत्रोपात्तंद्विगुणेत्याद्यर्थः । वाक्यद्वीतिपाठे तत्संबन्धिद्विगुणपदेत्याद्यर्थः । द्वैगुण्यं त्रैगुण्यं चोदाहरणेनाह * शतेत्यादि । अविरोधायोभयोक्तेः फलं कथयन् न्यूनतां निराचष्टे * शूद्रस्येति । ब्राह्मणविषयकाक्रोशे इत्यर्थः ।* अध्यर्द्धशतमिति । सार्धशतमित्यर्थः । तत्रैव पक्षान्तरमाह * द्वे वेति । लाघवगौरवापेक्षया विकल्पः । * वधं, ताडनादिरूपम् ।

२ । अत्र दमा इति बहुवचनं निमित्तभूतवर्णापराधबाहुल्याभिप्रायेण । तथा हि । क्षत्रियवैश्याभ्यां ब्राह्मणे वैश्यशूद्राभ्यां क्षत्रिये शूद्रेण वैश्ये एवमानुलोम्येनापीति तद्बाहुल्यम् । तदेतदभिप्रेत्यैव ब्राह्मणविषयकक्षत्रियवैश्यकर्तृकापराधे यो न्याय उक्तस्तं क्षत्रियविषयकवैश्यशूद्रकर्तृकापराधेऽप्यतिदिशति * विट्शूद्रयोरपीति । अनन्तरः संनिहितः । एकान्तरः एकेन व्य-

णिको दण्डो वेदितव्यः ॥ २०८ ॥

वा० १। सत्यासत्यान्यथास्तोत्रैरित्यनेनोक्तत्वादाह * पुनरिति। सिंहावलोकनन्यायेनेति भावः। * अधिकृत्येति। बुद्धिस्थीकृत्येत्यर्थः। द्वंद्वतोऽर्थान्तरनिरासायाह * प्रत्येकमिति। युगपत्तदसंभवादिति भावः। वाचिके इत्यस्य व्याख्या * वाचेति। तदेवोदाहरणेनाह * तत्रेति। क्रमादिप्तिनि विषयसप्तमीत्याह * वाचिके इति। अत्र वाचिके इत्युक्त्या ऽस्य निष्ठुराक्षेपविषयत्वं स्पष्टम्! एवमग्रेऽपि ॥ २०८ ॥

मि० अव. किञ्च।

या० अशक्तस्तु वदन्नेवं दण्डनीयः पणान्दश।
तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु ॥२०९॥

मि० यः पुनर्ज्वरादिना क्षीणशक्तिः त्वद्बाहाद्यङ्गभङ्गं करोमीत्येवं शपति असौ दश पणान्दण्डनीयः। यः पुनः समर्थः क्षीणशक्तिं पूर्ववदाक्षिपति असौ पूर्वोक्तशतादिदण्डोत्तरकालं तस्याशक्तस्य क्षेमार्थं प्रतिभुवं दापनीयः॥ २०९ ॥

वा० १। * किं चेति। अन्यदपि तद्विषये उच्यते इत्यर्थः। त्वर्थमाह * यः पुनरिति। एवं वदन्नित्यस्यार्थमाह * त्वदिति। शक्त इत्यस्यार्थः * समर्थ इति। अर्थादाह * क्षीणशक्तिरिति। तथेत्यस्यार्थः * पूर्ववदिति। अत्र विषये दण्डस्योक्तत्वादत्रानुक्तिरित्याह * पूर्वोक्तेति॥ २०९ ॥

मि० अव. तीव्राक्रोशे दण्डमाह।

या० पतनीयकृते क्षेपे दण्डो मध्यमसाहसः।

छेदवर्जं प्रणयनं दण्डस्येति विनिश्चयः ।

इत्युत्तरार्द्धम् । ( मनु. ८ । २७६ )

ब्राह्मणक्षत्रियाभ्यां तु दण्डः कार्यो विजानता ।

ब्राह्मणे साहसः पूर्वः क्षत्रिये त्वेव मध्यमः ॥

इति पूर्वपद्यं च । ब्राह्मणक्षत्रियाभ्यां मिथः पतनीयाक्रोशे कृते दण्डशास्त्रज्ञेन राज्ञा दण्डः कार्यः । दण्डमेव विशेषेणाह *ब्राह्मणेति । ब्राह्मणे क्षत्रियाक्रोशिनि प्रथमसाहसः कार्यो ब्राह्मणाक्रोशिनि पुनः क्षत्रिये मध्यमसाहस इति तदर्थः । एवं च तदपि पतनीयाक्रोशविषयमेव यद्यपि तथापि तुल्यन्यायतयाऽत्रोपन्यस्तं व्याख्यात्रा । अनेन च मनुना—

एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन् ।

जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः॥ (ना.व्यव. १५।२२)

इति स्वयमेव प्रागुक्तो जिह्वाछेदो वैश्ये निवारितो ब्राह्मणक्षत्रियाक्रोशविषयएवावतिष्ठते । शूद्रो द्विजातीन् पातकादिना वाचाऽऽक्रुश्य जिह्वाछेदं लभते, यस्मादसौ पादाख्यान्निकृष्टाङ्गाज्जात इति तदर्थः ॥ २०७ ॥

मि० अव. पुनर्निष्ठुराक्षेपमधिकृत्याह ।

या० बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः ।

शत्यस्तदर्द्धिकः पादनासाकर्णकरादिषु ॥ २०८ ॥

मि० बाह्वादीनां प्रत्येकं विनाशे वाचिके वाचा प्रतिपादिते तव बाहू छिनद्मीत्येवंरूपे शत्यः शतपरिमितो दण्डो वेदितव्यः । पादनासाकर्णकरादिषु आदिग्रहणात्स्फिगादिषु वाचिके विनाशे तदर्द्धिकः तस्य शतस्यार्द्धं तदर्द्धं तदस्यास्त्यसौ तदर्द्धिकः पञ्चाशत्प-

त्याह * ये पुनर्ब्राह्मणेति । अन्यथा न्यूनतापत्तेरिति भावः । जातिपूगानामित्येकं निमित्तं न तु द्वंद्व इत्याह * जातीनां पूगा इति । अयं चात्र सामान्यतः समुदायवाचीत्याह * सङ्घा इति। अत्र बहुवचनबलात् तेषां प्रत्येकं सङ्घा यथाकथञ्चित् मिलितानां वा सङ्घा इति विवक्षितम् । सर्वथाऽपि स एव दण्ड इति बोध्यम् । प्रागवदाह * प्रत्येकमिति ॥ २११ ॥

इति वाक्पारुष्यप्रकरणम् ।

———•———

उपपातकयुक्ते तु दाप्यः प्रथमसाहसम् ॥ २१० ॥

मि० पातित्यहेतुभिर्ब्रह्महत्यादिभिर्वर्णिनामाक्षेपे मध्यमसाहसो दण्डः । उपपातकसंबद्धे पुनर्गोघ्नस्त्वमसीत्येवमादिरूपे क्षेपे प्रथमसाहसं दण्डनीयः॥२१०॥

बा० १ । पतनीये करणे अनीयर् इत्याह * पातित्यहेतुभिरिति । * वर्णिनामिति । मिथ इति शेषः । इदमपि क्षत्रियकर्तृकब्राह्मणाक्षेपविषयं, प्रागुक्तमनोः, अन्यत्र तथैव कल्पना बोध्या इति केचित् । वर्णिपदं मूर्द्धावसिक्तादिजातीनामप्युपलक्षणम् । तथा च जातिष्वपि मिथः पतनीयैराक्षेपे मध्यमसाहसः, उपपातकैराक्षेपे प्रथमसाहस इत्येव निर्णयः । वर्णजात्योर्मिथ आक्षेपेऽपि पूर्वोक्त एव दण्डः । वर्णिष्वपि न्यूनाधिकभावं विना मध्यमसाहसादिदण्डविधानादितरत्रापि तथा कल्पनस्य प्रामाणिकत्वात् इति बोध्यम् । युक्तेत्विल्यर्थमाह * संबद्धे पुनरिति ॥ २१० ॥

मि० अव. किञ्च ।

त्रैविद्यनृपदेवानां क्षेपउत्तमसाहसः ।
मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः ॥ २११ ॥

मि० त्रैविद्याः वेदत्रयसंपन्नास्तेषां राज्ञां देवानां च क्षेपे उत्तमसाहसो दण्डः । ये पुनर्ब्राह्मणमूर्द्धावसिक्तादिजातीनां पूगाः सङ्घास्तेषाम् आक्षेपे मध्यमसाहसो दण्डः । ग्रामदेशयोः प्रत्येकमाक्षेपे प्रथमसाहसो दण्डो वेदितव्यः ॥ २११ ॥

इति वाक्पारुष्यं नाम विवादपदम् ।

बा० १ । *किं चेति । प्राग्वत् । अत्र जातिपदमुभयपरमि-

तथा पूर्वं कलहे प्रवृत्तस्य दण्डगुरुत्वम्।
कलहे च बद्धवैरानुसन्धातुरेव दण्डभाक्त्वम्।
तथा द्वयोरपराधविशेषापरिज्ञाने दण्डः समः।
तथा श्वपचादिभिरार्याणामपराधे कृते सज्जना एव दण्डदापनेऽधिकारिणः, तेषामशक्यत्वे तान् राजा घातयेदेव नार्थं गृह्णीयात-इत्येवं पञ्चप्रकारा विधयः-
तेनैवोक्ताः, ( व्यव. १५ श्लो. ७-१४ )

विधिः पञ्चविधस्तूक्त एतयोरुभयोरपि।
पारुष्ये सति संरम्भादुत्पन्ने क्रुद्धयोर्द्वयोः॥
स मान्यते यः क्षमते दण्डभाग्योऽतिवर्तते।
पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक्॥
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः।
द्वयोरापन्नयोस्तुल्यमनुबध्नाति यः पुनः॥
स तयोर्दण्डमाप्नोति पूर्वो वा यदि वेतरः।
पारुष्यदोषावृतयोर्युगपत्संप्रवृत्तयोः॥
विशेषश्चेन्न लक्ष्येत विनयः स्यात्समस्तयोः।
श्वपाकषण्डचण्डालव्यङ्गेषु वधवृत्तिषु॥
हस्तिपव्रात्यदासेषु गुर्वाचार्यनृपेषु च।
मर्यादातिक्रमे सद्यो घात एवानुशासनम्॥
यमेव ह्यतिवर्तेरन्नेते सन्तं जनं नृषु।
स एव विनयं कुर्यान्न तद्विनयभाङ् नृपः॥
मला ह्येते मनुष्याणां धनमेषां मलात्मकम्।
अतस्तान्घातयेद्राजा नार्थदण्डेन दण्डयेत्॥ इति।

अव० एवंभूतदण्डपारुष्यनिर्णयपूर्वकत्वाद्दण्डप्रणयनस्य तत्स्वरूपसंदेहे निर्णयहेतुमाह।

## अथ दण्डपारुष्यप्रकरणम् ॥ १९ ॥

मि० उ० दण्डपारुष्यं नाम संप्रति प्रस्तूयते ।

तत्स्वरूपं च नारदेनोक्तम्, ( व्यव. १५ । ४ )

परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः ।

भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते॥इति ।

परगात्रेषु स्थावरजङ्गमात्मकद्रव्येषु हस्तपादायुधैः आदिग्रहणाद्ग्रावादिभिर्योऽभिद्रोहो हिंसनं दुःखोत्पादनं, तथा भस्मना आदिग्रहणाद्रजःपङ्ककरीषाद्यैश्च य उपघातः संस्पर्शनरूपं मनोदुःखोत्पादनं, तदुभयं दण्डपारुष्यम् । दण्ड्यतेऽनेनेति दण्डो देहः तेन यत्पारुष्यं विरुद्धाचरणं जङ्गमादेर्द्रव्यस्य तद्दण्डपारुष्यम् । तस्य त्ववगोरणादिकरणभेदेन त्रैविध्यमभिधाय हीनमध्यमोत्तमद्रव्यरूपकर्मत्रैविध्यात् पुनस्त्रैविध्यं—

तेनैवोक्तम्, ( व्यव. १९। श्लो. ५।६ )

तस्यापि दृष्टं त्रैविध्यं हीनमध्योत्तमक्रमात् ।

अवगोरणनिःशङ्कपातनक्षतदर्शनैः ॥

हीनमध्योत्तमानां तु द्रव्याणां समतिक्रमात् ।

त्रीण्येव साहसान्याहुस्तत्र कण्टकशोधने॥इति।

निःशङ्कपातनं निःशङ्कप्रहरणम् । त्रीण्येव साहसानि—त्रिप्रकाराण्येव सहसा कृतानि दण्डपारुष्याणीत्यर्थः ।

तथा वाग्दण्डपारुष्ययोरुभयोरपि द्वयोः प्रवृत्तकलहयोर्मध्ये यः क्षमते तस्य न केवलं दण्डाभावः किंतु पूज्य एव ।

ल्यब्लोपे पञ्चमी। प्रवृत्तस्वर्गोरणादिभिस्त्रिभिः करणैर्हीनमध्यो-त्तमानां द्रव्याणां समतिक्रमात् त्रैविध्यमपि द्रष्टव्यमित्यर्थः। चः पादपूरणे। तथा चावगोरणादिषु करणेषु पाठक्रमादेव हीनत्वादिकं बोध्यम्।

३। ननु करणकारककर्मकारकभेदात्पाड्विध्यत्वं, त्रैविध्यमनुपपन्नम्, अत आह * त्रीण्येवेति। तत्र कण्टकशोधने इति पाठः। तत्र एवंविधे दण्डपारुष्ये कण्टकशोधने' दुष्टशिक्षायां क्रियमाणायाम् अपराधानुसारेण शिक्षार्थं दण्डपारुष्यरूपाणि साहसानि हीनदण्डपारुष्यमध्यमदण्डपारुष्योत्तमदण्डपारुष्यरूपप्रकारत्रययुक्तानि त्रीण्येवेत्यर्थः। कर्मकरणभेदेऽपि हीनत्वादिनाऽनुगमेन तद्व्यपदेशयुक्तत्वात्त्रिप्रकारकमेवेति भावः। ननु साहसतोऽस्य भेदस्य वक्ष्यमाणत्वात्कथं साहसानीत्यत आह * त्रीण्येवेति। साहससामान्यलक्षणाक्रान्तत्वस्यात्रापि वक्ष्यमाणत्वादिति भावः।

४। एवं नारदोक्त्या सभेदं दण्डपारुष्यस्वरूपमुक्त्वा वाक्पारुष्यसाधारणधर्मान् तथैव प्रतिपादयितुं तेषां स्वरूपं क्रमेणाह * तथेति। उभयोरपीति विषयसप्तमी। प्रवृत्तकलहयोर्द्वयोर्मध्ये इत्यन्वयः। पूज्य एवेति एवोऽप्यर्थे। तृतीयप्रकारमाह * कलहे चेति। बद्धमनुबद्धं यत्पूर्ववैरं तन्नुस्मर्तुरित्यर्थः। एवेनान्यव्यवच्छेदः। * सज्जना एव, आर्या एव। * दापने, भृत्यादिद्वारा। * तेषां, आर्याणाम्। स्फुटार्थम् एवव्यवच्छेद्यमाह * नार्थमिति। न धनमित्यर्थः।

५। * तेनैव, नारदेनैव। *एतयोरुभयोरपि, वाग्दण्डपारुष्ययोः। पञ्च विधाः प्रकारा यस्य तादृशो विधिर्विधानमुक्तमित्यर्थः। तान्येवाह उक्तक्रमेण * पारुष्ये सतीत्यादिना। संरम्भात्पौर्वापर्याभावः। तदेव व्यनयन्नाह * दण्डेति। योऽतिक्रम्य ग-

या० असाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च।
द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृतो भयात् ॥ २१२॥

मि० यदा कश्चिद्दर्शयति अहमनेन हत इति राज्ञे निवेदयति तदा चिह्नैर्व्रणादिस्वरूपगतैर्लिङ्गैः युक्त्या कारणप्रयोजनपर्यालोचनात्मिकया आगमेन जनप्रवादेन चशब्दाद्दिव्येन च कूटचिह्नकृतसंभावनाभयात्परीक्षा कार्या ॥ २१२ ॥

वा० १। अथ द्वितीयं पारुष्यमाह * दण्डेति। चस्त्वर्थे। गात्रशब्द उपलक्षणमन्यस्यापि। तच्च विनिगमकाभावात् सर्वमित्याह * स्थावरेति। तात्पर्यार्थद्वयं * हिंसनमित्यादि। अत्र दुःखं कायिकं बोध्यम्। करीपेति पाठः। उपघातपदस्य तस्यासम्भवात् तदन्वयासम्भवेन पृथगुक्तेराह * संस्पर्शनेति। अत एवाह * मन इति। अस्यान्वर्थत्वमाह * दण्ड्यते इति। पर इति शेषः। दुःखयुक्तः क्रियते इत्यर्थः।

२। एवं नारदोक्त्या दण्डपारुष्यस्वरूपमुक्त्वा तयैव तद्भेदानप्याह * तस्य चेति। दण्डपारुष्यस्य चेत्यर्थः। * अवगोरणादिकरणभेदेनेति। तद्रूपसाधनभूतकारकभेदेनेत्यर्थः। * द्रव्यरूपकर्मेति। तद्रूपकर्मकारकत्रैविध्यादित्यर्थः। * पुनः, अपि। * त्रैविध्यं, तदेव। * तेनैव, नारदेनैव। दण्डपारुष्यं शरीरस्य विरूक्षीकरणं तत्र विरूक्षीकरणाख्ये व्यापारेऽवगोरणादीनि त्रीणि करणानि तद्भेदात्त्रैविध्यं, यत्र शरीरे विरूक्षीकरणं भवति तत्कर्मकारकं तस्य हीनत्वादिनाऽपि त्रैविध्यमेवेत्यर्थः। * तस्यापीति। दण्डपारुष्यस्य। * हीनमध्योत्तमक्रमात्, तत्क्रममादाय।

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र वि० सं० ( मीमांसा २

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीत-वेदान्तसूत्रस्य यतीन्द्र श्रीमाद्विज्ञान-भिक्षुकृत व्याख्यानम्। सम्पूर्णम्। ( वेदान्तः ) ६

(९) स्याद्वादमञ्जरी-मल्लिषेणानिर्मिता सम्पूर्णा। ( जैनदर्शनम् ) २

(१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपण-परम्-श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम्। सम्पूर्णम् ( वेदान्तः ) १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टा-रकाचार्यसंगृहीतः। आचार्यचित्सुख-मुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४

(१२) विभक्त्यर्थनिर्णयःन्यायानुसारिप्रथमादि-सप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः। सम्पूर्णः ( न्यायः ) ५

(१३) विधिरसायनम्। श्रीअप्पयदीक्षितकृतम्। सं० ( मीमांसा ) २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्ट-सोमेश्वरविरचिता। ( मीमांसा ) १६

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता। श्रीक्षेमराजविरचितवृत्तिसमेता। ( वेदान्तः ) २

(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशा-ऽध्यायार्थसंग्रहः ) श्रीभट्टनारायणात्मज-भट्टशङ्करविरचितः। ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि-मीमांसादर्शनम् ) महामहो-पाध्यायश्रीशालिकनाथमिश्रविरचितं, श्रीशङ्करभट्टकृतो मीमांसा-सारसंग्रहश्च सम्पूर्णः ( मीमांसा ) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्दव्यासप्रणीत-स्तत्कृतव्याख्यासमलङ्कृतश्च। ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम्। महामहोपाध्यायश्रीकर्का-चार्यविरचितभाष्यसहितम्। १३

(२०) ब्रह्मसूत्रभाष्यम्। श्रीभास्कराचार्यविरचितम् ( वेदान्तः ) १

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम्। आनन्दपूर्ण-विरचितया खण्डनफक्किकाविभजनाख्यया व्या-ख्यया ( विद्यासागरी ) ति प्रसिद्धया समेतम्। ( वेदान्तः ) १३

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता। १

(२३) श्रीलक्ष्मीसहस्रम्-बालबोधिनीव्याख्यया-ऽवतरणिकया च सहितम्। ८

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितसव्याख्यानग्रन्थपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोदितम् ॥ २ ॥

स्तबकः—१८२

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृ
सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रक
एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरण-
शास्त्रसाहित्यपुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता
च शास्त्रदृष्यो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकै-
र्देयं वार्षिकमग्रिमं मूल्यम्-मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तबकम् " " १ " ०

६ डाकव्ययः पृथग् नास्ति ।

७ साम्प्रतं मुद्र्यमाणा ग्रन्थाः— मुद्रिताः स्तबकाः

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता (संस्कारः) २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः (व्याकरणम्) १०

(३) श्लोकवार्त्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाष्यार्थप्रकाशसहितम् । सं० (वेदान्त) २

(५) कल्पप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः (ज्योतिषः) १

(६) भाट्टचिन्तामणिः । महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपादः (मीमांसा) २

*February* *1913.*

THE

# CHOWKHAMBÂ SANSKRIT SERIES:

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 182.

232 B 354

# व्यवहार- बालंभट्टी

इति प्रसिद्धया लक्ष्मीनामिकया
पायगुण्डे इत्युपनामकेन वालंभट्टेन स्वपत्न्याः लक्ष्मीदेव्याः
स्मारकत्वेन तन्नाम्ना रचितया बृहत्या टीकया सहिता
मिताक्षरा 17456
श्रीयुतगोविन्ददासमहाशयप्रदर्शितरीत्या
पर्वतीयनित्यानन्दपन्तेन परिष्कृत्य संशोधिता ।

VYAVAHÂRA-BÂLAMBHATTI
THE EXTENSIVE COMMENTARY ON THE MITÂKSHARÂ
WITH THE ORIGINAL

BY
Bâlambhatta Páyagunde

EDITED BY
Pandit Nityanand Pant Parvatiya
Under the supervision of Shri Govinda Das.

FASCICULUS X.

*PUBLISHED AND SOLD BY THE SECRETARY,*
CHOWKHAMBÂ SANSKRIT BOOK-DEPOT.
BENARES.
AGENTS:- OTTO HARRASSOWITZ: LEIPZIG:
PANDITA JYESHTHÂRAMA MUKUNDAJI BOMBAY:
PROBSTHAIN & CO., BOOKSELLERS, LONDON
*Printed by Jai Krishna Dasa Gupta,*
AT THE VIDYÂ VILÂSA PRESS
BENARES.

*Price Rupee one.*

[Registered under Act XXV] of 1867. (ALL RIGHTS RESERVED.)

पद्याभ्यामाह * यमेवेति । * नृषु, नृणां मध्ये । एते श्वपाकादयो यमेव हि सन्तं जनमित्याद्यर्थः । * विनयं, दण्डम् । एवव्यवच्छेद्यमेवाह * न तदिति । * एते, पूर्वोक्ताः ।

१। एवं स्मृत्यन्तरोक्तमुक्त्वा तत्सङ्गत्या मूलमवतारयति *एवंभूतेति । उक्तप्रकारं प्राप्तेत्यर्थः । * प्रणयनस्य, वक्ष्यमाणमूलोक्तस्य । * तादृशेति । दण्डपारुष्यस्वरूपेत्यर्थः । * हतुमिति जातावेकवचनम् । असाक्षिकं हतं हननं यत्र निवेदने इति बहुव्रीहिः । तदाह * यदेत्यादिना निवेदयतीत्यन्तेन । व्रणादिस्वरूपं प्राप्तः । युक्त्येति जातावेकवचनं व्याख्याने । तत्स्वरूपमाह * कारणेति । द्वन्द्वगर्भः षष्ठीतत्पुरुषादिरयम् । कारणपर्यालोचनात्मिकया प्रयोजनपर्यालोचनात्मिकया चेत्यर्थः । आगमोऽत्रान्य एवेत्याह * जनप्रवादेनेति । मौलमेकं चं व्याचष्टे * चशब्दादिति । सर्वसमुच्चायकं द्वितीयं तमाह * दिव्येन चेति । मूले कृतो भयादित्यत्र कृदिति सम्पदादित्वाद्भावे क्विप् । तस्य करणस्य भयादित्यर्थः । तस्यानिश्चयादाह * कृतसम्भावनाया इति । करणसम्भावनाया इत्यर्थः । तृतीयपादार्थमाह * परीक्षेति ॥ २१२ ॥

मि० अव० एवं निश्चिते साधनाविशेषेण दण्डविशेषमाह ।

या० भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः ।
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणस्ततः ॥ २१३ ॥
समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च ।
हीनेष्वर्द्धदमो मोहमदादिभिरदण्डनम् ॥ २१४ ॥

मि० भस्मना पङ्केन रेणुना वा यः परं स्पर्शयत्य-

च्छति स दण्डभागित्यर्थः। एवं प्रथमं तमुक्त्वा द्वितीयमाह * पूर्वमिति। * आक्षारयेत्, पारुष्यं कुर्यात्। * नियतम्, अवश्यम्। * पश्चाद्यः, आक्षारयेत्। * असत्कारी, दोषभाक्। ...पमाह * पूर्वेत्विति। * विनयो, दण्डः।

६। कलहे चेत्युक्तं तृतीयप्रकारमाह * द्वयोरिति। तुल्यम् नाधिकं कलहमापन्नयोः प्राप्तयोः द्वयोर्मध्ये यः पुनः वैरमनुबध्नाति दृढतरं स्मरति तयोर्मध्ये स एव दण्डभाक्, पूर्वो वा पूर्वं प्रवृत्तो वा यदि वा अथ वा इतरः पाय... प्रवृत्त इत्यर्थः।

७। चतुर्थमाह * पारुष्येति। स्पष्टम्। पञ्चममाह * श्वपाकेति। वधवृत्तिष्विति श्वपाकादेरेव विशेषणम्। वधजीविष्विति तदर्थः। अत एवैते तदवान्तरभेदा एवात्र। नृपेष्विति ...पयसप्तमी। चो भिन्नक्रमः। तथा च वधवृत्तिषु श्वपाकादिषु चतुर्षु हस्तिपत्रात्यदासेषु च सद्यस्तत्कालं घात एवानुशासनं, कस्मिन्सति, गुर्वाचार्यनृपविषये मर्यादातिक्रमे सतीत्यर्थः। गुर्वाचार्यान्तगेषु चेति पाठान्तरम्। तत्रान्तं चरममाश्रमं गच्छतीत्यन्तगो यतिः। यद्वा अन्तं नाशं गच्छन्ति गमयन्तीत्यन्तगाः गुर्वाचार्ययोरन्तगास्तेषु गुर्वाचार्यद्रोहिषु। अत्र चो यथाश्रुत एव। तथा च वधवृत्तिषु श्वपाकादिषु हस्तिपादिषु गुर्वाचार्यान्तगेषु च सद्यो घात एवानुशासनं शिक्षा। उत्तरश्लोकपर्यालोचनया सत्सु इत्यर्थलभ्यम्। कस्मिन्सति, सत्सु विषये मर्यादातिक्रमे सतीत्यर्थः। गुर्वाचार्यानुगेष्विति पाठेऽप्येवम्।

श्वपाकपशुचाण्डालवेश्यासूकरवृत्तिषु।

इति गुर्वाचार्यातिगेष्विति चेति कल्पतरौ पाठः।

आद्यपक्षे नृपेत्याद्युपलक्षणमिति सूचयन् घातमेव द्वेधा

विकल्पात् न स्मादादेशः। *पुरीपादीति। तैः स्पर्शने कृते त्वित्य-र्थः। * छर्दिमूत्रेति। छर्दिर्वमनं छर्द्यादिभिः परगात्राभिद्रोहे आपात् पादमारभ्य नाभिपर्यन्तं यो दण्डः स चतुर्गुणः, दशप-णापेक्षया तत्त्वं, चत्वारिंशत्पणः स्यात्। कायमध्ये नाभेरूर्ध्वं मु-खादर्वाक् तैस्तथा सति षड्गुणः षष्टिपणः स्यात्। मूर्ध्नि तु तैस्तथा सति अष्टगुणः अशीतिपणः स्मृत इत्यर्थः।

२। एतेन पारिशेष्यात्पूर्वोक्तश्चतुर्गुणो दण्डो नाभेरधस्ता-द्रोहे विज्ञेय इति व्याख्यानमपास्तम्। आपादित्यस्यार्थाज्ञानात्-समासान्तस्तत्र लोप आर्षः।

३। कातीयं व्याचष्टे * आत्रेति। समेष्वेवमिति चर्या। *एवमिति। तत्र एवमित्यस्यैवंभूत इत्यादि व्याख्या। स्वाग-त्यस्य च सवर्णेति।

४। परस्त्रीषु द्विगुण इत्यादि व्याचष्टे * परेति। * त्रि। शेषेणेति। सवर्णत्वोत्तमवर्णत्वहीनवर्णत्वविशेषमन्तरेणेत्यर्थः तथा च परस्त्रीमात्रे भस्मादिभिः स्पर्शने दशपणात् द्विगुण विंशतिपणः, अमेध्यादिभिः स्पर्शने विंशतिपणात् द्विगुणश्चत्वा रिंशत्पण इत्यर्थः।

५। एवमुत्तमेषु चेत्यत्रापीत्याह *तथोत्तमेष्विति। अत्रो-मत्वं न जातिः, तत्रानुपदमेव वक्ष्यमाणत्वात्, अत आह *स्वे एवमग्रेऽपि। *हीनेष्विति। आदिना वृत्तादि। *दशपणश्चेति भस्मादिभिः स्पर्शने इत्यर्थः। तुर्यपादं व्याचष्टे * मोह इति उपलक्षणे तृतीयेत्याह * युक्तेनेति ॥ २१३ ॥ २१४ ॥

मि० अ० प्रातिलोम्यापराधे दण्डमाह।

या० विप्रपीडाकरं छेद्यमङ्गमब्राह्मणस्य तु।

सौ दशपणं दण्डं दाप्यः। अमेध्यामिति अश्रुश्लेष्मनखकेशकर्णविड्दूपिकाभुक्तोच्छिष्टादिकं च गृह्यते। पार्ष्णिः पादस्य पश्चिमो भागः। निष्ठ्यूतं मुखनिःसारितं जलम्। तैः स्पर्शने ततः पूर्वाद्दशपणात् द्विगुणो विंशतिपणो दण्डो वेदितव्यः। पुरीषादिस्पर्शने पुनः—

कात्यायनेन विशेष उक्तः,

छर्दिमूत्रपुरीषाद्यैरापादू यः स चतुर्गुणः।
षड्गुणः कायमध्ये स्यान्मूर्ध्नि त्वष्टगुणः स्मृतः॥ इति।

आद्यग्रहणात् वसाशुक्रासृङ्मज्जानो गृह्यन्ते। एवंभूतः पूर्वोक्तो दण्डः सवर्णविषये द्रष्टव्यः।

परभार्यासु चाविशेषेण, तथोत्तमेषु स्वापेक्षया अधिकश्रुतवृत्तेषु पूर्वोक्ताद्दशपणाद्विंशतिपणाच्च दण्डाद् द्विगुणो दण्डो वेदितव्यः।

हीनेषु स्वापेक्षया न्यूनश्रुतादिषु पूर्वोक्तस्यार्द्धदमः पञ्चपणो दशपणश्च वेदितव्यः।

मोहश्चित्तवैकल्यम्। मदो मद्यपानजन्योऽवस्थाविशेषः। आदिग्रहणाद्ग्रहावेशादिकम्। एतैर्युक्तेन भस्मादिस्पर्शने कृतेऽपि दण्डो न कर्तव्यः॥२१३॥२१४॥

बा० १। * एवम्, अव्यवहितोक्तप्रकारेण। * निश्चिते, दण्डपारुष्ये। न समुदायस्पर्शो विवक्षित इत्याह * रेणुना वेति। तेषां स्पर्शे हेतुभूते सतीति वाच्योऽर्थः। तत्फलितमाह * य इति। * इति, अनेन। कर्णविट् कर्णमलम्। दूषिका नेत्रमलम्। त्रयाणां द्वंद्व इत्याह * तैरिति। द्विगुणस्तत इति मूले व्युत्क्रम इत्याशयेन तदर्थमाह * ततः पूर्वादिति। पूर्वोक्तात्। पूर्वादीति

न समास इत्याह * ब्राह्मणानामिति । अत्र वर्णत्वेन साहश्या-
दाह * क्षत्रियादेरिति । विंशसमाः * क्षत्रियेनि । * श्वेतांसमु-
वृत्तमज्ञानिम् । द्विज्ञानिम् इति यावत् । अत एवाह * अन्त्यज
इति । अङ्गमध्येऽन्त्यात् निकृष्टात्तद्राज्जान इत्यर्थः । अन्ते भ-
वोऽन्त्यः शूद्रवर्णस्तस्माज्जात इति वा । अन्त्यः सन् जात इति
इति वा । * अस्य. शूद्रस्य । गात्रं कात्स्न्यें । तन्मात्रविषयकाप-
राधे इत्यर्थः । अत्र तेन तत् साक्षात्परम्पराधारणं बोध्यम् ।
तदित्यस्येदमित्यर्थः । मनुग्रहणमादरार्थम् । मानवमेवेदम् ।

२ । उक्तन्यायमन्यत्रातिदिशति * वैश्यस्यार्धानि ।
वैश्यस्य क्षत्रियानन्तरभावित्वेन न्यूनत्वेनान्त्यजत्वात्क्षत्रियस्य
तदपेक्षया ज्यायस्त्वेनोत्कृष्टत्वाच्छूद्रतुल्यत्वेनायमेवाङ्गच्छेदन-
रूपो दण्ड इत्यर्थः । * शस्त्रादीति । शस्त्रादेः स्पर्श इत्यर्थः ।
तदर्द्धिक इति यावत् । तत्फलितमाह * प्रथमेति ।

३ । ननु भस्मादिभिर्निष्ठ्यूतान्तैः प्रागुक्तैः प्रातिलोम्या-
पराधे को दण्ड इत्यत आह * भस्मादीति । उक्तमूल-
माह * प्रातिलोम्येति । भस्मादिभिः स्पर्शने सवर्णविषये यो
दशपणो दण्ड उक्तस्तस्यैव प्रातिलोम्येत्यनेन तथोक्तत्वात्स
एवात्रापि । तत्र क्षत्रियेण ब्राह्मणं प्रति भस्मादिभिरभिद्रोहे
कृते प्रातिलोम्यापवादत्वेन द्विगुणो विंशतिपणो दण्डः । तैरेव
वैश्यकर्तृके क्षत्रियापराधे तत्रोक्ताद्विंशतिपणात् द्विगुणश्चत्वा-
रिंशत्पणो दण्डः । तैरेव वैश्यकर्तृकब्राह्मणापराधे विंशतिपणादेव
त्रिगुणः षष्टिपणो दण्ड इति बोध्यम् ।

४ । *तत्रापि, भस्मादिकरणकब्राह्मणपराधेऽपिद्रूपादिति
निष्ठीवनादौ हेतुः । अवेत्येते ऽवमानसूचकाः ॥ २१६ ॥

मि० व्य. एवं प्रातिलोम्यापराधे दण्डमभिधाय

उद्गूर्णे प्रथमो दण्डः संस्पर्शे तु तदर्द्धिकः ॥ २१५॥

मि॰ ब्राह्मणानां पीडाकरमब्राह्मणस्य क्षत्रियादेर्यदङ्गं करचरणादि तच्छेत्तव्यम् । क्षत्रियवैश्ययोरपि पीडां कुर्वतः शूद्रस्याङ्गच्छेदनमेव ।

( मनु. अ. ८ श्लो. २७९ )

येन केनचिदङ्गेन हिंस्याच्छ्रेयांसमन्त्यजः ।
छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम् ॥

इति द्विजातिमात्रस्यापराधे शूद्रस्याङ्गच्छेदविधानात् वैश्यस्यापि क्षत्रियापकारिणोऽयमेव दण्डस्तुल्यत्वात् । उद्गूर्णे वधार्थमुद्यते शस्त्रादिके प्रथमो दण्डो वेदितव्यः । शूद्रस्य पुनरुद्गूर्णेऽपि हस्तच्छेदनमेव ।

( अ. ८ श्लो. २८० )

पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति ।

इति मनुस्मरणात् । उद्गोरणार्थं शस्त्रादिस्पर्शने तु तदर्द्धिकः प्रथमसाहसादर्द्धदण्डो वेदितव्यः । भस्मादिसंस्पर्शे पुनः क्षत्रियवैश्ययोः—

प्रातिलोम्यापवादेषु द्विगुणत्रिगुणा दमाः—

इति वाक्पारुष्योक्तन्यायेन कल्प्यम् । शूद्रस्य तत्रापि हस्तच्छेद एव ।

( अ. ८ श्लो. २८२ )

अवनिष्ठीवतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः ।
अवमूत्रयतो मेढ्रम् अवशर्द्धयतो गुदम् ॥

इति मनुस्मरणात् ॥ २१५ ॥

वा॰ १ ।*प्रातिलोम्येति । तेनापराधे इत्यर्थः । बहुवचनान्ते-

दिति ॥ २१७ ॥

वा. १ । * किं चेति । मवर्णविषयं ऽन्यदप्याहेत्यर्थः । एवमग्रेऽपि । * पादेति । अत्र करशब्दस्यापूर्वनिपातः । तत्प्रकरणस्यानित्यत्वात् । अत एवाग्रे करपादेत्युक्तिसङ्गतिर्मूले । वस्त्रग्रहणान्न समाहार इत्याह * कराणामिति । अत एवाह *अन्यतममिति । मुख्यार्थोऽत्र न विवक्षित इत्याह *ग्रहीतीति । समाहारद्वन्द्वाद्दण्डबाहुल्यादविरोधाच्चाह * समुचिते इति । असम्भवनिरासायाह * एतदिति । मूले भावे प्रत्यया इत्याह * अंशुकेनावेष्टयेत्यादि । अभ्यासपदार्थमाह * घट्टयतीति । ताडयति ॥ २१७ ॥

मि० अथ. किञ्च ।

या० शोणितेन विना दुःखं कुर्वन्काष्ठादिभिर्नरः ।
द्वात्रिंशतं पणान्दण्ड्यो द्विगुणं दर्शनेऽसृजः ॥२१८॥

मि० यः पुनः शोणितं यथा न दृश्यते तथा मृदु ताडनं काष्ठलोष्टादिभिः करोति असौ द्वात्रिंशतं पणान् दण्ड्यः । यदा पुनर्गाढताडनेन लोहितं दृश्यते तदा द्वात्रिंशतो द्विगुणं चतुःषष्टिपणान् दण्डनीयः । त्वङ्मांसास्थिविभेदे पुनर्विशेषो—
मनुना दर्शितः (अ. ८ श्लो. २८४)
त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः ।
मांसभेत्ता च पणिनष्कान्प्रवास्यस्त्वस्थिभेदकः ॥ इति ॥ २१८ ॥

वा. १ । आद्यर्थमाह * लोष्टेति । त्वग्भेदक इत्यादौ शेष षष्ठ्या समासः । निमित्तान्तरे मूलोक्तमेवाह * लोहितस्येति ।

पुनः सजातिमधिकृत्याह।

या० उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ।
परस्परं तु सर्वेषां शस्त्रे मध्यमसाहसः॥ २१६॥

मि० हस्ते पादे वा ताडनार्थमुद्गूर्णे यथाक्रमं दशपणो विंशतिपणश्च दण्डो वेदितव्यः। परस्परवधार्थं शस्त्रे उद्गूर्णे सर्वेषां वर्णिनां मध्यमसाहसो दण्डः॥ २१६॥

या. १। व्यवहितसङ्गतिमाह * एवमिति। *पुनः, पुनरपि। * सजातिं, सवर्णम्। सिंहावलोकनन्यायेनेति भावः। हस्तेति समाहारद्वन्द्व इत्याह * हस्ते इति। * उद्गूर्णे, उद्यते। दशविंशतिकावित्यत्र द्वन्द्वोत्तरं परिमाणे कनित्याह *यथेति। परस्परमित्यस्य लक्ष्यार्थमाह * परस्परेति। सर्वेषामित्यस्य मध्यमणिन्यायेनान्वयः। वर्णानामिति तदर्थः। उद्गूर्णे इत्यस्यानुवृत्तिः, तदाह * उद्गूर्णे इत्यादि॥ २१६॥

मि० अव. किञ्च।

या० पादकेशांशुककरोल्लुञ्चनेषु पणान् दश।
पीडाकर्षांशुकावेष्टपादाध्यासे शतं दमः॥ २१७॥

मि० पादकेशवस्त्रकराणामन्यतमं गृहीत्वा य उल्लुञ्चति झटित्याकर्षति असौ दशपणं दण्ड्यः। पीडा च आकर्षश्च अंशुकावेष्टश्च पादाध्यासश्च पीडाकर्षांशुकावेष्टपादाध्यासं तस्मिन् समुच्चिते शतं दण्ड्यः। एतदुक्तं भवति। अंशुकेनावेष्ट्य गाढमापीड्याकृष्य च यः पोदन घट्टयति तं शतं पणान् दापये-

हारसौकर्याभावेन शरीरयात्राया दुर्लभत्वाद्दण्डाधिक्यम् । एवं दन्तभङ्गे ऽभ्यवहरणसौकर्याभावेन परम्परया जीवनसङ्कटापादकत्वा-पाधिक्यम् । इत्थमनुबन्धादिना करादिभङ्गादिरूपविषयस्य साम्यमूह्यमित्यर्थः ॥ २१९ ॥

मि० अथ. किञ्च ।

या० चेष्टाभोजनवाग्रोधे नेत्रादिप्रतिभेदने ।

कन्धराबाहुसक्थ्नां च भङ्गे मध्यमसाहसः ॥ २२० ॥

मि० गमनभोजनभाषणनिरोधे, नेत्रस्य आदिग्रहणाज्जिह्वायाश्च प्रतिभेदने, कन्धरा ग्रीवा बाहुः प्र-

ताडनात ॥ २१८

सिद्धः सक्थि ऊरुः । तेषां प्रत्येकं भञ्जने मध्यमसाहसो दण्डः ॥ २२० ॥

बा. १ । *चेष्टेति । अत्र वाचो ऽपूर्वनिपातः प्राग्वत् । एवं कन्धरेत्यत्रापि । तत्रेतरेतरयोगोऽप्येवम् । अत एवेह चेष्टार्थो *गमनेति प्रत्येकमिति वक्ष्यति । मूले चो व्युत्क्रमे सर्वसमुच्चये । अग्रे मूले चस्त्वर्थे ॥ २२० ॥

मि० अथ. अपिच ।

या० एकं घ्नतां बहूनां च यथोक्ताद् द्विगुणो दमः ।

मि० यदा पुनर्बहवो मिलिता एकस्याङ्गभङ्गादिकं कुर्वन्ति तदा यस्मिन्यस्मिन् अपराधे यो यो दण्ड उक्तस्तत्र तस्माद्द्विगुणो दण्डः प्रत्येकं वेदितव्यः । अतिक्रूरत्वात्तेषाम् । प्रातिलोम्यानुलोम्यापराधयोरप्येतस्यैव सवर्णविषयेऽभिहितस्य दण्डजातस्य वाक्पारुष्योक्तक्रमेण हानिं वृद्धिं च कल्पयेत् ।

वाक्पारुष्ये यएवोक्ताः प्रातिलोम्यानुलोमतः ।

चस्तु दण्डसमुच्चायको न तु समुच्चयनिमित्तत्वसूचकः । सर्वत्र तथैव सत्त्वात् । तद्व्याख्यातृभिरपि तथैव व्याख्यातत्वाच्च ।

२ । एतेन समुच्चिते शतदण्डो न त्वङ्मांसभेदके, चस्य समुच्चयबोधकत्वादिति व्याख्यानमपास्तम् । नन्वेवं चतुःषष्टिपणो दण्डो मूले रक्तदर्शने उक्तः, मनुना तु शतमिति मिथो विरोध इति चेन्न । मर्मस्थले तद्दर्शकस्य मनूक्तम्, अन्यत्र मूलोक्तमिति विवेकात् । अग्रे चस्त्वर्थे ॥ २१८ ॥

मि० अव. किञ्च ।

या० करपाददतो भङ्गे छेदने कर्णनासयोः ।
मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा ॥ २१९ ॥

मि० करपाददन्तस्य प्रत्येकं भङ्गे, कर्णनासस्य च प्रत्येकं छेदने, रूढव्रणस्योद्भेदने, मृतकल्पो यथा भवति तथा हते ताडिते मध्यमसाहसो वेदितव्यः । अनुबन्धादिना विषयस्य साम्यमत्रापादनीयम् ॥ २१९ ॥

वा. १ । करेति समाहारद्वन्द्वे पाददन्तेति ददादेश इत्याह * करेति । अग्रिमानुरोधेन दण्डस्य तुल्यत्वाच्चाह * प्रत्येकमिति । मूले कर्णनासयोरित्यार्षम् । तत्सूचक इतरेतरद्वन्द्व एवेत्याह * कर्णनासस्य च प्रत्येकमिति । अपूर्वव्रणोत्पत्तेरत्रानुद्देश्यत्वं किं तु जातव्रणभङ्गस्येत्याह * रूढेति । जातेत्यर्थः । ननु करादिभङ्गस्याल्पत्वेनैकरूपेण सर्वत्र मध्यमसाहसदण्डविधानमयुक्तम्, अत आह * अनुबन्धादिनेति। अनुबन्धो दोषोत्पादः । दोषोत्पादे ऽनुबन्धः स्यादित्यमरः । आदिना व्यवहारासौकर्यम् । कर्णनासाछेदनादौ दोषाधिक्यं प्रत्यक्षसिद्धं, करपादादेस्तु साक्षाच्छरीरावयवत्वेन तद्भङ्गे व्यव-

तत्र हेतुं सूचयन्नाह * अपहारेति । वर्तुर्ग्राहिः ॥ २२१ ॥

मि० व्यय. किञ्च ।

या० दुःखमुत्पादयेद्यस्तु स समुत्थानजं व्ययम् ।
दाप्यो दण्डं च यो यस्मिन् कलहे समुदाहृतः ॥२२२॥

मि० यो यस्य ताडनाद् दुःखमुत्पादयेत्स तस्य व्रणरोपणादौ औषधार्थे पथ्यार्थे च यो व्ययः क्रियते तं दद्यात् । समुत्थानं व्रणरोपणम् । यस्मिन्कलहे यो दण्डस्तं च दद्यात् न समुत्थानजव्ययमात्रम् ॥२२२॥

बा. १। *ताडनात्, ताडितादिति पाठेऽपि भावे क्तः । समुत्थानजमित्यादेरर्थमाह * तस्य व्रणेति । क्रियते अनेन सम्यगुत्थानमिति व्युत्पत्त्याऽऽह * व्रणरोपणमिति । व्युत्पत्त्या तस्य सम्यक् स्वरूपतः करणमित्यर्थः ।दण्डं चेत्याद्यर्थमाह *यस्मिन्निति । अस्य तात्पर्यार्थमाह * नेति । मात्रमवधारणे ।

मनुरपि, (८।२८७)

अङ्गानां पीडनायां च प्राणशोणितयोस्तथा ।
समुत्थानव्ययं दाप्यः सर्वदण्डमथापि वा ॥ इति ।

अङ्गानां करादीनां प्राणशोणितयोश्च पीडनायां सत्यां समुत्थानव्ययं यावता कालेन पूर्वावस्थाप्राप्तिरूपसमुत्थानसम्बन्धो भवति तावता कालेन पथ्यौषधादिना यावान् व्ययो भवति तमसौ दापनीयः । यदि तं व्ययं पीडोपपादको न दातुमिच्छति तदा यः समुत्थानव्ययो यश्च दण्डस्तमेव सर्वं राज्ञा-दण्डत्वेन दाप्य इत्यर्थ इति तद्व्याख्यातारः ॥ २२२ ॥

मि० अव. परगात्राभिद्रोहे दण्डमुक्त्वाऽनन्तरं बहिरङ्गार्थनाशे दण्डमाह ।

तएव दण्डपारुष्ये कार्या राज्ञा यथाक्रमम्॥

इति स्मरणात्। ( ना. व्यव. १६। २९ )

या० कलहापहृतं देयं दण्डश्च द्विगुणस्ततः ॥२२१॥

मि० कलहे वर्तमाने यद्येनापहृतं तत्तेन प्रत्यर्पणीयम्। अपहृतद्रव्याद्विगुणश्चापहारानिमित्तो दण्डो देयः॥ २२१॥

बा. १। यथोक्तादित्यस्यार्थमाह * यस्मिन्निति। अपराधबहुत्वादाह * प्रत्येकमिति। तदेवाह * अतीति। एवं सवर्णाविषयापराधे मूलोक्तं दण्डं वाक्पारुष्योक्तन्यायेनात्र तदनुक्तत्वात्प्रातिलोम्यानुलोम्यापराधयोर्योजयति * प्रातिलोम्येति। *एतस्यैव, मूलीयस्यैव। * दण्डजातस्य, तत्समूहस्य। प्रातिलोम्यापराधे दण्डस्य वृद्धिः, आनुलोम्यापराधे दण्डस्य हानिरित्यर्थः।

२। न च विप्रपीडाकरामितिमूलव्याख्यावसरे भस्मादिसंस्पर्शे पुनरित्यादिनाऽयमर्थ उक्तः, स एवात्रोच्यत इति पौनरुक्त्यमिति वाच्यम्। भस्मादिभिः करणविशेषैः प्रातिलोम्यापराधे सति तत्रैवापराधे प्रागुक्तः प्रातिलोम्यापराधदण्डप्रसङ्गेन, अत्र तु प्रातिलोम्यानुलोम्यापराधयोरुभयोरपि वाक्पारुष्योक्तस्य सकलस्यापि दण्डस्य कल्पनाप्रकारो बालावबोधार्थमुच्यते इति भेदात्। मानवे प्रातिलोम्यानुलोमत इति धर्मपरम्। पञ्चमीद्विवचनान्तात्तसिः। * कार्याः, कर्त्तव्याः दण्डाः। दाप्या इति पाठान्तरम्।

उ. ३। कलहेति सप्तमीसमासः। तदाह *कलहे इति। * वर्तमाने, न तु समाप्ते। तत इत्यस्यार्थमाह * अपहृतेति।

या० अभिघाते तथा भेदे छेदे कुड्यावपातने ।
पणान्दाप्यः पञ्च दश विंशतिं तद्द्वयं तथा ॥ २२३ ॥

मि० मुद्गरादिना कुड्यस्याभिघाते विदारणे द्वैधीकरणे च यथाक्रमं पञ्चपणो दशपणो विंशतिपणश्च दण्डो वेदितव्यः । अवपातने पुनः कुड्यस्यैते त्रयो दण्डाः समन्विता ग्राह्याः । पुनः संपादनार्थं च धनं स्वामिने दद्यात् ॥ २२३ ॥

बा० १। उत्तरवचनस्य प्रसङ्गसङ्गतिरित्याह *परगात्रेति । गृहादितो हस्तादीनामन्तरङ्गत्वात्तदपराधे तावत्तत एव दण्डमुक्त्वा ऽन्तरङ्गप्रसङ्गाद् वहिरङ्गगृहकुड्याभिघातादौ दण्डकथनमित्यर्थः । एतेन वैपरीत्येन कथनशङ्काऽपि निरस्ता । अर्थो गृहादिरूपः । भेदे छेदे इति पाठः । पञ्चेत्यादि पदत्रयम् । योग्यतयाऽऽह *मुद्गरेति । प्रत्यासत्तेराह *कुड्यस्येति । अभिघात आघातमात्रम् । भेदे इत्यस्यार्थो * विदारणइति । छेदे इत्यस्यार्थो * द्वैधीति । चतुर्थदण्डाभावादपराधबाहुल्याच्चाह * एते त्रय इति । तद्द्वयमित्यस्यार्थमाह * पुनरिति ॥ २२३ ॥

मि० अव. अपिच ।

या० दुःखोत्पादि गृहे द्रव्यं क्षिपन्प्राणहरं तथा ।
षोडशाद्यः पणान्दाप्यो द्वितीयो मध्यमं दमम् ॥ २२४ ॥

मि० परगृहे दुःखजनकं कण्टकादि द्रव्यं प्रक्षिपन् षोडश पणान् दण्ड्यः । प्राणहरं पुनर्विषभुजङ्गादिकं प्रक्षिपन् मध्यमसाहसं दण्ड्यः ॥ २२४ ॥

बा० १ । अर्थादाह *परेति । दुःखोत्पादीति द्रव्यविशेषण-

त्यर्थः । मृत्युशब्दस्य लक्ष्यार्थमाह * मारणं चेति । अत एव तयोः सामानाधिकरण्यम् ।

२ । उत्तरार्धार्थमाह *महापशूनामिति । स्थानशब्दो निमित्तपर इत्याह * ताडनेति । तत्कृतदुःखोत्पादेत्यर्थः । आदिना शाखाङ्गच्छेदनादिसंग्रहः । दुःखे चेत्याद्युक्तनिमित्तेष्वित्यर्थः । * द्विगुणः, चतुष्पणादिः ॥ २२६ ॥

मि० अथ० स्थावराभिद्रोहे दण्डमाह ।

या० प्ररोहिशाखिनां शाखास्कन्धसर्वविदारणे ।
उपजीव्यद्रुमाणां च विंशतेर्द्विगुणो दमः ॥ २२७ ॥

मि० प्ररोहा अङ्कुरास्तद्वत्यः शाखाः प्ररोहिण्यः । याश्छिन्नाः पुनरुप्ताः प्रतिकाण्डं प्ररोहन्ति ताः शाखा येषां वटादीनां ते प्ररोहिशाखिनः । तेषां शाखाच्छेदने, यतो मूलशाखा निर्गच्छन्ति स स्कन्धस्तस्य छेदने, समूलवृक्षच्छेदने च यथाक्रमं विंशतिपणदण्डादारभ्य पूर्वस्मात् पूर्वस्मादुत्तरोत्तरदण्डो द्विगुणः। एतदुक्तं भवति । विंशतिपणश्चत्वारिंशत्पणोऽशीतिपण इत्येवं त्रयो दण्डा यथाक्रमं शाखाछेदनादिष्वपराधेषु भवन्तीति ।

अप्ररोहिशाखिनामप्युपजीव्यवृक्षाणामाम्रादीनां पूर्वोक्तेषु स्थानेषु पूर्वोक्ता एव दण्डाः। अनुपजीव्याप्ररोहिशाखिषु पुनर्वृक्षेषु कल्प्याः ॥ २२७ ॥

वा० १। पुनः स्पष्टार्थं तदर्थमाह * या इति। *उप्ताः, क्षेत्रनिक्षिप्ताः । *प्रतिकाण्डं, काण्डं काण्डं प्रति । ताः शाखा येषामिति शाखादिभ्य इतीनिस्त्वदन्तादपि बोध्यः। *मूलेति। मूल-

दाह * शाखाशब्देनेति ।* अत्र, अत्रैव। आदिना खुरपरिग्रहः । करचरणेति समाहारद्वन्द्वः प्राण्यङ्गत्वात् । दण्डशब्द उभयत्र तत्समूहपर इत्याह * दण्डगणस्येति । क्रमादिति तु व्युत्क्रमभ्रमनिरासाय।

२। तुर्यपादोक्तमेवाभिप्रायतो विवेचयति * सचेति । *न पुनः, न तु। दार्ढ्यायोक्तमाक्षिपति *कथमिति। समाधातुं सिद्धार्थमनुवदति *अपराधेति। *तावत्, आदौ। अवगमनेऽन्वयः। ततः किम्, अत आह * तत्र चेति। उपरितनदण्डत्रये चेत्यर्थः। द्विपण इत्यत्र द्वित्वं तावच्छ्रुतम्। तत्र च श्रुतद्वित्वसंख्यात आधिक्यम् अश्रुतत्रित्वादिरूपधर्मिकल्पनया वा श्रुतद्वित्वगताभ्यासात्मकचतुष्ट्वादिरूपधर्मकल्पनया वा भवति। तत्राद्ये ऽश्रुतकल्पना धर्मिकल्पनाचेति गौरवं, द्वितीये तु श्रुतद्वित्वगताभ्यासरूपधर्मकल्पनैवेति लाघवम् । तथा च न्यायविदः धर्मिकल्पनातो वरं धर्मकल्पनेति। अतः श्रुतद्वित्वाभ्यासाश्रयणमेवोचितमिति भावः ॥ २२५ ॥

मि० अव० किंच।

या० लिङ्गस्य छेदने मृत्यौ मध्यमो मूल्यमेव च ।
महापशूनामेतेषु स्थानेषु द्विगुणो दमः ॥ २२६ ॥

मि० तेषां क्षुद्रपशूनां लिङ्गच्छेदने मारणे च मध्यमसाहसो दण्डः। स्वामिने च मूल्यं दद्यात्। महापशूनां पुनर्गोगजवाजिप्रभृतीनामेतेषु स्थानेषु ताडनलोहितस्रावणादिनिमित्तेषु पूर्वोक्ताद्दण्डाद् द्विगुणो दण्डो वेदितव्यः ॥ २२६ ॥

बा० १। पूर्वार्द्धे पूर्वशेष इत्याह *तेषामिति। पूर्वोक्तानामि-

या० गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम् ।
पूर्वस्मृतादर्धदण्डः स्थानेषूक्तेषु कर्तने ॥ २२९ ॥

मि० गुल्मा अनतिदीर्घनिबिडलता मालत्यादयः । गुच्छा अवल्लीरूपाः असरलप्रायाः कुरण्टकादयः । क्षुपाः करवीरादयः सरलप्रायाः । लता दीर्घयायिन्यो द्राक्षातिमुक्ताप्रभृतयः । प्रतानाः काण्डप्ररोहरहिताः सरलयायिन्यः सारिवाप्रभृतयः । ओषध्यः फलपाकावसानाः शालिप्रभृतयः । वीरुधः छिन्ना अपि या विविधं प्ररोहन्ति ताः गुडूचीप्रभृतयः । एतेषां पूर्वोक्तेषु स्थानेषु कर्तने छेदने पूर्वोक्ताद्दण्डादर्धदण्डो वेदितव्यः ॥ २२९ ॥

इति दण्डपारुष्यप्रकरणम् ॥

वा० १ । *प्रत्याहेति । तदभिद्रोहमभिलक्ष्य दण्डमाहेत्यर्थः । एवं प्रागपि । * अनतिदीर्घेति । त्रयाणां कर्मधारयः, बहुव्रीहिरुत्तरपदको द्वयोः कर्मधारयो वा । यद्यपि लतात्वं सामान्यं तथापि समभिव्याहारादाह * दीर्घेति ।

अप्रकाण्डे स्तम्बगुल्मौ वल्ली तु व्रततिर्लता ।
लता प्रतानिनी वीरुत् गुल्मिन्युलप इत्यपि ॥ इत्यमरः ।

अवसानं समाप्तिर्नाश इति यावत् । पूर्वोक्तेषु इत्यादि प्राग्वत् । पूर्वस्मृतादित्यस्यार्थः * पूर्वोक्तादिति । प्रकृतिभूतविंशतिचत्वारिंशदशीतिपणरूपात्पूर्वोक्तादण्डादर्धदण्डो दशविंशतिचत्वारिंशत्पणात्मक इत्यर्थः ।

अत्र मनुः, ( अ. ८ श्लो. २९५–३०० )
प्रमापयेत्प्राणभृतः तत्र दण्डोऽविचारितः ॥

संवद्धशाखा इत्यर्थः ।

अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः । इत्यमरः ।

२ । सर्वेत्यस्यार्थमाह * समूलेति । मूलेति पाठेऽर्शआद्यच् वोध्यः । विदारणे इत्यस्य सर्वत्र सम्बन्धः । क्रमादित्यनुवृत्तेः स्थानाख्यलोकप्रमाणाद्वाऽऽह * यथेति । विंशतेरिति पञ्चमी न तु षष्ठीत्याह * विंशतीति । तदुपपत्तये आह * आरभ्येति । फलितमाह * एतदिति ।

३। वैयर्थ्यं परिहरन्नुत्तरार्धार्थमाह *प्ररोहीति । *उपजीव्येति । पत्रपुष्पफलादिनेति भावः । *पूर्वोक्तेष्विति । प्रागुक्तेषु निमित्तेष्वित्यर्थः । *पूर्वोक्ता एव, विंशतिपणादयः । दमशब्दस्तत्समूहपर इत्याह * दण्डा इति । न्यूनतां निराचष्टे * अऽनुपजीव्येति ॥ २२७ ॥

मि० अव० वृक्षाविशेषान्प्रत्याह ।

या० चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये ।
जातद्रुमाणां द्विगुणो दमो वृक्षेऽथ विश्रुते ॥ २२८॥

मि० चैत्यादिषु जातानां वृक्षाणां शाखाच्छेदनादिषु पूर्वोक्ताद्दण्डाद्द्विगुणः । विश्रुते च पिप्पलपलाशादिके द्विगुणो दण्डः ॥ २२८ ॥

बा० १ । *द्विगुण इति । शाखाच्छेदनादिषु त्रिषु यथाक्रमं चत्वारिंशत्पणोऽशीतिपणः षष्ट्यधिकशतपणश्चेत्यर्थः । अन्यत्राप्येवमेवेत्याह * विश्रुते इति । अथशब्दार्थमाह * पिप्पलेति । अत्र विश्रुतत्वं प्रसिद्धत्वं, तच्च शास्त्रीयं वोध्यमिति नातिप्रसङ्गः ॥ २२८ ॥

मि० अव० गुल्मादीन् प्रत्याह ।

## अथ साहसप्रकरणम् ॥

---

मि० अव० संप्रति साहसं नाम विवादपदं व्याचिख्यासुस्तल्लक्षणं तावदाह।

या० सामान्यद्रव्यप्रसभहरणात्साहसं स्मृतम्।

मि० सामान्यस्य साधारणस्य यथेष्टं विनियोगानर्हत्वाविशेषेण परकीयस्य वा द्रव्यस्यापहरणं साहसम्। कुतः, प्रसभहरणात् प्रसह्य हरणात् बलावष्टम्भेन हरणादिति यावत्। एतदुक्तं भवति। राजदण्ड जनाक्रोश[illegible] राजपुरुषेतरजनसमक्षं यत्किञ्चिन्मारणपरदा[illegible]णादिकं क्रियते तत्सर्वं साहसमिति साहसलक्षण[illegible] साधारणधनपरधनयो[illegible]हरणस्यापि बलावष्टम्भेन क्रियमाणत्वात्साहसत्वमिति।

नारदेनापि साहसस्य स्वरूपं विवृतम्, (व्यव. १४।१

सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः।

तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥ इति।

तदिदं साहसं चौर्यवाग्दण्डपारुष्यस्त्रीसंग्रहणेषु व्यासक्तमपि बलदर्पावष्टम्भोपाधितो भिद्यते इति दण्डातिरेकार्थं पृथगभिधानम्।

तस्य च दण्डवैचित्र्यप्रतिपादनार्थं प्रथमादिभेदेन त्रैविध्यमभिधाय—

तल्लक्षणं तेनैव विवृतम्, [व्यव. १४।श्लो. ३–८]

तत्पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा।

मनुष्यमारणे क्षिप्रं चोरवत् किल्बिषं भवेत् ।
प्राणभृत्सु महत्स्वर्द्धं गोगजोष्ट्रहयादिषु ॥
क्षुद्रकाणां पशूनां तु हिंसायां द्विशतो दमः ।
पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु ॥
गर्दभाजाविकानां तु दण्डः स्यात्पञ्चमाषकः ।
माषकस्तु भवेद्दण्डः श्वशूकरनिपातने ॥
भार्या पुत्रश्च दासश्च प्रेष्यो भ्राता च सोदरः ।
प्राप्तापराधास्ताड्याः स्युः रज्ज्वा वेणुदलेन वा ॥
पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कदाचन ।
अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्विषम् ॥ इति ।
प्राकारस्य च भेत्तारं परिखाणां च पूरकम् ।
द्वाराणां चैव भङ्क्तारं क्षिप्रमेव प्रवासयेत् ॥
इति च । [ मनु. अ. ९ । २८९ ]

विष्णुः, गजाश्वोष्ट्रगोघाती त्वेककरपादः कार्यो, विमांसविक्रयी ग्रामपशुघाती कार्षापणशतं दण्ड्यः पशुस्वामिने च तन्मूल्यं दद्यात्, आरण्यपशुघाती पञ्चाशतं कार्षापणान्, पक्षिघाती मत्स्यघाती च दश कार्षापणान्, कीटोपघाती कार्षापणमिति ।

विमांसं शृगालादिमांसम् ॥ २२९ ॥

इति दण्डपारुष्यप्रकरणम् ।

तस्य सूचयन्नाह *यथेष्टेति। यौगपद्यासम्भवादाह *वेति। यथा साधारणस्यानेकस्वत्वाक्रान्तस्य न यथेष्टविनियोगार्हत्वं तथा परद्रव्यस्यापीति तदपहरणमपि साहसं भवतीति भावः। * कृत इति। योगो वा रूढिर्वा योगरूढिर्वेति प्रश्नाशयः। प्रसभं हरणादिति समासः। तदाह * प्रसह्येति। तथा च यौगिकोऽयमिति भावः।

२। नन्वेवं मूलस्य न्यूनता तथापि तदवस्थैव स्मृत्यन्तरविरोधोऽपीति चेन्न। हेतुनैवान्यसंग्रहस्यापि सूचनेन दोषलेशाभावात्। तदेतत् ध्वनयन् तत्फलितमेवाह * एतदिति। *राजेति। राजदण्डभयं जनाक्षेपभयं चेत्यर्थः। *राजपुरुषेति। राजपुरुषाश्चेतरजनाश्च तेषां समक्षमित्यर्थः। असमक्षं तु क्रियमाणस्य स्तेयत्वमेवेति भावः। यत्किंचिदर्थमेवाह * मारणेति। *साहसमिति। सहसा क्रियमाणत्वात्। * साहसलक्षणमिति। साहससामान्यलक्षणमित्यर्थः। अत एवाह * अत इति। उक्तहेतोरित्यर्थः। अपिना तत्समुच्चयः। तत्र आदिना एतस्यापि परिग्रहः। एवं च सर्वं मूलमुपलक्षणमिति स्वयमेव सूचितमिति न दोषः।

३। अत एवाह * नारदेनापीति। * साहसस्य, तत्सामान्यस्य। बलस्य दर्पो गर्वः स सञ्जातो येषां तैः। ननु सहसा कृतं साहसमिति योगमात्रलब्धं तत्सामान्यलक्षणं चौर्यादिष्वविशिष्टमिति तेष्वेवान्तर्भावादस्य प्रकरणस्य पृथगुक्तिरयुक्तेत्यत आह * तदिदमिति। पूर्वोक्तं साहससामान्यलक्षणमित्यर्थः। * व्यासक्तमपि, सम्बद्धमपि। बलसम्बन्धिदर्पस्यावष्टम्भरूपोपाधितो भिद्यते इत्यर्थः। नन्वेवं किमित्येवं भेदाङ्गीकारः, अत आह * दण्डेति। तद्भेदस्य शास्त्रकाद्भिः प्रति-

उत्तमं चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥
फलमूलोदकादीनां क्षेत्रोपकरणस्य च।
भङ्गाक्षेपोपमर्दाद्यैः प्रथमं साहसं स्मृतम् ॥
वासःपश्वन्नपानानां गृहोपकरणस्य च।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥
व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम्।
प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् ॥
तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः।
मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः ॥
उत्तमे साहसे दण्डः सहस्रावर इष्यते।
वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने ॥
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे ॥ इति।

वधादयश्चापराधतारतम्यादुत्तमसाहसे समस्ता व्यस्ता वा योज्याः।

अव० तत्र परद्रव्यापहरणरूपे साहसे दण्डमाह।

या० तन्मूल्याद् द्विगुणो दण्डो निह्नवे तु चतुर्गुणः॥ २ ३ ०॥

मि० तस्यापहृतद्रव्यस्य मूल्यात् द्विगुणो दण्डः। यः पुनः साहसं कृत्वा नाहमकार्षमिति निह्नुते तस्य मूल्याच्चतुर्गुणो दण्डो भवति। एतस्मादेव विशेषदण्डविधानात्प्रथमसाहसादिसामान्यदण्डविधानमपहारव्यतिरिक्तविषयं गम्यते ॥ २३० ॥

बा० १। * आहेति। मूलकद् अर्द्धेनेति भावः। शब्दार्थमाह *साधारणस्येति। मौलं सामान्येत्युपलक्षणं परकीयस्यापि। तत्र साधारणधर्मस्य हेतुत्वप्रदर्शनद्वारा ऽनुगतम् अभिमतं लक्ष्यार्थं

मस्ता, मिलिताः । * व्यस्ता, भिन्नाः ।

द० ७ । एवं स्मृत्यन्तरोक्तं विशेषमुक्त्वा तत्सङ्गत्या प्रकृतमवतारयति * तत्रेति । तेषां मध्ये इत्यर्थः । आदिना सामान्यद्रव्यपरिग्रहः । अत एव तच्छब्दस्य प्रक्रान्तपरामर्शित्वात्तस्येत्यस्योभयसंग्रहार्थमाह * अपहृतद्रव्यस्येति । अत्र साहसं कृत्वेत्यनेन सूचितं, निह्नवानन्तरं साक्ष्यादिभिर्भावितोऽपि यदि पुनस्तथैव करोति स चतुर्गुणदण्डार्हो न निह्नवमात्रेणेति ।

८ । ननु प्रथमसाहसादिषु नारदेन शतावरादयो दण्डा उक्ताः, मूले तु द्विगुणचतुर्गुणावुक्ताविति मिथो विरोधादप्रामाण्यम् । पाक्षिकं प्रामाण्यं तु विकल्पस्याष्टदोषदुष्टत्वादयुक्तम् । अत आह *एतस्मादेवेति । मूलोक्तादेवेत्यर्थः । *विधानं, नारदीयम् । *अपहारद्रव्येति । अपह्रियमाणद्रव्येत्यर्थः । अपहारव्यतिरिक्तेति पाठस्तु सुगम एव । द्रव्यापहारव्यतिरिक्तेति पाठान्तरम् । अत्र विशेषसामान्यपदोल्लेखेन तक्रकौण्डिन्यन्यायविषयता सूचिता । तथा च नाप्रामाण्यं, नापि विकल्पः, किं तु विशेषस्य सामान्यापवादकत्वेनापहाररूपाविषयाविशेषे द्वैगुण्यादिविधायकेनानेन विशेषवाक्येन सामान्यतो विधायकं नारदीयं बाध्यते इति भावः ॥ २३० ॥

मि० अव. साहसिकस्य प्रयोजयितारं प्रत्याह ।

या० यः साहसं कारयति स दाप्यो द्विगुणं दमम् ।
यश्चैवमुक्त्वाऽहं दाता कारयेत्स चतुर्गुणम् ॥ २३१ ॥

मि० यस्तु साहसं कुर्विंत्येवं वाचैव कारयति असौ साहसिकाद्दण्डात् द्विगुणं दण्डं दाप्यः।यः पुनः "अहं तुभ्यं धनं दास्यामि त्वं कुरु" इत्येवमुक्त्वा साहसं कारय-

पादनादित्यर्थः । यद्यपीदं प्रागुक्तसामान्यलक्षणं तत्र सर्वत्रानुस्यूतं तथापि तादृशावान्तरोपाधिभेदाद्भिन्नमिति तद्घटितविशेषलक्षणेन लक्षितमत्र साहसपदवाच्यमिति रूढमपि । तत्र तु शुद्धयौगिकमिति भावः ।

४ । यदि तु तत्साधारणं लक्षणमपीष्टं तर्हि योगमात्रलब्धं तदप्यस्तु, प्रकरणभेदस्तूक्तनिमित्तकः, तदा चौर्यादिष्वपि विशेपलक्षणानि वक्ष्यमाणानि बोध्यानि । बलदर्पयोरवष्टम्भयोरुपाधित्वमिति व्याख्यानं तु बलावष्टम्भेनेतिव्याख्याविरोधात् सहो बलमितिनारदविरोधाच्चोपेक्ष्यम् ।

५ । तदेतत् ध्वनयन्नेवाह * तस्य चेति । साहसविशेषस्येत्यर्थः । * प्रथमादीति । प्रथमसाहसमध्यमसाहसोत्तमसाहसभेदेनेत्यर्थः । एतानि कर्मनामानि न तु दण्डस्येति बोध्यम् । * तल्लक्षणं, तेषां त्रयाणां लक्षणानि । जातावेकवचनम् । * तेनैव, नारदेनैव । * तत्पुनः, तत्तु । शास्त्रेष्वित्युत्तरान्वयि । * तस्य, त्रिविधस्य । क्षेत्रोपकरणं तत्सामग्री । एवमग्रेऽपि । भङ्गो भञ्जनम् । आक्षेपो दोषोत्पादः । उपमर्दो म्लानतापादनम् । आद्यशब्देन छेदनादिकम् । वासो वस्त्रम् । पूर्वनिपातप्रकरणस्यानित्यत्वान्न दोषः । * एतेनैवेति । प्रागुक्तभङ्गादिनैवेत्यर्थः । व्यापादो मारणम् । *प्राणोपरोधीति । तन्नाशकमित्यर्थः । *तस्य, त्रिविधस्य । क्रिया करणं कर्मेति यावत् । तदपेक्षः प्रथमसाहसादिरूपकर्मापेक्षः, न तद्विरुद्धः । तदेव विविच्याह * प्रथमस्येति । पञ्चशतेति बहुव्रीहिः । तृतीये अन्यदप्याह * वध इति । उत्तमसाहसे इति सप्तम्यन्तपाठः । कर्मनामेदम् । व्याख्यातमिदं प्राक् ।

६ । सहस्रावरदण्डस्य नियतत्वेऽप्यग्रे कथमिति शङ्कानिरासायोक्तमेव ध्वनयन्व्यवस्थामाह * वधादयइति । * स-

करोतीति समासः। तदाह * अर्थ्येस्यार्थादस्यंति। तस्य सापेक्ष-त्वादन्यार्थे पूर्वेण सिद्धत्वाच्चाह * आक्षेति । नात्र भेदो वि-दारणम् । समुद्रेत्यस्य वैयर्थ्यापत्तेः । तत्र दण्डान्तरविधानाच्च। अत आह *उद्घाटयतीति । सामन्तपदार्थमाह * स्वगृहेति ! कुलिके अत इनीति ठन् । तत्फलितमाह * स्वेति । * ते सर्वे इति । प्रत्येकमिति भावः ॥ २३२ ॥ २३३ ॥

मि० अव. किंच ।

या० स्वच्छन्दं विधवागामी विक्रुष्टे नाभिधावकः ।
अकारणे च विक्रोष्टा चण्डालश्चोत्तमान् स्पृशेत्॥ २ २४॥
शूद्रप्रव्रजितानां च दैवे पित्र्ये च भोजकः ।
अयुक्तं शपथं कुर्वन्नयोग्यो योग्यकर्मकृत् ॥ २३५ ॥
वृषक्षुद्रपशूनां च पुंस्त्वस्य प्रतिघातकृत् ।
साधारणस्यापलापी दासीगर्भविनाशकृत् ॥ २३६ ॥
पितापुत्रस्वसृभ्रातृदम्पत्याचार्यशिष्यकाः ।
एषामपतितान्योन्यत्यागी च शतदण्डभाक् ॥ २२७ ॥

मि० नियोगं विना यः स्वेच्छया विधवां गच्छ-ति । चौरादिभयाकुलैर्विक्रुष्टे यः शक्तोऽपि नाभिधा-वति । यश्च वृथाऽऽक्रोशं करोति। यश्चण्डालो ब्राह्मणा-दीन् स्पृशति । यश्च शूद्रप्रव्राजितान् दिगम्बरादीन् दै-वे पित्र्ये च कर्मणि भोजयति । यश्चायुक्तं मातरं ग्र-हीष्यामीत्येवं शपथं करोति । तथा यश्च अयोग्य ए-व शूद्रादिर्योग्यकर्माध्ययनादि करोति । वृषो बलीव-

ति स चतुर्गुणं दण्डं दाप्योऽनुबन्धातिशयात् ॥२३१॥

बा० १। साहसं विद्यते यस्य स साहसिकः। अत इनिठनौ इति ठन्। तस्य प्रयोजयितारं त्रिविधं प्राह। एतेनार्थदानव्यवच्छेदः। अत एवार्पणमुक्तम्। साक्षात्त्वात्प्रत्यासत्तेराह * साहसिकेति। पूर्वोक्तादित्यर्थः। दातेति तृजन्तस्य। भावित्वाद्भविष्यार्थमात्रस्याहारः। तत्फलितमाह * दास्यामीति। यद्वा भविष्यत्सामान्ये व्यत्ययेन लुट्। न्यूनतां निराचष्टे * त्वमिति। द्विकर्योऽविवक्षित इत्याह * कारयतीति। एवमग्रे सर्वत्र बोध्यम्। तत्र हेतुमाह * अनुबन्धेति। दोषाधिक्यादित्यर्थः ॥ २३१ ॥

नि० अथ साहसिकविशेषं प्रत्याह।

या० अर्घ्याक्रोशातिक्रमकृद्भ्रातृभार्याप्रहारदः।
संदिष्टस्याप्रदाता च समुद्रगृहभेदकृत् ॥ २३२ ॥
सामन्तकुलिकादीनामपकारस्य कारकः।
पञ्चाशत्पणिको दण्ड एषामिति विनिश्चयः ॥ २३३ ॥

नि० अर्घ्यस्याचार्यादेराक्षेपमाज्ञातिक्रमं च यः करोति, यश्च भ्रातृभार्यां ताडयति, तथा संदिष्टस्य प्रतिश्रुतस्यार्थस्याप्रदाता, यश्च मुद्रितगृहमुद्भेदयति, तथा स्वगृहक्षेत्रादिसंसक्तगृहक्षेत्रादिस्वामिनां, कुलिकानां स्वकुलोद्भवानाम्, आदिग्रहणात् स्वग्रामस्वदेशीयानां च योऽपकर्ता—ते सर्वे पञ्चाशत्पणपरिमितेन दण्डेन दण्डनीयाः ॥ २३२ ॥ २३३ ॥

बा० १। अर्घ्ये पादाभ्यां चेति यत्। अर्घ्यस्याक्रोशातिक्रमौ

दे:, क्षुद्रपशवोऽजादयः, तेषां पुंस्त्वस्य प्रजननशक्तेर्विनाशकः। वृक्षक्षुद्रपशूनामिति तु पाठे हिङ्ग्वाद्यौषधप्रयोगेण वृक्षादेः फलप्रसूनानां पातयिता। साधारणद्रव्यस्य वञ्चकः। दासीगर्भस्य पातयिता च। येच पित्रादयोऽपतिता एव सन्तोऽन्योन्यं त्यजन्ति। ते सर्वे प्रत्येकं पणशतं दण्डार्हा भवन्ति ॥ २३४ ॥ २३५ ॥ २३६ ॥ २३७ ॥

इति साहसप्रकरणम् ।

वा० १। * किं चेति। साहासिकविशेषान्तरं प्रत्यन्यदप्याहेत्यर्थः। स्वच्छन्दामिति क्रियाविशेषणम्। तदर्थमाह * नियोगमिति। ताच्छील्ये णिनिस्तत्र। * विक्रुष्टे, महता शब्देनाहते। * शक्तोपीऽति। तन्निवारणे इत्यादिः। एतेनाशक्तस्य दण्डाभावस्तथा अकुर्वतः सूचितः। अपिर्विरोधे ऽनौचित्ये वा, न तु समुच्चये। अकारणे इत्यस्यार्थो * वृथेति। अत्र विक्रोशो निन्देत्याह * आक्रोशामिति। शूद्राः सन्तः प्रव्रजिताः। शूद्रप्रव्रजितानामित्येकम्। तदाह * दिगम्बरादीनिति। * तु पाठे, पाठेतु। * फलेति। तथा च प्रजननशक्तेर्नाशेन वन्ध्यता तेषां सम्पन्नेति भावः। एषां पित्रादीनां मध्ये ऽपतितम् अन्योन्यं मिथस्त्यजतीति शाब्दोऽर्थः। तत्फलितमाह * पित्रादयइति ॥ २३४ ॥ २३५ ॥ २३६ ॥ २३७ ॥

इति साहसप्रकरणम् ।

मूल्यमन्यपदार्थः। अवाधे विनाऽष्टमांशादितो न्यूनताया दुर्वच-त्वाद्दिङ्मात्रप्रदर्शनायेदमुक्तमिति बोध्यम् । क्षये इति चरमे चक्तेराह * नाशितस्येति । *पणन्यूनं, सप्तपणात्मकम् । धौत-स्येत्यादेरग्रेऽपि सम्बन्धादाह * द्विर्धौतेति । *पादोनं, चतुर्थां-शन्यूनम् । तदाह * पणेति । षट्पणात्मकमित्यर्थः । अर्धक्ष-यादिति व्याचष्टे * ततः परमिति । इदं परत इत्यन्तस्य व्याख्यानम् । सार्वविभक्तिकः प्रथमान्तात्तसिः । प्रतिनिर्णेजन-मिति वीप्सायामव्ययीभावः । * अवशिष्टम्, अर्धम् । *अपच-येन, तत्क्रमेण । क्वचित् तथैव पाटः । जीर्णमित्यन्तं पूर्वान्व-यीत्याह * यावज्जीर्णमिति । जीर्णता च दशासु क्षीणासु ज्ञे-येत्येतदर्थं मूले क्षीणदशमित्युक्तम् । अर्धक्षयोत्तरं पञ्चमप्रक्षा-लनादिषु अवशिष्टस्यार्धमूल्यस्य पादपादापचयक्रमेण मूल्यक-ल्पनेति पञ्चमप्रक्षालने पणचतुष्टयात्मकमूल्यादेकपणोनं पण-त्रयात्मकं, षष्ठे तत्र पणत्रयात्तस्मात्पादोनं सपादपणद्वयात्मकं, सप्तमे तत्र सपादपणद्वयात्पादोनं किञ्चिदधिकसार्द्धपणात्मक-मित्यादि वोध्यमिति भावः ।

४। जीर्णस्यानियम इति व्याचष्टे * जीर्णस्येति । * अ-नियम इति । अस्य प्राक् वाचानिकानियमाभाव इत्यर्थः । तथा-सति सर्वथा तदभावो नेति ध्वनयितुं नियमपदसूचितमाह *इ-च्छात इति । परीक्षकाणामिच्छात इत्यर्थः । तथा च जीर्णना-शे परीक्षकाणामिच्छैव मूल्यदानकल्पनायां प्रमाणं न प्रागु-क्तवचनप्रवृत्तिर्नापि स्वेच्छाप्रवृत्तिरिति भावः ॥ २३८ ॥

या. पितापुत्रविरोधे तु साक्षिणां त्रिपणो दमः ।
अन्तरे च तयोर्यः स्यात्तस्याप्यष्टगुणो दमः ॥२३९॥

अष्टपणक्रीतस्य सकृद्धौतस्य वस्त्रस्य नाशितस्याष्टमभागोनं पणन्यूनं मूल्यं देयम्। द्विर्धौतस्य तु पादोनम् पणद्वयन्यूनम् । त्रिर्धौतस्य पुनस्तृतीयांशन्यूनम् । चतुर्धौतस्यार्द्धं पणचतुष्टयं देयम् । ततः परं प्रतिनिर्णेजनमवशिष्टं मूल्यं पादापचयेन देयं यावज्जीर्णम् । जीर्णस्य पुनर्नाशितस्येच्छातो मूल्यदानकल्पनम् ॥ २३८ ॥

वा० १। एतदवान्तरप्रकरणसङ्गतिमाह *साहसेति। * तत्सदृशेति । यथा तेषां समक्षं तत् क्रियमाणं साहसं तथा वस्त्रधावकादिभिरपि सकलजनसमक्षं परवस्त्राच्छादनादि क्रियमाणमिति तस्य तत्सादृश्यात्तत्प्रसङ्गात्तदपराधकर्तॄणां तेषां दण्डमाहेत्यर्थः। नेजको वस्त्रधावकः । आदिना वक्ष्यमाणसर्वपरिग्रहः । अत एव दण्डमिति जातावेकवचनम् । निर्णेजनं प्रक्षालनम् । * अवक्रयमिति । करोतीति शेषः । अवक्रयार्थमाह * एतावदिति । ददातीत्यन्तेन । * इत्येवमिति । सम्भाव्य । *शाटकं, वस्त्रमित्यर्थः । भाटकमिति पाठे तत्त्वेनोपलक्षितं वस्त्रमित्यर्थः। तथा च तथा दानमवक्रय इति भावः । अत्र न धनग्रहणमित्याह * स्वेति ।

२। विशेषमाह * तानि चेति । शाल्मलेर्विकारादावण् ।
पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ।इत्यमरः।
व्यत्यासो विनिमयः । * स्वगृहे इति । चिरमिति भावः । एवमग्रेऽपि । *दण्ड्यः, नेजकः । *फलके, पाटीति प्रसिद्धे । *नेनिज्यात्, प्रक्षालयेत् । * निर्हरेत्, विनिमयं प्रापयेत् । *प्रमादादिति । अप्रमादे तु अन्यथा द्रष्टव्यमिति भावः ।

३। नारदीयमादितो व्याचष्टे * अष्टपणेति । बहुव्रीहिः ।

ति, तावुभौ प्रत्येकमुत्तमसाहसं दण्डनीयौ ॥ २४० ॥

वा. १ । * पूर्वोक्तं, प्रथमाध्यायान्ते उक्तं राजपत्रम् । द्रम्मनिष्कादयो मूल्याध्यायविवृतौ प्रपञ्चिताः । कूटं कृतकम् । तत्स्वरूपं सर्वत्र क्रमेण प्रतिपादयन् कूटकादिति व्याचष्टे *देशेत्यादि । स्थलत्रये ऽन्यथेत्यन्तं तत्स्वरूपं, तदपि द्वेधेत्याह *न्यूनेति । एवमग्रेऽपि द्वेधेत्याह *द्रम्मादेरिति ।

२ । उत्तरार्धं व्याचष्टे * यश्चैतैरिति । * कूटैरिति । अर्शआद्यच् । पूर्वोक्तैः कूटकाद्भिरित्यर्थः । जानन्नित्यनेनाज्ञानतो व्यवहारे दण्डाभावः सूचितः । व्यवहारमात्रं न तावद्दण्डप्रयोजकं, दोषस्य स्वल्पत्वादिति जानन्नित्युक्तमिति बोध्यम् ॥२४०॥

मि० अव० नाणकपरीक्षिणं प्रत्याह ।

या० अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम् ।
स नाणकपरीक्षी तु दाप्य उत्तमसाहसम् ॥२४१॥

मि० यः पुनर्नाणकपरीक्षी ताम्रादिगर्भमेव द्रम्मादिकं सम्यगिति ब्रूयात्, सम्यञ्चं वा कूटकमिति, असावुत्तमसाहसं दण्ड्यः ॥ २४१ ॥

वा. १। *परीक्षिणं, परीक्षकम् । दण्डमिति शेषः । * कुर्यादिति । ब्रूयादित्यर्थः । क्वचित्तथैव पाठः । उभयत्र स्वार्थे कन् । सनाणकेत्यस्य सान्निध्याद् व्युत्क्रमेण व्याचष्टे * ताम्रादीति । इतीत्यस्य उभयत्र ब्रूयादिति शेषः ॥ २४१ ॥

मि० अव० चिकित्सकं प्रत्याह ।

या० भिषङ् मिथ्याऽऽचरन्दण्ड्यस्तिर्यक्षु प्रथमं दमम् ।
मानुषे मध्यमं राजपुरुषेषूत्तमं दमम् ॥ २४२ ॥

मि. पितापुत्रयोः कलहे यः साक्ष्यमङ्गीकरोति न पुनः कलहं निवारयति असौ पणत्रयं दण्ड्यः। यश्च तयोः सपणे विवादे पणदाने प्रतिभूर्भवति असौ, चकारात्तयोर्यः कलहं वर्द्धयति सोऽपि त्रिपणादष्टगुणं चतुर्विंशतिं पणान्दण्डनीयः। दम्पत्यादिष्वयमेव दण्डोऽनुसरणीयः ॥ २३९ ॥

बा० १। अथ प्रागुक्तादिशब्दसंग्राह्याणां क्रमेण दण्डानाह *पितेत्यादि। पण्यस्योपरीत्यन्तैः पञ्चदशभिः पद्यैः केवलं तत्साक्षिणो दण्डो नाभिमतः। तथा सति साक्षित्वोच्छेदापत्तेः। तदभावे क्वचित् विवादपरिसमाप्त्यभावापत्तेश्च। किं तु यः कलहनिवारणसमर्थः सन्नपि तमनिवारयन् साक्ष्यमङ्गीकरोति तस्य दण्ड इत्याशयेन व्याचष्टे * पितेति। तथा च न तावन्मात्रं दण्डप्रयोजकं किं तु अन्यदपीत्याह * न पुनः कलहमिति। इदमग्रेऽप्युभयत्र ज्ञेयम्। त्रिपण इति बहुव्रीहिरित्याह * पणत्रयमिति। साकाङ्क्षत्वात्प्रत्यासत्तेराह * त्रिपणादिति। चतुर्विंशतिमिति व्यस्तः पाठः। तुल्यन्यायत्वादाह * दम्पत्यादीति। आदिना गुरुशिष्यादिपरिग्रहः ॥ २३९ ॥

या० तुलाशासनमानानां कूटकृन्नाणकस्य च।
एभिश्च व्यवहर्ता यः स दाप्यो दममुत्तमम् ॥२४०॥

मि० तुला तोलनदण्डः। शासनं पूर्वोक्तम्। मानं प्रस्थद्रोणादि। नाणकं मुद्रादिचिह्नितं द्रम्मनिष्कादि। एतेषां यः कूटकृत देशप्रसिद्धपरिमाणादन्यथा न्यूनत्वमाधिक्यं वा द्रम्मादेरव्यवहारिकमुद्रात्वं वा ताम्रादिगर्भत्वं वा करोति, यश्च एतैः कूटैर्जानन्नपि व्यवहर-

इति तत्त्वम् । प्रमुञ्चतीत्यस्य मध्यमणिन्यायेनोभयत्रान्वय इत्याह * यश्च वद्धमिति । अप्राप्तव्यवहारमित्यस्यार्थमाह * अनिर्वृत्तेति ॥ २४३ ॥

या० मानेन तुलया वाऽपि योंऽशमष्टमकं हरेत् ।

दण्डं स दाप्यो द्विशतं वृद्धौ हानौ च कल्पितम्॥२४४॥

मि० यः पुनर्वाणिक् व्रीहिकार्पासादेः पण्यस्याष्टममंशं कूटमानेन कूटतुलया वा अन्यथा वा अपहरति असौ पणानां द्विशतं दण्डनीयः। अपहृतस्य द्रव्यस्य पुनर्वृद्धौ हानौ च दण्डस्यापि वृद्धिहानी कल्प्ये ॥ २४४ ॥

वा. १ । * पण्यस्य, विक्रेयस्य । योग्यतयाऽऽह * कूटेति । अपिसमुच्चेयमाह * अन्यथावेति । मूले द्विशतमिति बहुव्रीहिः । दण्डः अन्यपदार्थः । तत्फलितमाह * पणानां द्विशतमिति । अत्रापि बहुव्रीहिरेव, समूहोऽन्यपदार्थ इति विशेषः ।

२ । तुर्यपादं व्याचष्टे * अपहृतस्येति । कूटमानादिनाऽपहृतस्य अष्टमांशादप्याधिक्यत्वे न्यूनत्वे वा दण्डद्रव्यस्यापि द्विशताद् वृद्धिर्हानिश्च कल्प्येत्यर्थः ॥ २४४ ॥

या० भेषजस्नेहलवणगन्धधान्यगुडादिषु ।

पण्येषु प्रक्षिपन् हीनं पणान् दाप्यस्तु षोडश॥२४५॥

मि० भेषजमौषधद्रव्यम् । स्नेहो घृतादिः । गन्धद्रव्यमुशीरादि।आदिशब्दाद्धिङ्गुमरीचादि। एतेषु असारद्रव्यं विक्रयार्थं मिश्रयतः षोडशपणो दण्डः॥२४५॥

वा. १।भेषजेति द्वंद्वे गतिः प्राग्वत् । गन्धशब्दोऽत्र तादृश-

मि० यः पुनर्भिषक् मिथ्या आयुर्वेदानभिज्ञ एव जीवनार्थं चिकित्सितज्ञोऽहमिति तिर्यङ्मनुष्यराजपुरुषेषु चिकित्सामाचरति असौ यथाक्रमेण प्रथममध्यमोत्तमसाहसान् दण्डनीयः।

तत्रापि तिर्यगादिषु मूल्यविशेषेण वर्णविशेषेण राजप्रत्यासत्तिविशेषेण दण्डस्य लघुगुरुभावः कल्पनीयः॥ २४२ ॥

बा. १। त्रितयं सहैव लाघवेन व्याचष्टे * यः पुनरिति। मिथ्याऽऽचरन्नित्याद्यर्थं सहेतुकमाह * जीवनेति। जीवनार्थमित्यस्य अग्रिमे चिकित्सामाचरतीत्यत्रान्वयः। इतीत्यस्य ब्रुवन् इति शेषः। तिर्यञ्चः पशुपक्ष्यादयः।

२। विशेषमाह * तत्रापीति। उक्तदण्डेष्वपीत्यर्थः। त्रिषु यथाक्रमेणाह * मूल्येत्यादि। तिर्यक्षु मूल्यविशेषेण, मानुषेषु ब्राह्मणत्वादिवर्णविशेषेण, राजपुरुषेषु तत्प्रत्यासत्तिविशेषेण दण्डस्य लघुत्वं गुरुत्वं च कल्पनीयमित्यर्थः। विशेषशब्दा भेदपराः॥ २४२ ॥

या० अबन्ध्यं यश्च बध्नाति बद्धं यश्च प्रमुञ्चति।
अप्राप्तव्यवहारं च स दाप्यो दममुत्तमम् ॥२४३॥

मि० यः पुनर्बन्धनानर्हमनपराधिनं राजाज्ञया विना बध्नाति, यश्च बद्धं व्यवहारार्थमाहूतम् अनिर्वृत्तव्यवहारं चोत्सृजति असौ उत्तमसाहसं दाप्यः॥ २४३ ॥

बा. १। अनर्हत्वे हेतुं सूचयन्नाह * अनपराधिनमिति। अत एवाह * राजेति। अस्यानुषङ्गेणाग्रे उभयत्र मुख्य उपयोग

ष्करत्वात् सहेतुकमर्थमाह *विक्रयार्थमित्यादिना संपादने इत्यन्तेन। गन्धेत्यादिः द्वंद्वगर्भो मयूरव्यंसकादिः। जातीयस्य सादृश्येत्यर्थः। उक्तमेवोदाहरणानां विशदयति * यथेत्यादि। तदेकान्तत्वाभावात्सुगन्धेत्यत्र इत्वं न। आमलकं मृत्तिकाया एव बोध्यम्। गुणोत्कर्षेत्यर्थः। क्वचित्तथैव पाठः। एवमग्रेऽपि। * कार्ष्णायसेइति। कृष्णायसो विकारादावित्यर्थः। पुनर्गन्धोदाहरणमाह * बिल्वेति। रसोदाहरणमाह * कल्कोले इति। प्रसिद्धदेवकुसुमव्यावृत्तये आह * त्वगिति। तद्रसमध्ये तन्निक्षेपेण तद्रसाभिव्यक्तेरिति भावः। पुनर्वर्णस्योदाहरणमाह * कार्पासिकेइति। तत्सूत्रनिर्मिते इत्यर्थः। विक्रेयेत्यस्य व्याख्या *पण्यस्येति। तत्स्वरूपमाह *आपादिते इति। वर्णान्तरापादनेनापादितपद्मरागाद्यात्मकस्य स्फटिकादेरित्यर्थः। यन्मूल्यं तस्मादिति शेषः॥ २४६॥

या० समुद्रपरिवर्तच सारभाण्डं च कृत्रिमम्।
आधानं विक्रयं वाऽपि नयतो दण्डकल्पना॥ २४७॥
भिन्ने पणे तु पञ्चाशत् पणे तु शतमुच्यते।
द्विपणे द्विशतो दण्डो मूल्यवृद्धौ च वृद्धिमान्॥२४८॥

मि० मुद्रं पिधानं मुद्रेन सह वर्तते इति समुद्रं करण्डकं, परिवर्तनं व्यत्यासः। योऽन्यदेव मुक्तानां पूर्णं करण्डकं दर्शयित्वा हस्तलाघवेनान्यदेव स्फटिकानां पूर्णं करण्डकं समर्पयति, यश्च सारभाण्डं कस्तूरिकादिकं कृत्रिमं कृत्वा विक्रयमाधिं वा नयति, तस्य दण्डकल्पना वक्ष्यमाणा वेदितव्या।

द्रव्यवाची न तु गुणमात्रवाची, वहति जलमियं पिनष्टि गन्धानित्यादिप्रयोगादित्याह * गन्धद्रव्यमिति । तद्विशिष्टं द्रव्यमित्यर्थः । हीनपदार्थमाह * असारेति ॥ २४५ ॥

मि० अच० किञ्च ।

या० मृच्चर्ममणिसूत्रायःकाष्ठवल्कलवाससि ।
अजातौ जातिकरणे विक्रेयाष्टगुणो दमः ॥ २४६ ॥

मि० न विद्यते बहुमूल्या जातिर्यस्मिन्मृच्चर्मादिके तदजाति तस्मिन् जातिकरणे विक्रयार्थे गन्धवर्णरसान्तरसञ्चारणेन बहुमूल्यजातीयसादृश्यसम्पादने। यथा मल्लिकामोदसञ्चारेण मृत्तिकायां सुगन्धामलकामिति । मार्जारचर्मणि वर्णोत्कर्षापादनेन व्याघ्रचर्मेति । स्फटिकमणौ वर्णान्तरकरणेन पद्मराग इति। कार्पासिके सूत्रे गुणोत्कर्षाधानेन पट्टसूत्रमिति। कार्ष्णायसे वर्णोत्कर्षाधानेन रजतमिति। बिल्वकाष्ठे चन्दनामोदसञ्चारणेन चन्दनमिति। वल्कले कङ्कोले त्वगाख्यं लवङ्गमिति । कार्पासिके वाससि गुणोत्कर्षाधानेन कौशेयमिति । विक्रेयस्यापादितसादृश्यस्य मृच्चर्मादेः पण्यस्याष्टगुणो दण्डो वेदितव्यः ॥ २४६ ॥

बा. १ । * किं चेति । ईदृशो विषयोऽन्योऽप्युच्यते इत्यर्थः । मूले वाससीति सप्तम्यन्तं, समाहारद्वंद्व इत्याह * न विद्यते इति । जातिरुत्कर्ष इत्याह * बह्विति । * तस्मिन्निति । जातिशून्यमृदादिके इत्यर्थः । तृतीयादिष्विति पुंवद्भावान्नुम्नेति भावः । जातिकरणे इत्यस्य मुख्यजातेस्तत्र ब्रह्मणाऽपि दु-

कृत्रिमकस्तूरिकादेर्मूल्यभूते पणे भिन्ने न्यूने न्यूनपणमूल्ये इति यावत् । तस्मिन् कृत्रिमे विक्रीते पञ्चाशत्पणो दण्डः । पणमूल्ये पुनः शतम् । द्विपणमूल्ये द्विशतो दण्ड इत्येवं मूल्यवृद्धौ दण्डवृद्धिरूह्या ॥ २४७ ॥ २४८ ॥

वा० १ । *करण्डकमिति । समुद्गकः संपुटक इत्यमरः । महाभाष्ये तु "नैतत् उब्जे रूपं किं तूपसर्गद्वयपूर्वकाद्गमेरन्येष्वपीति ड" इत्युक्तम् । परिवर्ते भावे क्त इत्याह * परीति । परिवर्तं चेत्यस्यापि नयति इत्यत्रान्वयः । अतस्तात्पर्यार्थमाह * योऽन्यदेवेति । अन्यदेवेत्यस्य व्याख्या * मुक्तानां पूर्णमिति । शेषे षष्ठी । एवमग्रेऽपि । सारभाण्डमित्यस्य सरभाख्यपश्वण्डोद्भवमित्यर्थः । तदाह * कस्तुरीति । अर्थाच्छेपमाह * कृत्वेति । * वक्ष्यमाणेति । भिन्ने पणे त्वित्यनेनैवेति भावः ।

२ । तामेव कथयन् तत्पद्यमुक्तरीत्योक्तव्युत्क्रमेण व्याचष्टे *कृत्रिमेति । आदिना तत्परिवर्तग्रहः । * मूल्येति । वस्तुत इति भावः । भिन्नत्वमन्यत्वम् । तच्च द्वेधा । तत्र वृद्धेर्वक्ष्यमाणत्वादाह * न्यूने इति । तात्पर्यार्थमाह * न्यूनेति । बहुव्रीहिः । एवमग्रेऽपि । तदाह * तस्मिन्निति । तादृशे इत्यर्थः । पञ्चाशत्पणेति बहुव्रीहिः । वाच्यार्थस्योक्तत्वात्तात्पर्यार्थमाह * पणेति । एवमग्रेऽपि । द्विपणमूल्ये इति बहुव्रीहिगर्भो बहुव्रीहिः ।

३ । अनेनैव वृद्धेरुक्तत्वात्तुर्यपादवैयर्थ्यं परिहरति *इत्येवमिति । अनेन प्रकारेणेत्यर्थः । तथा चाधिकसंग्रहार्थं तदिति भावः ॥ २४७ ॥ २४८ ॥

या० संभूय कुर्वतामर्घं सावाधं कारुशिल्पिनाम् ।

द * मनुनेति । चस्त्वर्थे । * पञ्चरात्रे इति । तथेत्यनेन अग्रेऽप्युभयत्र वीप्सा सूचिता । तथा चास्थिरार्घाणां पञ्चसु दिनेषु गतेषु, किञ्चित्स्थिरार्घाणां पक्षे गते, स्थिरार्घाणां मासे गते सति राजा आप्तपुरुषैः पणमर्घविदां वणिजां प्रत्यक्षं स्वसमक्षमित्यादि तद्व्याख्यातारः ।

३ । एषां पूर्वोक्तानां सर्वपण्यानामर्घस्य व्यवस्थापनं प्रत्यक्षं स्वसमक्षं स कुर्यादित्यर्थ इत्यन्ये । (अ. ८ । ४०२)

तुलामानं प्रतीमानं सर्वं च स्यात्स्वलक्षितम् ।

षट्सु षट्सु च मासेषु पुनरेव परीक्षयेत् ॥

इत्यपि तेनोक्तम् । पक्षे पक्षेऽथ वा गते इति पाठान्तरं व्याख्याकृदादिसम्मतम् । अत्र वीप्सया दशसु दिनेषु मासे वा गते इति नार्थः, किं तु पञ्चदिनानन्तरं पक्षानन्तरमित्येवम् । वीप्सा तु अवश्यकर्तव्यतया यावज्जीवं कर्तव्यतया च नित्यतां बोधयति "वसन्ते वसन्ते ज्योतिषा" इतिवदिति भावः ॥२५१॥

मि० किञ्च ।

या० स्वदेशपण्ये तु शतं वणिग्गृह्णीत पञ्चकम् ।

दशकं परदेश्ये तु यः सद्यः क्रयविक्रयी ॥ २५२ ॥

मि० स्वदेशप्राप्तं पण्यं गृहीत्वा यो विक्रीणीते असौ पञ्चकं शतं, पणशते पणपञ्चकं लाभं गृह्णीयात् । परदेशात्प्राप्ते पुनः पण्ये शतपणमूल्ये दश पणान् लाभं गृह्णीयात्—यस्य पण्यस्य ग्रहणदिवस एव विक्रयः संपद्यते । यः पुनः कालान्तरे विक्रीणीते तस्य कालोत्कर्षवशाल्लाभोत्कर्षः कल्प्यः ।

एवं च यथाऽर्घे निरूपिते पणशते पञ्चपणो

र्थे इत्याह * हीनेति। * प्रार्थयमानाः, सन्तः। * उपरुन्धन्ति, प्रतिबद्धविक्रयकं कुर्वन्ति। यथास्थितविक्रये दोषाभावादाह * महेति ॥ २५० ॥

मि॰ केन पुनरर्घेण वर्तितव्यमित्यत आह।

या॰ राजनि स्थाप्यते योऽर्घः प्रत्यहं तेन विक्रयः।
क्रयो वा निःस्रवस्तस्माद्वणिजां लाभकृत्स्मृतः॥२५१॥

मि॰ राजनि संनिहिते सति यस्तेनार्घः स्थाप्यते निरूप्यते तेनार्घेण प्रतिदिनं क्रयो विक्रयो वा कार्यः। निर्गतः स्रवो निःस्रवोऽवशेषः। तस्मात् राजनिरूपितार्घाद्यो निःस्रवः स एव वाणिजां लाभकारी न पुनः स्वच्छन्दपरिकल्पितात्। मनुना चार्घकरणे—

विशेषो दर्शितः, (अ. ८ श्लो. ४०२)
पञ्चरात्रे पञ्चरात्रे पक्षे मासे तथा गते।
कुर्वीत चैषां प्रत्यक्षमर्घसंस्थापनं नृपः॥
इति ॥ १५१ ॥

वा॰ १। *वर्तितव्यं, व्यवहर्त्तव्यम्। राजनि इति वटे गाव इतिवत्सामीपिकमधिकरणमित्याह *संनिहिते इति। अर्थाद्ध * यस्तेनेति। राज्ञेत्यर्थः। प्रत्यहमिति शेषः। मूले तस्यो- [illegible]ति न्वयित्वात्। स्रवान्निवर्तते इति नार्थः, तस्मादित्यस्यानन्व- [illegible]प्रवृत्तेः। अत आह *निर्गत इति। स्रवपदार्थः *अवशेष इति। अत [illegible] ह * तस्मादिति। मौलस्यार्थो *राजेति। तात्पर्यं सर्वामिति [illegible]ति। [illegible]नाह * स एवेति। एवव्यवच्छेद्यमाह * न पुनरिति। [illegible]गिच्छाकल्पितार्घादवशेष इत्यर्थः।

२। मनुविरोधपरिहारं स्पष्टत्वात् हृद्येवानुसन्दधान आ-

यथा पणशते दशपणो लाभः संपद्यते तथा क्रेतृवि-
क्रेत्रोरनुग्रहकार्यर्घो राज्ञा स्थापनीयः ॥ २८३ ॥

वा० १। तदेवाह * परदेशेति। यद्यप्यत्र सामान्येनार्घ-निरूपणप्रकारः प्रतीयते इतीदमवतरणमयुक्तं तथापि "व्ययं पण्यसमुद्भवम्" इत्युक्तेः परदेशादानीयमानद्रव्यस्यैव बहुव्ययसम्भवात्स्वल्पव्ययनाशे तथात्वभावात्तत्परत्वमेवास्येत्याह *देशान्तरादित्यादिना। * भाण्डेति। तदुपयोगिपात्रादिग्रहणेत्यर्थः। * अर्थः, द्रव्यव्ययः। द्रव्यं पण्यस्योपरीत्यस्यार्थमाह * पण्यमूल्येनेति। प्रागुक्तैकवाक्यतयाऽऽह * यथेति। अनुग्रहकादित्यस्यार्थमाह * अनुग्रहकार्यर्घइति। कार्य इत्यस्यार्थः * स्थापनीय इति।

मनुरपि, (अ. ८। ४०१)

आगमं निर्गमं स्थानं तथा वृद्धिक्षयावुभौ।
विचार्य सर्वपण्यानां कारयेत्क्रयविक्रयौ ॥ इति ॥ २८३ ॥

इति प्रासङ्गिकप्रकरणम् ॥



लाभो भवति तथैवार्घो राज्ञा स्वदेशपण्यविषये स्थापनीयः॥ २५२॥

या० १। पूर्वोत्तरयो राजधर्मत्वेन मध्यमस्य असम्बद्धत्वादप्रामाण्यनिरासायाह * किं चेति। अर्घकरणे विशेषान्तरमाहेत्यर्थः। स्वदेशेत्यत्र अर्शआद्यच्। तदाह * स्वेति। बहुव्रीहिर्वा। स्वदेश्येति पाठस्तु सुगमः। ततः तत्र भव इत्यर्थे दिगादित्वाद्यत्। एवमग्रेऽपि। शतमित्यस्य प्रतीति शेषः। तत्फलितमाह * पणशते इति। परदेश्ये शाब्दोऽर्थ उक्तः। तत्फलितमाह * प्राप्ते इति। परदेशात्प्राप्ते पण्येत्वित्यर्थः। शतेति त्रिपदो बहुव्रीहिः। तुर्यपादोक्तमुभयोः शेष इत्याह * यस्येति। वणिज इत्यर्थः। एतेन य इति व्याख्यातम्। क्रयेत्यत्र द्वन्द्वान्मत्वर्थे इनिरित्याह *पण्यस्येति। सद्यःपदार्थो * दिवसेइति। एतत्फलितं वक्ष्यमाणरीत्याऽऽह * यः पुनरिति।

२। नन्वत्र वणिग्धर्मस्योक्तत्वेन राजानं प्रत्यनुक्तत्वात्किंचेत्यसङ्गतिः, मध्येऽसम्बद्धत्वापत्तिश्च, अत आह * एवं चेति। उक्तार्थस्य शाब्दत्वे चेत्यर्थः। * यथा, यादृशा। * स्थापनीय इति। फलितमिति शेषः। अन्यथा परदेशविषये वक्ष्यमाणत्वेनात्रानुक्त्या न्यूनतेति भावः॥ २५२॥

मि० परदेश्यपण्येऽर्घनिरूपणप्रकारमाह।

या० पण्यस्योपरि संस्थाप्य व्ययं पण्यसमुद्भवम्।
अर्घोऽनुग्रहकृत्कार्यः क्रेतुर्विक्रेतुरेव च॥ २५३॥

मि० देशान्तरादागते पण्ये देशान्तरगमनप्रत्यागमनभाण्डग्रहणशुल्कादिस्थानेषु यावानुपयुक्तोऽर्थस्तावन्तमर्थं परिगणय्य पण्यमूल्येन सह मेलयित्वा

णिजे क्रेत्रे न समर्पयति, तच्च पण्यं यदि क्रयकाले बहुमूल्यं सत् कालान्तरेऽल्पमूल्येनैव लभ्यते तदाऽर्घ-ह्रासकृतो य उदयो वृद्धिः पण्यस्य स्थावरजङ्गमा-त्मकस्य तेन सहितं पण्यं विक्रेता क्रेत्रे दापनीयः ।

यदा मूल्यह्रासकृतः पण्यस्योदयो नास्ति, किन्तु क्रयकाले यावदेव यतो मूल्यस्येयत्पण्यमिति प्रति-पन्नं, तदा तत्पण्यमादाय तस्मिन्देशे विक्रीणानस्य यो लाभस्तेनोदयेन सहितं द्विकं त्रिकमित्यादिप्र-तिपादितवृद्धिरूपोदयेन वा सहितं क्रेतुर्वाञ्छावशा-द्दापनीयः ।

यथाह नारदः, (व्यव. ८।५)

अर्घश्चेदवहीयेत सोदयं पण्यमावहेत् ।
स्थानिनामेष नियमो दिग्लाभं दिग्विचारिणाम् ॥ इति ।

यदा त्वर्घमहत्त्वेन पण्यस्य न्यूनभावस्तदा तस्मिन्प-ण्ये वस्त्रगृहादिके य उपभोगस्तदाच्छादनसुखाधि-वासादिरूपो विक्रेतुस्तत्सहितं पण्यमसौ दाप्यः ।

यथाह नारदः, (व्यव. ८।४)

विक्रीय पण्यं मूल्येन यः क्रेतुर्न प्रयच्छति ।
स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलम् ॥ इति ।

विक्रेतुरुपभोगः क्षय उच्यते । क्रेतृसंबन्धित्वेन क्षीयमाणत्वात् । न पुनः कुड्यपातसस्यघातादिरूपः । तस्य तु— (ना. व्यव. ८।६)

उपहन्येत वा पण्यं दह्येतापह्रियेत वा ।
विक्रेतुरेव सोऽनर्थो विक्रीयासंप्रयच्छतः ॥
इत्यत्रोक्तत्वात् ।

## अथ विक्रीयासंप्रदानप्रकरणम् ॥ २१ ॥

मि० उ. प्रासङ्गिकं परिसमाप्याधुना विक्रीयासंप्रदानं नाम प्रक्रमते ।

तत्स्वरूपं च नारदेनाभिहितम्, ( व्यव. ८ । १ )

विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते ।
विक्रीयासंप्रदानं तद्विवादपदमुच्यते ॥ इति ।

तत्र विक्रेयद्रव्यस्य चराचरभेदेन द्वैविध्यमभिधाय पुनः षड्विधत्वं—

तेनैव प्रत्यपादि, ( व्यव. ८ )

लोकेऽस्मिन्द्विविधं पण्यं जङ्गमं स्थावरं तथा।(श्लो.२)
षड्विधस्तस्य तु बुधैर्दानादानविधिः स्मृतः ।
गणितं तुलितं मेयं क्रियया रूपतः श्रिया ॥ इति ।(३)

गणितं क्रमुकफलादि । तुलितं कनककस्तूरीकुङ्कुमादि । मेयं शाल्यादि । क्रियया वाहदोहादिरूपयोपलक्षितमश्वमहिष्यादि । रूपतः पण्याङ्गनादि । श्रिया दीप्त्या मरकतपद्मरागादीति ॥

मि० एतत्षट्प्रकारकमपि पण्यं विक्रीयासंप्रयच्छतो दण्डमाह ।

या० गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति ।
सोदयं तस्य दाप्योऽसौ दिग्लाभं वा दिगागते ॥२४४॥

मि० गृहीतं मूल्यं यस्य पण्यस्य विक्रेत्रा तद् गृहीतमूल्यं, तद्यदि विक्रेता प्रार्थयमानाय स्वदेशव-

माह * क्रेत्रे इति ।

३ । तस्यैवान्यथाऽर्थमाह *यदेति। यावद्दित्यस्य प्रतिपन्न-मित्यत्रान्वयः । * यतः, यस्य । * प्रतिपन्नमिति । निश्चित-मित्यर्थः । * तावदेवेति । अस्तीति शेषः । "किं तु" इत्यस्या-त्रान्वयः । अत्रैव पक्षे उदयांशे पक्षान्तरमाह * द्विकामिति । अनयोर्व्यवस्थामाह * क्रेतृत्वाञ्छेति । * आवहेत्, दद्यात् । अत्र अवहानिः उक्तस्याप्युपलक्षणम् । * स्थानिनां, स्वदेशमा-त्रस्थितिकानां वणिजाम् । अत इनीति इनिः । स्थायिनामिति कल्पतरौ पाठः ।

४ । विशेषमाह *यदा त्विति । उपभोगस्वरूपमाह *त-दाच्छादनेति । * मूल्येन, तद्ग्रहणेन । *स्थावरस्य, ग्रामक्षेत्रा-देः । *जङ्गमस्य, गवादेः ।*क्रियाफलं, दोहादेः क्षीरादिकम् ।

५। यत्तु क्षयं सस्याद्युपघातजापक्षयमिति कल्पतर्वादयः तन्न । पौनरुक्त्यापत्तेरित्याह * विक्रेतुरिति । ननु तस्य तत्त्वं विरुद्धम्, अत आह * क्रेत्रिति । तावत्पर्यन्तं तत्सम्बन्धस्य तत्र क्षीणत्वात्तद्वैशिष्ट्येन तस्यापि क्षीणत्वमिति भावः । क्षय इत्यत्र कर्मण्यच् । नारदमाह * उपहन्येतेति । * इत्यत्रेति इत्यनेनेति पाठान्तरम् ।

वस्तुतस्तु क्षि निवासगत्योरित्युक्तेः क्षयो निवासे इत्यु-क्तेश्चायं निवासार्थक इति न कोऽपि क्लेश इति बोध्यम् ।

६ । मौलं तुर्यपादं व्याचष्टे * यदात्विति । तत्रोभयत्र स-मीपञ्चमीसमासावित्याह * देशान्तरादिति । मूले वाशब्द चार्थे । तेन पण्यसमुच्चयः । तत्फलितमाह * तेनेति ।

७। वक्ष्यमाणैतदवान्तरप्रकरणसङ्गत्यर्थमाह * अयं न्-ति । क्रीतस्य पण्यस्य समर्पणेत्यर्थः । * मनूक्तामिति । क्रया

यदा त्वसौ क्रेता देशान्तरात्पण्यग्रहणार्थमागतस्तदा तत्पण्यमादाय देशान्तरे विक्रीणानस्य यो लाभस्तेन सहितं पण्यं विक्रेता क्रेत्रे दापयितव्यः।

अयं च क्रीतपण्यसमर्पणनियमोऽनुशयाभावे द्रष्टव्यः। सति त्वनुशये "क्रीत्वा विक्रीय वा किञ्चित्" इत्यादिमनूक्तं वेदितव्यम् ॥ २५४ ॥

वा० १। सङ्गतिमाह * प्रासङ्गिकमिति। विक्रयप्रसङ्गादाह *अधुनेति। *मूल्येन, तस्य ग्रहणेन। क्रेतुरिति सम्बन्धे षष्ठी। एवमग्रेऽपि। * तत्र, प्रारभ्यमाणे विवादपदे। घटकत्वं सप्तम्यर्थः। * चराचरेति। जङ्गमस्थावरेत्यर्थः। * पुनरिति। यथासम्बन्धे षष्ठी। द्विविधस्य तस्येत्यर्थः। * तेनैव, नारदेनैव। * तस्य त्विति। तस्य द्विविधस्य बुधैर्मन्वादिभिर्दानादानयोर्विधिक्रमो विधानक्रमः करणप्रकारो यथासम्भवं षड्विधः कथित इत्यर्थः।

कल्पतरौ तु—

लोकेऽस्मिन् द्विविधं पण्यं जङ्गमं स्थावरं तथा।

क्रयविक्रयधर्मे तु सर्वं तत्पण्यमुच्यते ॥

षड्विधस्तस्य तु बुधैर्दानादानविधिः स्मृतः—इति पाठः। तदेवाह * गणितमिति। संज्ञाशब्दा एते। रूपत इति तृतीयान्तात्तसिः। *कर्पूरेति। कुङ्कुमादीति पाठान्तरम्। अनन्वयनिरासायाह * उपलक्षितमिति। एवमग्रेऽपि उभयत्र। पण्याङ्गना वेश्या। आदिना वस्त्रादि। उक्तसङ्गत्या मूलमवतारयति *एतदिति। तस्य तत्त्वेन विवक्षायां षष्ठी तत्रेत्याह *- क्रेत्रे इति।

२। तृतीयपादार्थमाह * तच्चेति। अल्पेति कर्मधारयः। अर्घो मूल्यम्। अर्थादाह *पण्यमिति। प्राग्वत् तस्येत्यस्यार्थ-

अनुष्टं पण्यं विनष्टसदृशं क्रेत्रे देयम् ॥ २५६ ॥

वा० १। अपि चेति भाव्यन्। एवमग्रेऽपि। अपिना ज्ञानानुशयसमुच्चयः। राजदैवे इत्यर्थेऽणु इति फलितमाह * राजेति। तात्पर्यार्थमाह * अन इति। अस्माद्वेतोरित्यर्थः ॥ २५६॥

मि० अव. किञ्च।

या० अन्यहस्ते च विक्रीतं दुष्टं वाऽदुष्टवद्यदि।
विक्रीणीते दमस्तत्र मूल्यात्तु द्विगुणो भवेत् ॥ २५७॥

मि० यः पुनर्विनैवानुशयमेकस्य हस्ते विक्रीतं पुनरन्यस्य हस्ते विक्रीणीते सदोषं वा पण्यं प्रच्छादितदोषं विक्रीणीते तदा तत्पण्यमूल्याद् द्विगुणो दमो वेदितव्यः। नारदेनाप्यत्र—

विशेषो दर्शितः, ( व्यव. ८)

अन्यहस्ते च विक्रीय योऽन्यस्मै तत्प्रयच्छति।
द्रव्यं तद्द्विगुणं दाप्यो विनयं तावदेव तु ॥ (८)
निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति।
स मूल्याद्द्विगुणं दाप्यो विनयं तावदेव तु ॥(७)इति।

सर्वश्चायं विधिर्दत्तमूल्ये पण्ये द्रष्टव्यः। अदत्तमूल्ये पुनः पण्ये वाङ्मात्रक्रये क्रेतृविक्रेत्रोर्नियमकारिणः समयादृते प्रवृत्तौ निवृत्तौ वा न कश्चिद्दोषः।

यथाह नारदः, ( व्यव. ८। १० )

दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्तितः।
अदत्तेऽन्यत्र समयान्न विक्रेतुरविक्रयः॥ इति ॥२५७॥

वा० १। किञ्चेति भाव्यन्। जातानुशये मनूक्तत्वादाह

क्रयानुशयाख्यविवादप्रकरणे इति भावः । एवं च मनुना तेनैवास्य कथितप्रायत्वादिदं पृथङ् नोक्तमिति बोध्यम् ।

यस्येहानुशयो भवेत् । ( अ. ८ । २२२ )

सोऽन्तर्दशाहे तद् द्रव्यं दद्याच्चैवाददीत वा ॥

इति तच्छेषः ॥ २५४ ॥

मि० अव. किंच ।

या० विक्रीतमपि विक्रेयं पूर्वक्रेतर्यगृह्णति ।

हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत् ॥ २५५॥

मि० यदा पुनर्जातानुशयः क्रेता पण्यं जिघृक्षति तदा विक्रीतमपि पण्यमन्यत्र विक्रेयम् । यदा पुनर्विक्रेत्रा दीयमानं क्रेता न गृह्णाति तच्च पण्यं राजदैविकेनोपहतं तदा क्रेतुरेवासौ हानिर्भवेत् । पण्याग्रहणरूपेण क्रेतृदोषेण नाशितत्वात् ॥ २५५ ॥

बा० १ । अत एवानुशयेऽन्यदप्युच्यते इत्याह *किं चेति। तदेवाह *जातेति । पूर्वेत्युभयत्रान्वयि । तत्राद्ये धातोस्तादिच्छायां लक्षणेत्याह * जिघृक्षतीति । अजातानुशये आह * यदा पुनरिति। आलस्यादिरग्रहणे हेतुः। अत्र न लक्षणेति भावः॥२५५॥

मि. अव. अपिच ।

या० राजदैवोपघातेन पण्ये दोषमुपागते ।

हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः ॥ २५६ ॥

मि० यदा पुनः क्रेत्रा प्रार्थ्यमानमपि पण्यं विक्रेता न समर्पयति अजातानुशयोऽपि, तच्च राजदैविकेनोपहतं भवति, तदाऽसौ हानिर्विक्रेतुरेव । अतोऽन्यत्

विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतम् ॥
द्वितीयेऽह्नि ददत्क्रेता मूल्यात्त्रिंशांशमावहेत् ।
द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तत् ॥ इति ।

अपरीक्षितक्रयविक्रये पुनः पण्यवैगुण्यनिबन्धनानुशयावधिः दशैकपञ्चसप्ताहेत्यादिना दर्शित एव । तदनया वाचोयुक्त्या वृद्धिक्षयपरिज्ञानस्यानुशयकारणत्वमवगम्यते ।

तथा पण्यपरीक्षाविधिबलात्पण्यदोषाणामनुशयकारणत्वम् ।

अतः पण्यदोषतद्वृद्धिक्षयकारणात्रितयाभावेऽनुशयकालाभ्यन्तरेऽपि यद्यनुशयं करोति तदा पण्यषड्भागं दण्डनीयः ।

अनुशयकारणसद्भावेऽप्यनुशयकालातिक्रमेणानुशयं कुर्वतोऽप्ययमेव दण्डः । उपभोगेनाविनश्वरेषु स्थिरार्घेष्वनुशयकालातिक्रमेणानुशयं कुर्वतो—

मनूक्तो दण्डो द्रष्टव्यः । ( अ० ८ श्लो. २२३ )
परेण तु दशाहस्य न दद्यान्नापि दापयेत ।
आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षट् ॥

इति ॥ २५८ ॥

इति विक्रीयासंप्रदानं नाम प्रकरणम् ॥

वा० १ । अवान्तरप्रकरणसमाप्तिमाह * इति विक्रयेति । न्यूनतां पौनरुक्त्यं च परिहरति * क्रीतेति । क्रयेत्यर्थः । भावे क्तः । परीक्षाया अभावे ऽनुशये दोषाभावादाह * परीक्षितेति । कर्मधारयौ । क्रीत्वेत्यस्यार्थः *क्रयोत्तरेति । परिमाणमर्था-

*विनैवेति। *अन्यस्येति। एकस्येति पाठान्तरम्। * पुनः, पश्चात्। अर्थादाह * अन्यस्येति। अदुष्टत्वादिति वत्यन्तस्यार्थमाह * मच्छादितेति। * तदेति। तत्रेति शेषो मौल एव। विक्रेतरीति तदर्थः। * अत्र, उक्तविषये। अपिर्भिन्नक्रमः। विशेषोऽपीत्यर्थः। अपिनोक्तसमुच्चयः। मूले मूल्यांशे न्यूनाधिकभावानुक्तत्वेन समतामाप्तौ तत्र द्वैगुण्यरूपो विशेषः, दण्डांशे द्वैगुण्यं तु तुल्यमेवेति भावः। यद्वा यथाश्रुत एवापिरन्यमुनिसमुच्चायकः। * विनयं, दण्डम्। * तावत्, अव्ययमिदम्। तावन्तमेव। द्विगुणमेव।

विशेषमाह * सर्वत्रेति। न त्वव्यवहितोक्ते एवेति भावः। * अयं विधिः, सकलदण्डविधिः। * अदत्ते, पण्ये॥२५७॥

मि० अव० इति विक्रयानुशयोऽभिहितः। क्रीतानुशयस्वरूपं तु प्राक् प्रपञ्चितम्। अधुना तदुभयसाधारणं धर्ममाह।

या० क्षयं वृद्धिं च वणिजा पण्यानामविजानता।
क्रीत्वा नानुशयः कार्यः कुर्वन् षड्भागदण्डभाक्॥२५८॥

मि० परीक्षितक्रीतपण्यानां क्रयोत्तरकालं क्रयकालपरिमाणतोऽर्घकृतां वृद्धिमपश्यता क्रेत्रा अनुशयो न कार्यः। विक्रेत्रा च महार्घनिबन्धनं पण्यक्षयमपश्यता नानुशयितव्यम्। वृद्धिक्षयपरिज्ञाने पुनः क्रेतृविक्रेत्रोरनुशयो भवतीति व्यतिरेकादुक्तं भवति। अनुशयकालावधिश्च—

नारदेनोक्तः, (व्यव. ९। श्लो. २। ३)
क्रीत्वा मूल्येन यत्पण्यं दुष्क्रीतं मन्यते क्रयी।

न्मूल्यस्य । विशेषणेन व्यावर्त्यतया बोधितमर्थमाह *वृद्धीति । निषेधस्य शाब्दत्वेन तदसम्भवादाह * व्यतिरेकादिति । भेदादित्यर्थः । पूर्वमुक्तमपि पुनः अभिप्रायं वक्तुमाह *अनुशयेति । चस्त्वर्थे । *क्रीत्वेति । व्याख्यातमिदं प्राक् । विरोधपरिहारमपि प्रागुक्तमेव तथा आह * अपरीक्षितेति । अपरीक्षितवस्तुक्रयेत्यर्थः । * दशैकेति । मानवमिदम् । उक्तफलितार्थमुपसंहरति * तदिति । तस्मादित्यर्थः । * अनया, क्षयं वृद्धिं चेतिविशेषघटितयेत्यर्थः । अभिप्रायमेव प्रकाशयति * यथेति । * दोषाणामिति । अनुशयकारणत्वमवगम्यते इत्यस्यानुषङ्गः ।

२ । तुर्यपादार्थमाह * अत इति । तेषां तस्य च तत्कारणत्वादित्यर्थः । * तत्, मूल्येत्यर्थः । * क्षयेति । एतद्रूपकारणत्रितयेत्यर्थः । * अनुशयकालेति । नारदोक्तानुशयकालादिमध्येऽपीत्यर्थः । पूर्वसाम्यप्रदर्शनसाफल्याय तुल्ययुक्त्याऽऽह * अनुशयकारणेति । एतत्प्रसङ्गेन विशेषमाह * उपभोगेनेति । अनेन पण्यदोषाभावः सूचितः । स्थिरेत्यनेन वृद्धिक्षयाभावः सूचितः । * परेणेति । क्रीत्वा विक्रीयेति शेषः । *न दद्यात्, न त्यजेत् । * दापयेत्, विक्रेता बलेन न ग्राहयेत् । विक्रीतं बलेन गृह्णन् परित्यजंश्चेत्यर्थः । * षट् शतानि, पणान् ॥ २५८ ॥

इति विक्रीयासम्प्रदानम् ।

———•———

विक्रेयम्" इति राज्ञा प्रतिषिद्धं, यद्राजयोग्यं मणिमाणिक्याद्यप्रतिषिद्धमपि, तद् राज्ञोऽनिवेद्य लाभलोभेन विक्रीतं चेद्राजगामि । मूल्यदाननिरपेक्षं तत्सर्वं पण्यं राजाऽपहरेदित्यर्थः ॥ २६१ ॥

बा. १। एवं तेषामुक्त्वा राज्ञ आह * अर्घेति ।

मनुरपि, ( अ. ८। श्लो. ३९८। ३९९ )

शुल्कस्थानेषु कुशलाः सर्वपण्यविचक्षणाः ।
कुर्युरर्घं यथापण्यं ततो विंशं नृपो हरेत् ॥
राज्ञः प्रख्यातभाण्डानि प्रतिषिद्धानि यानि च ।
तानि निर्हरतो लोभात्सर्वहारं हरेन्नृपः ॥ इति ।

* अर्घस्येति । तस्येति पाठान्तरम् । हेतौ पञ्चमीत्याह * हेतोरिति । * असौ, नृपः । शुल्कमित्यस्यार्थः *शुल्कार्थमिति । करार्थमित्यर्थः । पूर्वेणापौनरुक्त्यायाह *प्रतिषिद्धमिति । राजगामित्वे विक्रीतत्वं दोषो हेतुरित्याह *लाभेति । अन्यत्रेति शेषः । अत एव फलितमाह * मूल्येति । *सर्वं, द्विविधम् ॥ २६१ ॥

या० मिथ्या वदन्परीमाणं शुल्कस्थानादपासरन् ।
दाप्यस्त्वष्टगुणं यश्च सव्याजक्रयविक्रयी ॥ २६२ ॥

मि० यः पुनर्वणिक् शुल्कवञ्चनार्थं पण्यपरिमाणं निह्नुते, शुल्कग्रहणस्थानाद्वाऽपसरति, यश्चास्येदमस्य वेत्त्येवं विवादास्पदीभूतं पण्यं क्रीणाति विक्रीणीते वा, ते सर्वे पण्यादष्टगुणं दण्डनीयाः ॥ २६२ ॥

बा० १। अथ दण्डमाह *मिथ्येति । राजदण्डे बीजमाह *शुल्केति । शुल्कपदं लाक्षणिकमित्याह * शुल्कग्रहणेति । क्रयश्च

स तद्दद्याद्विप्लवाच्च रक्षिताद्दशमांशभाक् ॥ २६० ॥

मि० तेषां संभूय प्रचरतां मध्ये पण्यमिदमित्थं न व्यवहर्तव्यमिति प्रतिषिद्धमाचरता यन्नाशितम्, अनादिष्टमननुज्ञातं वा कुर्वाणेन तथा, प्रमादात्प्रज्ञाहीनतया वा येन यन्नाशितं, स तत्पण्यं वणिग्भ्यो दद्यात्। यः पुनस्तेषां मध्ये चौरराजादिजनिताद्व्यसनात्पण्यं पालयति स तस्माद्रक्षितात्पण्याद्दशममंशं लभते ॥ २६० ॥

वा० १। अन्यदप्याह *किं चेति। *तथा, यन्नाशितम्। प्रमादादित्यस्य व्याख्या *प्रज्ञेति। चो वाऽर्थे इत्याह *वेति। तथा च नाशितमित्यस्य सर्वत्र सम्बन्ध इति भावः। * वणिग्भ्यः, स्वसमवायिभ्यः। अत एव प्रातिस्विकमिति प्रागुक्तम्। विप्लवाच्चेत्याद्यर्थमाह * य इति। विप्लवार्थमाह *व्यसनादिति। नाशादित्यर्थः। स्वशक्त्येति भावः। इदमधिकम्। तस्य ततो लाभादि तु प्रागुक्तमेव।

तथा नारदोपि, ( व्यव. ३। ६ )

दैवतस्कररराजाग्निव्यसने समुपस्थिते।

यस्तत्स्वशक्त्या रक्षेत्तु तस्यांशो दशमः स्मृतः॥ इति ॥२६०॥

या० अर्घप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरेत्।

व्यासिद्धं राजयोग्यं च विक्रीतं राजगामि तत्॥२६१॥

मि. इयतः पण्यस्येयन्मूल्यमित्यर्घस्य प्रक्षेपणात् राजतो निरूपणाद्धेतोरसौ मूल्याद्विंशतितममंशं शुल्कार्थं गृह्णीयात्। यत्पुनर्व्यासिद्धम् “अन्यत्र न

ति तदा दश पणान् दण्डनीयः । वेशो वेश्म । प्रतिवे-
श इति स्ववेश्माभिमुखं स्ववेश्मपार्श्वस्थं चोच्यते ।
तत्र भवाः प्रातिवेश्याः । ब्राह्मणाश्च ते प्रातिवेश्याश्च
ब्राह्मणप्रातिवेश्याः । तेषां श्रुतवृत्तसंपूर्णानां श्राद्धा-
दिषु विभवे सति अनिमन्त्रणे एतदेव दशपणात्मकं
दण्डनं वेदितव्यम् ॥ २६३ ॥

वा० १ । दण्डान्तरमाहेत्याह *अपि चेति । वचनं व्याख्या-
तुमुपोद्घातमाह *शुल्कं हीति । मूलमाह * अर्धप्रक्षेपणादिति ।
*पणमिति । * तरे, नौकादौ । * यानं, रिक्तशकटादिकं प्र-
ति पणं दाप्यः । पौरुषे पुरुषभारविषये तरे ऽर्द्धपणं दाप्यः ।
पशुर्गवादिः योषित् वक्ष्यमाणभिन्नस्त्रीमात्रं पादं पणचतुर्थांशं
दाप्यः । रिक्तकः भाररहितः पुमान् मनुष्यः पादार्द्धं पणाष्टम-
भागं दाप्यः । भाण्डं पण्यद्रव्यं तेन पूर्णानि यानानि शकटा-
दीनि सारतः द्रव्यगतोत्कर्षापेक्षया तार्यं तरणमूल्यं दाप्यानि ।
रिक्तभाण्डानि पण्यद्रव्यरहितानि गोण्यादीनि अपरिच्छदा
दरिद्राश्च उक्तपादार्धदानापेक्षया यत् किञ्चित् दापनीया इत्यर्थः ।
किं च—

दीर्घाध्वनि यथादेशं यथाकालं तरो भवेत् । (अ.८।४०६)
नदीतारेषु तद्विद्यात्समुद्रे नास्ति लक्षणम् ॥ इति मनुः ।

पूर्वं पारावारे तरणार्थमुक्तम् । इदानीं नदीमार्गेण दूराध्वनि
गन्तव्ये प्रबलवेगास्थिरोदकनद्यादिदेशग्रीष्मवर्षादिकालापेक्षया
तरमूल्यं कल्पनीयम् । एतच्च नदीतारे बोध्यम् । समुद्रे तु वा-
ताधीनपोतगमनत्वात्स्वायत्तत्वाभावेन तरपणविशेषज्ञापकं न-
दीवद्योजनादिकं तत्र नास्ति, ततस्तत्रोचितमेव तरमूल्यं ग्राह्य-
मिति तद्व्याख्यातारः ।

विक्रयश्च क्रयविक्रयौ, व्याजो विवादस्तत्सहितस्य पण्यस्य तौ, ततो मत्वर्थे इनिरित्याह * यश्चेति ।

मनुरपि, ( अ. ८ । ४०० )

शुल्कस्थानं परिहरन्नकाले क्रयविक्रयी ।
मिथ्यावादी च संख्याने दाप्योऽष्टगुणमत्ययम् ॥इति॥२६२॥

मि० अव. अपि च ।

या० तरिकः स्थलजं शुल्कं गृह्णन् दाप्यः पणान्दश ।
ब्राह्मणप्रातिवेश्यानामेतदेवानिमन्त्रणे ॥ २६३ ॥

मि० शुल्कं हि द्विविधं स्थलजं जलजं च । तत्र स्थलजम्-

अर्धप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरेत्—

इत्यत्रोक्तम् । जलजं तु-

मानवेऽभिहितम् , ( अ. ८ श्लो. ४०४।४०५ )

पणं यानं तरे दाप्यः पौरुषेऽर्द्धपणं तरे ।
पादं पशुश्च योषिच्च पादार्द्धं रिक्तकः पुमान् ॥
भाण्डपूर्णानि यानानि तार्यं दाप्यानि सारतः ।
रिक्तभाण्डानि यत्किञ्चित्पुमांसश्चापरिच्छदाः ॥

इति ।

शुल्कद्वयेऽप्ययमपरो विशेषः,

न भिन्नकार्षापणमस्ति शुल्कं
न शिल्पवृत्तौ न शिशौ न दूते ।
न भैक्षलब्धे न हृतावशेषे
न श्रोत्रिये प्रव्रजिते न यज्ञे ॥

इति । तीर्यतेऽनेनेति तरिः नावादिः । तज्जन्यशुल्केऽधिकृतस्तरिकः । स यदा स्थलोद्भवं शुल्कं गृह्णा-

थान्धवा मातृपक्ष्या मातुलाद्याः, ज्ञातयोऽपत्यवर्गव्य-तिरिक्ताः सपिण्डा वा। आगताः संभूयव्यवहारिणो ये देशान्तरादागतास्ते वा गृह्णीयुः । तैर्विना दायादाद्य-भावे राजा गृह्णीयात् ।

वाशब्देन च दायादादीनां वैकल्पिकमधिकारं द-र्शयति । पौर्वापर्यनियमस्तु "पत्नी दुहितर" इत्यादि-प्रतिपादित एवात्रापि वेदितव्यः । शिष्यसब्रह्मचारि-ब्राह्मणनिषेधो वणिक्प्राप्तिश्च वचनप्रयोजनम् ।

वणिजामपि मध्ये यः पिण्डदानऋणदानादिसमर्थः स गृह्णीयात् । सामर्थ्याविशेषे सर्वे वणिजः संसृष्टिनो विभज्य गृह्णीयुः । तेषामप्यभावे दशवर्षं दायादाद्या-गमनं प्रतीक्ष्यानागतेषु स्वयमेव राजा गृह्णीयात् ।

तदिदं नारदेन स्पष्टीकृतम्, ( व्यव. ३ )

एकस्य चेत्स्यान्मरणं दायादोऽस्य तदाप्नुयात् ।
अन्यो वाऽसति दायादे शक्ताश्चेत्सर्व एव ते ॥(७)
तदभावे तु गुप्तं तत्कारयेद्दश वत्सरान् । (१७)
अस्वामिकमदायादं दशवर्षस्थितं ततः ।
राजा तदात्मसात्कुर्यादेवं धर्मो न हीयते ( १८ )

इति ॥ २६४ ॥

बा० १ । प्रेतपदार्थो * मृत इति । द्रव्यपदं योग्यतया वि-शेषपरमित्याह * तदीयमंशमिति । तदित्यस्य तत्रान्वय इति भावः । यद्यपि दायादशब्दो ऽन्यत्राप्यस्तीति प्रागुक्तं तथापि ब्राह्मणवसिष्ठन्यायेनाह * पुत्रेति । मातृपक्षे भवाः । दि-गादित्वाद्यत् । * सपिण्डेति । सगोत्रसपिण्डेत्यर्थः । आदिना सोदकादिः । तैरित्यनेन सर्वपरामर्श इत्याह * दायादेति । च-

२ । * शुल्कद्वयेऽपि, स्थलजे जलेज च । *न भिन्नेति । मानवं वासिष्ठं चेदम् । भिन्नो न्यूनः कार्षापणो मूल्यं यस्य वस्तुनस्तत्तथा तन्निमित्तः शुल्कोऽपि भिन्नकार्षापणः । तेन कार्षापणादर्वाग्यस्य मूल्यं तस्य शुल्को न ग्राह्य इत्यर्थः । शुल्कशब्दः अर्द्धर्चादिः । शिल्पं वृत्तिर्यस्य तत्र । भैक्षे वृत्तं वर्तनं जीवनं यस्य तत्र । भैक्षलब्धे इति पाठान्तरम् । हृतादवशेषो यस्य तत्र । यज्ञस्तदुपकरणं, दीक्षितो वा, तत्र गन्तुकामो जनसमूहो वा ।

मनुरपि, ( अ. ८ । ४०७ )

गार्भिणी तु द्विमासादिस्तथा प्रव्राजितो मुनिः ।

ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं तरे ॥ इति ।

सञ्जातगर्भा स्त्री मासद्वयादूर्ध्वं, तथा प्रव्रजितो भिक्षुर्मुनिर्वानप्रस्थः ब्राह्मणाश्च लिङ्गिनो ब्रह्मचारिणश्च । एते मूल्यं तरे न दाप्या इत्यर्थः ।

३ । अथ मूलार्थमाह *तीर्यतइति । स च शुल्के लाक्षणिकः । ततः अत इनीति ठन् । तत्फलितमाह * तज्जन्येति । *वेश्मेति । तं प्रतीति सामीप्ये ऽव्ययीभावः । तदाह * स्ववेश्मेति । गृहमिति शेषः । * तत्रेति । अव्ययीभावाच्चेति ञ्यप्रत्यय इति भावः । विशेषानाह * श्रुतेत्यादि ॥ २६३ ॥

मि० अव. देशान्तरमृतवणिग्रिक्थं प्रत्याह ।

या० देशान्तरगते प्रेते द्रव्यं दायादबान्धवाः ।
ज्ञातयो वा हरेयुस्तद् आगतास्तैर्विना नृपः ॥२६४॥

मि० यदा संभूयकारिणां मध्ये यः कश्चिद्देशान्तरं गतो मृतस्तदा तदीयमंशं दायादाः पुत्राद्यपत्यवर्गो,